# शिशुपालबधम् ।



महाकविश्रीमाघकृतम् ।

श्रीमल्लिनाथसूरिविरचितया सर्वङ्कषाख्यया

व्याख्यया सहितम् ।

---

श्रीभुवनचन्द्रवसाकेन संकलय्य प्रकाशितम् ।

द्वितीयसंस्करणम् ।

कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

---

इं १८८६ ।

# शिशुपालवधम् ।

## प्रथमः सर्गः ।

श्रियः पतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

अथ तत्रभवान् माघकविः काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे । इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां काव्यालापांश्च वर्जयेदिति निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमित्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति । श्रिय इति । तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युदयः । तदुक्तम् । देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वेति । श्रियः लक्ष्म्याः पतिः अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनीति विष्णुपुराणात् । जगन्निवासो जगतामाधारः कुक्षिस्थाखिलभुवन

गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥

इति यावत् तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुः अम्बरादवतरन्तमायान्तम् इन्द्रसन्देशकथनार्थमिति भावः हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा ब्रह्माण्डप्रभवत्वात् तस्याङ्गभुवं तनूजम् अथवा तस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूः तं मुनिं नारदमित्यर्थः । उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुव इति भागवतात् । ददर्श कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽलङ्कारः । तदुक्तम् । आधाराधेययोरानुरूप्याभावोऽधिको मत इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकलव्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालङ्कारौ । एषाञ्चान्योन्यनैरपेक्ष्येणैकत्र समावेशात्तिलतण्डुलवत् संसृष्टिः । सर्गेऽस्मिन् वंशस्थवृत्तम् । जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् ॥ १ ॥

तदानीं जनैर्विस्मयादीक्षितं प्रवृत्तमित्याह । गतमिति । अविद्यमानावूरू यस्य स अनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्यग्भूतं विभाषाऽञ्चेरदिक्स्त्रियामिति तिर्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात् स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्ध्वज्वलनम् ऊर्ध्वस्फुरणं प्रसिद्धम् इदन्तु सर्वतो विसारि धामाधः पतति किमेतदिति सूर्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात् सम्भ्रान्तं यथा तथा जनैरीक्षितम् ईक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि क्तः । प्रसिद्धे-

चयस्त्विषामित्यवधारितं पुरा
ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥

देविवक्षातः कर्मणोऽकर्मिका क्रियेति वचनात् । केचित् कर्मणि क्तान्तं कृत्वा दैत्यारिं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे । उपमानाद्यदन्यस्य व्यतिरेकः स एव स इति । धाम रश्मौ गृहे स्थाने जन्मप्रभावयोरिति हेमचन्द्रः ॥ २ ॥

दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन
द्विधाकृतात्मा किमयं दिवाकरो
विधूमरोचिः किमयं हुताशनः ।

इति चरणद्वयेन सह इममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह तत्राद्यचरणद्वयेन सन्देहाकारो गतमिति तन्निरासस्तु बोध्य इत्युपरिष्टात् ।

अथ भगवान्निरनैषीदित्याह । चय इति । विभुस्तत्त्वावधारणसमर्थः स हरिः पुरा प्रथमं त्विषाञ्चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितं ततः प्रत्यासन्ने विभाविता विस्पष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् अत एव शरीरी चेतन इत्यवधारितं ततो विभक्ताः विविच्य गृहीताः अवयवा मुखादयो यस्य तं तथोक्तम् अत एव पुमानित्यवधारितम् आगच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गतो निर्वाहः । क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्योदमुक्तं हरिस्तु सर्वं वेदैवेति तत्त्वम् । नारद इत्यबोधि नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङाद्युपसङ्ख्यानस्योपलक्षणत्वात् । यथाह वामनः । निपातेनाभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वादिति । बुध्यतेः कर्तरि लुङ् दीपजनेत्यादिना चिण्

नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना ॥ ४ ॥
दधानमम्भोरुहकेशरद्युती-
र्जटाः शरच्चन्द्रमरीचिरोचिषम् ।

श्चिणो लुगिति लुक् अत्र विभावितात्कृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्व-पुंस्त्वावधारणहेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात् ॥ ३ ॥

अथ सप्तभिर्मुनिं विशिनष्टि । नवानित्यादि । कीदृशमसुं नवान् सद्यःसम्भृतसलिलानिति यावत् बृहतो विपुलान् पयोधरान् मेघान् अधोऽधः मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । उपर्य्यध्यधसः सामीप्ये इति द्विर्भावः तद्योगे द्वितीया उभसर्वतसोः कार्य्या धिगुप-र्य्यादिषु त्रिष्वित्यादिवचनात् । समूढः पुञ्जीकृतः समूढः पुञ्जिते भुग्ने इति विश्वः । कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम् अत एव क्षणं मेघ-समीपावस्थानक्षणे । अत्यन्तसंयोगे द्वितीया । क्षणेषु ताण्डवोत्सवेषु । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्युभयत्राप्यमरः । भूत्या भस्मना सितेन । भूतिर्भस्मनि सम्पदीत्यमरः । शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटं शम्भूपममित्यर्थः । सापेक्षत्वेऽपि समासः । सदृशपर्य्याययोस्तुल्योपमाशब्दयोरतुलोपमाभ्यामिति निषेधात् सादृश्य-वाचित्वे तृतीयेत्याहुः । केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राक् लिखित्वा व्याचक्षते तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यञ्चिन्त्यम् ॥ ४ ॥

दधानमिति । पुनश्च अम्भोरुहकेशरद्युतीः पद्मकिञ्जल्कप्रभाः पिशङ्गीरित्यर्थः जटाः दधानं [illegible] मरीचिरिव रोचिर्यस्य

विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥
पिशङ्गमौञ्जीयुजमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥
विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयीर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकै-
र्घनं घनान्ते तडितां गुणैरिव ॥ ७ ॥

तं धवलमित्यर्थः अत एव विपाकेन परिणामेन पिङ्गाः पिङ्गलाः तुहिनस्थल्यां रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लताव्यूहान् । वल्ली तु व्रतती लतेत्यमरः। दधानं धराधरेन्द्रो हिमवान् तुहिनस्थलीति लिङ्गात् नारदोपमानत्वाच्च तमिव स्थितम् ॥ ५ ॥

पिशङ्गेति । पुनः मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक्तम् । सत्सूद्विषेत्यादिना क्विप् स्त्रियाः पुंवदिति पिशङ्गशब्दस्य पुंवद्भावः । अर्जुनच्छविं धवलकान्तिम् । वलक्षो धवलोऽर्जुन इत्यमरः । अञ्जनद्युति अञ्जनवर्णम् एणाजिनं कृष्णमृगचर्म वसानम् आच्छादयन्तम् । वस आच्छादन इति धातोः शानच् । सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धम् अधराम्बरम् अन्तरीयकं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तमनुकुर्वाणमित्यार्थीयमुपमा ॥ ६ ॥

विहङ्गेति । पुनः विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः कैः आयतैर्दीर्घैः हिरण्यस्य विकारो हिरण्मयी । दाण्डिनायनेत्यादिना मयटि यलोपनिपातः । तस्यामुर्व्यां रुहा रुहाः । इगुपधाल्लक्षणः कप्रत्ययः । तासां वल्लीनां तन्तुभिस्तत्तुल्यैः सूत्रा-

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

अजस्रमास्फालितवल्लकीगुण-
क्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया
विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥

वयवः उपादानगुणात् हिरण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञ-सूत्रं स्वयं हिमशुभ्रम् अत एव घनान्ते शरदि तडितां गुणैरुपलक्षितम् । तडित्सौदामनी विद्युदित्यमरः । उच्चैरेव उन्नतैरुन्नतशृङ्गं मेघमिव स्थितम् ॥ ७ ॥

निसर्गेति । पुनः निसर्गात् स्वभावादेव चित्राणि शबलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन् यो बिसच्छेदो मृणालखण्डः । छेदः खण्डोऽस्त्रियामिति त्रिकाण्डशेषः । तद्वत्सिते अङ्गे वपुषि सङ्गिना सक्तेन चारुणा चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । प्रवेण्यास्तरणं वर्णः परि-स्तोमः कुथो द्वयोरित्यमरः । इन्द्रवाहनं नागेन्द्रम् ऐरावतमिव चकासतं शोभमानम् इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विव-क्षितत्वात् वाहनसाहितादिति न णत्वम् । यथाह वामनः । नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वादिति । चकास्तेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । जक्षित्यादयः षडित्यभ्यस्तसंज्ञा ॥ ८ ॥

अजस्रमिति । पुनरजस्रं प्राचुर्येणास्फालितास्ताडिताः सौष्ठ-वपरीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्रीताडनं प्रसिद्धं तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया तद्रागरक्तयेत्यर्थः अत एव पुरः पुरोभागे प्रवालैः विद्रुमैः अथ विद्रुमः

रणद्भिराघट्टनया नभस्वतः
पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छना-
मवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

पुंसि प्रवालं पुन्नपुंसकमित्यमरः । पूरिताद्धेंव स्थितया स्वच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया जपमालयेत्यर्थः । अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययमिति हेमचन्द्रः । तया प्रविष्टस्फटिकग्रहणात् कृपेर्मोक्षार्थित्वं व्यज्यते । स्फटिको मोक्षदः परमिति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात् । विभान्तं भासमानम् । भातेः शतृप्रत्ययः । अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः । तद्गुणः स्वगुणत्यागादिति ॥ ९ ॥

रणद्भिरिति । पुनर्नभस्वतो वायोराघट्टनया आघातेन पृथगसङ्कीर्णं रणद्भिर्ध्वनद्भिः अनुरणनोत्पन्नैरित्यर्थः । श्रुत्यारब्धमनुरणनं स्वर इति लक्षणात् । तदुक्तं रत्नाकरे । श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यत इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम् । प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति । विभिन्नानि प्रतिनियतसङ्ख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहो येषां तैर्विभिन्नश्रुतिमण्डलैः श्रुतिसङ्ख्यानियमश्च दर्शितः । चतस्रश्चतस्रश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ तिस्रस्त्रिर्ऋषभधैवतौ । स्वराः षड्जादयः सप्तोक्तलक्षणाः । तदुक्तं, श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्त ते । तेषां संज्ञाः सरिगमपधनीत्यपरा मता इति । तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसङ्घातभेदानां त्रयाणां मूर्च्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं निजवीणाम् । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपीति

निवर्त्य सोऽनुव्रजतः कृतानती-
नतीन्द्रियज्ञाननिधिर्नभःसदः।
समासदत्सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः॥ ११॥

वैजयन्ती। कुरुक्षेत्रवेत्रमाणम्। तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वनतीति कौतुकादनुसन्दधानमित्यर्थः। अथ ग्रामलक्षणम्। यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते। षड्जग्रामो भवेदादौ मध्यमग्राम एव च। गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतमिति। तथाच नन्द्यावर्त्तोऽथ जीमूतः सुभद्रोऽग्रामकास्त्रयः। षड्जमध्यम-गान्धारास्त्रयाणां जन्महेतव इति। मूर्च्छनालक्षणञ्च। क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च। ग्रामत्रयेऽपि प्रत्येकं सप्तसप्तमूर्च्छना इत्येकविं-शतिर्मूर्च्छना भवन्ति। तत्र नामानि तु नानपेक्षितमुच्यत इति। प्रतिज्ञाभयान्न लिख्यन्ते इति सर्वमवदातम्। अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते। तेन सह स्वतः प्रसिद्धातिशयस्याभेदेनाध्यव-सितत्वात् तन्मूलातिशयोक्तिरलङ्कारः। सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्योत्पत्तिद्योतनाद्वि-भावना व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः॥ १०॥

निवर्त्येति। अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपा-दिविप्रकृष्टार्थाः। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः। द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु परलिङ्गताप्रतिषेधो वक्तव्य इति विशेष्यलिङ्गत्वम्। तेषां ज्ञानं तस्य निधिः सर्वार्थद्रष्टेत्यर्थः कृतान-तीन् कृतप्रणामान् अनुव्रजतोऽनुगच्छतः नभसि आकाशे सीदन्ति गच्छन्तीति नभःसदः सत्सूद्विषेत्यादिना क्विप्। निवर्त्य

पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकै-
र्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥
अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथञ्चित् फणिनाङ्गणैरधः ।

प्रतिषिध्य स मुनिः सादितदैत्यसम्पदः सादिताः विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत् । समाङ्पूर्वात् षद्धातोर्लङ् । अत्र नतीनती पदः पदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः अन्यत्र वृत्त्यनुप्रासः इत्यनयोः संसृष्टिः ॥ ११ ॥

पतदिति । पतन् यः पतङ्गः सूर्यः स प्रतिमा उपमानं यस्य सः । पतङ्गौ पक्षिसूर्यौ चेत्यमरः । तपोनिधिर्मुनिः अस्य हरेः पुरो भुवि पुरःप्रदेशे यावत् न व्यलीयत नातिष्ठत् । लिङ् गताविति धातोर्दैवादिकात्कर्त्तरि लङ् । तावदच्युतो गिरेः शैलात् तडितोऽस्य सन्तीति तडित्वान् मेघ इव । मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वकारः तसौ मत्वर्थे इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वाच्च जश्त्वम् । उच्चैरुन्नतात् पीठात् आसनात् जवेनोदतिष्ठत् । मुनिचरणस्य भूस्पर्शात्प्रागेव स्वयमुत्थितवान् । ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते इति शास्त्रमनुस्मरन्निति भावः । उदोऽनूर्द्ध्वकर्मणीति नियमादिहोर्द्ध्वकर्मणि नात्मनेपदं पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्य्यदण्डिप्रभृतयो बभणुः । अत एवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति ॥ १२ ॥



अथेति । अथाच्युताभ्युत्थानानन्तरं धातुः सुतेन नारदेन

न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥

तमर्घ्यमर्घ्यादिकयादिपूरुषः
सपर्य्यया साधु स पर्य्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥

अयतोऽवनमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तेषां फणिनां गणैः अधोऽधःप्रदेशे कथञ्चिद्धृते स्थापिते भुवस्तले भूपृष्ठे अभिदेवकीसुतम् अभिलक्ष्यीकृत्येत्यर्थः लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । चरणौ पदौ । पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः । न्यधायिषातां निहितौ । दधातेः कर्मणि लुङ् । स्यसिचूसीत्यादिना चिण्वदिट युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

तमिति । आदिपूरुषः पुराणपुरुषः । अन्येषामपि दृश्यते इति वा दीर्घः । स कृष्णः अर्घं पूजामर्हतीति अर्घ्यः । दण्डादिभ्यो यः । तं नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । पादार्घाभ्यां चेति यत्प्रत्ययः । मूल्यपूजाविधावर्घः पात् तु लिम्बर्घ्यमर्घार्थमिति चामरः । अर्घ्यमादिर्यस्यास्तया अर्घ्यादिकया । शेषाद्विभाषेति विकल्पेन कप्प्रत्ययः । सपर्य्यया पूजया । पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समा इत्यमरः । साधु यथा तथा पर्य्यपूपुजत् परिपूजितवान् । णौ चङ्युपधाया ह्रस्वः । युक्तं चैतदित्यर्थान्तरं न्यस्यति गृहानिति । मनस ईषिणो मनीषिणः सन्तः पृषोदरादित्वात्साधुः । अपुण्यकृतां पुण्यमकृतवताम् । सुकर्मपापमन्त्रपुण्येषु कृञ इति भूते क्विप् । गृहान् प्रणयादुपैतुमभीप्सवः प्राप्तुमिच्छवः आप्नोतेः सनन्तादुप्रत्ययः आज्ज्ञप्यृधामीदितीकारः । न भवन्ति किन्तु पुण्यकृतामेव । अतः कृष्णस्य ... मुख्या इत्यर्थः ॥ १४ ॥

न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनि-
श्चिरन्तनस्तावदभिन्यवीविशत् ॥ १५ ॥
महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकै-
रचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥

न यावदिति । उत्थितावेतौ मुनिकृष्णौ जनः तुषाराञ्जनयोः पर्वताविव यावन्नोदपश्यन्नोत्प्रेक्षितवान् तावच्चिरन्तनः पुराणो मुनिः कृष्णः पुरा किल भगवान् बदरिकाश्रमे नारायणावतारेण तपसि स्थितवानिति पुराणात् । सायं चिरमित्यादिना ट्युप्रत्ययः तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदम् अभिन्यवीविशत् स्वाभिमुखेनोपवेशितवान् । अभिनिपूर्वात् विशतेर्ण्यन्ताल्लुङि णिश्रीति चङ् ॥ १५ ॥

महामहेति । महत्या महानीलशिलायाः सिंहलद्वीपसम्भवे-न्द्रनीलोपलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृता इति भगवानगस्त्यः । कंसकृषो हरेः पुरोऽग्रे उच्चकैरुन्नते विष्टरे आसने । वृक्षासनयोर्विष्टर इति षत्वम् । निषेदिवानुपविष्टवान् । भाषायां सदवसश्रुव इति क्वसुः । स मुनिरभिसायं सायङ्कालाभिमुखम् । अव्ययीभावसमासः सायङ्कालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभामचूचुरत् चोरितवान् प्राप्तवानित्यर्थः । चुरस्तेये णिश्रीति चङ् । अन्यस्यान्यधर्मसम्बन्धासम्भवात् चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्यवसानादसम्भव-

विधाय तस्यापचितिं प्रसेदुषः
प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्य्यान् परिचर्य्यया मुहु-
र्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥

अशेषतीर्थोपहृताः कमण्डलो-
र्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसी-
र्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ १८ ॥

दृष्टान्तस्वरूपो निदर्शनाभेदः स चोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १६ ॥

विधायेति । यज्वानो विधिनेष्टवन्तः । यज्वा तु विधिनेष्टवानित्यमरः । सुयजोरिति यजिधातोः ङ्वनिप् । तेषां प्रियो हरिः प्रसेदुषः प्रसन्नस्य । सदेः क्वसुरित्युक्तम् । तस्य मुनेरपचितिं पूजाम् । पूजा नमस्यापचितिरित्यमरः । विधाय विशेषेण मनोवाक्कायकर्मभिस्तत्परतया कृत्वा प्रकाममत्यर्थमप्रीयत प्रीतो बभूव । प्रीयतेर्दैवादिकात् कर्त्तरि लुङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति । महानुभावा महात्मानः आर्य्यान् पूज्यान् परिचर्य्यया मुहुर्ग्रहीतुं वशीकर्त्तुम् । ग्रहोऽलिटि दीर्घ इतीटो दीर्घः । नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति अर्थोऽभिलाषः स एषामस्तीति मत्वर्थे इनिः न तु णिनिः कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसीति भाष्यात् ॥ १७ ॥

अशेषेति । अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा कमण्डलोरुदकपात्रादुद्धृत्येत्यर्थः पाणौ निधाय ऋषिणाभ्युदीरिता आचिन्ताः अत एवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः । पटुशब्दात् ईयसुनि उगितश्चेति ङीप् । अपो जलानि हरिर्नतेन मूर्ध्ना अग्रहीत् सादरतां परिगृहीतवान् ॥ १८ ॥

स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामवपुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥ १९ ॥

स तप्तकार्त्तस्वरभास्वराम्बरः
कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ २० ॥

रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ।

स काञ्चन इति । नवाम्बुदश्यामतनुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे वैकारिकोऽण्प्रत्ययः । यत्रासने न्यविक्षत उपविष्टवान् । निपूर्वविशो लुङि नेर्विश इत्यात्मनेपदं शल इगुपधादनिटः क्सः । तदासनं तदा हर्य्युपवेशनसमये जम्बूर्नीलफलविशेषः । जम्बूः सुरभिपत्रा च राजजम्बूर्महाफलेत्यभिधानरत्नमालायाम् । तया जनिता श्रीर्यस्य तत्तथोक्तस्य । भाषितपुंस्कत्वात् पक्षे पुंवद्भावाद्धुस्वभावः । सुमेरुशृङ्गस्य श्रियञ्जिगायाभिभावितवान् इत्यर्थः । सनलिटोर्जेरिति कुत्वम् । उपमानानुप्रासयोः संसृष्टिः ॥ १९ ॥

स तप्तेति । तप्तं पुटपाकशोधितं कार्त्तस्वरं सुवर्णम् । रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामित्यमरः । तद्वद्भास्वरं दीप्यमानमम्बरं यस्य स पीताम्बरं इत्यर्थः । कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य स इत्युपमानपूर्वपदो बहुव्रीहिः उत्तरपदलोपश्च । स हरिर्वाड़वजातवेदसो वाड़वाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टो व्याप्तोऽम्भसां निधिरिव समुद्र इव विदिद्युते बभौ ॥ २० ॥

रथाङ्गपाणेरिति । रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति पाणेः परनिपातः । रोचिषां

चलत्पलाशान्तरगोचरास्तरो-
स्तुषारमूर्त्तेरिव नक्तमंशवः ॥ २१ ॥
प्रफुल्लतापिच्छनिभैरभीषुभिः
शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥

कृ॰ीनां पटलेन समूहेन संवलिता मिलिता त्विषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम् । तरोश्चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते तुषारा मूर्त्तिर्यस्य तस्येन्दोरंशव इव विरेजिरे चकाशिरे ॥ २१ ॥

प्रफुल्लेति । प्रफुल्लतीति प्रफुल्लं विकसितम् । फुल्ल विकसने इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायाम् अनुपसर्गात् फुल्लचीवकृशोल्लाघा इति निपातनात् प्रफुल्लमित्येवेति चीरस्वामी । तापिच्छस्य तमालस्य पुष्पं तापिच्छम् । फले लुगिति तद्धितलुक् । ह्रिहीनं प्रसवे सर्वमिति नपुंसकत्वम् । कालस्कन्धस्तमालः स्यात्तापिच्छोऽपीत्यमरः । तेन सदृशैः प्रफुल्लतापिच्छनिभैः । नित्यसमासत्वादस्वपदविग्रहः । अत एव खुरुत्तरपदे त्वसीति । निभसङ्काशनीकाशप्रतीकाशोपमादय इत्यमरः । सप्त सप्तच्छदाः पर्णानि पर्वसु यस्येति सप्तच्छदो वृक्षभेदः । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इत्यमरः । सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये । शेषन्तापिच्छवत् । तस्य पुष्पाणि सप्तच्छदानि तेषां पांशुवत् पाण्डुभिः शुभ्रै रभीषुभिः अन्योन्यरश्मिभिः । अभीषुः प्रग्रहे रश्माविति शाश्वतः । परस्परेण च्छुरिते रंषिते अमले छवी अन्योन्यकान्ती ययोस्तौ । छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः । तौ हरिनारदौ तदा एकवर्णाविव बभूवतुः उभयप्रभामेलनादुभयोरपि सर्वाङ्गीनो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणिप्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव । तन्निमित्ता चेयम् एकवर्णतोत्प्रेक्षा ॥ २२ ॥

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥ २३ ॥

निदाघधामानमिवाधिदीधितिं
मुदा विकाशं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रिणी
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥ २४ ॥

युगान्तेति । युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृताः आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यान्तनौ जगन्ति सविकाशं सविस्तरमासत अतिष्ठन् । आस उपवेशने लङ् । तत्र तनौ देहे तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः । पचाद्यच् । मुदः सन्तोषाः न ममुः अतिरिच्यन्ते इत्यर्थः । चतुर्दशभुवनभरणपर्य्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदे-नाध्यवसितातिशयोक्तिः सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा ॥ २३ ॥

निदाघेति । निदाघमुष्णं धाम किरणो यस्य तथोक्तम् । निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपीति विश्वः । अर्कमिवाधिदीधितिम् अधिकतेजसं मुनिमभिलक्ष्य । अभिरभागे इति लक्षणे कर्मप्रवचनीय-संज्ञा कर्मप्रवचनीययुक्ते द्वितीया । मुदा विकाशमुपेयुषी उपगते । क्वसुप्रत्ययान्तो निपातः । अत एवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते । इकोऽचिविभक्ताविति नुमागमः । विलोचने बिभ्रत् । नाभ्यस्ताच्छतुरिति नुमभावः । स हरिः पुण्डरीकाक्षः इत्येवं स्फुटो-ऽभवत् सूर्य्यसन्निधाने श्रीविकाशभावादक्ष्णां पुण्डरीकसाधर्म्यात् । पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तस-म्बर्धसंज्ञोऽभूदित्यर्थः । बिभ्रद् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्य-

सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिः सौधमिवाऽथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ॥ २५ ॥

हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ २६ ॥

लिङ्गस्य निदाघधर्मानसिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

सितमिति । अथोभयोरुपवेशनानन्तरम् अच्युतो हेतुकर्ता विसारिभिरभीक्ष्णं प्रसरद्भिः । बहुलमाभीक्ष्ण्ये इति णिनिः । द्विजावलिर्दन्तपङ्क्तिः । दन्तविप्राण्डजा द्विजा इत्यमरः । सैव व्याजः कपटं यस्य सः तद्रूप इत्यर्थः स चासौ निशाकरश्च तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तम् । अव्ययादाम्प्रत्ययः । सितिम्ना धावल्येन प्रयोज्यकर्त्रा लम्भयन् व्यापारयन् अतिधवलयन्नित्यर्थः । लभेरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् । गतिबुद्धीत्यादिना अणिकर्तुर्न कर्मत्वम् । तथाह वामनः, लभेर्गत्यर्थत्वात् णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे इति प्राप्त्युपसर्जनगत्यर्थत्वे तु न कर्मत्वमेवेति रहस्यम् । लभेश्चेति नुमागमः । शुचिस्मितां वाचमवोचत् उक्तवान् । ब्रुवो वच्यादेशः लुङ् वचि उम् इत्युमागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरेति छलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथोनैरपेक्ष्यात् संसृष्टिः ॥ २५ ॥

हरतीति । भवदीयदर्शनं शरीरभाजां द्रष्टृणाम् इत्यर्थः । भजो ण्विः । कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति

जगत्यपर्य्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभिरसङ्ख्यतां गतै-
रदस्त्वया नुन्नमनुत्तमं तमः॥ २७॥

कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिःक्षेपनिराकुलात्मना।
सदोपयोगेऽपि गुरुस्त्वमक्षयो
निधिः श्रुतीनां धनसम्पदामिव॥ २८॥

गमयति कुतः सम्प्रति दर्शनकाले अघं पापं हरति एष्यतो भाविनः शुभस्य श्रेयसो हेतुः तथा पूर्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतस् एवं त्रैकाल्येऽपि कार्य्यत्वेन च पुंसि सुकृतसमवायमवगमयते। अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः। अत्र हरतीत्यादि-वाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यत्रयोक्तया वाक्यार्थहेतुकं काव्य-लिङ्गमलङ्कारः॥ २६॥

जगतीति। जगत्यपर्य्याप्ता अपरिच्छिन्नाः सहस्रं भानवः अंशवो यस्य तेन भानुना अर्केण भानवोऽर्कहरांशव इति वैजयन्ती। यत्तमो नियन्तुं निवारयितुन्न समभावि न शेके। भावे लुङ्। अवि-द्यमानमुत्तमं यस्मात् तदनुत्तमं सर्वाधिकम् अदस्तमो मोहात्मकम् असङ्ख्यताङ्गतैस्तेजोभिः प्रसह्य बलात् त्वया नुन्नं छिन्नम् अतः श्लाघ्य-दर्शनो भवानिति भावः। नुदविदेत्यादिना विकल्पान्निष्ठानत्वभावः। अत्रोपमानाद्भानोर्मुनेराधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः॥ २७॥

कृत इति। प्रजानामङ्गनानाम् अपत्यानां च क्षेमकृता कुशल-कारिणा। प्रजा स्यात्सन्ततौ जने इत्यमरः। सुपात्रे योग्यपुरुषे कटा-हादिदृढभाजने च निःक्षेपेण निधानेन च निराकुलात्मना स्वस्थ-चित्तेन। योग्यभाजनयोः पात्रमित्यमरः। प्रजासृजा ब्रह्मणा मुनिना च त्वं धनसम्पदामिव श्रुतीनां वेदानां सदोपयोगे दानभो-

विलोकनेनैव तवामुना मुने !
कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसी-
र्गिरोऽथवा श्रेयसि केन तृप्यते ॥ २९ ॥

गतस्पृहोऽप्यागमनप्रयोजनं
वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो
गुरुस्तवैवागम एष धृष्टताम् ॥ ३० ॥

शाख्यां व्ययेऽपि चाव्ययः एकत्वाम्नानादन्यत्वानन्त्याच्चेति भावः । गुरु० उपदेष्टा सम्प्रदायप्रवर्त्तक इति यावत् । अन्यत्र महान् । विधीयत इति निधिः निःक्षेपः कृतः । उपसर्गे घोः किः । स्मृतिसम्प्रदायद्वारा धर्माधर्मव्यवस्थापकतया जगत्प्रतिष्ठाहेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यमिति भावः । अत्र शब्दमात्रसाधर्म्यात् श्लेषोऽयं प्रकृतविषय इत्याहुः ॥ २८ ॥

विलोकनेनेति । हे मुने ! निबर्हितांहसा अपहृतपाप्मना अत एवामुना तव विलोकनेनैव कृतार्थः कृतोऽस्मि । तथाप्यहं गरीयसी-र्बह्वर्थतराः । द्विवचनेत्यादिना ईयसुन्प्रत्ययः, उगितश्चेति ङीप्, प्रियस्थिरेत्यादिना गुरोर्गरादेशः । गिरस्तव वाचोऽपि शुश्रूषुः श्रोतुमिच्छुरस्मि शृणोतेः सन्नन्तादुप्रत्ययः । न चैतद्दूषयेत्याह । अथवा तथाहीत्यर्थः । अथवेति पक्षान्तरप्रसिद्धोरिति गणव्याख्यानात् । श्रेयसि विषये केन तृप्यते न केनापीत्यर्थः । कृतार्थताया इयत्ताभावा-दिति भावः । भावे लिट् ॥ २९ ॥

एवं प्रियमुक्त्वा सम्प्रत्यागमनप्रयोजनं विनयेन पृच्छति । गतस्पृ-होऽपीति । गतस्पृहो विरक्तोऽपि त्वदागमनप्रयोजनं वदेति वक्तुं यया धृष्टतया व्यवसीयते उद्यम्यते । स्यतेर्भावे लट् । उदितमुत्पन्नम् उक्तं वा आत्मनो मम गौरवं येन सः गुरुः श्लाघ्यः एष तवागम

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम ! त्वया ।
त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्य्यं गुरु योगिनामपि ॥ २१ ॥

उदीर्णरागप्रतिरोधकं जनै-
रभीक्ष्णमक्षुण्णतयातिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विन-
स्त्वमग्रभूमिर्निरपायसंश्रया ॥ २२ ॥

आगमनमेव नोऽस्माकं हृष्टतां तनोति विस्तारयति । तनु विस्तारे लट् । भवतो निःस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनव्याप्त्या सावकाशः प्रश्न इति भावः ॥ २० ॥

इति ब्रुवन्तमिति । इति ब्रुवन्तं तं हरिं स व्रती मुनिरुवाच । किमिति ? हे पुरुषोत्तम ! पुरुषेषु श्रेष्ठ ! न निर्द्धारणे इति षष्ठी-समासप्रतिषेधः । त्वया इत्थं गतस्पृहोऽपीति न वाच्यं निःस्पृहस्या-प्यत्र प्रयोजनसम्भवादिति भावः । तदेवाह, योगिनामपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकर्त्तव्य इत्यतोऽस्मादन्यत् गुरु कार्य्यं किमस्ति न किञ्चिदित्यर्थः । तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः ॥२१॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढ़-यति । उदीर्णरागेति । उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन् । प्रतिरोधिपरास्कन्दि-पाटच्चरमलिम्लुचा इत्यमरः । अभीक्ष्णमक्षुण्णतया अनभ्यस्तत्वेनाप्रति-हतत्वेन च जनैरतिदुर्गमं मोक्षपथमपवर्गमार्गं कान्तारञ्चोपेयुषः प्राप्त-वतः । उपेयिवानित्यादिना क्वस्वन्तो निपातः । मनस्विनः सुमनसः धीरस्य च । प्रशंसायां विनिः । त्वमेव निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता । न स पुनरावर्त्तत इति श्रुतेः । अग्रभूमिः प्राप्यस्थानम् । अयमात्मन प्राप्य इति विश्वः । सोऽहं

उदासितारं निगृहीतमानसै-
र्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः
पुरातनं त्वां पुरुषं पुराविदः ॥ २३ ॥

मित्यादिश्रुतेस्तज्ज्ञानादेव मोक्षत्वादिति भावः । तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः । यथा कस्यचित् कुतश्चित्संकटात् निर्गतस्य केनचित् कान्तारेणागतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥ २२ ॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नात्मसाक्षात्कारा-दित्याशङ्क्य सोऽपि त्वमेवेत्याह । उदासितारमिति । पुराविदः पूर्वज्ञाः कपिलादयः त्वां निगृहीतमानसैर्नियमितचित्तैर्योगिभिः आत्मनि अधि इत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः, अनश्चेति समासान्तष्टच् । अध्यात्मं यादृक् ज्ञानं तया अध्यात्मदृशा प्रत्यग्दृष्ट्या कथञ्चन गृहीतं साक्षात्कृतम् । केन रूपेण गृहीतमित्यत आह । उदासितारम् उदासीनं प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः । आसेस्तृच् । विकारेभ्यो बहिः बहिर्विकारं महदादिभ्यः पृथग्-भूतमित्यर्थः । अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः । किञ्च प्रकृते-स्त्रैगुण्यात्मनो मूलकारणात् पृथक् भिन्नम् । प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारण इति यादवः । पुरातनमनादिम् । सायञ्चिरमित्या-दिना ट्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति । विदो लटो वेति झेरुसादेशः । यथाहुः । मूलप्रकृतिरविकृतिर्मह-दाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति । अजामेकां लोहितशुक्लकृष्णामित्यादिश्रुतिश्च । सोऽपि त्वमेव तत्त्वमसीत्यादिवाक्यैरैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीय इति मुमुक्षूणामिति भावः ॥ २३ ॥

निवेशयामासिथ हेलयोद्धृतं
फणाभृताञ्छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकै-
रहीश्वरस्तम्भशिरःसु भूतलम् ॥ २४ ॥

अनन्यगुर्वास्तव केन केवलः
पुराणमूर्त्तेर्महिमावगम्यते ।
मनुष्यजन्मापि सुरासुरान् गुणै-
र्भवान् भवच्छेदकरैः करोत्यधः ॥ २५ ॥

एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति । निवेशयामासिथेति । जगत्त्रयस्य एकस्थपतिरेकाधिपतिः एकशिल्पी च । स्थपतिरधिपतौ तक्ष्णि बृहस्पतिसचिवयोरिति वैजयन्ती । त्वं हेलयोद्धृतं वराहावतारे इति भावः । फणाभृतामोकसः आश्रयस्य सद्मनश्च । ओकः सद्मनि चाश्रये इति विश्वः । एकं छादनमावरणं भूतलम् उच्चकैः उन्नतेषु अहीश्वरः शेष एव स्तम्भः तस्य शिरःसु मूर्द्धसु अग्रेषु च फणासहस्रेष्विति भावः । निवेशयामासिथ निवेशितवानसि । विभातेर्ण्यन्तात् लिटि यल् कृञ्चानु प्रयुज्यते लिटीति अस्तेरनुप्रयोगः । अत्र श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावात् श्लिष्टं परम्परितरूपकम् ॥ २४ ॥

अनन्येति । न विद्यतेऽन्यो गुरुर्यस्यास्तस्याः अनन्यगुर्वाः इत्यनीकारान्तः पाठः समासान्तप्राङ्भीषि नद्यृतश्चेति कप्प्रसङ्गः स्यात् पश्चात्त्वनुपसर्जनाधिकारात् वोतो गुणवचनादिति न प्राप्नोति ङिति ह्रस्वश्चेति वा नदीसंज्ञात्वादाण् नद्या इत्यड़ागमः, केचित्तु समासान्तविधिरनित्य इति कपं वारयन्ति । तस्याः सर्वोत्तमायास्तव पुराणमूर्त्तेरमानुषस्वरूपस्य केवलः कृत्स्नः । केवलः कृत्स्न एकः स्यात् केवलश्चावधारणे इति विश्वः । महिमा केनावगम्यते न केनापीत्यर्थः कुतः मनुष्याज्जन्म यस्य स मनुष्यजन्मा भवान् । अवज्यौ हि बहु-

लघूकरिष्यन्नतिभारभङ्गुरा-
ममूं किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन साम्प्रतं
गुरुर्धरित्री क्रियतेतरां त्वया ॥ २६ ॥

निजौजसोज्जासयितुं जगद्द्रुहा-
मुपाजिहीथा न महीतलं यदि ।

श्रीह्रिर्व्यधिकरणे जन्माद्युत्तरपद इति वामनः । भवच्छेदकरैः संसारनिवर्त्तकैगुणैर्ज्ञानादिभिः सुरासुरान् सुरासुरविरोधस्य कार्य्योपाधिकत्वेनाशाश्वतिकत्वाद्येषाञ्च विरोधः शाश्वतिक इति न द्वन्द्वैकवद्भाव इत्याद्युः । अधः करोति । शेषे प्रथम इति प्रथमपुरुषः भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति । मानुष एव ते महिमा दुरवगाहः अमानुषस्तु किमिति तात्पर्य्यार्थः । द्वितीयार्द्धेऽसकृद्व्यञ्जनावृत्त्या छेकानुप्रासः ॥ २५ ॥

लघूकरिष्यन्निति । त्वमतिभारेण अर्जन स्वरूपेण भङ्गुरां स्वयं भज्यमानाम् । भञ्जभासमिदो घुरच् । भङ्गुरः कर्मकर्त्तरीति वामनः । अमूं भुवमित्यर्थः । लघूकरिष्यन् निर्भारां करिष्यन् किल । कृभ्वस्तीत्यादिना अभूततद्भावे च्विः च्वौ चेति दीर्घः । तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात् । घञर्थे कविधानं वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वं त्रिभागादिवत् । अवातरः अवतीर्णोऽसि साम्प्रतं सम्प्रति उदूढलोकत्रितयेन कुक्षाविति शेषः त्वया धरित्री गुरुः पूज्या भारवती च क्रियतेतराम् अतिशयेन क्रियते । तिङश्चेति तरप् किमेत्तिङव्ययादिना आमुप्रत्ययः । लघुकर्त्ता गुरुकर्त्तेति विरोधाभासोऽलङ्कारः । आभासत्वे विरोधस्य विरोधाभास उच्यत इति लक्षणात् ॥ २६ ॥

निजेति । निजौजसा स्वतेजसा जगद्भ्यो द्रुह्यन्तीति जगद्द्रुहः कंसादयः । सत्सूद्विषेत्यादिना क्विप् । तेषाम् उज्जासयितुं तान् हिंसितुमित्यर्थः । जासि निप्रहणेत्यादिना कर्मणि शेषे षष्ठी,

समाहितैरप्यनिरूपितस्ततः
पदं दृशः स्याः कथमीश ! मादृशाम् ॥ ३७ ॥
उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वम्भर ! विश्वसीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ॥ ३८ ॥

जसु हिंसायामिति चुरादिः । मडीतलं नोपाजिहीथाः यदि नाव-तरेस्तेद् । ओहाङ् गतौ लङि थासिरूपम् । ततस्तर्हि समाहितैः समाधिनिष्ठैरपि सकर्मकादप्याश्रितादिवदविवक्षिते कर्मणि कर्त्तरि क्तः । अथवा समाहितैः समाहितचित्तैरित्यर्थः । विभक्तधनेषु विभक्ता भ्रातर इतिवदुत्तरपदलोपो द्रष्टव्यः, गम्यमानार्थस्याप्रयोग एव लोप इति कैयटः । अनिरूपितोऽज्ञातस्त्वमीश ! मादृशां चर्मचक्षुषामिति भावः । विनयोक्तिरियं, दृशो दृष्टेः पदं गोचरः कथं स्याः न कथञ्चिदित्यर्थः । तस्मात् त्वत्साक्षात्कार एवागमन-प्रयोजनमिति भावः ॥ ३७ ॥

ननु कोऽयं नियमो यन्ममेवायं दुष्टनिग्रहाधिकार इत्याशङ्क्या-नन्यसाध्यत्वमेवाह । उपप्लुतमिति । विश्वं बिभर्त्तीति विश्वम्भर-स्तत्सम्बुद्धौ हे विश्वम्भर ! विश्वत्रातः ! संज्ञायां भृतॄवृजीत्यादिना खच्प्रत्यये मुमागमः । मदोद्धतैः कंसादिभिः उपप्लुतं पीडितम् अदो विश्वं पातुं त्वमेव ईशिषे शक्तोऽसि विश्वम्भरत्वादिति भावः । ईश ऐश्वर्ये चिटि थासि रूपम् । अत्र वैधर्म्येण दृष्टान्तमाह । क्षपायास्तमस्काण्डैस्तमोवर्गैः । काण्डोऽस्त्री दण्डबाणार्ववर्गावसर-वारिष्वित्यमरः । कस्कादिषु चेति विसर्जनीयस्य सत्वम् । मलीमसं मलिनम् । मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः । ज्योत्स्ना तमिस्रेत्यादिना मत्वर्थीयो निपातः । नभः क्षालयितुं रवेः ऋते रविं विना । अन्यारादितरर्त्ते इति पञ्चमी । कः क्षमेत शक्नुयात् न कोऽपीत्यर्थः । अत्र वाक्यद्वये समानधर्मस्यैकस्येशिषे क्षमेतेति

करोति कंसादिमहीभृतां वधात्
जनो मृगाणामिव यत्तव स्तवम् ।
हरे ! हिरण्याक्षपुरःसरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ २९ ॥

प्रवृत्त एव स्वयमुज्झितश्रमः
क्रमेण पेष्टुं भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपं मनः ॥ ४० ॥

शब्दद्वयेन वस्तुभावेन निर्देशात्तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमालङ्कारः । तदुक्तं, सर्वस्य वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ॥ २८ ॥

करोतीति । किञ्च जनो मृगाणामिव कंसादिमहीभृतां वधाद्धेतोः स्तवं स्तोत्रम् । स्तवः स्तोत्रं नुतिः स्तुतिरित्यमरः । करोतीति यत् हे हरे ! कृष्ण ! हे सिंहेति च गम्यते सा स्तुतिक्रिया हिरण्याक्षपुरःसराः हिरण्याक्षप्रभृतयो ये असुरास्त एव द्विपास्तेषां द्विषः हन्तुरित्यर्थः, तस्य तव प्रत्युत वैपरीत्येन प्रत्युतेत्युक्तवैपरीत्ये इति गणव्याख्यानात् । तिरस्क्रिया अवमानः । यदिति सामान्ये नपुंसकम् । सेति विधेयलिङ्गम् । गजघातिनः सिंहस्य मृगवधवर्णनमिव महासुरहन्तुस्तव कंसादिक्षुद्रनृपवधवर्णनं तिरस्कार एवेत्यर्थः । अत्रासुरद्विपानामिति हरिर्हरिरिति श्लिष्टपरम्परितरूपकं मृगाणामिवेत्युपमयाऽङ्गाङ्गिभावेन सङ्कीर्यते ॥ २९ ॥

एवं स्तुत्वा देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति । प्रवृत्त इति । त्वमुज्झितश्रमस्त्यक्तश्रमः सन् क्रमेण भुवनानि द्विषन्तीति भुवनद्विषः दुष्टाः तेषां पेष्टुं तान् हिंसितुमित्यर्थः । जासिनिप्रहणेत्यादिना कर्मणि शेषे षष्ठी । स्वयमपरप्रेरित एव प्रवृत्तोऽसि एवं तर्हि पिष्टपेषणं किमिति प्रवृत्तोऽहं । तथापि स्वतः प्रवृ-

तदिन्द्रसन्दिष्टमुपेन्द्र ! यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्य्येषु गतेन धुर्य्यता-
मर्हिद्विषस्तद्भवता निशम्यताम् ॥ ४१ ॥

अभूदभूमिः प्रतिपक्षजन्मनां
भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिसूदनं हरे-
र्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ४२ ॥

कोऽपि मिथो रहसि त्वदाभाषणे त्वया सह संलापे लौलुपं लुब्धम् । लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभावित्यमरः । मनो मां वाचालतया सह युनक्ति वाचालं करोतीत्यर्थः । वाचो बह्वयोऽस्य सन्तीति वाचालः । आलजाटचौ बहुभाषिणीत्यालच् । स्वाज्जस्रकस्तु वाचालो वाचाटो बहुभाषिणीत्यमरः ॥ ४० ॥

अथ स्ववाक्यश्रवणं सहेतुकमभ्यर्थयते । तदिति । तत्तस्मादिन्द्र-मुपगतः उपेन्द्रः इन्द्रावरजः अत एवेन्द्रसन्दिष्टं श्रोतव्यमिति भावः । किञ्च विश्वस्मै जनाय हितं विश्वजनीनम् । आत्मविश्वजनभोगोत्तर-पदात् खः । यद्वचः क्षणं न तु चिरं मयोच्यते, तद्वचोऽहिद्विषो वृत्रघ्नः । सर्पे वृत्रासुरेऽप्यहिरिति वैजयन्ती । समस्तकार्य्येषु धुर्य्यतां धुरन्धरत्वं गतेन अतोऽपि भवता निशम्यताम् । प्रार्थनायां लोट् । धुरं वहतीति धुर्य्यः । धुरो यड्ढकाविति यत्प्रत्ययः । स्फुटमत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

अथ शिशुपालो हन्तव्य इति वक्तुं तस्यावश्यवध्यत्वेऽनन्यवध्यत्व-ज्ञापनौपयिकतया कौलत्यप्रकटनार्थं जन्मान्तरवृत्तान्तं तावदुद्घाटयति । अभूदिति । प्रतिपक्षाच्छत्रोः जन्म यासां तासां भियामभूमिरविषयः निर्भीक इत्यर्थः तपनद्युतिः सूर्य्यतापो दितेस्तनुजो दैत्योऽभूत् । कोऽसावत आह । हरेरिन्द्रस्य इन्द्रशब्दार्थनिसूदनम् इन्द्रतीति

समत्सरेणासुर इत्युपेयुषा
चिराय नाम्नः प्रथमाभिधेयताम् ।
भयस्य पूर्वावतरस्तरस्विना
मनःसु येन द्युसदां न्यधीयत ॥ ४२ ॥
दिशामधीशांश्चतुरो यतः सुरा-
नपास्य तं रागहृताः सिषेविरे ।

इन्द्रः । इदि परमैश्वर्य्ये ऋज्रेन्द्रेत्यादिना रन्प्रत्ययान्तः औणादिकः निपातः । तस्य इन्द्र इति शब्दस्येन्द्र इति संज्ञापदस्य योऽर्थः परमैश्वर्यलक्षणः तस्य निसूदनं निवर्त्तकम् । कर्त्तरि ल्युट् । हरेरैश्वर्यनिहन्तारमित्यर्थः । यं दैत्यं हिरण्यपूर्वं कशिपुं प्रचक्षते हिरण्यकशिपुमाहुरित्यर्थः । अत्र हिरण्यशब्दपूर्वकत्वं कशिपुशब्दस्यैव न तु संज्ञिनस्तदर्थस्येति शब्दपरस्य कशिपुशब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थदोषप्रसङ्गः । यद्वेवावाच्यवचनमवाच्यवचनं हि तदिति समाधानम् एवंविधविषये शब्दपरेणार्थलक्षणेति कथञ्चित् सम्पाद्यमित्युक्तसञ्ज्ञाभिर्देवपूर्वं गिरिन्ते इति मनुस्मृपदमन्त्रौ वेदमध्यादिदेशेत्येतद्व्याख्यानावसरे सञ्जीविन्यां घण्टापथे च विशेषञ्चालायं दैत्यमपदिश्य हिरण्यपूर्वं कशिपुं प्रचक्षते संज्ञात्वेन प्रयुङ्क्ते ॥ ४२ ॥

समत्सरेणेति । समत्सरेण अन्यशुभद्वेषसहितेन । मत्सरोऽन्यशुभद्वेष इत्यमरः । अस्यतीत्यसुरः । असेरुरन् । असुर इति नाम्ना चिराय चिरकालेन । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः । प्रथमाभिधेयतामुपेयुषा अन्वर्थतया मुख्यार्थतां गतेन तरस्विना बलवता । तरसी बलरंहसी इति विश्वः । येन हिरण्यकशिपुना दिवि सीदन्तीति द्युसदां देवानां मनःसु भयस्य पूर्वावतरः प्रथमप्रवेशः । ऋदोरप् । न्यधीयत निहितः । धाञः कर्मणि लङ् । अस्मादेव देवानां प्रथमं भयस्योत्पत्तिरभूदित्यर्थः ॥ ४३ ॥

दिशामिति । श्रियः सम्पदः यतो यदेत्यर्थः दिशामधीशान् दिक्पतीनपि चतुरः सुरान् इन्द्रयमवरुणकुबेरान् अपास्य त्यक्त्वा तं

अवापुरारभ्य ततश्चला इति
प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥

पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकफलानि नाकिनां
गणैर्यमाशङ्क्य तदादि चक्रिरे ॥ ४५ ॥

स सञ्चरिष्णुर्भुवनान्तरेषु यां
यदृच्छयाशिश्रियदाश्रयः श्रियः ।

हिरण्यकशिपुं रागहृताः रागाकृष्टाः सत्यः न तु बलादिति भावः । सिषेविरे यतो वीरप्रियाः श्रिय इति भावः । तत आरभ्य तदा प्रभृति अयशः करोतीत्ययशस्करं दुष्कीर्त्तिहेतुमित्यर्थः । कृञो हेतुताच्छील्यानुलोम्येष्विति टप्रत्ययः । अतः कृकमीत्यादिना विसर्जनीयस्य सत्वम् । उच्चैः प्रचुरं चला अस्थिरा इति प्रवादं जनापवादमापुः. दिगीशानानपि सर्वस्वहारित्वात्तदौद्धत्यस्य प्राकट्यमिति भावः ॥ ४४ ॥

पुराणीति । किञ्च नाकिनां सुराणां गणैः यं हिरण्यकशिपुम् आशङ्क्य बाधकत्वेनोत्प्रेक्ष्य स कालः आदिर्यस्मिन् तत्तदादि तदा प्रभृति स्वरूपशोभैवैकं फलं मुख्यं प्रयोजनं येषां सुरादीनां तानि तथोक्तानि प्रागीदृगसाध्वसयोरभावादिति भावः । नपुंसकमनपुंसकेनेत्यादिना नपुंसकैकशेषः । पुराणि दुर्गाणि प्राकारपरिखादिना अगम्यानि चक्रिरे, सुदुरोरधिकरणे इति गमेर्डः । आयुधं निशातं निशितञ्चक्रे इति विभक्तिविपरिणामेनान्वयः । शो तनूकरणे इति धातोः क्तः; शाच्छोरन्यतरस्यामितीत्वविकल्पात्पक्षे आत्वम् । बलानि सैन्यानि शूराणि शौर्यवन्ति चक्रिरे सम्पादितानि कञ्चुका वारबाणाः लोहवर्माणीत्यर्थः । कञ्चुको वारबाणोऽस्त्रीत्यमरः । घना दुर्भेदाश्चक्रिरे, इत्थं नित्यसन्नद्धा जाग्रति स्मेत्यर्थः ॥ ४५ ॥

स इति । अन्येषु भुवनेषु भुवनान्तरेषु । सुप्सुपेति समासः ।

अकारि तस्यै मुकुटोपलस्खलत्-
करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥
सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै-
रुरोविदारं प्रतिचस्करे नखैः ॥ ४७ ॥

सञ्चरिष्णुः सञ्चरणशीलः । अलङ्कृञित्यादिना चरेरिष्णुच् । श्रियो लक्ष्म्याः आश्रयः स हिरण्यकशिपुः । यदृच्छया स्वैरवृत्त्या । यदृच्छा स्वैरवृत्तिरित्यमरः । यां दिशमशिश्रियत् अगमत् । श्रियतेर्लुङ् णिश्रीत्यादिना चङि द्विर्भावः इयङादेशः । मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः करा येषां तैः शिरसि बद्धाञ्जलिभिरित्यर्थः । उपलः प्रस्तरे रत्ने इति विश्वः । तिस्रो दशा बाल्यकौमारयौवनानि जन्मसत्तावृद्धयो वा येषां तैस्त्रिदशैर्देवैः । तिस्रः सन्ध्याः समाहृतास्त्रिसन्ध्यम् । तद्धितार्थोत्तरपदेत्यादिना समाहारे द्विगुः, द्विगुरेकवचनं वा टाबन्त इति पक्षे नपुंसकत्वम्, अत्यन्तसंयोगे द्वितीया । तस्यै दिशे करैर्हस्तैः । नमःस्वस्तीत्यादिना चतुर्थी । नमः नमस्कारोऽकारि कृतम् । कृञः कर्मणि लुङ्, चिण् भावकर्मणोरिति चिण् । सन्ध्यावन्दनेऽपि दिङ्नियमं परित्यज्य तदागमनभयात् तस्यै दिशे नमस्कारः कृत इति भावः ॥४६॥

अथ सोऽपि त्वयैव हत इत्याह । सटाच्छटेति । हे नृसिंह ! नरः सिंह इवेत्युपमितसमासः ना चासौ सिंहश्चेत्यपि प्रस्तावात् । सिंहस्येमां सैंहीं तनुं कायं बिभ्रता नृसिंहावतारभाजेत्यर्थः । किम्भूताम् अतनुं विस्तीर्णाम् अत एव सटाच्छटाभिः केशरसमूहैः भिन्ना घना मेघा येन अभ्रङ्कषविग्रहत्वादिति भावः । सटा जटाकेशरयोरिति, तनुः काये कृशेऽल्पे चेति च विश्वः । त्वया स दैत्यः मुग्धौ नवौ । मुग्धः सौम्ये नवे मूढे इति वैजयन्ती । यौ कान्तास्तनौ तयोः सङ्गेनापि भङ्गुरैः कुटिलैर्नखैरुरोविदारम् उरो विदार्य । परिक्लिश्यमाने चेति णमुलित्यर्थः । प्रतिचस्करे हतः । किरतेः

विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः।
स रावणो नाम निकामभीषणं
बभूव रक्षः क्षतरक्षणं दिवः॥ ४८ ॥
प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्त्तिषुः।

कर्मणि लिट्, ऋच्छत्यॄतामिति गुणः, हिंसायां प्रतेश्चेति सुडागमः। वज्रकठिनोऽपि नखैर्विदारित इति वाङ्मनसयोरगोचरमहिम्नस्ते किमसाध्यमिति भावः॥ ४७ ॥

अथास्य जन्मान्तरचेष्टितान्याचष्टे। विनोदमिति। अथ स हिरण्यकशिपुः पुनः भूयोऽपि त्रिदशैः समं सह। साकं सार्द्धं समं सहेत्यमरः। रणेन दर्पादन्तःसाराज्जन्म यस्यास्तस्याः कण्ड्वाः भुजकण्डूतेर्विनोदमपनोदमिच्छन् प्राग्भवनखक्षतैस्तदपनोदाभावादित्यर्थः। दिवः स्वर्गस्य क्षतं नष्टं रक्षणं रक्षा येन तत् क्षतद्युरक्षणमित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। अनेन देवसर्वस्वापहारित्वमुक्तम्। भीषयत इति भीषणः नन्द्यादित्वात् ल्युः, भियो हेतुभये षुगिति षुक्। निकामं भीषणः। सुप्सुपेति समासः, रावणो नाम रावण इति प्रसिद्धं रक्षो बभूव राक्षसयोनौ जात इत्यर्थः। विश्रवसोऽपत्यं पुमान् रावण इति विग्रहः तस्यापत्यमित्यणि कृते विश्रवसो विश्रवणरवणाविति प्रकृतेरवणादेशः। पौराणिकास्तु रावयतीति व्युत्पादयन्ति। तदुक्तमुत्तरकाण्डे, यस्माल्लोकत्रयं चैतद्रावितं भयमागतम्। तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसीति। रौतेर्ण्यन्तात् कर्त्तरि ल्युट्। रावणरक्षसोर्नियतलिङ्गत्वाद्विशेष्यभावेऽपि स्वलिङ्गता॥ ४८ ॥

अथास्यौद्धत्यमष्टादशश्लोक्याचष्टे। प्रभुरिति। यो रावणः भुवनत्रयस्य प्रभुः स्वामी बुभूषुः भवितुमिच्छुः। भुवः सन्नन्तादुप्रत्ययः। अतिरागादुत्साहात् तु फलविशेष्यमनिवेदादिति भावः। दशमं शिरः

अतर्कयद्विघ्नमिवेष्टसाहसः
प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥

समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतासमम्भ्रम-
स्वयंग्रहाश्लेषसुखेन निष्क्रयम् ॥ ५० ॥

चिकर्त्तिषुः कर्त्तितुं छेत्तुमिच्छुः । कृती छेदे इति धातोः सन्नन्तादुप्रत्ययः । इष्टसाहसः प्रियसाहसः अत एवेच्छासदृशमिच्छानुरूपं पिनाकिनः प्रसादं वरं विघ्नमिवातर्कयत् उत्प्रेक्षितवान् इति परमसाहसिकत्वोक्तिः, इत आरभ्य श्लोकषट्केऽपि यच्छब्दस्य स रावणो नाम रक्षो बभूवेति पूर्वेणान्वयः । रक्षोराजस्तु न चक्रमस्याक्रमताधिकन्धरमिति उपरिष्टादन्वय इत्याह तदसत् गुणानां च परार्थत्वादिति न्यायादारुण्यादिवत् प्रत्येकं प्रधानान्वयिनां मिथःसम्बन्धायोगादित्यलं शाखाचङ्क्रमणेन । पुरा किल रावणः काम्ये कर्मणि पशुपतिप्रीणनाय नव शिरांसि अग्नौ हुत्वा दशमारम्भे सन्तुष्टात्तस्मात् त्रैलोक्याधिपत्यं वव्रे इति पौराणिकी कथात्रानुसन्धेया ४९॥

अथ कैलासोत्क्षेपवृत्तान्तमाह । समुत्क्षिपन्निति । यो रावणः पृथिवीभृतां पर्वतानां वरं श्रेष्ठं कैलासं समुत्क्षिपन् दर्पादिति शेषः । शूलिनो वरप्रदानस्य पूर्वोक्तस्य त्रसन्त्याः शैलचलनेन बिभ्यत्यास्तुषाराद्रिसुतायाः पार्वत्याः ससम्भ्रमो यः स्वयङ्ग्रहः प्रियप्रार्थनां विना कण्ठग्रहणम् । सुप्सुपेति समासः । तेन आश्लेषः संश्लेषणं तेन यत् सुखम् । तेन त्रैलोक्याधिपत्यसुखादुत्कृष्टेनेति भावः । निष्क्रयं प्रत्युपकारनिर्गतिं चकार । निष्क्रयो वृद्धियोगे स्यात्सामर्थ्ये निर्गतावपीति वैजयन्ती । यद्वा निष्क्रयं चकार क्रयेण व्यवहारेण याच्ञादोषदैन्यं ममार्जेत्यर्थः । अत्र सुखवरदानयोर्विनिमयात् परिवृत्तिरलङ्कारः ॥ ५० ॥

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ ५१ ॥
सलीलयातानि न भर्तुरभ्रमो-
र्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥

पुरीमिति । यो बली बलीयान् रावणः नमुचिद्विषा इन्द्रेण विगृह्य विरुध्य पुरीममरावतीमवस्कन्द अवरोध नन्दनम् इन्द्रवनम् । नन्दनं वनमित्यमरः । लुनीहि चिच्छेद । ई हल्यघोरितीकारः । रत्नानि श्रेष्ठवस्तूनि मणीन् वा । रत्नं श्रेष्ठे मणावपीति विश्वः । मुषाण मुमोष । मुष स्तेये हलः श्नः शानज्झाविति श्नः शानजादेशः । अमराङ्गनाः हर जहार । सर्वत्र पौनःपुन्येनेत्यर्थः । इत्यनेन प्रकारेण अहनि च दिवा चाहर्दिवम् अहन्यहनीत्यर्थः । अचतुरेत्यादिना वीप्सायामर्थवृत्तौ द्वन्द्वे समासान्तो निपातः । दिवः स्वर्गस्यास्वास्थ्यमुपद्रवं चक्रे । अत्रावस्कन्देत्यादौ क्रियासमभिहारे लोट् लोटो हिस्वौ च वा तध्वमोरित्यनुवृत्तौ समुच्चयेऽन्यतरस्यामिति विकल्पेन सामान्ये लोट् । तस्य यथोपपन्नं सर्वतिङादेशो हिस्वौ च प्रकरणादिना त्वर्थविशेषावगमः अतो हेरिति यथायोग्यं हिलुक्, पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः अवस्कन्दनादिक्रियाविशेषाणां समुच्चयः क्रियासमभिहारः तत्सामान्यस्य करोतेः । समुच्चये सामान्यवचनस्येत्यनुप्रयोगश्चक्रे इति । अत्र तिङ्वैचित्र्यात्सौशब्द्याख्यो गुणः । सुपां तिङां परावृत्तिः सौशब्द्यमिति लक्षणात् समुच्चयश्चालङ्कारः ॥५१॥

सलीलेति । संयति युद्धे । समुदायः स्त्रियां संयत्समित्याजिसमिद्युध इत्यमरः । येन रावणेन अनुद्रुतोऽनुधावितः बलस्य शत्रु-

अशक्नुवन् सोढ़मधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५३ ॥

बृहच्छिलानिष्ठुरकण्ठघट्टना-
द्विकीर्णलोलाग्निकणं सुरद्विषः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥ ५४ ॥

रिन्द्रः अभ्रमोर्भर्त्तुरैरावतस्य सलीलयातानि सभङ्गीकगमनानि न प्रशशंस तथा उच्चैःश्रवसः स्वाश्वस्य चित्रं नानाविधं पदक्रमं पादविक्षेपम् अर्द्धपुलायितादिगतिविशेषमित्यर्थः न प्रशशंस किन्तु केवलं शीघ्रतां शीघ्रगामित्वमेव प्रशशंस अन्यथा शीघ्रं लालाक्रान्त्य अहोष्यतीति भयादिति भावः ॥ ५२ ॥

अशक्नुवन्निति । अधीरलोचनः अस्थिरदृष्टिः कौशिको महेन्द्रः उलूकश्च । महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिक इत्यमरः । सहस्ररश्मेः सूर्य्यस्येव यस्य रावणस्य विक्रमकर्मणो दर्शनं सोढुमशक्नुवन् । हेमाद्रेर्गुहेव गृहं तस्यान्तरं प्रविश्य बिभ्यत्तत्रापि वेपमान एव । बिभीतेः शतरि नाभ्यस्ताच्छतुरिति नुमभावः । दिवसानि वासराणि निनाय । वा तु क्लीबे दिवसवासरौ इत्यमरः । यथा पेचकः सूर्य्योदये भीतः सन् तिष्ठति तथा सोऽपीति भावः । कौशिक इत्यभिधायाः प्रस्तुतैकगोचरत्वेनोभयस्यापि विशेष्यस्योपादानसम्भवात् उलूकविषयशब्दशक्तिमूलो ध्वनिः सहस्ररश्मेरिवेत्युपमानानिर्वाहकत्वात् वाच्यसिद्ध्यङ्गम् ॥ ५३ ॥

बृहच्छिलेति । बृहति शिलेव निष्ठुरे कण्ठे घट्टनादभिघाताद्विकीर्णा विक्षिप्ताः लोलाश्चाग्निकणाः स्फुलिङ्गाः यस्य तत् अत एवाप्रसहिष्णु अनभिभावकम् । प्रसहनमभिभव इति वृत्तिकारः ।

विभिन्नशङ्खः कलुषीभवन्मुहु-
र्मदेन दन्तीव मनुष्यधर्मणः।
निरस्तगाम्भीर्य्यमपास्तपुष्पकं
प्रकम्पयामास न मानसं न सः॥ ५५॥
रणेषु तस्य प्रहिताः प्रचेतसा
सरोषहुङ्कारपराङ्मुखीकृताः।

अलङ्कृ,मित्यादिना दूष्णुच्। वैष्णवं चक्रं सुदर्शनं जगत्प्रभोः सकललोकैकस्वामिनः अस्य सुरद्विषो रावणस्य कन्धरायामधि अधिकन्धरम् अधिग्रीवम्। विभक्त्यर्थेऽव्ययीभावः अव्ययीभावः अव्ययीभावश्चेति नपुंसकत्वात् ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वम्। कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपीत्यमरः। नाक्रमत अप्रतिहतं न क्रमते स न प्रवर्त्तते स किन्तु प्रतिहतमेवेत्यर्थः। वृत्तिसर्गतायनेषु क्रम इति वृत्तावात्मनेपदं वृत्तिरप्रतिबन्धः॥ ५४॥

विभिन्नेति। स रावणो मदेन दर्पेणभदानेन च। मदो दर्पेभदानयोरिति विश्वः। दन्तीव गज इव विभिन्नो विघट्टितः शङ्खो निधिभेदः कम्बुश्च येन सः सन्। शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेषु चेति विश्वः। अकलुषं कलुषं क्षुब्धमाविलं च भवत् कलुषीभवत् निरस्तं गाम्भीर्य्यमविकारित्वमगाधित्वं च यस्य तत्। अपास्तानि पुष्पाणि पुष्पकं विमानञ्च यस्मात् तत्। पुष्पपक्षे वैभाषिकः कप्प्रत्ययः। मनुष्यस्येव धर्मः प्रसन्नत्वादिर्यस्येति स्वामी। तस्य मनुष्यधर्मणः। धर्मादनिच् केवलादित्यनिच्। मानसं चित्तं तदीयं सरश्च। मानसं सरसि स्वान्त इति विश्वः। मुहुर्न कम्पयामास न चोभयामासेति न किन्तु कम्पयामासेवेत्यर्थः। कुवेरस्य महामहिमतया सम्भाविताप्रकम्पित्वनिवारणाय नञ्द्वयं सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयमिति वामनः। अत्र दन्तिरावणयोः प्रकृताप्रकृतयोः श्लेषः॥५५॥

रणेष्विति। किञ्च रणेषु प्रचेतसा वरुणेन प्रहिताः प्रयुक्ताः उरगराजा महासर्पास्त रज्जव इव उरगराजरज्जवः नागपाशा

प्रहर्त्तुरेवोरगराजरज्जवो
जवेन कण्ठं सभयाः प्रपेदिरे ॥ ५६ ॥

परेतभर्त्तुर्महिषोऽमुना धनु-
र्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरा-
दुवाह दुःखेन भृशानतं शिरः ॥ ५७ ॥

स्पृशन् सशङ्कः समये शुचावपि
स्थितः कराग्रैरसमग्रपातिभिः ।
अघर्मघर्मोदकविन्दुमौक्तिकै-
रलञ्चकारास्य वधूरहस्करः ॥ ५८ ॥

इत्यर्थः । तस्य रावणस्य सर्पोपहारेण पराङ्मुखीकृताः व्यावर्त्तिताः । अत एव सभयाः सन्तः जवेन वेगेन प्रहर्त्तुः प्रयोक्तुः प्रचेतस एव कण्ठं प्रपेदिरे प्राप्ताः । अत्र परहिंसाप्रयुक्तस्यायुधस्य वैपरीत्येन स्वकण्ठप्रहणादनर्थोत्पत्तिरूपो विषमालङ्कारः ॥ ५६ ॥

परेतभर्त्तुरिति । अमुना रावणेन धनुः शार्ङ्गं विधातुं निर्मातुम् उत्खातमुत्पाटितं विषाणयोः शृङ्गयोर्मण्डलं वलयं यस्य स परेतभर्त्तुः यमस्य महिषो वाहनभूत इति भावः । भारे विषाणरूपे । भृजो घञ् । हृतेऽपि महतस्त्रपैः भरस्तस्मात्ततोऽपि दुर्भरादिति भावः । भृञः क्र्यादिकात् कृदोरबिति अप् प्रत्ययः । भृशमत्यर्थमानतं नम्रं शिरो दुःखेनोवाह वहति स्म । असंयोगाल्लिट् कित्वाद्वचिस्वपीत्यादिना सम्प्रसारणम् । हृतेऽपि भारे नतमिति विरोधः तदनुप्राणिता चेयम् अवनतिहेतुत्वसाधर्म्यात् त्रपाभारस्योत्प्रेक्षा ॥५७॥

स्पृशन्निति । अहः करोतीत्यहस्करः सूर्य्यः । दिवाविभानिशेत्यादिना टप्रत्ययः, कस्कादित्वात्सत्वम् । शुचौ समये ग्रीष्मकाले अनुपहते आचारे च स्थितोऽपि शुचिः शुद्धेऽनुपहते शृङ्गाराषाढ़योरपि ग्रीष्मे हुतवहेऽपि स्यादिति विश्वः । समयाः शपथाचारकालसिद्धा-

कलासमग्रेण गृहानमुञ्चता
मनस्विनीरुत्कयितुं पटीयसा ।
विलासिनस्तस्य वितन्वता रतिं
न नर्मसाचिव्यमकारि नेन्दुना ॥ ५९ ॥
विदग्धलीलोचितदन्तपत्रिका-
विधित्सया नूनमनेन मानिना ।

सर्वविद् इत्यमरः । असम्यक्पातिभिः सङ्कुचितवृत्तिभिरित्यर्थः । कराग्रांशूनां हस्तानां चाग्रैः । बलिहस्तांशवः करा इत्यमरः । सशङ्कः स्पृशन् अविश्वासभयादिति भावः । अघर्माः अनुष्णाः घर्मोदकबिन्दवः स्वेदोदबिन्दवः । मन्थौदनेत्यादिना विकल्पादुदकशब्दस्योदादेशाभावः । तैरेव मौक्तिकैरस्य वधूरलञ्चकार योग्ये तद्भयास्त्रासशान्तपतीत्यर्थः । अत्र प्रस्तुतचन्द्रविशेषणसाम्यादप्रस्तुतप्रसाधकप्रतीतेः समासोक्तिरलङ्कारः ॥ ५८ ॥

कलासमग्रेणेति । कलाभिः षोडशांशैः शिल्पविद्याभिश्च समग्रेण सम्पूर्णेन । काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कलेति वैजयन्ती । गृहानमुञ्चता सदा तद्गृहेष्वेव वसता दण्डभयात् सेवाधर्मत्वाच्चेति भावः । मनस्विनीर्मानिनीरुत्का उत्सुकाः कर्तुम् उत्कयितुम् । उत्क उन्मना इति निपातनादुत्करोतीति ण्यन्तात्तुमुन् । पटीयसा मनोभेदचतुरेणेत्यर्थः । कुतः रतिं वितन्वता चन्द्रिकाभिश्चतुरोक्तिभिश्च रागं वर्द्धयता इन्दुना विलासिनो विलसनशीलस्य । वौ कषलसेत्यादिना घिणुन्प्रत्ययः । तस्य रावणस्य नर्मसाचिव्यं क्रीडासम्बन्ध्यधिकारित्वे सचेष्टत्वम् । लीला क्रीडा च नर्म चेत्यमरः । नाकारीति न किन्त्वकार्य्येवेत्यर्थः अनौचित्यात्प्राप्तनर्मसाचिव्यनिषेधनिवारणार्थं नञ्द्वयम् । सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयमिति वामनः । अत्रेन्दोः प्रकृतस्याप्रकृतेन नर्मसचिवेन श्लेषः ॥ ५९ ॥

विदग्धेति । मानिना अहङ्कारिणा अनेन रावणेन विदग्धलीलाचतुरविलासिन्य[illegible] । [illegible]ता सा दन्तपत्रिकाम्

प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५५ ॥
गुणानामायथातथ्यादर्थं विप्लावयन्ति ये।
अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥५६॥
स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे।
यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम् ॥ ५७ ॥

क्रयः सहसा प्रतप्तस्य क्वथितस्य सर्पिषो घृतस्य तोयबिन्दव इव प्रत्युत वैपरीत्येन दीपकाः प्रज्वलनकारिणः न तु शान्तिकरा इत्यर्थः, तस्माद् दण्ड्य एव सः। मनुवचनन्त्वप्ररूढवैरविषयमिति भावः ॥५५॥

एवं स्थिते केचिदुद्धवादयः प्रत्याचक्षीरन् तान् प्रत्याह, गुणानामिति। सन्ध्यादीनां गुणानामायथातथ्यात् यथातथात्वमनतिक्रम्य यथातथं यथायोग्यम् इति यावत्। यथार्थे तु यथातथमित्यमरः। यथार्थेऽव्ययीभावः सनपुंसकमिति नपुंसकत्वं, ह्रस्वो नपुंसके इति ह्रस्वत्वम्। ततो नञ्समासे अयथातथं तस्य भावः आयथातथ्यम्। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः, यथातथयथापुरयोः पर्यायेणेति विकल्पान्नञ्पूर्वपदवृद्धिः। तस्मादायथातथ्यादयथायोग्यत्वादन्यकालेऽन्यप्रयोगादित्यर्थः। अर्थस्वप्रयोजनं विप्लावयन्ति कार्यहानिं कुर्वन्तीत्यर्थः। अमात्यानां व्यञ्जनं चिह्नं येषां ते तथोक्तास्तद्वेषधारिण इत्यर्थः। अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः। वस्तुतस्तु शत्रुरिति संज्ञा एषां सञ्जाता शत्रुसंज्ञिताः शत्रव एव ते कूटमन्त्रिणो राज्ञां दूषयितुमर्हाः दूष्या गर्ह्याः त्याज्या इति यावत्। कृत्यानां कर्तरि वेति कर्तरि षष्ठी। अतः स्वोक्तं न प्रतिरोद्धव्यमिति भावः ॥ ५६ ॥

ननु यातव्येऽपि काले यातव्य इत्याशङ्क्यायमेव काल इत्याह, स्वेति। केचिद् वृद्धाः स्वस्य शक्त्युपचये सामर्थ्यातिरेके यानं यात्रामाहुः। यथाह कामन्दकः, प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति। तथा विपक्षे व्यसनानपेक्षो क्षमो द्विषन्तं

मुदितः प्रतीयादिति। अपरे वृद्धाः परस्य शत्रोर्व्यसने विपदि।

लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ।
यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥ ५८ ॥
विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥ ५९ ॥
हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ ६० ॥

व्यसनं विपदि भ्रंशे इत्यमरः। यानमाह्वः । अत्र मनुः, तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोरिति । तद्द्वयमुक्तपक्षद्वयं कर्तुं व्यासोनमनुद्युज्ञानमुद्दैदास इति शानजाकारस्यैकारादेशः । त्वामुत्थापयति प्रेरयति । तदुभयलाभादीदृक् कालो न कदापि लप्स्यत इत्यर्थः ॥ ५७ ॥

तत्र स्वपक्षप्रचयं तावच्चर्चयति, लिलङ्घयिषत इति । लोकान् लङ्घयितुमिच्छतो लिलङ्घयिषतः । लङ्घयतेः सन्नन्ताल्लटः शतरि शस् । अलङ्घ्यान् स्वयं दुर्लङ्घ्यान् कुतः अलघीयसः अतिगुरून् अत एव यादवा अम्भोनिधय इवेत्युपमितसमासः, तान् यादवाम्भोनिधीन् भवतः क्षमा तितिक्षा वेलेव कूलमिव । वेला कूलेऽपि वारिधेरिति विश्वः । रुन्धे प्रतिबध्नाति अन्यथा प्रागेव सर्वं संहरेयुरिति भावः ॥ ५८ ॥

अभ्युच्चयस्यायमपरः यदल्पेनैव ते विजयलाभ इत्याह, विजय इति । सेनायाः कर्त्र्यां विजयः साक्षिमात्रे उदासीने एव फलभाजि त्वयि समीक्ष्योक्ते साङ्ख्योक्ते । साङ्ख्यं समीक्ष्यमिति त्रिकाण्डः । आत्मनि बुद्धेर्महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य कर्त्र्याः भोगः सुखदुःखानुभव इवापदिश्यतां व्यवह्रियतां भृत्यजयपराजययोः स्वामिगत्वादिति भावः । साङ्ख्या अप्याहुः, कर्तैव भवत्युदासीन इति सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिरिति च ॥ ५९ ॥

अथ परस्य व्यसनमाह, हत इति । हिडिम्बरिपुणा भीमेन द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः । मातुरुत्संख्यासम्भद्रपूर्वाया इत्यण्

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः॥ ६१॥
अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः॥ ६२॥

प्रत्ययः, उकारस्यान्तादेशो रेफपरः। तस्मिन् राज्ञि जरासन्धे सद्धिताभ्यां पतीभ्याम् अर्द्धशः प्रसूतो जरया नाम पिशाच्या सन्धितस्येति कथयन्ति। युधि हते सति चिरस्य चिरकालेन। चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः। मित्रव्यसनी मित्रव्यसनवान् मित्रभ्रंशवानिति यावत्। व्यसनं विपदि भ्रंश इत्यमरः। दमघोषाज्जातो दमघोषजश्चैद्यः सुखेन दम्यत इति सुदमः एकाकित्वात् सुसाध्य इत्यर्थः॥ ६०॥

कष्टश्चायं पक्षोऽभ्युपेत्यवादेनोक्तो वस्तुतस्तु शूराणाम् अयमप्रश्न एव इष्टः शास्त्रसंवादी। यथाह कामन्दकः, यदा समस्तं प्रसभं निहन्तुमराक्रमाद्दूर्जितसम्यमित्रम्। तदाभियायादहितानि कुर्वन्नुपान्ततः कर्षणपीड़नानीत्यभिप्रेत्याह, नीतिरिति। परः शत्रुः आपदि गम्यो गमनार्हः नीतिरिति यत्तदापदि गमनं मानिनः शौर्याभिमानिनः ह्रिये लज्जाकरमित्यर्थः, किन्तु पूर्ण उपचितगात्रः स शत्रुस्तस्य मानिनः विधुश्चन्द्रः विधुं तुदति हिनस्तीति विधुन्तुदो राहुः। विध्वरुषोस्तुद इति खश्प्रत्यये मुमागमः। तस्येवोत्सवाय अत एव बलिना बलवानेव यातव्यः, बलिनश्च वयमिति भावः॥ ६१॥

तर्हि पूर्वोदाहृतमन्वादिशास्त्रविरोधः स्यादित्याशङ्क्याह, अन्यदिति। अन्यदुच्छृङ्खलमनर्गलं प्रसह्यपीड़नक्षममिति भावः सत्त्वं बलम् अन्यत् शास्त्रेण मन्वादिशास्त्रेण नियन्त्रितम् उदाहृतं परव्यसनकाले सत्त्वमन्यत् तयोः सापेक्षत्वनिरपेक्षत्वाभ्यां मिथोविरोधान्नैकशास्त्रत्वं सम्भवतीत्यर्थः। अत्र दृष्टान्तमाह, तेजस्तिमिरयोः समानमधिकरणं ययोस्तयोर्भावः सामानाधिकरण्यम् एकाश्रयत्वं कुतः न कुतश्चित् तयोः सहावस्थानविरोधादिति भावः। तस्मादुभयोरदि-

इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः ।
आस्माकदन्तिसान्निध्याद्वामनीभूतभूरुहः ॥ ६३ ॥
निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीम्माहिष्मतीं द्विषः ॥ ६४ ॥

तानुदितहोमवद्भिन्नविषयत्वादितरेतरयास्त्रविरोधो न बाधक इति भावः ॥ ६२ ॥

तर्हि नः किमिदानीं कार्य्यमत आह, इन्द्रप्रस्थेति । इन्द्रप्रस्थस्य पार्थनगरस्य गमो गमनम् । ग्रहवृदृनिश्चिगमश्चेत्यप्प्रत्ययः । मा कारि तावन्न क्रियतामेवेत्यर्थः । यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे इति विश्वः । कञः कर्मणि लुङ्, माङि लुङित्याशीरर्थे न माङ्योग इत्यट्प्रतिषेधः । किन्तु चेदयः चेदिदेशाः अस्माकमिमे आस्माकाः । युष्मदस्मदोरन्यतरस्यां खञ् चेति विकल्पादण्प्रत्ययः, तस्मिन्नणि च युष्माकास्माकावित्यस्माकादेशः । सन्निधिरेव सान्निध्यम् । स्वार्थे ष्यञ्-प्रत्ययः । आस्माकानां दन्तिनां सान्निध्यात् वामनीभूताः शाखाभङ्गात् खर्वीभूता भूरुहो वृक्षा येषां ते तथोक्ताः सन्तु चेदियात्रैव क्रियता-मित्यर्थः । सा च प्रस्तुताप्रस्तुतेनैव स्वकार्य्येण गम्यत इति पर्य्या-योक्तालङ्कारः । कारणं गम्यते यत्र प्रस्तुतात् कार्य्यवर्णनात् । प्रस्तुत-त्वेन सम्बन्धात् पर्य्यायोक्तः स उच्यत इति लक्षणात् ॥ ६३ ॥

निरुद्धेति । किञ्च दाशार्हाः यादवाः वीवधो धान्यादिप्राप्तिः आसारः सुहृद्बलं प्रसारस्तृणकाष्ठादेः प्रवेशः । धान्यादेर्वीवधः प्राप्ति-रासारस्तु सुहृद्बलं प्रसारस्तृणकाष्ठादेः प्रवेश इति वैजयन्ती । ते निरुद्धा यैस्ते तथोक्ताः, अन्यत्र निरुद्धौ वीवधानां पर्य्याहारापर-नाम्नां स्कन्धयाह्यक्षीराद्याहरणसाधनभारविशेषाणाम् आसारप्रसरौ प्रवेशनिर्गमौ यैस्ते तथोक्ताः । विवधो वीवधो भारे पर्य्याहाराध्वनोर-पीति हेमचन्द्रः । व्रजं गोष्ठम् । व्रजं स्याद्गोकुलं गोष्ठमिति वैजयन्ती । गा इव माहिष्मतीं पुरीं द्विषोऽरीनुपरुन्धन्तु व्रजे गा इव माहि-

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते॥ ६५॥
प्राप्यतां विद्युतां सम्पत् सम्पर्कादर्करोचिषाम्।
शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः॥ ६६॥
इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव॥ ६७॥
निशम्य ताः शेषगवीरभिधातुमधोक्षजः।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद् दृशा॥ ६८॥

अत्याक्षरीत् आदत्तवानित्यर्थः। दुह्याचिरुधीति द्विकर्मकत्वं, तत्र पुरोव्रजावकथितं कर्म अन्यदीप्सितं कर्म॥ ६४॥

तर्हि पार्थप्रार्थनायाः का गतिरित्याशङ्क्य उपेक्षैव गतिरित्याह, यजतामिति। पाण्डवो युधिष्ठिरो यजतां यागं करोतु, इन्द्रः स्वर्गमवतु रक्षतु, इनोऽर्कः। इनः पत्यौ नृपार्कयोरिति मेदिनी। तपतु प्रकाशतां, वयं द्विषोऽरीन् हनाम मारयाम। आडुत्तमस्य पिच्चेत्याड़ागमः, सर्वत्र प्राप्तकाले लोट्। तथाहि, सर्वो जनः स्वार्थं स्वप्रयोजनं समीहते अनुसन्धत्ते। इन्द्रादिसमानयोगक्षेमो नः पार्थ इत्यर्थः। अर्थान्तरन्यासः॥ ६५॥

प्राप्यतामिति। किञ्च द्विषतां शिरश्छेदेन प्रोच्छलता उद्गच्छता शोणितेनोक्षितैः सिक्तैः शस्त्रैरर्करोचिषां सम्पर्काद्विद्युतां सम्पत् लक्ष्मीः प्राप्यतामिति निदर्शनालङ्कारः॥ ६६॥

इतीति। इतीत्थं संरम्भिणः क्षुभितस्य बलभद्रस्य वाणीरालेख्यदेवताश्चित्रलिखितदेवताः सभायाः सदोगृहस्य भित्तीनां प्रतिध्वानैः प्रतिध्वनिव्याजेनेत्यर्थः, भयादन्ववदन् अन्ववोचन्निवेत्युत्प्रेक्षा॥ ६७॥

निशम्येति। अधःकृतमक्षजमिन्द्रियजं ज्ञानं येन सोऽधोक्षजो हरिः ताः शेषस्य शेषावतारस्य बलभद्रस्य गाः वाचः शेषगवीः।

भारतीमाहितभरामथानुद्धतमुद्धवः ।
तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥ ६९ ॥
सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना ।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥ ७० ॥

गौरतद्धितलुकीति टच् टित्वाड्ङीप् । निशम्य श्रुत्वा । निशा-म्यतीति श्यने तथा निशमयत्यपीति भट्टमल्लः । तत्र शाम्यतेरिदं रूपम् अन्यथा निशमय्येति स्यात् । अत एव वामनः निशम्य-निशमय्यशब्दौ प्रकृतिभेदादिति । बृहतां वाचां पत्युः बृहस्पतेस्तस्य शिष्याय उद्धवायाभिधातुं वक्तुं दृशा दृक्संज्ञया प्रस्तावम् अवसर-मदिशत् अतिसृष्टवान् । प्रस्तावः स्यादवसर इत्यमरः ॥ ६८ ॥

भारतीमिति । अथ कृष्णानुज्ञानन्तरम् उद्धवः आहितो भरो-ऽर्थगौरवं यस्यां सा तां तथ्यां यथार्थां भारतीं वाचम् अनुद्धतमग-र्वितं यथा तथा गदस्याग्रजं कृष्णम् अग्रे पुरत इति प्रागल्भ्योक्तिः । उतथ्यस्य महर्षेरनुजो बृहस्पतिः । उतथ्यावरजो जीव इति विश्वः । तद्वत् तेन तुल्यं जगाद । तद्वत्तेन तुल्यं क्रिया चेद्वति-रिति वतिः । तद्धितगेयमुपमा ॥ ६९ ॥

किं जगादेत्याह, सम्प्रतीति । सम्प्रति मुसलपाणिना बलभद्रेण केवलं शूरेणेति ध्वनिः । उक्ते सति वक्तुमसाम्प्रतम् अयुक्तम् । असाधूक्तत्वादस्यासमानयोगक्षेमप्रसङ्गादिति ध्वनिः । साम्प्रतशब्द-स्यार्हार्थत्वात्तद्योगे शकधृषेत्यादिना तुमुन् । तथाहि, लेख्येन पत्रे-णार्थे वाच्ये निर्द्धारिते निर्णीते सति वाचिकं व्याहृतार्थां वाचं सन्देशवचनमित्यर्थः । सन्देशवाग्वाचिकं स्यादित्यमरः । वाचो व्याहृतार्थायामिति ठक् । उक्त्वा खलु न वाच्यं खल्वित्यर्थः । खल्वादयः प्रतिषेधे अन्यो वाक्यालङ्कारे । निषेधवाक्यालङ्कारे, जिज्ञासानुनये खलु इत्युभयत्राप्यमरः । अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वेति क्त्वाप्रत्ययः । इह न पादादौ खल्वादय इति निषेधस्योद्वे-जकाभिप्रायत्वात् । नञर्थखलुशब्दस्यापि तदर्थत्वात् नञ्वदेव पादादौ

तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम्।
तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः॥ ७१॥
वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता॥ ७२॥
बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः॥ ७३॥

प्रयोगे न दूष्यतीत्यनुसन्धेयम्। लिखितार्थे वाचिकमिव बलोक्ते सदुक्तिरनवकाशेति वाक्यार्थे प्रतिबिम्बकरणात् स्पष्टस्तावद् दृष्टान्तः स्तुतिव्याजेन निन्दावगमात् व्याजस्तुतिश्च लक्षणं चाग्रे वक्ष्यते॥७०॥

तर्हि किं तूष्णीम्भूतेन भाव्यं नेत्याह, तथापीति। तथापि बलेन निर्जितेऽपि ते तव मय्यपि बलभद्र इवेत्यपिशब्दार्थः। गुरुरित्येव यद्गौरवमादरः तद्गौरवं जल्पतः जल्पने प्रयोज्य कर्मणो मे प्रयोजककर्तृत्वं प्रेरकत्वमुपैति अतो वक्ष्यामीत्यर्थः। न हि पण्डितैः सादरं पृष्टस्य विशेषज्ञस्य अज्ञवत्तूष्णीम्भावो युक्त इति भावः॥ ७१॥

ननु रामेणैव सर्वं प्रपञ्चेनोक्तं सम्प्रति किन्ते वाच्यमस्तीत्याशङ्क्य ष्टया प्रपञ्चोऽयमिति हृदि निधाय स्वयमाह, वर्णैरित्यादित्रयेण। कतिपयैः परिमितैर्वर्णैः पञ्चाशतैव मातृकाक्षरैः कतिपयैः सप्तभिरेव स्वरैर्निषादादिभिः ग्रथितस्य गुम्फितस्य वाङ्मयस्य शब्दजालस्य। एकाचोऽपि नित्यं मयटमिच्छन्ति इति स्वार्थे मयट्। गीयत इति गेयं तस्य गानस्येव विचित्रता रचनाभेदादनन्ता अपरिमिता भवतीत्यर्थः अहो अतस्तेन साधूक्तेऽपि विशेषानन्त्यात् ममापि वक्तव्यमस्तीत्येको भावः। तस्य दुरुक्तत्वान्ममैवास्तीत्यन्यः। प्रत्यनयवमिवोपादानादनेकैवेयमुपमा॥ ७२॥

बह्वपीति। स्वेच्छया स्वप्रतिभानुसारेण प्रकीर्णमसङ्गतं बह्वपि कामं यथेष्टमभिधीयते, किन्तु अनुज्झितोऽर्थसम्बन्धः पदार्थसङ्गतिर्यस्मिन् स प्रबन्धः सन्दर्भः दुरुदाहरो दुर्वचः। हरतेः खल्प्रत्ययः। रामेण तु सङ्गतमेवोक्तमिति स्तुतिः असङ्गतमेवोक्तमिति निन्दा च गम्यते॥७३॥

त्वदीयसीमपि घनामनल्पगुणकल्पिताम् ।
प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥ ७४ ॥
विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते पुरः ।
हेतुः परिचयस्थैर्य्यं वक्तुर्गुणनिकैव सा ॥ ७५ ॥
प्रज्ञोत्साहवतः स्वामी यतेताधातुमात्मनि ।
तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसम्पदः ॥ ७६ ॥

त्वदीयसीमिति । कुशलाः वक्तारो त्वदीयसीमतिसुकुमाराच्चरां लक्ष्णतरां च तथापि घनामर्थगुर्वीम्, अन्यत सान्द्रां कदलीदलकल्पामित्यर्थः । अनल्पैर्बहुभिर्गुणैः श्लेषादिभिस्तन्तुभिश्च कल्पितां चरितां निर्मितां च चित्रां शब्दार्थविचित्रां विचित्ररूपां च वाचं पटीं शाटीमिव प्रसारयन्ति रामवागप्येवंविधेति स्तुतिः, रामवाक् तु नैवंविधेति निन्दा च गम्यते । अत्र श्लेषस्य शुद्धविषयासम्भवेन सर्वालङ्कारबाधकत्वादुपमाप्रतिभोत्थापितः प्रकृताप्रकृतश्लेषोऽयमित्यलङ्कारसर्वस्वकारः । एवञ्च पूर्णोपमाया निर्विषयत्वप्रसङ्गात् श्लेषप्रतिभोत्थापितेयमुपमैवेत्यन्ये ॥ ७४ ॥

अथोद्धवः स्वसिद्धान्तं वर्णयिष्यन् स्तुत्या गर्वम्परिहरन् हरिमभिमुखीकरोति, विशेषेति । विशेषं वेत्ति विशेषविद्वान् तस्य विशेषविदुषो विशेषज्ञस्य । गतिगस्त्यादिपाठात् द्वितीयासमासः । तव पुरोऽग्रे शास्त्रं नीतिशास्त्रमुद्ग्राह्यते उपन्यस्यत इति यत् । उद्ग्राहितमुपन्यस्तमिति वैजयन्ती । सा तदुद्ग्रहणमित्यर्थः । विधेयप्राधान्यात् स्त्रीलिङ्गत्वम् । वक्तुः उद्ग्राहयितुः परिचयस्थैर्य्यं अभ्यासदार्ढ्यं हेतुर्गुणनिका आम्रेडितमेवेति यावत्, न तु वैदुष्यप्रकटनमिति भावः । गुण आम्रेडने चौरादिकात् ण्यासश्रन्थो युजिति युच्, ततः संज्ञायां कन् कात्पूर्वस्येकारः ॥ ७५ ॥

सम्प्रति स्वमतमुपन्यस्यति, प्रज्ञेति । अतोऽस्मात् कारणात् स्वमस्यास्तीति स्वामी प्रभुः । स्वामिन्नैश्वर्य्य इति निपातः । प्रज्ञोत्साहौ

मन्त्रोत्साहयन्तौ आत्मनि स्वस्मिन्नाधातुं सम्पादयितुं यतेत स्वयमुभय-

सोपधानान्धियन्धीराः स्थेयसीं खट्वयन्ति ये।
तत्रानिशं निषस्रास्ते जानते जातु न श्रमम् ॥७७॥
स्पृशन्ति शरवत्तीक्ष्णास्तोकमन्तर्विशन्ति च।
बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ॥ ७८ ॥

शक्तिमान् भवेदित्यर्थः। कुतः हि यस्मात् तौ मन्त्रोत्साहौ उदेष्यन्त्या वर्त्स्यन्त्याः जिगीषोरात्मनः सम्पदः प्रभुशक्तेर्मूलं निदानम्। अत्रोत्साहग्रहणं दृष्टान्तार्थम्। यथोत्साहस्तथा मन्त्रोऽपि ग्राह्यो न तु केवलोत्साह इति वल्लभद्रापवादः ॥ ७६ ॥

उत्साहवत् प्रज्ञापि ग्राह्या इत्युक्तं तस्याः प्रयोजनमाह, सोपधानामिति। ये धीराः धीमन्तः सोपधानां सविशेषां युक्तियुक्तामित्यर्थः, अन्यत्र सगेन्दुकां सोपबर्हामित्यर्थः। उपधानं विशेषे स्याद्गेन्दुके प्रणयेऽपि चेति विश्वः। स्थेयसीं स्थिरतराम् अचपलां दृढीयसीं च। स्थिरशब्दादीयसुनि प्रियस्थिरेत्यादिना स्थादेशः। धियं खट्वयति खट्वां पर्य्यङ्कं कुर्वन्त्याश्रयन्तीत्यर्थः। शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः इत्यमरः। तत् करोति तदाचष्ट इति णिच्। धीरास्तत्र धीखट्वायामनिशम् अश्रान्तं निषस्राः विश्रान्ताः सन्तो जातु कदाचिदपि श्रमं खेदं न जानते न विदन्ति। श्रमः खेदो रत्यादेरिति लक्षणम्। धीपूर्वक एवोत्साहः सेव्यो न केवल इति सर्वथा धीराश्रयणीयेत्यर्थः। अत्र धिय आरोप्यमाणायाः प्रकृतश्रमापनोदरूपोपकारपर्य्यन्ततया परिणामालङ्कारः। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात् ॥ ७७ ॥

अथ प्रज्ञाप्रज्ञयोर्द्वाभ्यां वैषम्यमाह। स्पृशन्तीति। तीक्ष्णाः निशिताः प्रज्ञाः शरवच्छरेण तुल्यं स्तोकमल्पमेव स्पृशन्ति अन्तः कार्य्यस्य चान्तरं विशन्ति अल्पायासेन बहुकार्य्यं साधयन्तीत्यर्थः। बहुस्पृशा व्यापिना स्थूलेन मन्देन दृहता चाश्मना उपलेन तुल्यमश्मवत्। तेन तुल्यं क्रिया चेद्वतिः। बहिरेव कार्य्यस्याकार्य्यस्य वेति भावः स्थीयते स्थितिः क्रियते। मूढो हि अल्पस्य हेतोर्बहु-

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ७९ ॥

उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥ ८० ॥

उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।
जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥

प्रयासं करोति मूषकग्रहणाय शिखरिखननं परिहासास्पदं भवतीति भावः । तद्वितगतेयमुपमा ॥ ७८ ॥

आरभन्त इति । किन्त्वाज्ञा अल्पं तुच्छमेवारभन्ते प्रक्रमन्ते काममत्यन्तं व्यग्राः त्वरिताश्च भवन्ति न च पारङ्गच्छन्तीति भावः । कृतधियः शिक्षितबुद्धयस्तु महारम्भा महोद्योगा सन्ति निराकुला अव्यग्राश्च भवन्ति पारङ्गच्छन्तीति भावः ॥ ७९ ॥

अथ प्रज्ञावानपि न प्रमाद्येदित्याह, उपायमिति । उपायमास्थितस्य प्राप्तस्यापि उपायेनैव कार्यं साधयतोऽपीत्यर्थः । किमुत व्यग्रतयेति भावः । प्रमाद्यतोऽनवधानस्य । प्रमादोऽनवधानतेत्यमरः । अर्थाः प्रयोजनानि नश्यन्ति । तथाहि शयालुः निद्रालुः । आलुचि शीङो वक्तव्यत्वादालुच् । मृगान् यातीति मृगयुर्व्याधः । मृगय्वादयश्चेत्यौणादिकः कुप्रत्ययान्तो निपातः । व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च स इत्यमरः । उपशेरतेऽस्मिन्नित्युपशयो मृगमार्गस्थायिनो व्याधस्यात्मगुप्तिस्थानं गर्त्तविशेषः । एरजित्यच्प्रत्ययः । तत्र तिष्ठतीत्युपशयस्थोऽपि मृगान् न हन्ति, विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८० ॥

एवं प्रज्ञाया आवश्यकत्वमुक्तं तयोत्साहस्याप्याह, उदेतुमिति । जेतुमिच्छुर्जिगीषुरेक एव द्वादशस्वपि राजसु मध्ये द्वादशस्वादित्येषु दिनकृद् यो दिनकरत्वे व्याप्रियमाणः आदित्यः स इवेहामुत्साहमत्यजन् प्रयुञ्जान एव न तु निरुद्योग इति भावः, उदेतुं कल्पते उदयाय प्रभवति उत्साहशक्तिरेव प्रभुमन्त्रेऽपि मूलमित्यर्थः । नानाविकृत्या-

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥८२॥

द्वेतूनां नानासूर्य्यत्वमिति स्मृतेः प्रतिमासमादित्यभेदात् द्वादशत्वं तस्यैक-स्यैव द्वादशात्मकत्वं द्वादशात्मा दिवाकर इत्यभिधानात् । ते चार्य्यमादयः पुराणोक्ता द्रष्टव्याः । राजानस्तु अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः-परम् । तथारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पञ्चेति शेषः । पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजि-गीषोस्तु पृष्ठतः ॥ पार्ष्णिग्राहासार आक्रन्दासारश्चेत्यर्थः । अत्र चत्वार इति शेषः । एवं नव भवन्ति विजिगीषुर्दशमः । अरेश्च विजि-गीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिक इति मध्यमोदासीनाभ्यां सह द्वादश वेदितव्याः । पूर्णोपमा ॥ ८१ ॥

उपायमास्थितस्येत्यत्र राजा न प्रमाद्येदित्युक्तम् । अप्रमाद-प्रकारमाह, बुद्धिशस्त्र इति । बुद्धिरेव शस्त्रं यस्य स बुद्धिशस्त्रः अमोघपातित्वात्तस्या इति भावः । प्रकृतयः स्वाम्यादिराज्याङ्गानि । राज्याङ्गानि प्रकृतय इत्यमरः । ता एवाङ्गानि यस्य सः तद्वैकल्ये राज्ञो वैकल्यं स्यादिति भावः । घना दुर्भेदा संवृतिर्मन्त्रगुप्तिरेव कञ्चुकः कवचो यस्य स तथोक्तः मन्त्रभेदे राज्यभेदादिति भावः । चरतीति चरः । पचाद्यच् । स एव चारो गूढ़पुरुषः । प्रज्ञादित्वात् स्वार्थिकोऽण्प्रत्ययः । चारश्च गूढ़पुरुष इत्यमरः । स एवेक्षणं चक्षुर्यस्य स चारेक्षणः अन्यथा स्वपरमण्डलवृत्तान्तादर्शनादन्धस्येवान्धबलस्य विनिपातः पदे पदे इति भावः । दूतः सन्देशहरः । स्यात् सन्देश-हरो दूत इत्यमरः । स एव मुखं वाग्यस्यासौ दूतमुखः अन्यथा मूक-स्येव वाग्व्यवहारासिद्धौ तत्साध्यासाध्यकार्य्यप्रतिबन्धः स्यादिति भावः, एवंभूतः पार्थिवः कोऽपि पुरुषः अन्य एवायं लोकविलक्षणः पुमानित्यर्थः अतो राज्ञा बुद्ध्यादिसम्पन्नेन भवितव्यम् । एतदेवाप्रमत्त-त्वम् अन्यथा स्वपहानिः स्यादिति भावः । अत्र कोऽपीति राज्ञो

तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः ।
नैकमोजः प्रसादो वा रसभावविदः कवेः ॥ ८३ ॥

कृतापचारोऽपि परैरनाविष्कृतविक्रियः ।
असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ ८४ ॥

मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥ ८५ ॥

लोकसम्बन्धेऽपि तदसम्बन्धोक्त्या तद्रूपातिशयोक्तिः । सा च बुद्धिशस्त्र इत्यादिरूपकनिर्व्यूढेति तेन सहाङ्गाङ्गिभावेन सङ्करः ॥ ८२ ॥

चतुर्थोपायसाध्य इत्यादिना यत् क्षात्रमेव कर्त्तव्यमुक्तं तत्रोत्तरमाह, तेज इति । कालं जानातीति कालज्ञः तस्य क्षयं काल इति विदुष इत्यर्थः । अतोऽनुपसर्गे कः नन्विगुपधेत्यादिना कविधिः समासे कर्मोपपदस्यैव बलवत्त्वभाष्यात् । तस्य महीपतेस्तेजः क्षात्रमेवेति वा क्षमैव वा एकान्तं नियमो नास्ति किन्तु यथाकालमुभयमप्याश्रयणीयमित्यर्थः । तथाहि, रसान् शृङ्गारादीन् भावान् निर्वेदादींश्च वेत्ति यस्तस्य रसभावविदः भावग्रहणं सम्पातायातम् । कवेः कवितुरेकं केवलमोजः प्रौढ़प्रबन्धत्वं वा एकः प्रसादः सुकुमारप्रबन्धत्वं वा न किन्तु तत्र हि रसानुगुण्येन यथायोग्यमुभयमप्युपादेयम् । दृष्टान्तालङ्कारः ॥ ८३ ॥

यदुक्तं क्रियासमभिहारेण विराध्यन्तं सहेत क इति तत्रोत्तरमाह, कृतापचार इति । परैः शत्रुभिः कृतः अपचारोऽपथ्यं च यस्य सः तथापि अनाविष्कृतविक्रियः अन्तर्गूढ़विकारः अत एवासाध्योऽप्रतिसमाधेयः सन् गदो यथा रोग इव । इववद्वा यथाशब्द इति दण्डी । काले बलक्षयावसरे प्राप्ते सति कोपं कुरुते प्रकुप्यतीत्यर्थः । तदुक्तं, वहेदमित्रं स्कन्धेन यावत्कालविपर्य्ययः । तमेव चागते काले भिन्द्याद्घटमिवाश्मनेति ॥ ८४ ॥

इतश्च चान्त्यमिदानीमित्याह, मृद्विति । मृदुना मृदुवस्तुना

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ८६ ॥
स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः सञ्चारिणो यथा ।
रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ ८७ ॥

व्यवहितमन्तर्हितं तेजः अर्थान् भोक्तुं प्रकल्पते प्रभवति । तथाहि, प्रदीपोऽभ्यन्तरस्थया मध्यस्थया दशया वर्त्त्या । दशा वर्त्तिवस्त्रायां स्नेहस्तैलादिके रस इति विश्वः । स्नेहं तैलादिकमर्थमादत्ते अन्यथा स्वयमेव निर्वाणादिति ततः शान्तिपूर्वमेव क्षात्रं फलतीति सर्वथा प्रथमं शान्तव्यमिति भावः । विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः ॥ ८५ ॥

तर्हि पौरुषं मा भूदित्थं क्षममाणस्य दैवमेव श्रेयो विधास्यतीत्याशङ्क्याह, नालम्बत इति । विद्वानभिज्ञः दिष्टे मतिर्यस्येति दैष्टिकः दैवप्रमाणक इत्यर्थः । दैवं दिष्टं भागधेयमित्यमरः । अस्ति नास्ति दिष्टं मतिरिति ठक् । तद्भावं दैष्टिकतामेव नालम्बते सर्वथा यत्नविध्वस्य विनाशादिति भावः । तथा पौरुषे केवलपुरुषकारेऽपि । युवादित्वादण्प्रत्ययः । न निषीदति न तिष्ठति दैवप्रातिकूल्ये तस्य वैफल्यादिति भावः । किन्तु सत्कविः सत्कविता शब्दार्थाविव । तयोः काव्यशरीरत्वादिति भावः । यथाह वामनः, अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति । द्वयं पौरुषं दैवं चापेक्षते, अतः पौरुषमप्यावश्यकं किन्तु काले कर्त्तव्यमिति विशेषः । पौरुषादृष्टयोः परस्परसापेक्षत्वादिति भावः ॥ ८६ ॥

अथ शान्तेः फलमाह, स्थायिन इति । रस्यते स्वाद्यते इति रसः शृङ्गारादिः । रसतेः स्वादनार्थत्वाद्रस्यन्त इति ते रसा इति निर्वचनात् । तस्य रसस्य रसीभवतः स्थायिभावस्य रत्यादेः । रतिर्हासश्च क्रोधश्च शोकोत्साहभयानि च । जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्त्तिता इत्युक्तत्वात् एकस्यैवार्थे स्वादुभावरूपे प्रयोजने भूयांसः सञ्चारिणो व्यभिचारिणो भावा निर्वेदादयः विभावादीनामुपलक्षणमेतत् यथा प्रवर्त्तन्ते । तदुक्तं, विभावैरनुभावैश्च

तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता ।
सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ ८८ ॥
करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् ।
प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ ८९ ॥

सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृत इति । तथा स्थायिनः स्थिरस्य चान्त्या कालं प्रतीक्षमाणं-स्येत्यर्थः एकस्यैव नेतुर्विजिगीषोर्नायकस्यार्थे प्रयोजने भूयांसो महो-भृतो राजानः प्रवर्त्तन्ते स्वयमेवास्य कार्य्यं साधयन्तीत्यर्थः तदः चान्त्यर्मिति भावः । केचित्तु भावपदस्यापि रसपरत्वमाश्रित्य यथा सञ्चारिणः प्रसङ्गादागन्तुकाः अन्ये रसाः स्थायिनः स्थिरस्यैकस्य मुख्य-स्यार्थे प्रवर्त्तन्ते । यथास्मिन्नेव काव्ये वीरस्य शृङ्गारादय इति व्याचक्षते । उपमालङ्कारः ॥ ८७ ॥

क्षान्तिपक्ष एव गुणान्तरमाह, तन्त्रेति । तन्त्रावापौ स्वपर-राष्ट्रचिन्तनम् अन्यत्र तन्त्रावापं शास्त्रौषधप्रयोगञ्च वेत्ति यस्तेन तन्त्रावापविदा । तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तने शास्त्रौ-षधान्तमुख्येषु तन्त्रमिति वैजयन्ती । योगैः सामाद्युपायैः अन्यत्र देवताध्यानैश्च । योगः संहननोपायध्यानसङ्गतियुक्तिष्वित्यमरः । मण्डलानि स्वपरराष्ट्राणि माहेन्द्रादिदेवतायतनानि च अधितिष्ठता अतिक्रमता नरेन्द्रेण राज्ञा विषवैद्येन च । नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यत इति विश्वः । शत्रवः फणीन्द्रा इव सुनिग्रहाः सुखेन निग्राह्याः । एवञ्च प्रकृताप्रकृतविषयः श्लेषः । उपमैवेति केचित् । ८८ ॥

प्रज्ञोत्साहावतः स्वामीत्यत्रैव तावेव प्रभुशक्तेर्मूलमित्युक्तन्तदेव व्यनक्ति, करेति । उत्तुङ्गो महोन्नतः प्रज्ञाबलं मन्त्रशक्तिरेव बृहत् प्रधानं मूलं यस्य सः उत्साह एव पादपः करेण बलिना प्रचेयां वर्द्ध-नीयां हस्तग्राह्यां च । बलिहस्तांशवः करा इत्यमरः । प्रथीयसीं पृथुतराम् । रऋतोर्हलादेर्लघोरिति रेफादेशः । प्रभुशक्तिं तेजोविशे-

अनल्पत्वात्प्रधानत्वाद्वंशस्येवेतरे स्वराः ।
विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥ ९० ॥
अप्यनारभमाणस्य विभोरुत्पादिताः परैः ।
व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः ॥ ९१ ॥
यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः ।
एकार्थतन्तुप्रोतायां नायको नायकायते ॥ ९२ ॥

षम् । स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्यमरः । फलति प्रसूत इत्यर्थः । फलनिष्पत्तौ मन्त्रपूर्वक एवोत्साहः स्यात् विपरीतस्तु छिन्नमूलो वृक्ष इव शुष्यतीति भावः । रूपकालङ्कारः ॥ ८९ ॥

विरुद्धकारिणस्तु विश्वमपि विधेयं स्यादिति तयैवाह, अनल्पत्वादिति । अनल्पत्वात्प्रभोत्साहाधिकत्वादत एव प्रधानत्वान्मण्डलाभिन्नत्वादन्यत्रानल्पत्वादुच्चैस्तरत्वात् प्रधानत्वान्नायकस्वरत्वाच्च वंशस्य वंशवाद्यस्वरस्य इतरे स्वरा वीणागानादिशब्दा इव । अथवा आश्रयत्वाद् वंश इव वंशस्तस्मात्तवविहितः स्वर उच्यते तस्य स्वरस्येतराः षड्जादयः विजिगीषोर्नृपतयः अन्ये मण्डलपरिवर्त्तिनो राजानः परिवारतां पोष्यतां प्रयान्ति तत्कार्य्यमेव साधयन्तीत्यर्थः । तस्माद्विरुद्ध्य कर्त्तव्यमित्यर्थः ॥ ९० ॥

अपीति । किञ्च अनारभमाणस्य स्वयमकिञ्चित् कुर्वाणस्यापि विभोः प्रभोः व्यापकस्य च परैरन्यैर्नृपतिभिः शङ्खभेर्य्यादिभिश्च उत्पादिताः सम्पादिताः जनिताश्चार्थाः प्रयोजनानि विहायसः आकाशस्य शब्दा इव गुणतां विशेषणतां कारणत्वाद् गुणत्वं व्रजन्ति । शक्तो हि राजा स्वयम् उदासीन एवाकाशवत् स्वमहिम्नैव कार्य्यदेशं व्याप्नुवन् शब्दानिव सर्वार्थानपि स्वकीयतां नयतीत्यर्थः । गुणस्त्वावृत्ति-शब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती ॥ ९१ ॥

यातव्येति । किञ्च एकार्थ एकप्रयोजनं स एव तन्तुः सूत्रं तत्र प्रोतायाम् एकाभीष्टाभिलाषिण्यामित्यर्थः । मयूरादि वेजः कर्मणि

षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥ ९३ ॥
स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् ।
अयथाबलमारम्भो निदानं क्षयसम्पदः ॥ ९४ ॥

क्तः, वचिस्वपीत्यादिना सम्प्रसारणम् । यातव्योऽभिषेणयितव्यः अरिः पार्ष्णिं गृह्णातीति पार्ष्णिग्राहः पृष्ठानुधावी । कर्मण्यण् । तावादी येषान्ते पूर्वोक्ताः पंक्तिशः स्थिताः त एव माला रत्नमालिका तस्याः मधिकद्युतिर्महातेजाः नायकः शक्तिसम्पन्नो जिगीषुर्नायकायते मध्यमणिरिवाचरति स्वयमेव सर्वोत्कर्षेण वर्त्तते इत्यर्थः । तस्माद्विमृष्य कर्त्तव्यमिति भावः । नायको नेतरि श्रेष्ठे हारमध्यमणावपीति विश्वः । उपमानादाचार इति क्यच्, अकृत् सार्वधातुकेति दीर्घः । नायकायते इत्युपमा अन्यथानुशासनविरोधात् एकार्थतन्त्वियत्न तु रूपकमधिष्ठानतिरोधानेन आरोप्यनायकतन्तुत्वस्यैवोद्भटत्वात् प्रोतत्वसिद्धेस्तदेव युक्तम् । तद्बलात्पार्ष्णिग्राहादिमालायामित्यत्रापि रूपकमेव । तदनुप्राणिता चेयमुपमेत्यङ्गाङ्गिभावेन तयोः सङ्करः ॥९२॥

अथ विमृष्यकरणप्रकारमाह । षाड्गुण्यमिति । शक्तिं प्रभावादित्रयं बलं चापेक्षते इति शक्त्यपेक्षः सन् । पचाद्यच् । शक्तिर्बले प्रभावादाविति विश्वः । षड्गुणा एव षाड्गुण्यं सन्धिविग्रहादिषट्कम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । तदेव रसायनमौषधविशेषमुपयुञ्जीत सेवेत । रसायनं विहङ्गेऽपि जराव्याधिभिदौषध इति विश्वः । एवं सत्यस्य प्रयोक्तुरङ्गानि स्वाम्यादीनि गात्राणि च स्थास्नूनि स्थिराणि कालान्तरक्षमाणीत्यर्थः । ग्लाजिस्थश्चेति ग्स्नुः । बलवन्ति च परपीडाक्षमाणि च भवन्ति । श्लिष्टपरम्परितरूपकम् ॥ ९३ ॥

स्थाने इति । किञ्च स्थाने युक्तविषये शमवतां क्षमावतामङ्गिनां सप्ताङ्गिनां राज्ञां शरीरिणाञ्च शक्त्या प्रभावाद्यनुसारेण बलेन च व्यायामे व्यापारे षाड्गुण्यप्रयोगे गमनादौ च सतीत्यर्थः वृद्धिरुपचयः

लक्ष्मीशितारं चेदीनां भवांस्तमवमंस्त मा ।
निहन्त्यरीनेकपदे य उदात्तः स्वरानिव ॥ ९५ ॥
मा वेदि यदसावेको जेतव्यश्चेदिराडिति ।
राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥ ९६ ॥

राज्यस्य शरीरस्य चेति भावः । विपक्षे बाधकमाह । अययावलं शक्त्यतिक्रमेण । यथासादृश्य इत्यव्ययीभावे नञ्समासः । आरम्भो व्यायामः क्षयसम्पदोऽत्यन्तहानेर्निदानम् आदिकारणम् अङ्गाना-मिति भावः । तस्मादस्माकमकस्माच्चैद्याक्रन्दनमश्रेयस्करमिति भावः । अत्र विशेषस्यापि श्लिष्टत्वात् शब्दशक्तिमूलो वस्तुना वस्तुध्वनिः । अतो द्वयानामङ्गिनामौपम्यञ्च गम्यते इति सङ्क्षेपः ॥ ९४ ॥

फलितमाह । तदिति । तत्तस्मादशक्यारम्भाकार्यत्वात्तं चेदीना-मीशितारं शिशुपालं भवान् मावमंस्त नावमन्यस्व । मन्यतेर्माङि लुङ्, अनुदात्तत्वान्नेडागमः । कुतो यश्चैद्यः उदात्तः स्वरान् अनु-दात्तानिवारीनेकपदे एकस्मिन् पदन्यासे सुप्तिङन्तलक्षणे च निहन्ति हिनस्ति नीचैः करोति च अतिशूरत्वात् अनुदात्तं पदमेकवर्जमिति परिभाषाबलाच्चेति भावः ॥ ९५ ॥

न चायमेकाकी किं नः करिष्यतीति मन्तव्यमित्याह, मा वेदीति । असौ चेदिराट् एकः एकाकी अतो जेतव्यः सुजय इति मा वेदि मा ज्ञायि । वेत्तेः कर्मणि माङि लुङ् । यद्यस्मात्स चेदिराट् राज्ञ-श्चन्द्रस्य यक्ष्मा राजा चासौ यक्ष्मेति वा राजयक्ष्मा क्षयरोगो रोगा-णामिव महीभृतां समूहः समष्टिरूपः । यथाह वाग्भटः । अनेक-रोगानुगतो बहुरोगपुरःसरः । राजयक्ष्मा क्षयः शोषो रोगरा-डिति च स्मृतः ॥ नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा । यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मत इति ॥ अतो दुर्जय इति भावः । एतेन चिरस्य मित्रव्यसनी सुदमो दमघोषज इति निर-स्तम् ॥ ९६ ॥

सम्पादितफलस्तेन सपक्षः परभेदनः ।
कार्मुकेणेव गुणिना बाणः सन्धानमेष्यति ॥ ९७ ॥
ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः ।
तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः ॥ ९८ ॥
उपजापः कृतस्तेन तानाकोपवतस्त्वयि ।
आशु दीपयिताल्पोऽपि साग्नीनेधानिवानिलः ॥ ९९ ॥

अथास्य सर्वराजसमष्टितामेव द्वाभ्यां व्याचष्टे, सम्पादितेति । सम्पादितं फलं लाभो बाणाग्रं च यस्य सः । फलं लाभशराग्रयोरिति शाश्वतः । सपक्षः ससुहृत् कङ्कादिपत्रयुतश्च परेषां भेदकः शत्रुविदारणः बाणो बाणासुरः शरश्च । गुणिना शौर्यादिगुणवता अधिज्येन च तेन चैद्येन कर्मणे प्रभवतीति कार्मुकम् । कर्मण उकञ् । तेनैव सन्धानं सन्धिमेष्यति अतो नैकाकीति भावः । अत्राप्युपमा श्लेषो वा मतभेदात् ॥ ९७ ॥

ये चेति । ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयो राजानस्तमःस्वभावाः तमोगुणात्मकाः अत एव तेऽपि प्रदोषं प्रकृष्टदोषम् । प्रदोषो दुष्टरात्र्यंशाविति वैजयन्ती । तामसमेवैनं चैद्यमनुयायिनः अनुयास्यन्ति सादृश्यादिति भावः । भविष्यति गम्यादय इति णिनिः भविष्यदर्थे अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधात् द्वितीया । यथा ध्वान्तं रजनीमुखमनुयाति तद्वत् इति वस्तुना अलङ्कारध्वनिः ॥ ९८ ॥

ननु बाणादयोऽस्माभिः कृतसन्धाना इदानीं विराध्यन्तीत्यत आह, उपेति । तेन चैद्येन कृतोऽल्पोऽपि उपजापो भेदः । भेदोपजापावित्यमरः । त्वय्याकोपवतस्तान् बाणादीन् अनिलः साग्नीनेधानिन्धनानीव । काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियामित्यमरः । आशु दीपयिता सद्यः प्रज्वलयिष्यति दीपेर्ण्यन्ताल्लुट् । अन्तर्वैराः संहिता आपदि सति रन्ध्रे सद्यो विद्विष्यन्तीति भावः ॥ ९९ ॥

बृहत्सहायः कार्य्यान्तं चोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥१००॥
तस्य मित्राख्यमित्रास्ते ये च ये चोभये नृपाः ।
अभियुक्तन्त्वयैनन्ते गन्तारस्त्वामतःपरे ॥ १०१ ॥
मखविघ्नाय सकलमित्थमुत्थाप्य राजकम् ।
हन्त जातमजातारेः प्रथमेन त्वयारिणा ॥ १०२ ॥
सम्भाव्य त्वामतिभरक्षमस्कन्धं स बान्धवः ।
सहायमध्वरधुरां धर्मराजो विवक्षते ॥ १०३ ॥

ततः किमत आह, बृहदिति । बृहत्सहायो महासहायवान् चोदीयान् क्षुद्रतरोऽपि । स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वगुणश्च । कार्य्यस्यान्तं पारङ्गच्छति । तथाहि, अपां समूह आपम् । तस्य समूह इत्यण् । तेन गच्छतीत्यापगा नगापगा गिरिनदी महानद्या गङ्गादिकया सम्भूय मिलित्वा अम्भोधिमभ्येति । क्षुद्रोऽप्येवं तादृक् महावीरश्चैद्यस्तु किमु वक्तव्य इत्यपिशब्दार्थः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०० ॥

किञ्च न केवलं शत्रोरसाध्यत्वं मित्रविरोधश्चाधिकोऽनर्थकर इत्याह, तस्येत्यादिद्वयेन । ये च तस्य चैद्यस्य मित्राणि नृपा ये च ते तवामित्रा नृपाः ते उभये त्वयाभियुक्तमभियातमेनं चैद्यं गन्तारो गमिष्यन्ति । गमेः कर्त्तरि लुट् । अतःपरे उक्तोभयव्यतिरिक्तास्तव मित्राणि तस्यामित्रास्चेत्यर्थः त्वां गन्तारः ॥ १०१ ॥

ततः किमत आह, मखेति । इत्यमनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । मखविघ्नाय मखविघाताय सकलं राजकं राजसमूहम् । गोत्रो चेत्यादिना वुञ् । उत्थाप्य क्षोभयित्वा हन्त इति खेदे अजातारेः अजातशत्रोर्युधिष्ठिरस्य त्वया प्रथमेनारिणा जातमजनि । नपुंसके भावे क्तः ॥ १०२ ॥


अस्तु सोऽपि शत्रुः को दोषस्तत्राह, सम्भाव्येति । बन्धुरेव

महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ।
सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥१०४॥
चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु ।
छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः ॥१०५॥

बान्धवः स धर्मराजः अतिभरस्य क्षमः स्कन्धो यस्य स तं त्वां सहायं सम्भाव्याभिसन्धाय अध्वरस्य धुरमध्वरधुराम् । ऋक् पूरित्यादिना समासान्तोऽच् प्रत्ययः । समासान्तानां प्रकृतिलिङ्गत्वात् तत्पुरुषे परवल्लिङ्गत्वे टाप् । विवक्षते वोढुमिच्छति । वहतेः स्वरितेतः सन्नन्ताल्लट् । तथाहि, विरोधे विश्वासघातो बन्धुद्रोहश्च स्यातामिति भावः ॥१०३॥

ननु प्रतिस्रुत्याकरणे दोषः प्रागेव परिहारे तु को दोष इत्यत आह, महात्मान इति । महात्मानो भजमानान् शरणागतान् रिपूनप्यनुगृह्णन्ति किमुत बन्धूनिति भावः । अर्थान्तरन्यस्यति । सिन्धवो महानद्यः समान एकः पतिर्यासां ताः सपत्नीः । नित्यं सपत्न्यादिष्विति ङीप्, नकारश्च । नगनिम्नगाः गिरिनिर्झरिणीः अब्धिं प्रापयन्ति स्वसौभाग्यं ताभ्यः प्रयच्छन्तीति भावः । अतः परिहारोऽप्यनर्थ इति भावः ॥ १०४ ॥

तर्हि सम्प्रत्युपेक्षायामपि पश्चात् प्रार्थनया पार्थसार्जवयेयमित्यत आह, चिरादिति । बलिनः स्वयं बलवतोऽप्यरिषु विषये बलात्कारो दण्डः चिराच्चिरकालेनपि सद्यो मा भूदिति भावः । सिद्धये वशंवदत्वसिद्धये भवतीति शेषः । अविमनसो विमनसः सम्पद्यमानाः कृता विमनीकृताः वैमनस्यं प्रापिता इत्यर्थः । अरुर्मनश्चक्षुश्चेतोरजसां लोपश्चेति च्विप्रत्ययसलोपौ अस्य च्वावितीकारः । शोभनं हृदयं येषां ते सुहृदो मित्राणि तु । सुहृद्दुर्हृदा मित्रामित्रयोरिति निपातः । छन्दस्याभिप्रायस्यानुवृत्त्या चित्तानुरोधेनापि दुःसाध्याः आर्जवयितुमशक्या इत्यर्थः । अभिप्रायश्छन्द आशय इत्यमरः । शनैः शत्रुर्दण्डेनापि वशीभवति मित्रं वैमनस्येन साम्नापीति भावः ॥ १०५ ॥

मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति।
पुरोडाशभुजामिष्टमिष्टङ्कर्त्तुमलन्तराम्॥ १०६॥
अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना॥ १०७॥
सहिष्ये शतमागांसि सूनोस्त इति यत्त्वया।
प्रतीक्ष्यन्तत्प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम्॥ १०८॥

ननु सुहृत्कार्य्यात् सुरकार्य्यं बलीय इत्यत्राह, मन्यसे इति। नाकिनां देवानाम्प्रीतयेऽरिवधः श्रेयान् प्रशस्ततरः। प्रशस्यस्य श्र इति आदेशः। इति मन्यसे चेत् तर्हि पुरोडाशभुजां हविर्भोजिनाम् अत एव नाकिनामिष्टमभीप्सितं कर्त्तुम्। इषेः कर्मणि क्तः। इष्टम् इष्टिः याग इति यावत्। यजेर्भावे क्तः, वचिस्वपीत्यादिना सम्प्रसारणम्। अलन्तरामतिपर्याप्तम्। अव्ययात्तरप्प्रत्यय आम्वागमश्च। शत्रुवधादतिप्रियकरो याग एव नाकिनां भुक्त्वापि शत्रुवधस्य सुकरत्वादिति भावः॥ १०६॥

तथापि अमृताशिनान्तेषां किमेभिः पिष्टभक्षणप्रलोभनैरत आह, अमृतमिति। अमृतं नाम सन्तो विद्वांसः मन्त्रा एव जिह्वा येषां तेषु मन्त्रजिह्वेष्वग्निषु। मन्त्रजिह्वः सप्तजिह्वः सुजिह्वो हव्यवाहन इति वैजयन्ती। यत् पुरोडाशादिकं जुह्वति तदेवेति शेषः यत्तदोर्नित्यसम्बन्धात्। मन्दर एव क्षुब्धो मन्थनदण्डः। क्षुब्धस्वान्तेत्यादिनाऽस्मिन्नर्थे निपातनात् सिद्धम्। तेन क्षुभितस्य मथितस्य अम्भोधेर्वर्णना शोभैव अलङ्कार एव। अब्धिमन्थनेनामृतमुत्पादितमिति यतः कीर्त्तिमात्रम् अतो हुतमेवामृतमिति भावः। वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ १०७॥

यात्रायाः प्रतिबन्धः कश्चिद्दुस्तरस्तत्रास्तीत्याह, सहिष्य इति। प्रतीक्ष्यायै पूज्यायै। पूज्यः प्रतीक्ष्य इत्यमरः। पितृष्वस्रे पितृभगिन्यै। विभाषा स्वसृपत्योरिति विकल्पादलुगभावः। मातृपितृभ्यां स्वसेति षत्वम्। तं तव सूनोः शतमागांस्यपराधान्। आगोऽपराधो

तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ।
नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥१०९॥
स्वयङ्कृतप्रसादस्य तस्याह्नो भानुमानिव ।
समयावधिमप्राप्य नान्तायालम्भवानपि ॥ ११० ॥
कृत्वा कृत्यविदस्तीर्थैष्वन्तः प्रणिधयः पदम् ।

मन्युश्चेत्यमरः । सहिष्ये सोढ़ाहे इति यत्तया प्रतिश्रुतं प्रतिज्ञातं तत् प्रतीच्यं प्रतिपालनीयम् अन्यथा महादोषस्मरणादिति भावः ॥ १०८ ॥

सत्यमस्ति प्रतिश्रुतं किन्त्वस्योन्मत्तवदौद्धत्यात्तदपि जिहासितमत आह, तीक्ष्णेति । सतः सत्पुरुषस्य बुद्धिस्तीक्ष्णा निशिता स्यादिति विशेष्याध्याहारः एवमुत्तरत्रापि तथाप्यरुस्तुदतीत्यरुन्तुदा मस्त्रवन्मर्मच्छेदिनी न भवेत् । अहिंसयैव परं पीड़येदित्यर्थः । कर्म व्यापारः प्रतापवत् तेजस्वि भयदं स्यात् तथापि शान्तं स्यात् न तु सिंहादिवत् हिंस्रं भवेदित्यर्थः । मनश्चित्तं सोष्म अभिमानोष्णं स्यात्तथापि उपतापयतीत्युपतापि अग्न्यादिवत् परसन्तापि न स्यात् वाग्मिनः वक्तुः वागेका एकरूपा स्यात् वाग्मी सत्यमेव वदेदित्यर्थः अतः सत्यसन्धस्य प्रतिश्रुतार्थहानिरनर्हेति भावः । अत्र प्रकृताया वाचोऽप्रकृतानां बुद्धिकर्ममनसां च तुल्यधर्मादौपम्यावगमाद्दीपकालङ्कारः । प्रकृताप्रकृतानां च साम्ये तु तुल्यधर्मतः । औपम्यङ्गम्यते यत्र दीपकं तन्निगद्यत इति लक्षणात् । बुद्ध्यादीनां शस्त्रादिव्यतिरेको व्यज्यते ॥ १०९ ॥

अथाप्यस्याकाले चैद्यवध इत्याह, स्वयमिति । किञ्च अह्नो भानुमानिव स्वयं कृतः प्रसादोऽनुग्रहः प्रकाशश्च यस्य तस्य चैद्यस्यान्ताय समयावधिं नियतकालावसानम् अप्राप्य भवानपि नालं शक्तो न तथा च दृथापकीर्त्तिरेवान्यन्न किञ्चित् फलं स्यादिति भावः ॥११०॥

तर्हि किमयमुपेक्ष्य एव नेत्याह, कृत्वेति । किन्तु कृत्यविदः कार्य्यज्ञाः विधिज्ञास्तु प्रणिधीयन्त इति प्रणिधयो गूढ़चारिणः ।

विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ १११ ॥

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥ ११२ ॥

प्रणिधिर्गूढपुरुष इति हलायुधः । तरन्त्येभिरिति तीर्थानि मन्त्राद्यष्टादशस्थानानि जलावताराश्च । योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यादिति हलायुधः । तेष्वन्तः पदं स्थानं पादप्रक्षेपं च कृत्वा महतो दुरवगाहस्य पूज्यस्य च विद्विषन् शत्रुरेवाम्भः तस्य तलं स्वरूपं प्रमाणमिति यावत् । अधःस्वरूपयोरस्त्री तलमित्यमरः । विदांकुर्वन्तु विदन्तु । विद ज्ञाने लोट् । विदांकुर्वन्त्वित्यन्यतरस्यामिति विकल्पादाम्प्रत्ययनिपातः । अम्भस इव शत्रोः कृततीर्थस्य सुप्रवेशत्वात् प्रागन्तः प्रविश्य परीक्ष्य इत्यर्थः । श्लिष्टपरम्परितरूपकम् ॥ १११ ॥

आवश्यकं चैतदित्याह, अनुदिति । उत्सूत्र उच्छास्त्रो नीतिशास्त्रविरुद्धः पदन्यासः एकपदप्रक्षेपोऽपि स्वल्पव्यवहारापीति यावत् स नास्ति यस्यां सा अनुत्सूत्रपदन्यासा नीतिपूर्वकसर्वव्यवहारेत्यर्थः । अन्यत्रानुत्सूत्रपदन्यासा अनुल्लङ्घितसूत्राक्षर इच्छुपसङ्ख्यानैरपेक्ष्येण सूत्राक्षरैरेव सर्वार्थप्रतिपादको न्यासो वृत्तिव्याख्यानग्रन्थविशेषो यस्यां सा तथोक्ता तथा सती यथार्थं कल्पनया शोभना वृत्तिर्भृत्यामात्यादीनामाजीविका यस्यां सा सद्वृत्तिः अन्यत्र सती वृत्तिः काशिकाख्यसूत्रव्याख्यानग्रन्थविशेषो यस्यां सा । वृत्तिर्ग्रन्थजीवनयोरिति वैजयन्ती । सन्ति निबन्धनानि अनुजीव्यादीनां क्रियावसानेषु दत्तानि गोहिरण्यादिशास्वतपारितोषिकदानानि यस्यां सा एतच्च दत्त्वा भूमिनिबन्धनञ्चेत्यत्र तद्वचनव्याख्याने मिताक्षरायां द्रष्टव्यम् । अन्यत्र सन्निबन्धनं भाष्यग्रन्थो यस्यां सा एवंभूतापि राजनीतिः राजवृत्तिः अपगतः स्पशः चारो यस्याः सा अपस्पशा चेत् । यथार्थवर्णे अन्तचः स्पशो हरक उच्यत इति हलायुधः । अन्यत्र अविद्यमानः पस्पशः शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थो यस्याः सा अपस्पशा

अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः ।
भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः ॥ ११३ ॥
उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।
राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव ॥ ११४ ॥

शब्दविद्या व्याकरणविद्येव नो भाति न शोभते तस्याश्चारप्रेषणाभाव-
शून्यं तद्रहितस्य राज्ञोऽस्थप्रायत्वादिति भावः । अत्रापदस्पशेत्यत्र
जतुकाष्ठवच्छब्दयोरेव श्लिष्टत्वाच्छब्दश्लेषः सद्वृत्तिः सन्निबन्धनेत्यतैक-
वृन्तावलम्बिफलद्वयवदर्थश्लेषः । अनुत्सूत्रपदन्यासेत्यत्र तूभयसम्भवा-
दुभयश्लेषः । शब्दविद्येवेति पूर्णोपमा व्यक्तैव तयोः सापेक्षत्वा-
त्सङ्करः ॥ ११२ ॥

न केवलं चारलोचनेन वृत्तान्तज्ञानमपि तु उपजापश्च कर्त्तव्य
इत्याह, अज्ञातेति । किञ्चाज्ञातदोषैः परैरज्ञातस्वकर्मभिर्दोषज्ञैः
स्वयं परमर्मज्ञैः अभिव्यक्तानि भेद्यस्याग्रे प्रकटितानि शासनानि
तद्रसात्याद्यविश्वासकराणि कूटलिखितानि येषान्तैः उभयवेतनैः उभ-
यत्र भेद्ये स्वामिनि च वेतनं भृतिर्येषां तैः उभयजीविकाग्राहिभिः
भेद्यनगरवास्तव्यैश्चरैरित्यर्थः । भृतयो भर्म वेतनमित्यमरः । शत्रोः
सम्बन्धिनः समवायं समवयन्ति इति सामवायिकाः सङ्घमुख्याः
सचिवादयः । समवायान् समवैतीति ठक् । उद्दूष्य द्विषामेते हस्त-
हस्ताः अस्माभिरेषां लिखितान्येव गृहीतानि इत्युच्चैर्दूषयित्वा भेद्याः
विघट्टनीयाः ॥ ११३ ॥

उपेयिवांसीति । किञ्च उपायज्ञैः कार्य्यसाधनकुशलैः तव
चरन्तीति चरैर्गूढचारिभिः । पचाद्यच् । एकार्थानि त्वया सहैक-
प्रयोजनानि राजन्यानां समूहाः राजन्यकानि । गोत्रोक्षेत्यादिना
वुञ् । अजातशत्रोरिमामाजातशात्रवीं पुरीम् इन्द्रप्रस्थमुपेयिवांसि
प्राप्नुवन्ति । उपेयिवानित्यादिना क्वसुप्रत्ययान्तो निपातः । कर्तारः
करिष्यन्ते ।  कर्त्तरि लुट् । कल्पस्यास्माकं महत्साध्यं म-

सविशेषं सुते पाण्डोर्भक्तिम्भवति तन्वति।
वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥ ११५ ॥

य इहात्मविदो विपक्षमध्ये
सह संवृद्धियुजोऽपि भूभुजः स्युः।
बलिपुष्टकुलादिवान्यपुष्टैः
पृथगस्मादचिरेण भाविता तैः ॥ ११६ ॥
सहजचापलदोषसमुद्धत-
स्खलितदुर्बलपक्षपरिग्रहः।

विध्यति तदध्वरयात्राव्याजेन सन्नद्धैरागन्तव्यमिति गूढं सन्दिश्य तत्र सर्वे सेवयितव्या इत्यर्थः ॥ ११४ ॥

ननु तत्राध्वरकर्मणि को युद्धावकाश इत्याशङ्क्य तत्रैव महत् कलहबीजं सम्पादयति, सविशेषमिति। पाण्डोः सुते युधिष्ठिरे भवति पूज्ये त्वयि सविशेषं यथा तथा भक्तिं तन्वति सति तरलाश्चपलाः मत्सरिणो द्वेषवन्तः परे शत्रवः स्वयमेव वैरायितारः वैरं कर्त्तारः, शब्दवैरकलहेत्यादिना क्यङ् ततः कर्त्तरि लुट् ॥ ११५ ॥

किन्तेऽपि सर्वे वैरायिष्यन्ते नेत्याह, य इति। ये इह विपक्षमध्ये शत्रुमध्ये सह संवृद्धियुजोऽपि चैद्येन सहैश्वर्य्ययुक्ता अपि। सत्सूद्विषेत्यादिना क्विप्। ये भूभुजो राजानः आत्मविदः स्वाभिजनवेदिनः स्युस्तैर्भूभुग्भिः बलिपुष्टकुलात् काककुलात्। काके तु करटारिष्टबलिपुष्टसकृत्प्रजा इत्यमरः। अन्यपुष्टैः परभृतैरिवाचिरेण सद्योऽस्मात् विपक्षमध्यात्। अन्यारादित्यत्रान्यशब्दस्यार्थपरत्वात् पृथगादिप्रयोगेऽपि पञ्चमी पृथग्भाविता पृथग्भविष्यते। भावे लुट्। चिण्वदिति वृद्धिः। तेष्वपि केचिदस्माभिः सङ्गच्छन्ते इत्यर्थः। औपच्छन्दसिकं वृत्तम् ॥ ११६ ॥

अथ फलितं निगमयन्नाशिषं प्रयुङ्क्ते, सहजेति। सहजं स्वाभाविकं चापलं दुर्विनीतत्वम् अनवस्थितत्वं च। चपलः पारदे

तव दुरासदवीर्यविभावसौ
शलभतां लभतामसुहृद्गणः॥ ११७॥
इति विशकलितार्थामौद्धवीं वाचमेना-
मनुगतनयमार्गामर्गलां दुर्नयस्य।
जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः-
स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः॥ ११८॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
द्वितीयः सर्गः॥ २॥

---

शीघ्रे दुर्विनीतेऽनवस्थित इति वैजयन्ती। तेनैव दोषेण समुद्धतो दृप्तः पक्षः सहायो गरुच्च। पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती। चलितोऽस्थिरो दुर्बलपक्षपरिग्रहो यस्य सः असुहृद्गणः शत्रुवर्गः तव दुरासदवीर्यविभावसौ दुःसहतेजोवह्नौ। वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि। सूर्यवह्नी विभावसू इति विश्वामरौ। शलभतां पतङ्गत्वम्। समौ पतङ्गशलभावित्यमरः। भावे तल्। लभतां गच्छतु। रूपकालङ्कारः। द्रुतविलम्बितं वृत्तम्॥ ११७॥

इतीति। स हरिः इत्थं विशकलितार्थां विवेचितार्थाम् अनुगतनयमार्गां नीतिमार्गानुसारिणीं दुर्नयस्य बलभद्राद्युक्तस्येत्यर्थः। अर्गलां निवारयित्रीम् इति वैधर्म्यरूपकालङ्कारः। तद्विष्कम्भोऽर्गलं न नेत्यमरः। अत एव जनितमुदं हरेः कृतानन्दाम् उच्छ्रिते उन्नते उरःस्थले नियतं निषण्णया अविश्रान्तमाश्रितया श्रिया श्रुतां नान्ययति मन्त्रगुप्तिः उद्धवस्येमामौद्धवीम् एनां पूर्वोक्तां वाचं शुश्रुवान् श्रुतवान्। भाषायां सदवसश्रुव इति क्वसुः। उच्चैरेवोच्चकैरुन्नतः सन्। अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच्प्रत्ययः। उदस्थादासनादुत्थित-

# तृतीयः सर्गः ।

कौबेरदिग्भागमपास्य मार्ग-
मागस्त्यमुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो
हरिर्हरिप्रस्थमथ प्रतस्थे ॥ १ ॥

वान् । उदोऽनूर्ध्वकर्मणि इत्यस्य प्रत्युदाहरणमेतत् । रूपकानु-
प्रासालङ्कारौ । मालिनी वृत्तम् ॥ ११८ ॥

इति श्रीमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने
सर्वङ्कषाख्ये द्वितीयः सर्गः ॥ २ ॥

---

कौबेरेति । अथोद्धववाक्यश्रवणानन्तरमपेतो युद्धे अभिनिवेश आग्रहो यस्य सः शान्तक्रोध इत्यर्थः । अत एव सौम्यः प्रसन्नः अत एव कौबेर्या दिशो भागमुत्तरायणमित्यर्थः । स्त्रियाः पुंव-दित्यादिना पुंवद्भावः । तमपास्यागस्त्यस्येमं आगस्त्यं मार्गमवतीर्णो दक्षिणायनगत इत्यर्थः उष्णांशुरिव स्थितः । अनेन हरेः क्रोधः कार्यवशादाकालमन्तःस्तम्भितो न त्वेकान्ततो निवृत्त इति सूचितम् । हरिः कृष्णः हरिप्रस्थमिन्द्रप्रस्थं प्रतस्थे प्रचचाल । इन्द्रो दुश्च्य-वनो हरिरिति हलायुधः । समवप्रविभ्यः स्थ इत्यात्मनेपदम् । देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति गन्तव्यकर्मत्वम् । उप-मालङ्कारः । सर्गेऽस्मिन्निन्द्रोपेन्द्रवज्रामिश्रणादुपजातिवृत्तम् । अन-न्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः इति लक्षणात् ॥१॥

जगत्पवित्रैरपि तन्न पादैः
स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः ।
यतो बृहत्पार्वणचन्द्रचारु
तस्यातपत्रं बिभराम्बभूवे ॥ २ ॥

मृणालसूत्रामलमन्तरेण
स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्धो-
रभूतपूर्वां रुचमम्बुराशेः ॥ ३ ॥

अथास्य प्रस्थानसन्नाहं वर्णयन्नादौ छत्रधारणमाह, जगदिति । अर्को जगत्पूज्यं तं हरिम् अत एव जगत्पवित्रैरपि पादैश्चरणैः किरणैश्च स्प्रष्टुं नायुज्यत नार्हत । युजेर्दैवादिकात्कर्त्तरि लङ् । यतः तस्य हरेः बृहद्विपुलं पार्वणचन्द्रचारु पूर्णेन्दुसुन्दरमिति लुप्तोपमालङ्कारः । आतपात् त्रायत इत्यातपत्रं छत्रम् । सुपीति योगविभागात् कः । बिभरांबभूवे दध्रे । भृञः कर्मणि लिट्, भीह्रीभृहुवामिति विकल्पादाम्प्रत्ययः । आतपत्रान्तर्हितस्य द्वयैरपि पादैः स्प्रष्टुमशक्यत्वादित्यर्थः । जगत्पूज्यस्य हरेः पादेन स्पर्शनिषेधादिति भावः ॥ २ ॥

अथ चामरधारणमाह, मृणालेति । मृणालसूत्रामलं बिसतन्तुविशदमित्युपमा । चलन्ती च ते चामरे च चलच्चामरे योजनादिति भावः । तयोर्द्वयमन्तरेण स्थितः द्वयस्य मध्ये स्थित इत्यर्थः । अन्तरान्तरेण युक्त इति द्वितीया । स हरिरभितः पातुका उभयतः पातिनी सिद्धसिन्धुराकाशगङ्गा यस्य स तथोक्तः । पर्यभिभ्यां चेति तसिप्रत्ययः, सर्वोभयार्थवर्त्तमानाभ्यामिष्यत इत्युभयार्थत्वं सुप्सुपेति समासः । पातुकेति । लषपतेत्यादिना उकञ्प्रत्ययः । तस्याम्बुराशेः समुद्रस्य अभूतपूर्वां पूर्वमभूताम् । सुप्सुपेति समासः । रुचं कान्तिं भेजे । अत एव निदर्शना सा चाम्बुराशेः सम्भावनामात्रोक्तात्

चित्राभिरस्योपरि मौलिभाजां
भाभिर्मणीनामनणीयसीभिः ।
अनेकधातुच्छुरिताश्मराशे-
र्गोवर्द्धनस्याकृतिरन्वकारि ॥ ४ ॥

तस्योल्लसत्काञ्चनकुण्डलाग्र-
प्रत्युप्तगारुत्मतरत्नभासा ।
अवाप बाल्योचितनीलकण्ठ-
पिच्छावचूडाकलनामिवोरः ॥ ५ ॥

अभितः पातुकसिन्धुसम्बन्धमूलया असम्बन्धे सम्बन्धरूपातिशयोक्त्या स्वोपजीवकसंयोगेन सङ्कीर्यत इति सङ्क्षेपः ॥ ३ ॥

अथाष्टभिरस्य प्रसाधनविधिं वर्णयन् मुकुटधारणमाह, चित्राभिरिति । अस्य हरेरुपरि ऊर्ध्वदेशे मौलिभागे मौलिभाजां मुकुटगतानां मणीनामनणीयसीभिर्महतीभिश्चित्राभिरनेकवर्णाभिर्भाभिः प्रभाभिः कर्त्रीभिः । स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तय इत्यमरः । भान्तपक्षे भो भगो इत्यादिना रोर्यकारे तस्य हलि सर्वेषामिति लोपः । अनेकैर्धातुभिर्गैरिकादिभिश्छुरितानां रूषितानाम् अश्मनां मणीनां राशिः समूहो यस्य तस्य गोवर्द्धनाख्यपर्वतस्याकृतिरन्वकारि अनुकृता तत्सादृश्यमजानीत्यर्थः । पूर्णोपमेयम् ॥ ४ ॥

कुण्डले च धृते इत्याह, तस्येति । तस्य हरेरुरः उरःस्थलमुल्लसन्त्या काञ्चनकुण्डलाग्रयोः प्रत्युप्तानां खचितानां गारुत्मतरत्नानां मरकतमणीनां भासा दीप्त्या उरसि प्रसरन्त्येति भावः । बाल्यं शैशवम् । ब्राह्मणादित्वात् ष्यञ् । तत्रोचितमभ्यस्तं यन्नीलकण्ठपिच्छं मयूरबर्हम् । अभ्यस्तेऽप्युचितं न्याय्ये इति यादवः । पिच्छबर्हे नपुंसके इत्यमरः । तेन निर्मितावचूडा मालिका तस्याः कलनामालोचनमवलोकनं वा अवापेत्युत्प्रेक्षा । अत्रान्यधर्मसम्बन्धा-

तमङ्गदे मन्दरकूटकोटि-
व्याघट्टनोत्तेजनया मणीनाम्।
बंहीयसा दीप्तिवितानकेन
चकासयामासतुरुल्लसन्ती ॥ ६ ॥

निसर्गरक्तैर्वलयावनद्ध-
ताम्राश्मरश्मिच्छुरितैर्नखाग्रैः।
व्यद्योततद्यापि सुरारिवक्षो
विक्षोभजासृक्स्नपितैरिवासौ ॥ ७ ॥

इत्यदेवोपतर्कितम्। प्रकृते हि भवेत्साम्यात्तादात्म्यं प्रचलत इति लक्षणात् ॥ ५ ॥

तमङ्गदे इति। तं हरिं मन्दरकूटकोटिव्याघट्टनं मन्दराचलशिखराग्रसङ्घर्षणं सैवोत्तेजना शाणोल्लेखना तया बंहीयसा बहुतरेण। प्रियस्थिरेत्यादिना बहुशब्दस्येयसुनि बंहादेशः। मणीनां दीप्तिवितानकेन प्रभापटलेन उल्लसन्ती दीप्यमाने। आच्छीनद्योर्नुमिति नुमागमः। अङ्गदे केयूरे 'केयूरमङ्गदं तुल्ये' इत्यमरः। चकासयामासतुः शोभयाञ्चक्रतुः अङ्गदे धृतवानित्यर्थः। चाकास्तेर्ण्यन्ताल्लिटि आम्प्रत्ययेऽस्तेरनुप्रयोगः। अत्राङ्गदयोः प्राभवीयाङ्गदभेदेऽप्यभेदोक्तिस्तस्य तयोर्मन्दरकूटकोट्यसम्बन्धेऽपि सम्बन्धोक्त्या द्वयोरतिशयोक्त्योः सङ्करः ॥ ६ ॥

निसर्गेति। असौ हरिर्निसर्गरक्तैः स्वभावलोहितैः किञ्च वलये कटके। 'कटकं वलयोऽस्त्रियाम्' इत्यमरः। तयोरवनद्धानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिः छुरितैः अत एवाद्यापि सुरारेर्हिरण्यकशिपोः वक्षसो विक्षोभेण विदारणेन जाता या असृक् तया स्नपितैः सिक्तैरिव स्थितैरित्युत्प्रेक्षा। स्नातेर्ण्यन्तात् क्तः, 'अर्त्तिह्री'त्यादिना पुगागमः, 'मितां ह्रस्वः'। नखाग्रैर्व्यद्योतत। कटके च धृतवानित्यर्थः ॥ ७ ॥

उभौ यदि व्योम्नि पृथक् प्रवाहा-
वाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥ ८ ॥

तेनाम्भसां सारमयः पयोधे-
र्दध्रे मणिर्दीधितिदीपिताशः ।
अन्तर्वसन् विम्बगतस्तदङ्गे
साक्षादिवालक्ष्यत यत्र लोकः ॥ ९ ॥

मुक्तामयं सारसनावलम्बि
भाति स्म दामाप्रपदीनमस्य ।

उभाविति । तमालवन्नीलम् आमुक्ते आसञ्जिते लतादीर्घत्व-साम्येन मौक्तिकहारौ यस्मिन् तदस्य हरेर्वक्षः आकाशगङ्गायाः पयसः उभौ प्रवाहौ व्योम्नि यदि पृथक् पतेतां प्रवहेतां चेत् । सम्भावनायां लिङ् । तेन व्याम्नोपमीयेत समीक्रियेत नान्योपमानं किञ्चित् पश्याम इति भावः । मुक्ताहारं धृतवानित्यर्थः । अत्र व्योम्नो गङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनायां सम्बन्धकथनादति-शयोक्तिः । तदेतत् पुष्पं प्रवालोपहितं यदि स्यादित्याद्युदाहृत्या-लङ्कारसर्वस्वकारः स्पष्टीचकार ॥ ८ ॥

तेनेति । तेन हरिणा दीधितिभिर्दीपिताः आशा येन सः दिगन्तविश्रान्ततेजा इत्यर्थः । पयोधेरम्भसां सारस्य विकारः सारमयः मणिः समुद्रमन्थनोत्थः कौस्तुभाख्य इत्यर्थः । दध्रे धृतः । धृञ् धारणे कर्मणि लिट् । यत्र मणौ विम्बगतः प्रतिविम्बगतो लोकः बाह्यप्रपञ्चः तदङ्गे तस्य हरेः शरीरे साक्षात् वहिः प्रत्यक्षेण लक्ष्य-माण इत्यर्थः । अन्तर्वसन् अन्तर्गतो लोक इवालक्ष्यत । यत्र मणौ प्रतिविम्बितो बाह्यलोकः तदङ्ग एव नैर्मल्याद्बहिः प्रतिफलितः कुक्षि-स्थलोक इवालक्ष्यत इत्युत्प्रेक्षा ॥ ९ ॥

अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चै-
स्त्रिस्रोतसः सन्ततधारमम्भः ॥ १० ॥
स इन्द्रनीलस्थलनीलमूर्त्ति
रराज कर्च्चूरपिशङ्गवासाः ।
विसृत्वरैरम्बुरुहां रजोभि-
र्यमस्वसुश्चित्र इवोदभारः ॥ ११ ॥
प्रसाधितस्यास्य मधुद्विषोऽभू-
दन्यैव लक्ष्मीरिति युक्तमेतत् ।

मुक्तेति । अस्य हरेर्मुक्तामयं मुक्ताप्रचुरम् । तत्प्रकृतवचने मयट् । सारसने कटिस्थलेऽवलम्बते इति सारसनावलम्बि । क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिष्वित्यमरः । आप्रपदीनम् आसमन्तात्प्रपदं प्राप्नोतीति खञ् प्रत्ययः । पादाग्रं प्रपदं पाद इत्यमरः । दाम मुक्तासारः अङ्गुष्ठेन निष्ठ्यूतं विसृष्टमित्यर्थः । गौणार्थत्वादग्राम्यत्वम् । यथाह दण्डी, निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहत इति । ऊर्ध्वम् ऊर्ध्वप्रवाहमुच्चैरुन्नतन्त्रिस्रोतसो मन्दाकिन्याः सन्ततधारमविच्छिन्नसम्पातमम्भ इव भाति इत्युत्प्रेक्षा ॥ १० ॥

स इति । इन्द्रनीलस्थलमिव नीलमूर्त्तिः श्यामाङ्गः । संहितायां रोरीति रेफलोपः, ढ्लोपे पूर्वस्येति दीर्घः । कर्च्चूरं हरितालमिव पिशङ्गं वासो यस्य सः पीताम्बरो हरिः । हरितालन्तु कर्च्चूरमिति वैजयन्ती । स हरिर्विसृत्वरैः विसृमरैः । इण्नशजिसर्त्तिभ्यः क्वरप् । अम्बुरुहाम् अम्बुजानाम् । रुहेः क्विप् । रजोभिः परागैश्चित्रश्चित्रवर्णः यमस्वसुर्यमुनायाः उदकस्य भारः पूरः उदभारः स इव रराज । मन्थोदनेत्यादिना उदकस्योदादेशः ॥ ११ ॥

प्रसाधितस्येति । प्रसाधितस्यालङ्कृतस्यास्य मधुद्विषः हरेः अन्यैवासदृशी विभिन्ना च । अन्यौ विभिन्नासदृशावपि वैजयन्ती । लक्ष्मीः

वपुष्यशेषेऽखिललोककान्ता

सानन्यकान्ता ह्युरसीतरा तु ॥ १२ ॥

कपाटविस्तीर्णमनोरमोरः-

स्थलस्थितश्रीललनस्य तस्य ।

आनन्दिताशेषजना बभूव

सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ १३ ॥

प्राणच्छिदां दैत्यपतेर्नखाना-

मुपेयुषां भूषणतां क्षतेन ।

शोभा पद्मा च । शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यत इति विश्वः । अभूदित्येतद्युक्तम् । कुतः हि यस्मात् सा प्रसाधनरूपा लक्ष्मी-रशेषे वपुषि वसतीति शेषः । किञ्चाखिललोकस्य कान्ता प्रिया इतरा नित्या तु अन्यस्य कान्ता प्रिया न भवतीत्यनन्यकान्ता किन्तु तस्यैवेत्यर्थः । उरसि उरस्येव वसतीत्यर्थः । अत्र हरेः प्रसाधनादसाधारणी शोभा जातेति पारमार्थिको वाक्यार्थः । अत्र लक्ष्मीशब्देन श्लेषमहिम्ना वाच्यायाः शोभायाः प्रतीयमानायाः श्रीदेव्या सहाभेदाध्यवसाया-दियमन्यैव लक्ष्मीरित्यभेदे भेदरूपातिशयोक्तिरलङ्कारः ॥ १२ ॥

अथैनमेवार्थमङ्गान्तरेणाह, कपाटेति । कपाटवद्विस्तीर्णे मनो-रमे चोरःस्थले स्थिता श्रीरिति ललना कान्ता यस्य तस्य हरेरान-न्दिताशेषजना सर्वाङ्गसङ्गिनी अत एव परैवासाधारण्येव श्रीदेव्या अन्यैव लक्ष्मीः शोभा रमा च बभूव । स एवालङ्कारः । प्रायेणैकार्थ-मप्यनेकं श्लोकमुक्तिविशेषलाभाल्लिखन्ति कवयः । यथाह नैषधे, आदावेव निपीयेत्यादि श्लोकद्वयं तथा स्वकेलिलेशेत्यादि श्लोकद्वय-ञ्चेति ॥ १३ ॥

अथ देवीसहचरस्यैवास्य यातेति सूचयन् प्रसाधनविधेः फल-माह, प्राणेति । भूषणतामुपेयुषां न तु प्रहरणतामिति भावः । दैत्यपतेः हिरण्यकशिपोः [illegible] प्राणापहारिणां

प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १४ ॥

आकर्षतेवोर्ध्वमतिक्रशीया-
नत्युन्नतत्वात् कुचमण्डलेन ।
ननाम मध्योऽतिगुरुत्वभाजा
नितान्तमाक्रान्त इवाङ्गनानाम् ॥ १५ ॥

यां यां प्रियः प्रैक्षत कातराक्षीं
सा सा ह्रिया नम्रमुखी बभूव ।

वज्रादपि कठोराणामित्यर्थः नखानां क्षतेन व्रणेन प्रकाशो व्यक्तः कार्कश्यमेव गुणो ययोस्तौ स्तनौ स्तनानित्यर्थः । जातावेकवचने प्राप्ते जातिभूयः स स्तनादिषु जातेर्द्वित्वविशिष्टत्वात् द्विवचनम् । यथाह वामनः, स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति । दधानास्तरुण्यो युवतयः । वयसि प्रथमे इति ङीप् । एनं हरिं परिवव्रुः । अत्र हरिनखानां नरहरिनखभेदेऽप्यभेदोक्त्या स्तनयोश्च तात्कठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्त्यातिशयोक्ती तयोश्च सापेक्षत्वात्सङ्करः ॥ १४ ॥

आकर्षतेति । अत्युन्नतत्वाद्धेतोः ऊर्ध्वमाकर्षतेव नमन्तं मध्यमुन्नमयतेव स्थितेनेत्युत्प्रेक्षा । अतिगुरुत्वमतिभारत्वम् अतिप्रवृद्धत्वञ्च भजतीति भाक् । भजो ण्विः । तेनाङ्गनानां कुचमण्डलेनातिक्रशीयान् अत्यन्तकृशतरः तनीयान् क्षीणश्च । रऋतो हलादेर्लघोरिति रेफादेशः । मध्यो नितान्तमाक्रान्तः पीड़ित इव ननाम नतः प्रणतश्च । अत्र मध्यकुचमण्डलयोर्विशेषणसाम्यादरिविजिगीषुराजप्रतीतेः समासोक्तिः, तथा वाच्ययोः प्रतीयमाना भेदेनाक्रमणक्रियाकर्मकर्तृभावकल्पनावितेयं नमनस्याक्रमणहेतुकत्वोत्प्रेक्षा इत्यनयोः सङ्करः उत्प्रेक्षयोस्तु नैरपेक्ष्यादसंसृष्टिरेवेति विवेकः ॥ १५ ॥

यां यामिति । प्रियो हरिर्यां यामङ्गनाम् । नित्यवीप्सयोरिति

निःशङ्कमन्याः सममाहितेर्ष्या-
स्तत्रान्तरे जघ्नुरमुं कटाक्षैः॥ १६॥
तस्यातसीसूनसमानभासो
भ्राम्यन्मयूखावलिमण्डलेन।
चक्रेण रेजे यमुनाजलौघः
स्फुरन्महावर्त्त इवैकबाहुः॥ १७॥
विरोधिनां विग्रहभेददक्षा
मूर्त्तेव शक्तिः क्वचिदस्खलन्ती।
नित्यं हरेः सन्निहिता निकामं
कौमोदकी मोदयति स्म चेतः॥ १८॥

वीप्सायां द्विर्भावः एकपदम्। प्रैक्षतालोकयत सा सा। पूर्ववत् द्विर्भावः। कातराक्षी साध्वसाच्चकितलोचना सती ह्रिया नम्रमुखी बभूव। एतेन कार्यद्वारा लज्जासाध्वसभावोदय उक्तः। अन्यासा-मीर्ष्याभावोदयमाह। अन्याः अप्रेक्षिताङ्गनाः आहितेर्ष्याः कृता-क्षमाः सत्यः। परोत्कर्षाक्षमेर्ष्या स्यादिति लक्षणात्। तत्रान्तरे तस्मिन्नीक्षणावसरे। क्लीबेऽन्तरमवकाशे तादर्थ्येऽवसरेऽवधाविति वैजयन्ती। निःशङ्कं तदनीक्षणादेव विस्रब्धं यथा तथा समं युगपत् कटाक्षैरमुं हरिं जघ्नुः प्रजह्रुः सरोषमद्राक्षुः॥ १६॥

अथास्य पञ्चभिर्दिव्यास्त्रसन्निधानमाह, तस्येत्यादि। अतसीसूनेन क्षुमाकुसुमेन समानभासः तुल्यकान्तेः स्निग्धश्यामस्येत्यर्थः। अतसी स्यादुमा क्षुमेत्यमरः। तस्य हरेरेकबाहुः भ्राम्यदावर्त्तमानं मयूखा-वलीनां मण्डलं चक्रवालं यस्य तेन चक्रेण सुदर्शनेन स्फुरन्महाना-वर्त्तो भ्रमो यस्य सः। स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः। जमुना-जलानामोघः पूर इव रेजे चक्रन्दधावित्यर्थः॥ १७॥

विरोधिनामिति। विरोधिनां वैरिणां विग्रहभेदे शरीरविदा-रणे दक्षाः। शरीरं वर्ष्म विग्रह इत्यमरः। क्वचित् क्वापि अस्ख-

न केवलं यः स्वतया मुरारे-
रनन्यसाधारणतान्दधानः ।
अत्यर्थमुद्वेजयिता परेषां
नाम्नापि तस्यैव स नन्दकोऽभूत् ॥ १९ ॥

न नीतमन्येन नतिं कदाचित्
कर्णान्तिकप्राप्तगुणं क्रियासु ।
विधेयमस्याभवदन्तिकस्थं
शार्ङ्गं धनुर्मित्रमिव द्रढीयः ॥ २० ॥

स्वन्ती सर्वत्राप्रतिहतवृत्तिरित्यर्थः नित्यं सन्निहिता अनपायिनी अत एव मूर्ता मूर्तिमती शक्तिः सामर्थ्यमिव स्थितेत्युत्प्रेक्षा, कौमोदकी गदा हरेश्चेतो निकामं मोदयति स्म सन्निधानेनेति भावः ॥ १८ ॥

न केवलमिति । अन्यस्य साधारणो न भवतीत्यनन्यसाधारणस्तस्य भावस्तत्ता तान्दधानः तथापि यो नन्दकः स्वतया केवलं गजाश्वादिवत् स्वत्वेनैव मुरारेर्नन्दको न किन्तु परेषां शत्रूणाम् अत्यर्थमुद्वेजयिता भीषयिता सन् अत एव नाम्नापि चन्द्रादिवन्नन्दयतीति नन्दक इत्यन्वर्थसंज्ञात्वेनापि नन्दयितृत्वेनापीति यावत् । तस्यैव तदीय एव योऽनन्यसाधारणत्वात्परोद्वेजकत्वाच्च तस्यैव नन्दको नन्दयिता चेत्यर्थः। स नन्दको नन्दकाख्यः खड्गोऽभूत् सन्निहितोऽभूदित्यर्थः । सत्त्वमात्रानुवादेन सन्निधानमेवात्र विधेयं प्रकरणात् अत्रानन्यसाधारणत्वपरोद्वेजकत्वपदार्थाभ्यां विशेषणगत्या नन्दकस्य तदीयतासमर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १९ ॥

न नीतमिति । अन्येन पुरुषान्तरेण नतिमाकर्षणं भेदेन स्वानुकूल्यं च न नीतं न प्रापितं क्रियासु रणकर्मसु हिताहितकार्येषु च कर्णान्तिकं कर्णगोचरं प्राप्तो गुणो मौर्वी आप्ततादयश्च यस्य तद्विधेयं क्रियासु वश्यं द्रढीयः दृढतरं [illegible]मिति यावत् शार्ङ्गस्य

प्रदृष्टमन्द्राम्बुदधीरनादः
कृष्णार्णवाभ्यर्णचरैकहंसः।
मन्दानिलापूरकृतन्दधानो
निध्वानमश्रूयत पाञ्चजन्यः॥ २१॥

रराज सम्पादकमिष्टसिद्धेः
सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्।
महारथः पुष्यरथं रथाङ्गी
चिप्रं क्षपानाथ इवाधिरूढः॥ २२॥

विकारः शार्ङ्गञ्चास धनुः मित्रमिवास्य हरेरन्तिकस्थं सन्निहितमभवत्॥ २०॥

प्रदृष्टेति। धियं रातीति धीरो मनोहरः मन्द्रो गम्भीरोऽम्बुदस्य मेघस्येव धीरश्च नादः प्रदृष्टो येन सः प्रदृष्टमन्द्राम्बुदधीरनाद इत्युपमा। कृष्ण एवार्णवः समुद्रस्तस्याभ्यर्णचरोऽन्तिकचरः। उपकण्ठान्तिकाभ्यर्ण इत्यमरः। स चासावेकहंसश्चेति श्लिष्टपरम्परितरूपकम्। मन्दानिलस्यापूर आपूरणन्तेन कृतं जनितं निध्वानन्दधानः अनाध्मातोऽपि मन्दमारुतप्रवेशादेव ध्वनतीति पाटवादतिशयोक्तिः ध्वन्यसम्बन्धेऽपि सम्बन्धकथनात्। पञ्चजनो नाम कश्चिदसुरस्तत्र भवः पाञ्चजन्योऽस्य शङ्खः। वहिर्देवपञ्चजनेभ्यश्च वक्तव्यमिति ञ्यप्रत्ययः। अश्रूयत श्रूयते स्म पाञ्चजन्योऽपि सन्निहितोऽभूदित्यर्थः। वीणा श्रूयते पुष्पाण्याघ्रायन्ते इत्यादिवद्धर्मधर्मिणोरभेदोपचारात् पाञ्चजन्यस्य श्रवणोक्तिः॥ २१॥

रराजेति। महान् रथो यस्य स महारथो रथिकविशेषः। आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः। स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदा इति। रथाङ्गञ्चक्रमस्यास्तीति रथाङ्गी हरिः इष्टसिद्धेः सम्पादकं लक्षणवत्त्वात्। पुष्यः सर्वार्थसाधक इति शास्त्रादिति भावः। सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् अनिषिद्धगमनमित्यर्थः

ध्वजाग्रधामा ददृशेऽथ शौरिः
सङ्क्रान्तमूर्त्तिर्मणिमेदिनीषु ।
फणावतस्त्रासयितुं रसाया-
स्तलं विवत्तन्निव पन्नगारिः ॥ २३ ॥

यियासतस्तस्य महीध्ररन्ध्र-
भिदापटीयान् पटहप्रणादः ।
जलान्तराणीव महार्णवौघः
शब्दान्तराण्यन्तरयाञ्चकार ॥ २४ ॥

अधिष्ठानशक्तेर्निरङ्कुशत्वात् । पुष्यो हस्तो मैत्रमश्वाश्विनश्च चत्वार्य्यङ्गः सर्वदिग्द्वारकाणीति शास्त्रादिति भावः । क्षिप्रं क्षिप्रगामिनम् अन्यत्र क्षिप्रनामकम् । क्षिप्रं चाश्विदिनेशपुष्यमिति शास्त्रात् । पुष्यरथं क्रीड़ारथम् । असौ पुष्यरथः क्रीड़ायानं न समराय यदित्यमरः । अधिरूढ़ः सन् पुष्यो रथ इव तं पुष्यरथमधिरूढ़ः पुष्यनक्षत्रगतः चपानाथश्चन्द्र इव रराज ॥ २२ ॥

ध्वजेति । अथ रथारोहणानन्तरं शौरिः कृष्णस्य ध्वजाग्रं धाम स्थानं यस्य सः मणिमेदिनीषु मणिमयकुट्टिमेषु संक्रान्तमूर्त्तिः प्रतिबिम्बिताङ्गः सन् पन्नगारिर्गरुत्मान् फणावतः सर्पान् त्रासयितुं द्रावयितुं रसायास्तलं पातालं विविक्षन् प्रवेष्टुमिच्छन्निवेत्युत्प्रेक्षा । विशतेः सन्नन्ताल्लटः शत्रादेशः । ददृशे दृष्टः । सोऽपि सन्निहितोऽभूदित्यर्थः ॥ २३ ॥

यियासत इति । यातुमिच्छतो यियासतः । यातेः सन्नन्ताल्लटः शत्रादेशः । तस्य हरेः सम्बन्धी महीं धरन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात् क इति वामनः । महीध्रादयो मूलविभुजादिदर्शनादिति । तेषां रन्ध्राणि बिलानि तेषां भिदा भेदनम् । षिद्भिदादिभ्योऽङ् । तस्यां पटीयान् समर्थतरः पटहप्रणाद आनकघोषः महार्णवस्यौघः समुद्रस्य प्रवाहः अन्यानि जलानि जलान्तराणीव ।

यतः स भर्त्ता जगतां जगाम
धर्त्ता धरित्र्याः फणिना ततोऽधः ।
महाभरभुग्नशिरःसहस्र-
साहायकव्यग्रभुजं प्रसस्रे ॥ २५ ॥

अथोच्चकैस्तोरणसङ्गभङ्ग-
भयावनम्रीकृतकेतनानि ।
क्रियाफलानीव सुनीतिभाजं
सैन्यानि सोमान्वयमन्वयुस्तम् ॥ २६ ॥

सुप्सुपेति समासः । अन्यान् शब्दान् शब्दान्तराणि । पूर्ववत्समासः । अन्तरयाञ्चकार अन्तर्हितानि चकार छादयामासेत्यर्थः । अन्तरशब्दादन्तर्धानार्थात् करोतेर्ण्यन्ताल्लिट् । अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये इत्युभयत्राप्यमरः ॥ २४ ॥

यत इति । जगतां भर्त्ता धारयिता कुक्षिस्थाखिललोक इत्यर्थः । कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । स हरिर्यतो येन भूमार्गेण जगाम ततस्तस्मिन् भूभागे अधः पाताले धरित्र्याः धरण्याः धर्त्ता धारयिता । पूर्ववत् षष्ठी । फणिना शेषेण महता भरेण आवनन्नात् भुग्नस्य कुब्जीभूतस्य शिरःसहस्रस्य साहायके सहायकर्मणि । योपधाद्गुरूपोत्तमाद्वुञ् । व्यग्राः त्वरमाणाः भुजा यस्मिन् तद्यथा तथा प्रसस्रे प्रसृतम् । भावे लिट् । हरिश्चचालेत्यर्थः । अत्र शेषस्य विशिष्टप्रसरणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २५ ॥

अथेति । अथ हरिचलनानन्तरम् उच्चकैरुन्नते तोरणे द्वारदारुणि सङ्गेन भङ्गस्तस्माद्भयेनावनम्रीकृतानि केतनानि येषां तानि सैन्यानि सोमस्यान्वयः सन्तानः तं सोमान्वयं हरिं सुनीतिभाजं सुनीतिमन्तं क्रियाः सामाद्युपायप्रयोगास्तासां फलानि हिरण्यभूमित्रादिलाभा इवान्वयुः अन्वगच्छन् । यातेर्लङ् लङः शाकटायनस्येति जेर्जुस् ॥ २६ ॥

श्यामारुणैर्वारणदानतोयै-
रालोडिताः काञ्चनभूपरागाः ।
आनेमिमग्नैः शितिकण्ठपक्ष-
क्षोदद्युतश्चुक्षुदिरे रथौघैः ॥ २७ ॥

न लङ्घयामास महाजनानां
शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः
पदाहतो यत्सदृशं गरिम्णः ॥ २८ ॥

श्यामेति । श्यामानि चारुणानि च तैः श्यामारुणैः कृष्णलोहितैः । वर्णो वर्णेनेति समासः । वारणदानतोयैर्गजमदोदकैरालोडिताः सम्मिलिता अत एव शितिकण्ठपिच्छक्षोदाः मयूरबर्हचूर्णा इव द्योतन्त इति तथोक्ताः । क्विप् । उपमालङ्कारः । काञ्चनस्य भूः काञ्चनभूस्तस्याः परागाः पांसवः आनेमि नेमिमभिव्याप्य । तस्यान्ते नेमिः स्त्रीत्यमरः । आङ् मर्यादाभिविध्योरित्यभिविधावव्ययीभावः । मग्नै रथौघैः चुक्षुदिरे पिष्टा इत्यर्थः । परागाणां विशिष्टपेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तया च महती गजरथसम्पत्तिर्व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ २७ ॥

नेति । अष्टसु धातुषु पदं प्रतिष्ठा यस्येति अष्टापदं सुवर्णम् । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामिति सुवर्णपर्यायेष्वमरः । तस्य भूमिस्तस्याः रेणुः काञ्चनभूरजः पदाहतो रथाश्वादिचरणताडितोऽपि सन्नित्यर्थः महाजनानां बहुजनानां पूज्यानाञ्च शिरांसि न लङ्घयामास नाक्रामति स्म किं बहुना उद्धतिमुत्पतनन्दर्पञ्च नैवाजगाम कुतः यद्यस्मात् गरिम्णो गुरुत्वगुणस्य माहात्म्यस्य च । प्रियस्थिरेत्यादिना गुरोर्गरादेशः । सदृशमनुरूपं यथा तथा अचेष्टत अलङ्घनव्यवहारे गुरु[illegible] भावः । अत्रानौद्धत्या-

निरुध्यमाना यदुभिः कथञ्चि-
न्मुहुर्यदुच्चिक्षिपुरग्रपादान्।
ध्रुवं गुरून्मार्गरुधः करीन्द्रा-
नुल्लङ्घ्य गन्तुन्तुरगास्तदीषुः॥ २९॥

अवेक्षितानायतवल्गमग्रे
तुरङ्गिभिर्यत्ननिरुद्धवाहैः।
प्रक्रीडितान्रेणुभिरेत्य तूर्णं
निन्युर्जनन्यः पृथुकान् पथिभ्यः॥ ३०॥

दिप्रस्तुतस्तुत्वर्णपरागविशेषणसाम्यादप्रस्तुतस्तुजनप्रतीतेः समासोक्तिरलङ्कारः॥ २८॥

निरुध्यमाना इति। तुरगाः यदुभिराहृढैरिति भावः कथञ्चिदतिप्रयत्नेन निरुध्यमाना वल्गाकर्षणेन वार्यमाणा अपि यद्यस्मादग्राश्च ते पादाश्च तानग्रपादान्। हस्ताग्राग्रहस्तादयो गुणगुणिनोरभेदयोगादिति वामनः सामानाधिकरण्येन समासः। मुहुरुच्चिक्षिपुरुत्क्षिप्तवन्तः तत्तस्मान्मार्गं रुन्धन्तीति मार्गरुधः मन्दगमनेन मार्गरोधिनः। क्विप्। गुरून् महतः पूज्यांश्चालङ्घानपीति भावः। करीन्द्रानुल्लङ्घ्य गन्तुमीषुरिच्छन्ति स्म। ध्रुवमित्युत्प्रेक्षायाम्। गुरवोऽपि सन्मार्गरोधकाः परैरुल्लङ्घ्यन्त इति अलङ्कारेण वस्तुध्वनिः॥ २९॥

अवेक्षितानिति। आयता आकृष्टा वल्गा मुखरज्जुर्यस्मिन् कर्मणि तद्यथा तथा यत्नेन दुर्वारवेगत्वात् अतिप्रयत्नेन निरुद्धा वाहा वाजिनो यैस्तैः। वाजिवाहार्वगन्धर्व इत्यमरः। तुरङ्गिभिः अश्वसादिभिरग्रे पुरोदेशेऽवेक्षितानालोकितान् रेणुभिः प्रक्रीडन्तीति प्रक्रीडितान् पांशुक्रीडाकरान्। कर्त्तरि क्तः। पृथुकान् शिशून्। पृथुकः शावकः शिशुरित्यमरः। जनन्यस्तूर्णमेत्य पथिभ्यो निन्युः अपसारयाञ्चक्रुरिति स्वभावोक्तिः॥ ३०॥

दिदृक्षमाणाः प्रतिरथ्यमीयु-
र्मुरारिमारादनघं जनौघाः ।
अनेकशः संस्तुतमप्यनल्पा
नवन्नवं प्रीतिरहो करोति ॥ २१ ॥

उपेयुषो वर्त्म निरन्तराभि-
रसौ निरुच्छ्वासमनीकिनीभिः ।
रथस्य तस्यां पुरि दत्तचक्षु-
र्विद्वान् विदामास शनैर्न यातम् ॥ २२ ॥

दिदृक्षमाणा इति । अनघमकलङ्कं मुरारिं दिदृक्षमाणाः द्रष्टु-मिच्छन्तः । दृशेः सन्नन्ताल्लटः शानजादेशः, ज्ञाश्रुस्मृदृशां सन इत्या-त्मनेपदम् । जनौघा रथ्यायां रथ्यायां प्रतिरथ्यम् । याथार्थ्येऽव्ययी-भावः । आरात् समीपम् । आराद्दूरसमीपयोरित्यमरः । ईयु-र्जग्मुः । इणो लिट् दीर्घ इणः कितीत्यभ्यासदीर्घः । ननु नित्यपरि-चिते का दिदृक्षेत्यत्राह, अनेकश इति । अनेकशो बहुवारमित्यर्थः । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस्प्रत्ययः । संस्तुतं परिचित-मपि वस्तु जनेनेति शेषः । संस्तवः स्यात्परिचय इत्यमरः । अनल्पा अधिका प्रीतिः प्रेम कर्त्री नवं नवम् । आभीक्ष्ण्येन नवं करोति । नित्यवीप्सयोरिति द्विर्भावः । अहोशब्दः पुराणस्यापि नूतनत्वमित्या-श्चर्ये यथा परप्रेमास्पदं वस्तु नित्यदृष्टमपि अदृष्टचरमिव प्रतिक्षणं दिदृक्ष्यते भगवानपि तथैवेति भावः । सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासः ॥ २१ ॥

उपेयुष इति । विद्वानभिज्ञः अत एव तस्यां पुरि नगर्यां दत्त-चक्षुः निस्पृष्टदृष्टिरसौ हरिर्निरन्तराभिर्निरन्ध्राभिरनीकिनीभिः सेना-भिर्निरुच्छ्वासम् अतिसङ्कटं वर्त्म उपेयुषः प्राप्तस्य रथस्य शनैर्यातं सम्बन्धनिबन्धनं मन्दगमनं न विदामास न विवेद । उषविदजागृभ्यो-ऽन्यतरस्यामिति आम्प्रत्ययः । व्यासङ्गादसंवेदन नतु तत्त्वाज्ञानादिति

मध्येसमुद्रं ककुभः पिशङ्गी-
र्या कुर्वती काञ्चनवप्रभासा।
तुरङ्गकान्तामुखहव्यवाह-
ज्वालेव भित्त्वा जलमुल्ललास ॥ ३३ ॥

कृतास्पदा भूमिभृतां सहस्रै-
रुदन्वदम्भःपरिवीतमूर्त्तिः।
अनिर्विदा या विदधे विधात्रा
पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३४ ॥

भावः। व्यासङ्गस्य पदार्थत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

अथैकत्रिंशत् श्लोकैर्द्वारकां वर्णयति, मध्य इति। समुद्रस्य मध्ये मध्येसमुद्रम्। पारे मध्ये षष्ठ्या चेति विकल्पादव्ययीभावः, मध्यशब्दस्य तत्सन्नियोगादेकारान्तत्वम्। काञ्चनवप्रभासा हेमप्राकार-प्रभया ककुभो दिशः पिशङ्गीः पिङ्गलवर्णाः। गौरादित्वात् ङीष्। कुर्वती या पूः जलं समुद्रोदकं भित्त्वा उत्थितेति शेषः। तुरङ्ग-कान्तायाः वड़वाया मुखे हव्यं वहतीति हव्यवाहोऽग्निः। कर्म-ण्यण्प्रत्ययः। तस्य वाड़वाग्नेः ज्वालेव उल्ललास उद्भभासे। अत्र समुद्रान्तर्लीनायां वड़वानलज्वालायां कदाचित्सम्भाव्यमानस्य मध्यो-ल्लसनस्य पुरि दर्शनाभेदाध्यवसाये नास्या ज्वालात्वमुत्प्रेक्ष्यते इवशब्दो-ऽयमुत्प्रेक्षाया एव व्यञ्जको नोपमाया दृष्टज्वालाया अप्रसिद्धत्वेनोप-मानत्वायोगात्। मन्ये शङ्के ध्रुवं नूनं प्राय इत्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इत्याचार्यदण्डी ॥ ३३ ॥

कृतास्पदेति। भूमिभृतां राज्ञां गिरीणां च सहस्रैः कृतास्पदा कृताधिष्ठाना। आस्पदं प्रतिष्ठायामिति निपातः। उदकमस्यास्तीत्यु-दन्वानुदधिः। उदन्वानुदधिः सिन्धुरित्यमरः। उदन्वानुदकाच्चेति निपातनात्साधुः। तस्याम्भोभिः परिवीता परिवेष्टिता मूर्त्तिः स्वरूपं यस्याः सा पृथ्वी पृथुः। वोतो गुणवचनादिति ङीप्। एवंभूता

त्वष्टुः सदाभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु
छायेव या स्वर्जलधेर्जलेषु ॥ ३५ ॥

रथाङ्गभर्त्रेऽभिनवं वराय
यस्याः पितेव प्रतिपादितायाः ।
प्रेम्णोपकण्ठं मुहुरङ्कभाजो
रत्नावलीरम्बुधिराबबन्ध ॥ ३६ ॥

या पूः न निर्विद्यते न खिद्यते इत्यनिर्वित् । विदेर्ज्ञानार्थत्वाच्चिः-पूर्वात्सत्सूद्विषेत्यादिना क्विप् । तेनानिर्विदा अखिन्नेन अन्यथा शिल्प-सौष्ठवासिद्धेरिति भावः विधात्रा प्रयत इति पृथिवी भूः । प्रथे-रौणादिकः षिवन्, षिद्गौरादिभ्यश्चेति ङीष् । तस्याः प्रतियातना प्रतिकृतिरिव विदधे विहिता । प्रतियातना प्रतिच्छाया प्रतिकृति-रित्यमरः । भूप्रतिनिधित्वोत्प्रेक्षया पुरो वैचित्र्यविस्तारादि वस्तु व्यज्यते ॥ ३४ ॥

त्वष्टुरिति । त्वष्टुर्विश्वकर्मणः सदाभ्यासेन गृहीतो लब्धो यः शिल्पविज्ञानसम्पदः प्रसरः प्रकर्षः तस्य सीमा अवधिरप्रतिमेति यावत् या पूरादर्शतलामलेषु दर्पणपृष्ठस्वच्छेषु । दर्पणे मुकुरादर्शावित्यमरः । जलधेर्जलेषु स्वः स्वर्गस्य । स्वरव्ययं स्वर्गनाक इत्यमरः । छाया प्रतिबिम्बमिवादृश्यत इत्युत्प्रेक्षा । छाया त्वनातपे कान्तौ प्रतिबिम्बार्क-जाययोरिति वैजयन्ती ॥ ३५ ॥

रथाङ्गेति । अम्बुधिः पितेव वराय श्रेष्ठाय जामात्रे च । वरो जामातरि श्रेष्ठ इति विश्वः । रथाङ्गभर्त्रे चक्रधराय हरये अभिनवं यथा तथा प्रतिपादितायाः अङ्कः समीप उत्सङ्गश्च तद्भाजः । अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोरिति केशवः । यस्याः पुर उपकण्ठ-सन्निके । अत्यन्तसंयोगे द्वितीया । अन्यत्र कण्ठे । विभक्त्यर्थेऽव्ययी-

यस्याश्चलद्वारिधिवारिवीचि-
च्छटोच्छलच्छङ्खकुलाकुलेन ।
वप्रेण पर्य्यन्तचरोडुचक्रः
सुमेरुवप्रोऽन्वहमन्वकारि ॥ ३७ ॥

वणिक्पथे पूगकृतानि यत्र
भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन्
रत्नानि रत्नाकरतामवाप ॥ ३८ ॥

भावः । शुङ्गः प्रेम्णा रत्नावलीराबबन्ध आसमन्ताद् बबन्ध । श्लेषानुप्राणितेयमुपमेति सङ्करः ॥ ३६ ॥

यस्या इति । चलन्तीनां वारिधिवारिवीचीनाञ्छटासु परम्परासु उच्छलद्भिरुत्पतद्भिः शङ्खानाङ्कुलैराकुलेन सङ्कीर्णेन यस्याः पुरो वप्रेण प्राकारेण पर्य्यन्ते चरतीति तत् तादृशम् उडुचक्रं नक्षत्रमण्डलं यस्य सः सुमेरोर्वप्रः सानुः । सानुप्राकारयोर्वप्रमित्युभयत्रापि सज्जनः । अह्न्यह्नीत्यन्वहम् । अव्ययम् । विभक्तीत्यादिना यथार्थेऽव्ययीभावः, अनश्च नपुंसकादन्यतरस्यामिति समासान्तोऽच् । अन्वकारि अनुकृतः तत्सादृश्यं प्रापित इत्यर्थः । मेरूपमानाद्वप्रस्य तत्तुल्यमौन्नत्यं व्यज्यते ॥ ३७ ॥

वणिक्पथ इति । यत्र यस्यां पुरि वणिजां पथि वणिक्पथे आपणे अपूगाः पूगाः सम्पद्यमानानि कृतानि पूगकृतानि पुञ्जीकृतानि । श्रेण्यादयः कृतादिभिरिति समासः । श्रेण्यादिषु च्व्यर्थवचनमिति च्व्यर्थता । अलोलद्युतिभाञ्जि स्थिरप्रभावन्ति रत्नानि लोलैश्चलैः अत एव भ्रमागतैः जलनिर्गमसमार्गादागतैः । भ्रमाश्च जलनिर्गमा इत्यमरः । अम्बुभिर्मुष्णन् अपहरन् अम्बुराशिरर्णवः जलमात्रसारोऽपीति भावः । रत्नाकरतामपाप प्राप न तु प्रागिति भावः । अम्बुराशेः प्राक् रत्नाकरत्वस्य ... अतिशयोक्तिः, तथा

अम्भश्च्युतः कोमलरत्नराशी-
नपां निधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं
विस्तारयामास तरङ्गहस्तैः ॥ ३९ ॥

यच्छालमुत्तुङ्गतया विजेतुं
दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थै-
र्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥ ४० ॥

च पुर्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते ॥ २८ ॥

अम्भ इति । यत्र पुरि अपां निधिः समुद्रः अम्भश्च्योतन्तीत्यम्भश्च्युतो जलस्राविणः अत एव फेनैः पिनद्धभासः पिहितकान्तीन् । अपिपूर्वान्नह्यतेः कर्मणि क्तः, वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरकारलोपः । कोमलाननुत्कटान् रत्नराशीनातपे दातुं शोषणार्थं निधातुमिवेति फलोत्प्रेक्षा, तल्पेष्वट्टेषु अधितल्पम् । तल्पं शय्याट्टदारेष्वित्यमरः । विभक्त्यर्थेऽव्ययीभावः । तरङ्गैरेव हस्तैर्विस्तारयामास प्रसारितवान् । आतपदानस्य तरङ्गहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोः सङ्करः ॥ ३९ ॥

यच्छालमिति । सागरस्य महोर्मिभिः कर्तृभिर्यच्छालं यस्याः प्राकारम् । प्राकारो वरणः शाल इत्यमरः । उत्तुङ्गतया औन्नत्यगुणेन जेतुमिवेत्यर्थः । फलोत्प्रेक्षेयं व्यञ्जकाप्रयोगाद्गम्या । दूरादुदस्थीयत उत्थितम् । भावे लङ् । अभ्यासगतैः समीपगतैः । समीपनिकटाभ्याससन्निकृष्टसनीडवदित्यमरः । व्याहतो वाञ्छितार्थः शालविजयरूपो येषां तैर्विजयाक्षमैरित्यर्थः । अत एव व्रीडादिवेति हेतूत्प्रेक्षा, ऊर्मिभिर्विलिल्ये विलीनम् । लीयतेर्भावे लिट् । अत्र शत्रुस्यापि अविजिगीषो[illegible]चयोः सङ्करः ॥ ४० ॥

कुतूहलेनेव जवादुपेत्य
प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद् भृशमम्बुवर्ष-
व्याजेन यस्या वहिरम्बुवाहः ॥ ४१ ॥

यदङ्गनारूपसरूपतायाः
कञ्चिद्गुणं भेदकमिच्छतीभिः ।
आराधितोऽद्धा मनुरप्सरोभि-
श्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ४२ ॥

स्फुरत्तुषारांशुमरीचिजालै-
र्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।

कुतूहलेनेति । अम्बु वहतीत्यम्बुवाहो मेघः । कर्मण्यण् । कुतूहलेनान्तःप्रवेशकौतुकेनेवेति हेतूत्प्रेक्षा, जवात् उपेत्य यस्याः प्राकारभित्त्या सहसा निषिद्धो निवारितः अत एव वहिरेव रसन् गर्जन् दुःखात् क्रन्दंश्चेति शेषः, अम्बुवर्षव्याजेन भृशमरोदीत् अश्रूणि मुक्तवान् । रुदिरश्रुविमोचने अङ्, रुदश्च पञ्चभ्य इतीड़ागमः । अत्राम्बुवर्षव्याजेनोत्पादकयोरुक्तसापह्नवोत्प्रेक्षासापेक्षत्वात् सङ्करः ॥ ४१ ॥

यदङ्गनेति । यस्यां पुर्यामङ्गनानां रूपं सौन्दर्यमाकारो वा । रूपं स्वभावे सौन्दर्ये आकारश्लोकयोरपीति विश्वः । तस्य सरूपतायाः सादृश्याद् भेदकं व्यावर्त्तकं कञ्चिद्गुणं धर्ममिच्छतीभिरपेक्षमाणाभिः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अप्सरोभिराराधितः प्रार्थितो मनुर्मानुषसृष्टिकर्त्ता स्वाः स्वकीयाः प्रजाः निमेषः पक्ष्मपात एव चिह्नं व्यावर्त्तकं तेन सह वर्त्तन्त इति सनिमेषचिह्नाः । तेन सहेति तुल्ययोग इति बहुव्रीहिः । चक्रे अद्धा तत्त्वनिश्चयोत्प्रेक्षा । तत्त्वे त्वद्धाञ्जसा द्वयोरित्यमरः । अत्र स्वाभाविकनिमेषस्याप्सरसः प्रार्थनाहेतुत्वोत्प्रेक्षया द्वारकाङ्गनानां निमेषमात्रभिन्नमसादृशं सौन्दर्यं वस्तु व्यज्यते ॥ ४२ ॥

आरुह्य नार्यः क्षणदासु यत्र
नभोगता देव्य इव व्यराजन् ॥ ४३ ॥
कान्तेन्दुकान्तोपलकुट्टिमेषु
प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि
समूहमूहुः पयसां प्रणाल्यः ॥ ४४ ॥

स्फुरदिति । यस्यां पुरि क्षणदासु रात्रिषु नार्यः स्फुरद्भिस्तुषारांशोश्चन्द्रस्य मरीचिजालैश्चन्द्रिकाभिः विनिह्नुताः अपह्नुताः तदेकरूपतापत्तेरप्यलक्ष्यमाणा इत्यर्थः । अत एव सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । स्फाटिकानां स्फटिकविकाराणां सौधानां पङ्क्तीरारुह्य नभोगता देव्यो देवाङ्गना इव । देवशब्दस्य पचादिषु देवडिति पाठात् टिड्ढाणञित्यादिना ङीप् । व्यराजन् सौधानामच्छत्वादभ्रङ्कषत्वाच्च तत्र लक्ष्यमाणाः स्त्रियः खेचर्य्य इव रेजुरित्यर्थः । अत्र नभोगतत्वोत्प्रेक्षायाः पूर्वोक्तसामान्यसापेक्षत्वात् सङ्करः ॥ ४३ ॥

कान्तेति । यत्र पुरि क्षपासु रात्रिषु प्रतिक्षपम् । विभक्त्यर्थेऽव्ययीभावः । कान्तानि रम्याणि इन्दुकान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमानि बद्धभूमयो येषु तेषु । कुट्टिमं बद्धभूमिः स्यादिति हलायुधः । हर्म्यतलेषु उच्चैरुन्नताः प्रणाल्यो जलमार्गाः । द्वयोः प्रणाली पयसः पदव्यामित्यमरः । अधःपातिनोऽधश्चराः पयोमुचो मेघाः यासान्ताः अधःकृतमेघमण्डलत्वात् अजातवृष्टिपाता अपीत्यर्थः । विरोधालङ्कारः । पयसां समूहं पयःपूरमूहुर्वहन्ति स्म चन्द्रकान्तनिष्यन्दैरिति भावः । वहेर्लिट् वचिस्वपीत्यादिना सम्प्रसारणम् । अत्र सौधानां प्रणालीनां च तादृगौन्नत्यपयःपूरासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ४४ ॥

रतौ ह्रिया यत्र निशाम्य दीपान्
जालागताभ्योऽधिगृहं गृहिण्यः।
बिभ्युर्विडालेक्षणभीषणाभ्यो
वैदूर्यकुड्येषु शशिद्युतिभ्यः॥ ४५॥

यस्यामतिश्लक्ष्णतया गृहेषु
विधातुमालेख्यमशक्नुवन्तः।
चक्रुर्युवानः प्रतिबिम्बिताङ्गाः
सजीवचित्रा इव रत्नभित्तीः॥ ४६॥

रताविति। यत्र पुरि गृहेष्वधिगृहम्। विभक्त्यर्थेऽव्ययीभावः। गृहिण्यः कुलाङ्गनाः अत एव रतौ रतिकाले ह्रिया दीपान्निशाम्य निर्वाप्य। शमेर्मित्त्वाद्धस्वादेशाभावश्चिन्त्यः। जालागताभ्यो गवाक्षमार्गप्रविष्टाभ्यः। जालं गवाक्ष आनाय इति विश्वः। विदूरात् प्रभवन्तीति वैदूर्याणि बालवायजानि मणयः। वैदूर्यं बालवायजमिति विश्वः। विदूरात् ञ्य इति ञ्यप्रत्ययः। अत्र विदूरशब्दो बालवायस्यादेशः पर्यायो वा तत्रोपचरितो वा तेन बालवायाद्रिरसौ प्रभवति न विदूरान्नगरात् तत्र तु संस्क्रियत इत्याक्षेपः प्रयुक्तः। यदुक्तम्। बालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेदिति। तेषां कुड्येषु भित्तिषु सङ्क्रान्ताभ्य इति शेषः अत एव तच्छायापत्त्या पैङ्गल्यात् विडालेक्षणवत् भीषयन्त इति भीषणाभ्यो भयङ्कराभ्यः। नन्द्यादित्वात् कर्त्तरि ल्युप्रत्यये टाप्। शशिद्युतिभ्यो बिभ्युः भीताः सौगध्यादिति भावः। बिभेतेर्लिट्। अत्र लज्जावारणाय दीपनिर्वापणे न केवलं तदसिद्धिः प्रत्युत भयञ्चोत्पन्नमित्यनर्थोत्पत्तिरूपो विषमभेदः। विरुद्धकार्यस्योत्पत्तिर्यत्नानर्थस्य वा भवेत्। विरूपघटना या स्याद्विषमालङ्कृतिर्मतेति लक्षणात्॥ ४५॥

यस्यामिति। यस्यां पुरि गृहेष्वतिश्लक्ष्णतया रत्नभित्तीनाम-

सावर्ण्यभाजां प्रतिमागतानां
लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।
यस्यां कपोलैः कलधौतधाम-
स्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ४७ ॥

शुकाङ्गनीलोपलनिर्मितानां
लिप्तेषु भासा गृहदेहलीनाम् ।
यस्यामलिन्देषु न चक्रुरेव
मुग्धाङ्गना गोमयगोमुखानि ॥ ४८ ॥

तिस्निग्धतया आलेख्यच्चित्रं विधातुमिमर्गातुमशक्नुवन्तो युवानः प्रतिबिम्बिताङ्गाः स्वयन्तासु संक्रान्तमूर्तयः सन्तो रत्नभित्तीः सजीवचित्राः सचेतनचित्रवतीरिव चक्रुरित्युत्प्रेक्षा ॥ ४६ ॥

सावर्ण्येति । यस्यां पुरि कलधौतधामस्तम्भेषु हेमागारस्तम्भेषु । कलधौतं रौप्यहेम्नोरिति विश्वः । प्रतिमागतानां सावर्ण्यभाजां तत्सावर्ण्यादगृहीतभेदानामित्यर्थः अत एव सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । अङ्गनानां स्मरापाण्डुतया लक्ष्यैर्विभिन्नवर्णत्वाद्भेदेन गृह्यमाणैरित्यर्थः कपोलैर्मणिदर्पणानां स्फटिकमुकुराणां श्रीरिव श्रीर्भेजे प्राप्ता इति निदर्शना । सा चोक्तसामान्यप्रसादलब्धेति तेनास्याः सङ्करः ॥ ४७ ॥

शुकाङ्गेति । यस्यां पुरि मुग्धाङ्गनाः शुकाङ्गवन्नीलोपलाः नीलमणयो मरकतानीत्यर्थः । उपलः प्रस्तरे मणाविति विश्वः । तैर्निर्मितानां गृहाणां देहल्यो गृहद्वारशाखाधारदारूणि । गृहावग्रहणी देहलीत्यमरः । तासाम्भासा लिप्तेषु अलिन्देषु द्वारबहिर्भागेषु । प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठक इत्यमरः । गोः पुरीषं गोमयम् । गोश्च पुरीषे इति मयट् । तस्य गोमुखानि विलेपनानि । गोमुखं कुटिलाकारे वाद्यभाण्डे विलेपने इति विश्वः । न चक्रुरेव । मरकतप्रभायां विलेपनभ्रान्त्येति भावः । अत एव भ्रान्तिमदलङ्कारः ।

गोपानसीषु क्षणमास्थिताना-
मालम्बिभिश्चन्द्रकिणां कलापैः ।
हरिन्मणिश्यामतृणाभिरामै-
र्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ४९ ॥

बृहत्तुलैरप्यतुलैर्वितान-
मालापिनद्धैरपि चावितानैः ।
रेजे विचित्रैरपि या सचित्रै-
र्गृहैर्विशालैरपि भूरिशालैः ॥ ५० ॥

कविसम्मतसादृश्याद्वस्त्वन्तरमतिर्हि यत् । स भ्रान्तिमानित्यलङ्कारसर्वस्वकारलक्षणात् ॥ ४८ ॥

गोपानसीष्विति । यत्र पुरि गृहाणि गोपानसीषु वलभीच्छादनाधारेषु वंशपञ्जरेष्वित्यर्थः । अत एव गोपानसी तु वलभीच्छादने वक्रदारुणीत्यत्र पटलाधारे वंशपञ्जरे इत्याह स्वामी । क्षणमीषत्कालम् । अत्यन्तसंयोगे द्वितीया । आस्थितानामासीनानां चन्द्रकाः मेचकाः । समौ चन्द्रकमेचकावित्यमरः । तद्वतां चन्द्रकिणां मयूराणाम् आलम्बिभिर्लम्बमानैः कलापैः बर्हैः । कलापो भूषणे बर्हे इत्यमरः । हरिन्मणयो मरकतानि । गारुत्मतं मरकतमश्मगर्भं हरिन्मणिरित्यमरः । तद्वत् श्यामैस्तृणैरभिरामाणि हरिततृणमयानीत्यर्थः । तैर्नीध्रैः पटलप्रान्तैरिव रेजुः । वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिरित्यमरः । छादनपर्यायौ पटलच्छदी छद्यग्रलवाचिनी वलीकनीध्रे छदेराधारो वंशपञ्जरो गोपानसीति विवेकः । अत एव हरितत्वालम्बनादिगुणक्रियानिमित्तत्वान्नीध्रैरिवेति जातिस्वरूपोत्प्रेक्षा ॥४९॥

बृहदिति । या पूः बृहत्यस्तुला उपरिस्थाप्यदार्वाधारभूतानि स्तम्भाग्रपीठानि येषु तैः बृहत्तुलैः तथाप्यतुलैस्तद्रहितैरिति विरोधः अनुपमैरित्यविरोधः । तुला माने पलशते सादृश्ये राशिभाण्डयोः । गृहाणां दारुबन्धाय पीठ्यामिति हैमः । वितानानामुल्लोचानां

चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः
कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं
यस्यां जनः कृत्रिममेव मेने ॥ ५१ ॥

शालाभिः पङ्क्तिभिः पिनद्धैराच्छादितैः तथाप्यवितानैस्तद्रहितैरिति विरोधः अशून्यैरित्यविरोधः समस्तवस्तुसम्बद्धैरित्यर्थः । अस्त्री वितानमुल्लोचो वितानं त्रिषु तुच्छकमित्युभयत्राप्यमरः । विचित्रैरालेख्यरहितैरपि सचित्रैः तत्सहितैरिति विरोधः विचित्रैरद्भुतैरिति परिहारः । आलेख्याश्चर्ययोश्चित्रमित्यमरः । विगताः शाला गृहैकदेशा येषां तानि । शाला गृहे तरुस्कन्धे शाखागारैकदेशयोरिति विश्वः । तैः विशालैरपि भूरिशालैः प्रचुरगृहैकदेशविशिष्टैरिति विरोधः विशालैः पृथुलैरित्यविरोधः । विशालं पृथुलं महदित्यमरः । वेः शालच्छङ्कटचाविति शालच्प्रत्ययः । गृहैः रेजे । अपिरयं सर्वत्र विरोधे विरुद्धवदाभासाद्विरोधालङ्कारः । विरोधः सोऽविरोधेऽपि विरुद्धत्वेन तद्वच इति काव्यप्रकाशलक्षणात् ॥ ५० ॥

चिक्रंसयेति । यस्यां पुरि निकेतनानां वेश्मनाम् । वेश्म सद्म निकेतनमित्यमरः । कपोतान् पक्षिणः पालयन्तीति कपोतपाल्यो विटङ्कापरनामानः स्तम्भाग्रप्रसारिताः दारुविशेषाः । कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकमित्यमरः । कर्मण्यणि ङीप् । तासु कृत्रिमपत्त्रिणां दारुमयपक्षिणां पङ्क्तेः । कर्मणि षष्ठी । चिक्रंसया क्रमितुमिच्छया जिघृक्षयेत्यर्थः । क्रमेः सन्नन्तादप्रत्ययादित्यकारप्रत्यये टाप्, स्नुक्रमोरनात्मनेपदनिमित्ते इतीडागमो न भवति । अत्र क्रमेर्वृत्त्यादिव्यतिरिक्तार्थेऽप्यनुपसर्गाद्वेति वैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्य वैकल्पिकस्य सम्भवात् । आयतमानतं वा निश्चलमङ्गं यस्य तं मार्जारं बिडालमपि । ओतुर्बिडालो मार्जार इत्यमरः । जनः कृत्रिमं क्रियानिर्वृत्तमेव मेने न तु वास्तवमित्यर्थः । डुकृञः क्त्रिः क्त्रेर्मम्नित्य-

क्षितिप्रतिष्ठोऽपि सुखारविन्दै-
र्वधूजनश्चन्द्रमधश्चकार।
अतीतनक्षत्रपथानि यत्र
प्रासादशृङ्गाणि वृथाध्यरुक्षत्॥ ५२॥

रम्या इति प्राप्तवतीः पताका
रागं विविक्ता इति वर्द्धयन्तीः।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः॥ ५३॥

मिति सम्बन्धः। अनेन कान्तिमाकान्तिमभेदो दुर्ग्रह इति श्लिष्ट-स्थानातिशयोक्तिः। अत्र कविकल्पितसादृश्यान्मार्जारजनयोः कान्तिमा-कान्तिमेषु विपरीतमतिवर्णनाद् भ्रान्तिमदलङ्कारः॥ ५१॥

क्षितीति। यस्यां पुरि वधूजनः क्षितौ प्रतिष्ठा यस्य सः भूमि-स्थितोऽपि चन्द्रं दिवि स्थितमिति भावः। तत्रापि सुखैरेवारविन्दै-रधश्चकारेति विरोधः स्वलावण्यमहिम्ना अधरीचकारेति परिहारा-द्विरोधालङ्कारः। अतीतानि नक्षत्रपथमतीतनक्षत्रपथानि। अत्या-दयः क्रान्ताद्यर्थे द्वितीयेति समासः, द्विगुप्राप्तापन्नेत्यादिना परवल्लि-ङ्गताप्रतिषेधः। प्रासादशृङ्गाणि वृथा अध्यरुक्षत् अधिरोहति स्म अनधिरुह्यैवाधःकरणादिति भावः। रोहतेर्लुङ् शल इगुपधादनिटः क्स इति च्लेः क्सादेशः। अत्राधःकरणवाक्यार्थस्य श्लेषविरोधोप-जीव्यवैयर्थ्ये हेतुत्वात् सङ्कीर्णः काव्यलिङ्गभेदः॥ ५२॥

रम्या इति। यस्यां पुरि युवानो रम्या रमणीया इति हेतोः पताकाः प्राप्तवतीः उर्च्छितध्वजा इत्यर्थः। अन्यत्र रम्या इत्येवं पताकाः प्राप्तवतीः प्रसिद्धिं गता इत्यर्थः। पताका वैजयन्त्याञ्च सौभाग्येऽर्कध्वजेऽपि च। इति हेतौ प्रकरणे प्राकारादिसमाप्ति-ष्वित्युभयत्रापि विश्वः। विविक्ता विजना विमलाश्च इति हेतोः रागं वर्द्धयन्तीः। विविक्तौ पूतविजनावित्यमरः। नमद्वलीकाः नम्रनीध्राः। वलीकनीध्रे पटलप्रान्ते इत्यमरः। अन्यत्र नमन्त्यो वल्य-

सुगन्धितामप्रतियत्नपूर्वां
बिभ्रन्ति यत्र प्रमदाय पुंसाम् ।
मधूनि वक्त्राणि च कामिनीना-
मामोदकर्मव्यतिहारमीयुः ॥ ५४ ॥

रतान्तरे यत्र गृहान्तरेषु
वितर्दिनिर्व्यूहविटङ्कनीडः ।

स्त्रिवल्याख्या मध्यरेखा यासान्ता नमद्दलीकाः । नद्यृतश्चेति कप्प्रत्ययः । वली मध्यलरेखोर्मिजीर्णत्वग्गृहदारुष्विति वैजयन्ती । वलभीः कूटागाराणि । कूटागारं तु वलभीत्यमरः । वधूभिः समसेवन्त वधूसङ्गता असेवन्तेत्यर्थः । अत्र वधूनां वलभीनां च प्रकृतानामेव धर्मसाम्येनौपम्यावगमात् केवलप्रकृतगोचरा तुल्ययोगिता न श्लेषः तत्र विशेष्यस्यापि श्लिष्टत्वनियमात् । यथाहुः, प्रस्तुतानान्तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति ॥ ५३ ॥

सुगन्धितामिति । यत्र पुरि न प्रतियत्नः संस्कारः पूर्वो यस्यास्तामप्रतियत्नपूर्वामकृत्रिमां स्वाभाविकीमित्यर्थः । प्रतियत्नस्तु संस्कार इति वैजयन्ती । शोभनो गन्धो येषां तेषां भावस्तत्ता तां सुगन्धितां सौरभ्यं बिभ्रन्ति बिभ्राणानि । वा नपुंसकस्येति, नुमागमः । मधूनि मद्यानि कामिनीनां वक्त्राणि च यूनां प्रमदाय प्रीत्यै आमोदकर्मणो वासनाधानस्य व्यतिहारं परस्परकरणमीयुः अन्योन्यगन्धेन अन्योन्यं वासयामासुरित्यर्थः । इणो लिट् । अत्रापि मधूनां वक्त्राणां च प्रकृतत्वात्तत्पूर्वक एव तुल्ययोगिताभेदः तेन यूनां मधुवासितवधूवदनपानं वदनवासितगण्डूषपानञ्च वस्तु व्यज्यते तेन च निरातङ्कभोगाः पौरा इति गम्यते ॥ ४५ ॥

रतान्तर इति । यत्र पुरि गृहान्तरेषु वितर्दयो विहारवेदिकाः । स्याद्वितर्दिस्तु वेदिकेत्यमरः । तासां निर्व्यूहा मत्तवारणाख्या उपाश्रयाः । निर्व्यूहो मत्तवारण इति वैजयन्ती । तेषां विटङ्काः

रुतानि शृण्वन् वयसाङ्गणोऽन्ते-
वासित्वमाप स्फुटमङ्गनानाम् ॥ ५५ ॥

छन्नेष्वपि स्पष्टतरेषु यत्र
स्वच्छानि नारीकुचमण्डलेषु ।
आकाशसाम्यं दधुरम्बराणि
न नामतः केवलमर्थतोऽपि ॥ ५६ ॥

यस्यामजिह्मा महतीमपङ्काः
सीमानमत्यायतयोऽत्यजन्तः ।

उपरितन्यः कपोतपालिकाः त एव नीड़ाः कुलायाः यस्य सः । कुलायो नीड़मस्त्रियामित्यमरः । वयसां शुकसारिकादिपक्षिणां गणः । वयः पक्षिणि बाल्यादाविति विश्वः । अङ्गनानां वितर्दिषु रममाणानामिति भावः । रतान्तरे रुतानि रतिकूजितानि शृण्वन् अन्ते समीपे वसन्त इत्यन्तेवासिनः शिष्याः । छात्रान्तेवासिनौ शिष्य इत्यमरः । शयवासवासिष्वकालादित्यलुक् । तेषां भावस्तत्त्वमाप । समीपे प्रतिशब्दं यथाश्रुतमुच्चारणादेवमुत्प्रेक्ष्यते । अत एव स्फुटमिति व्यञ्जकप्रयोगः ॥ ५५ ॥

छन्नेष्विति । यत्र पुरि छन्नेषु आच्छादितेषु । वा दान्तेत्यादिना वैकल्पिको निपातः । स्पष्टतरेषु स्फुटतरं लक्ष्यमाणेष्वित्यर्थः । नारीकुचमण्डलेषु स्वच्छानि स्फटिकादिवदतिरोधायकानि अम्बराणि वस्त्राणि केवलं नामतोऽम्बरमिति नाम्नैवाकाशसाम्यं न दधुः । अम्बरं व्योम्नि वाससीति विश्वः । किन्तु अर्थतोऽपि अर्थक्रिययापि तत्साम्यन्दधुः । स्वयमतिसूक्ष्मत्वादव्यवधायकत्वं दृष्ट्यादेर्मूर्त्तान्तरगत्यविघातित्वञ्चेत्यादिनापि साम्यन्दधुरित्यर्थः । उपमालङ्कारः ॥ ५६ ॥

यस्यामिति । यस्यां पुरि अजिह्माः अवक्राः अन्यत्राकपटाः दम्भादिरहिता इत्यर्थः । आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथेति स्मरणादिति भावः । जिह्मः कपटवक्रयोरिति विश्वः । अपङ्काः

जनैरजातस्खलनैर्न जातु
द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५७ ॥
परस्परस्पर्द्धिपरार्द्ध्यरूपाः
पौरस्त्रियो यत्र विधाय वेधाः ।
श्रीनिर्मितिप्राप्तघुणक्षतैक-
वर्णोपमावाच्यमलं ममार्ज ॥ ५८ ॥

कर्दमरहिता निष्पापाश्च । पङ्कोऽघे कर्दम इति हेमः । मर्य्यादां सीमानं राजकल्पितक्षेत्रसानं मर्य्यादां कुलागतानुष्ठानस्थितिञ्च अत्यन्तः अत्यन्तमहामर्य्यादा इत्यर्थः । अतिमात्रा आयतिरायामः उत्तरकालश्च येषां ते अत्यायतयः । आयतिस्तूत्तरे काले संयमायामयोरपीति विश्वः । द्वये द्विरूपा अपि । प्रथमचरमतयेत्यादिना जसि विभाषया सर्वनामसंज्ञा । विनीतमार्गाः सुरचितपुरवीथयः सुशिक्षिताचारपद्धतयश्च न जातं स्खलनं पाषाणादिप्रतिघातो विरुद्धाचरणं च येषां तैर्जनैः जातु कदाचिदपि नामुच्यन्त न त्यक्ताः न कदाचित् खिलीकृता इत्यर्थः । अत्र मार्गशब्दस्य साधर्म्यादेकवृन्तावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेः द्वयानामपि मार्गाणां प्रकृतत्वाच्च केवलप्रकृतविषयोऽर्थश्लेषः । विशेष्यस्यापि श्लिष्टत्वान्न तुल्ययोगिता ॥ ५७ ॥

परस्परेति । यत्र पुरि परस्परस्पर्द्धीन्यहमहमिकयान्योन्यसामर्षाणि परार्द्ध्यानि श्रेष्ठानि रूपाणि सौन्दर्य्याणि यासान्ताः । रूपं स्वरूपे सौन्दर्य्ये इति विश्वः । पुरे भवाः पौराः ताः स्त्रियः पौरस्त्रियः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । विधाय निर्माय वेधाः स्रष्टा श्रियो लक्ष्मीदेव्याः निर्मित्या निर्माणेन प्राप्तं यत् घुणेन वज्रकीटेन क्षतस्योत्कीर्णस्यैकवर्णस्य उपमया साम्येन वाच्यमपवादः तदलमत्यन्तं तदेवमलमिति केचित् ममार्ज घुणाक्षरवत् यादृच्छिकमिदं श्रीदेवतासौन्दर्य्यं शिल्पे न कौशलमित्ययशः क्षालितवानित्यर्थः ।

क्षुण्णं यदन्तःकरणेन वृक्षाः
फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवन् जनस्य
याः सम्पदस्ता मनसोऽप्यगम्याः ॥ ५९ ॥

कला दधानः सकलाः स्वभाभि-
रुद्भासयन् सौधसिताभिराशाः ।
यां रेवतीजानिरियेष हातुं
न रौहिणेयो न च रोहिणीशः ॥ ६० ॥

अनया चातिशयोक्त्या पौरस्त्रीणां रम्भासमानसौन्दर्यं वस्तु व्यज्यते ॥ ५८ ॥

क्षुण्णमिति । यदन्तःकरणेन क्षुण्णमभ्यस्तं ममेदम्भूयादिति भूयो-भूयः सङ्कल्पितमित्यर्थः कल्पयन्ति सङ्कल्पितार्थानिति कल्पाः कल्प इत्युपपदं व्यावर्त्तकं येषां ते कल्पोपपदाः वृक्षाः कल्पवृक्षाः तदेव फलन्ति निष्पादयन्ति । फलनिष्पत्ताविति धातोर्लट् । किन्तु यां पुरमध्यूषुषो यस्यामुषितवन्तः । उपान्वध्याङ्वस इति कर्मत्वं भाषायां सदवसश्रुव इति क्वसुप्रत्ययः । जनस्य याः सम्पदोऽभवन् ता मनसो-ऽप्यगम्याः वाचामभूमय इति किमु वक्तव्यमिति भावः । गृहे गृहे कल्पवृक्षसम्बन्धातिशयोक्त्या पौराणां देवेन्द्रभोगो व्यज्यते । इह कल्प इत्युपपदं स्वसंज्ञैकदेशो येषामिति व्याख्याने हिरण्यपूर्वं कशिपु-मित्यादिवदवाच्यवचनदोषावकाशः ॥ ५९ ॥

कला इति । सकलाः समग्राः कलाश्चतुःषष्टिविद्याः षोडश-भागांश्च दधानः । कला शिल्पे कालभेद इति, कला तु षोडशो भाग इति चामरः । सुधयावलिप्तं सौधस्तद्वत्सिताभिः स्वभाभिराशा दिश उद्भासयन् रेवती ककुद्मिकन्या पूषकं भञ्च जाया यस्य स रेवती-जानिः । जायया निङिति समासान्तो निङादेशो लोपो व्योर्वलीति यलोपः । रोहिण्या अपत्यं पुमान् रौहिणेयः बलभद्रः । स्त्रीभ्यो

बाणाहवव्याहतशम्भुशक्ते-
रासत्तिमासाद्य जनार्दनस्य ।
शरीरिणा जैत्रशरेण यत्र
निःशङ्कमूषे मकरध्वजेन ॥ ६१ ॥

निषेव्यमाणेन शिवैर्मरुद्भि-
रध्यास्यमाना हरिणा चिराय ।
उद्रश्मिरत्नाङ्कुरधाम्नि सिन्धा-
वाह्वास्त मेरावमरावतीं या ॥ ६२ ॥

ढक् । यां पुरीं ह्रातुन्त्यक्तुं न द्वेष नेच्छति स्म । लिट् । रोहिणी-शचन्द्रस्य ह्रातुं न द्वेष । अत्र रौहिणेयरोहिणीशयोः परोत्कर्षा-वहत्वेन द्वयोः प्रकृतत्वाद्विशेष्यस्याश्लिष्टत्वाच्च केवलप्रकृतविषया तुल्य-योगिता । गतमन्यत् ॥ ६० ॥

बाणेति । यत्र पुरि बाणाहवे बाणासुरयुद्धे व्याहता खर्वं नीता शम्भुशक्तिर्येन तस्य हरविजयिनो जनार्दनस्य कृष्णस्यासत्तिम्-त्यासन्निमासाद्य पुनत्वं प्राप्येत्यर्थः शरीरिणा विग्रहवता न त्वनङ्गे-नेति भावः । जेतार एव जैत्रा जयशीलाः । तृन्नन्तात् प्रज्ञादित्वादण्-प्रत्ययः । ते शरा यस्य तेन मकरध्वजेन कामेन प्रद्युम्नरूपेणेति भावः । निःशङ्कं निर्भीकमूषे उषितम् । वस निवासे भावे लिट्, वचिस्वपीत्यादिना सम्प्रसारणम् । शङ्का वितर्कभययोरिति विश्वः । अत्र शम्भुशक्तिव्याघातपदार्थस्य विशेषणगत्या निःशङ्कनिवासहेतु-त्वोक्तेः काव्यलिङ्गभेदः । पुरा किल भगवान् भक्तवत्सलो धूर्जटि-र्बाणप्रेसुणा बाणाभियोधिनं हरिमभियुज्य निर्जित इति पौरा-णिकाः कथयन्ति ॥ ६१ ॥

निषेव्यमाणेनेति । शिवैर्मरुद्भिर्मन्दमारुतैः अन्यत्र शिवैः रुद्रै-र्मरुद्गणैश्च चिराय निषेव्यमाणेन हरिणा श्रीकृष्णेन शक्रेण चाध्यास्य-माना अधिष्ठीयमाना  उद्गतानि रत्नाङ्कुराणां धाम्नि स्थाने एकत्र

स्निग्धाञ्जनश्यामरुचिः सुवृत्तो
बध्वा इवाध्वंसितवर्णकान्तेः।
विशेषको वा विशिशेष यस्याः
श्रियं त्रिलोकीतिलकः स एव ॥ ६३ ॥
तामीक्षमाणः स पुरं पुरस्तात्
प्रापत्प्रतोलीमतुलप्रतापः।

रत्नाकरत्वादन्यत्र रत्नसानुत्वाच्चेति भावः सिन्धौ स्थितेति शेषः या पूर्वमेरौ स्थितामरा यस्यां सन्तीत्यमरावतीमिन्द्रनगरीम्। मतौ बह्वचो नाजिरेति दीर्घः, संज्ञायां मादुपधायाश्चेति वत्वम्। आह्वास्त स्पर्द्धया आहूतवती अमरावतीमनुचकारेत्यर्थः। ह्वयतेर्लुङ् स्पर्द्धाया-माङः इत्यात्मनेपदं लिपिसिचिह्वश्चेति आत्मनेपदेष्वन्यतरस्यामिति ल्ले रङभावपक्षे सिजादेशः। अत्र प्रथमार्थे श्लेषेऽपि सिन्धौ मेरौ स्थितेति प्रतिबिम्बाभावेन साधर्म्योक्तेः श्लेषानुप्राणितेयमुपमेति सङ्क्षेपः। आह्वास्तेति सादृश्यप्रतिपादकः शब्दः स्पर्द्धते ह्वयते इष्टी-त्यनुशासनात् ॥ ६२ ॥

स्निग्धेति। स्निग्धं यदञ्जनं तद्वत्तेन च श्यामरुचिः सुवृत्तः सद्वृत्तिः सुष्ठु वर्त्तुलश्च। त्रयाणां लोकानां समाहारस्त्रिलोकी। तद्धितार्थेत्यादिना समासः, सङ्ख्यापूर्वो द्विगुरिति द्विगुसंज्ञा, अका-रान्तोत्तरपदो द्विगुः स्त्रियामिष्यत इति स्त्रीत्वं द्विगोरिति ङीप्। तस्यास्तिलको भूषणभूतः स हरिरेव विशेषको वा तिलक इवेत्यर्थः। इववद्वायथाशब्दा इत्यनुशासनात्। तमालपत्रतिलकचित्रकाणि विशे-षकं द्वितीयञ्च तुरीयञ्च न स्त्रियामित्यमरः। अध्वंसिता वर्णानां ब्राह्मणादीनां कान्तिरौज्ज्वल्यं यस्याः तस्याः पुरः अन्यत्राध्वंसितो वर्णो गौरादिः कान्तिर्लावण्यं च यस्यास्तस्याः। वर्णो द्विजादौ शुक्लादावित्युभयत्राप्यमरः। वध्वा इव श्रियं विशिशेष विशेषितवान्। अनेकशब्दे यत्नुपमेत्येके। शब्दसाम्यसादृश्यात् श्लेष इत्यन्ये। श्लेषोपमे-त्याह दण्डी ॥ ६३ ॥

वज्रप्रभोद्भासिसुरायुधश्री-
र्या देवसेनेव परैरलङ्घ्या ॥ ६४ ॥

प्रजा इवाङ्गादरविन्दनाभेः
शम्भोर्जटाजूटतटादिवापः।
मुखादिवाथ श्रुतयो विधातुः
पुरान्निरीयुर्मुरजिद्ध्वजिन्यः ॥ ६५ ॥

स्निह्यद्भिरन्योन्यमुखाग्रसङ्ग-
स्खलत्खलीनं हरिभिर्विलोलैः।
परस्परोत्पीडितजानुभागा
दुःखेन निश्चक्रमुरश्ववाराः ॥ ६६ ॥

तामिति। अतुलप्रतापः स हरिः तां पूर्वोक्तां पुरमीं नगर्याः पुरस्तात् पूर्वस्यां दिशि। सप्तम्यर्थे तसिल्प्रत्ययः। प्रतोलीं रथ्याम्। रथ्या प्रतोली विशिखेत्यमरः। प्रापत् प्राप्तवान्। लुङि पुषादि-त्वादिना च्लेरङादेशः। वज्राणां तोरणप्रासादादिगतहीरकादिमणीनां प्रभाभिरुद्भासिनी सुरायुधश्रीरिन्द्रचापलक्ष्मीर्यस्यां सा। इह वज्र-ग्रहणं मणिमात्रोपलक्षणम् अन्यथेन्द्रायुधाभावादिति भावः। अन्यत्र वज्रस्य कुलिशस्य प्रभाभिरुद्भासिनी सुरायुधानामितरदेवतायुधानां श्रीर्यस्याः सा। वज्रोऽस्त्री हीरके पवावित्यमरः। या प्रतोली देवसेना सुरचमूरिव परैः शत्रुभिरलङ्घ्या दुष्प्रधर्षा ॥ ६४ ॥

प्रजा इति। अरविन्दनाभेर्विष्णोरङ्गात् प्रजा इव। यतो वा इमानि भूतानि जायन्त इति श्रुतेरिति भावः। शम्भोर्जटाजूट-तटादाप इव गङ्गाजलानीव विधातुर्मुखात् श्रुतय इव मुरजितो हरेः ध्वजिन्यः सेनाः पुरान्निरीयुः निर्गताः। मालोपमेयम् ॥ ६५ ॥

स्निह्यद्भिरिति। अन्योन्येषां मुखाग्रेषु सङ्गेन स्खलन्तः खलीनाः कविका यस्मिन् कर्मणि तद्यथा तथा। कविका तु खलीनोऽस्त्रीत्य-मरः। स्निह्यद्भिः संघृष्यद्भिः विलोलैः उच्छलद्भिर्हरिभिस्तुरङ्गैः

निरन्तरालेऽपि विमुच्यमाने
दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपै-
र्द्विपैरसम्बाधमयाम्बभूवे ॥ ६७ ॥
शनैरनीयन्त रयात्पतन्तो
रथाः क्षितिं हस्तिनखादखेदैः ।
सयत्नसूतायतरश्मिभुग्न-
ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः ॥ ६८ ॥

करणैरश्वान् वारयन्ति ये तेऽश्ववाराः अश्वारोहाः परस्परैरुत्पीडित-जानुभागाः सन्तो दुःखेन निश्चक्रमुः निर्जग्मुः । अत्र स्वभावोक्त्य-तिशयोक्त्योः सङ्करः ॥ ६६ ॥

निरन्तराल इति । तमसा तिमिरेणेव प्राणभृताङ्गणेन प्राणि-वर्गेण कर्त्रा निरन्तरालेऽपि पूर्वं सेनैवातिसङ्कटेऽपि पथि सम्प्रति दूरं दूरत एव विमुच्यमाने सति एकत्र दीपभयादन्यत्र द्विपभया-च्चेत्यर्थः । तेजोमहद्भिर्बलाधिकैः प्रभासम्पन्नैश्च । तेजो बलप्रभा तेज इति विश्वः । द्विपैर्दीपैरिवासम्बाधमसङ्कीर्णमयाम्बभूवे जग्मे । न त्वश्वैरिव कृच्छ्रादिति भावः । अय गतौ भावे लिट्, दयायास-श्चेत्याम्प्रत्ययः । स्वतेजसैव दूरोत्सारिततमस्को दीपा इव तथोत्-सारितप्राणिके पथि निरर्गलं द्विपाः प्रययुरित्यर्थः । तमसेति सप्तम्यन्तपाठे तु तमसः पथ्युपमानत्वे द्विपागमनात् पथ इव तमसो दीपागमनात् प्राक्तनप्राणिवर्गेण निरन्तरालत्वं पश्चान्मुच्यमानत्वं च न सम्भवतीत्युपमानोपमेययोर्वैरूप्यं स्यात् । तृतीयान्तपाठे तमसः प्राणिवर्गोपमानत्वे तत्साद्गुण्यसाकल्यात् स एव साधीयानित्यालङ्कारि-काणां पन्थाः ॥ ६७ ॥

शनैरिति । रयात् पतन्तो धावन्तो रथाः सयत्नैः सूतैः सार-थिभिः । सूतः क्षत्ता च सारथिरित्यमरः । आयता आकृष्टा ये

बलोर्मिभिस्तत्क्षणहीयमान-
रथ्याभुजाया वलयैरिवास्याः।
प्रायेण निष्क्रामति चक्रपाणौ
नेष्टं पुरी द्वारवतीत्वमासीत्॥ ६९॥

पारेजलं नीरनिधेरपश्य-
न्मुरारिरानीलपलाशराशीः।
वनावलीरुत्कलिकासहस्र-
प्रतिक्षणोत्कूलितशैवलाभाः॥ ७०॥

रश्मयः प्रग्रहाः। किरणप्रग्रहौ रश्मी इत्यमरः। तैर्भुग्नेषु प्रह्वेषु ग्रीवाणामग्रेषु संसक्ताः युगाः युग्याः स्कन्धवाह्याः दारुविशेषा येषां तैरत एवाखेदैरश्रमैः तुरङ्गैर्हस्तिनखात् हस्तिनखः पूर्द्वारि स्तत्कूटः। कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्निन्त्यमरः। तस्माच्छनैः क्षितिसनीयन्त नीता इति स्वभावोक्तिः यथावद्वस्तुवर्णनात्॥ ६८॥

बलोर्मिभिरिति। बलान्यूर्मय इव तैर्बलोर्मिभिः वलयैः कङ्कणैरिव तत्क्षणे हरिनिष्क्रमणक्षण एव हीयमाना अपरिच्यमाना रथ्या भुजेव यस्याः अत एवास्याः पुरो द्वारावत्याश्चक्रपाणौ कृष्णे निष्क्रामति निर्गच्छति सति प्रायेण भूम्ना द्वारवतीत्वं द्वारकात्वं स्वस्वरूपमिति यावत् इष्टं नासीत् हरिविरहे तद्वैफल्यादिति भावः। द्वारवतीशब्दस्य संज्ञात्वात् त्वतलोर्गुणवचनस्येति न पुंवद्भावः। अन्यत्र द्वारवतीत्वं द्वारवत्त्वं नेष्टं तस्य हरिनिष्क्रमणहेतुत्वादित्युभयथाप्युपमितभुजवलयगलनहेतुत्वादुपमासङ्कीर्णेयमनिष्टत्वोत्प्रेक्षा प्रायेणेत्यनेन व्यज्यते॥ ६९॥

अथासर्गसमाप्तेः समुद्रं वर्णयति, पार इति। मुरारिर्नीरनिधेः समुद्रस्य जलानां पारे परतीरे पारेजलम्। पारावारे परार्वाची तीर इत्यमरः। पारे मध्ये षष्ठ्या वेत्यव्ययीभावः। तत्संयोगादेकारान्तत्वं च पारेशब्दस्य। आसमन्तान्नीलाः पलाशानां पलाशां

लक्ष्मीभृतोऽम्भोधितटाधिवासान्
द्रुमानसौ नीरदनीलभासः।
लतावधूसम्प्रयुजोऽधिवेलं
बहुत्वतान् स्वानिव पश्यति स्म॥ ७१॥
आश्लिष्टभूमिं रसितारमुच्चै-
र्लोलद्भुजाकारबृहत्तरङ्गम्।
फेनायमानं पतिमापगाना-
मसावपस्मारिणमाशशङ्के॥ ७२॥

राशयो यासान्ताः हरितपर्णपूर्णा इत्यर्थः। पत्रं पलाशं छदन-मित्यमरः। अत एवोत्कलिका ऊर्मयः। ऊर्मिरुत्कलिकोल्लोल-कल्लोललहरिस्तथेति हलायुधः। तासां सहस्रैः प्रतिक्षणमुत्कूलिताः कूलमुद्गताः कूलं प्रापिता इत्यर्थः। उत्कूलशब्दात् करोतीति ण्यन्तात् कर्मणि क्तः। तेषां शैवलानाम् आभेवाभा यासान्ताः तत्सदृशीरित्यर्थः वनावलीरपश्यत्। अत्रोत्कूलितशैवलस्य स्वतः-सिद्धसन्देहादुपमोत्प्रेक्षयोः सन्देहसङ्करः॥ ७०॥

लक्ष्मीभृत इति। असौ हरिर्लक्ष्मीं शोभां श्रीदेवीं च बिभ्र-तीति लक्ष्मीभृतस्तान् अम्भोधितटे अधिवासो येषां तान् नीरदवन्नील-भासः नीलवर्णान् लता वध्व इवेत्युपमितसमासः अन्यत्र लता इव वध्व इति शाकपार्थिवादित्वान्मध्यपदलोपी समासः। ताभिः सम्प्रयुज्यन्त इति सम्प्रयुजः सक्तान्। क्विप्। अधिवेलं वेलायाम्। विभक्त्यर्थे-ऽव्ययीभावः। द्रुमान् बहुत्वतावनेकीलतान् स्वान् स्वकीयविग्रहानि-वेत्यर्थः। एवञ्च पुंलिङ्गतानिर्वाहः। आत्मपरत्वे नपुंसकत्वापातः। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरः। पश्यति स्म। श्लेषसङ्कीर्णेयमुत्प्रेक्षा॥ ७१॥

आश्लिष्टेति। आश्लिष्टभूमिमाश्लिङ्गितभूतलम् उच्चैस्तारं रसि-तारं क्रन्दितारं लोलता चञ्चलतामितस्ततः पतता भुजानाम् आकार

पीत्वा जलानान्निधिनातिगार्ध्या-
द्वृद्धिङ्गतेऽप्यात्मनि नैव मान्तीः ।
क्षिप्ता इवेन्दोः स रुचोऽधिवेलं
मुक्तावलीराकलयाञ्चकार ॥ ७३ ॥
साटोपमुर्वीमनिशं नदन्तो
यैः प्लावयिष्यन्ति समन्ततोऽमी ।

इव आकारो येषां ते वृद्धतरङ्गा यस्य तं तथोक्तं फेनायमानं फेन॰मुद्वमन्तम् । फेनाच्चेति वक्तव्यमिति क्यङ् । अपां समूह आपम् । तस्य समूह इत्यण् । तेन गच्छन्तीत्यापगाः तासां पतिं समुद्रम् असौ हरिरपस्मारिणमपस्माररोगिणमाशशङ्के । तद्धर्मयोगात्तथा उत्प्रेक्षाञ्चक्रे इत्यर्थः । यथाहुर्निदानिकाः, क्रुद्धैर्मलैरभिराहतेऽथ मनसि प्राणी मनः सन्दिशन्दन्तान् खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः । पश्यन् रूपमवत्क्षितौ निपतति व्यर्थां करोति क्रियां विभ्यत् स स्वयमेव याम्यति गते वेगे त्वपस्माररुक् ॥ ७२ ॥

पीत्वेति । जलानां निधिना समुद्रेण गर्द्ध एव गार्द्ध्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तदतिमात्रमतिगार्ध्यं तस्मात्तृष्णाभरादित्यर्थः । वृधोः पुनरोर्गुणः वान्तो यिप्रत्यये इति गार्द्ध्यमिति स्यात् । पीत्वा चेपणक्रियापेक्षया पूर्वकालता अथ वृद्धिं गते आत्मनि देहे । चन्द्रोदये समुद्रस्य वृद्धिरित्यागमः । नैव मान्तीरमान्तीः अतिरिच्यमाना इत्यर्थः । मातेः शतरि ङीप्, आच्छीनद्योर्नुम् । क्षिप्ता उद्गीर्णा अतितृष्णयोत्कटं पीत्वा अन्तरमानाद्वहिरुद्वान्ता इत्यर्थः । इन्दो रुचो मरीचीरित्युत्प्रेक्षा स हरिरधिवेलमधितीरम् । वेला कूलविकारयोरिति विश्वः । मुक्तावलीराकलयाञ्चकार आकलयामास कलतिः कामधेनुः ॥ ७३ ॥

साटोपमिति । अमी मेघाः साटोपं ससम्भ्रमम् । सम्भ्रमः साटोपसंरम्भा इति यादवः । अनिशं नदन्तो गर्जन्तो यैस्तोयैरम्भोभिरुर्वी

तान्यकदेशान्निभृतं पयोधेः
सोऽम्भांसि मेघान् पिबतो ददर्श ॥ ७४ ॥

उद्धृत्य मेघैस्तत एव तोय-
मर्थं मुनीन्द्रैरिव सम्प्रणीताः ।
आलोकयामास हरिः पतन्ती-
र्नदीः स्मृतीर्वेदमिवाम्बुराशिम् ॥ ७५ ॥

विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गु भाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७६ ॥

समन्ततः प्लावयिष्यन्ति तान्यम्भांसि पयोधेरेकदेशादेककोणान्निभृतं निश्चलं यथा तथा पिबतो मेघान् स हरिर्ददर्श । एतेन समुद्रस्यापरिच्छिन्नरूपत्वं व्यज्यते ॥ ७४ ॥

उद्धृत्येति । मुनीन्द्रैस्ततो वेदात् वेदार्थमिव मेघैस्ततोऽम्बुराशेरेव तोयमुद्धृत्य सम्प्रणीताः कृताः अम्बुराशिं पतन्तीः प्रविशन्तीर्नदीर्वेदं पतन्तीः स्मृतीर्मन्वादिसंहिता इव हरिरालोकयामास । श्रुतिमूलत्वेनैव प्रामाण्यात् स्मृतीनां तत्संवाद एव तत्सम्प्रवेशः । अनेनैवेयमुपमा ॥ ७५ ॥

विक्रीयेति । दिक्षु भवानि दिश्यानि दिगन्तरानीतानीत्यर्थः । दिगादिभ्यो यत् । उरूणि महान्ति धनानि नानाद्रव्याणि विक्रीय मूल्येन दत्त्वा उत्तमलाभं द्वैगुण्यादिकं भजन्तीति तानुत्तमलाभभाजः तत्रत्यं द्वैप्यमित्यर्थः । अव्ययात्यप् । अफल्गु सारवत् । फल्गु तुच्छमसारं चेति यादवः । भाण्डं मूलधनं पण्यद्रव्यमित्यर्थः । वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोरिति वैजयन्ती । तरीषु नौषु । स्त्रियां नौस्तरणिस्तरिरित्यमरः । अविस्तारः तिरित्यौणादिकः इकारप्रत्ययः । आवपत आधदतः । वपतेः शतृप्रत्ययः ।

उत्पित्सवोऽन्तर्नदभर्त्तुरुच्चै-
र्गरीयसा निःश्वसितानिलेन ।
पयांसि भक्त्या गरुड़ध्वजस्य
ध्वजानिवोच्चिच्छिपिरे फणीन्द्राः ॥ ७७ ॥

तमागतं वीक्ष्य युगान्तबन्धु-
मुत्सङ्गशय्याशयमम्बुराशिः ।
प्रत्युज्जगामेव गुरुप्रमोद-
प्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७८ ॥

उत्सङ्गिताम्भःकणको नभस्वा-
नुदन्वतः स्वेदलवान्ममार्ज ।

द्वैप्यान् समुद्रद्वीपवासिनः । द्वीपादनुसमुद्रं यञिति यञ्प्रत्ययः । संयात्रा सम्भूय यात्रा सा प्रयोजनमेषामिति तान् सांयात्रिकान् पोतवणिजः । सांयात्रिकः पोतवणिगित्यमरः । प्रयोजनमिति ठक् । असौ हरिरभ्यनन्दत् ॥ ७६ ॥

उत्पित्सव इति । नदभर्त्तुः समुद्रस्यान्तरभ्यन्तरात् उत्पित्सवः उत्पतितुमिच्छवः । पततेः सन्नन्तादुप्रत्ययः, सनि मीमेत्यादिना इसादेशः, अत्र लोपोऽभ्यासस्येति अभ्यासलोपः । फणीन्द्रा भक्त्या गरुड़ध्वजस्य हरेर्ध्वजानिव गरीयसातिमहता निःश्वसितानिलेन पयांस्युच्चैरुच्चिच्छिपिरे उच्छ्रितवन्तः । उत्प्रेक्षा । स्वरितत्वादात्मनेपदम् ॥ ७७ ॥

तमिति । अम्बुराशिः युगान्तबन्धुमापद्बन्धुमित्यर्थः उत्सङ्ग एव शय्या तस्यां शेत इति तथोक्तम् । अधिकरणे शेते इत्यच्प्रत्ययः । आगतमभ्यागतं तं हरिं वीक्ष्य गुरुणा प्रमोदेन प्रसारिता उत्तुङ्गास्तरङ्गा एव बाहवो यस्य सः सन् प्रत्युज्जगाम सम्भावनार्थमागतवानिवेति क्रियास्वरूपोत्प्रेक्षा ॥ ७८ ॥


उत्सङ्गेति । उत्सङ्गिनः संसर्गिणः कृताः उत्सङ्गिताः । तत्

लेस्यानुवेलं व्रजतोऽधिवेल-
मेलालतास्फालनलब्धगन्धः ॥ ७९ ॥
उत्तालतालीवनसम्प्रवृत्त-
समीरसीमन्तितकेतकीकाः ।
आसेदिरे लावणसैन्धवीनां
चमूचरैः कच्छभुवां प्रदेशाः ॥ ८० ॥
लवङ्गमालाकलितावतंसा-
स्ते नारिकेलान्तरपः पिबन्तः ।

करोतीति ण्यन्तात् कर्मणि क्तः । उल्लङ्घिताः अम्भःकणा येनेति शेषाद्विभाषेति कप् । एलालतानाम् आस्फालनेन सङ्घर्षणेन लब्धगन्धः एवं शिशिरसुरभिरुदन्वतो नभस्वान् समुद्रस्य वायुः अधिवेलं वेलायाम् । विभक्त्यर्थेऽव्ययीभावः । व्रजतस्तस्य हरेः खेदलवाननुवेलं प्रतिक्षणम् । याथाथ्येऽव्ययीभावः । ममार्ज जहार । वेला कूले च लवधेर्वेला तीरविकारयोरिति विश्वः । काव्यलिङ्गम् ॥ ७९ ॥

उत्तालेति । चमूषु चरन्तीति चमूचराः सैनिकाः । चरेष्ट इति टप्रत्ययः । तैरुत्तालेषून्नतेषु तालीवनेषु सम्प्रवृत्तेन समीरणेन मारुतेन सीमन्तिताः सीमन्तिन्यः कृताः । सीमन्तशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः, णाविष्टवद्भावे विन्मतोर्लुक् । ताः केतक्यो येषु ते तथोक्ताः । नद्यृतश्चेति कप् । लवणसिन्धोरिमाः लावणसैन्धव्यः । तस्येदमित्यण्, हृद्भगसिन्ध्वन्तपूर्वपदस्य चेत्युभयपदवृद्धिः । तासां कच्छभुवामनूपभूमीनाम् । जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः । प्रदेशा देशा आसेदिरे प्राप्ताः । सीदतेः कर्मणि लिट् । अत्र स्वभावोक्तिरनुप्रासश्चालङ्कारौ । ओजःश्लेषसौशब्द्यसौकुमार्याद्यनेकगुणसम्पत्तिः स्पष्टा ॥ ८० ॥

लवङ्गेति । लवङ्गमालाभिः लवङ्गकुसुममाल्यैः कलितावतंसाः कृतभूषणाः । नारिकेलानामिदमप्यम् । नारिकेलाभ्यन्तर इत्यर्थः ।

आस्वादितार्द्रक्रमुकाः समुद्रा-
दभ्यागतस्य प्रतिपत्तिमीयुः ॥ ८१ ॥

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियः सलिलनिधेश्च तदाभवदन्तरं महत् ८२

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
पुरीप्रस्थानो नाम तृतीयः सर्गः ॥ ३ ॥

---

अप इति पृथक्पदम् । समासे ऋक्पूरित्यादिना समासान्तप्रसङ्गात् । पिबन्तः आस्वादिताः भक्षिताः आर्द्रक्रमुका आर्द्रपूगीफलानि यैस्ते । घोण्टा तु पूगः क्रमुक इत्यमरः । ते चमूचराः समुद्रादभ्यागतस्यातिथेः प्रतिपत्तिं गौरवं सत्कारमीयुः । प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि चेति विश्वः । अत्राभ्यागतप्रतिपत्तिप्राप्तेर्विशेषणमत्या अवतंसकल्पनादिपदार्थहेतुत्वात् काव्यलिङ्गमलङ्कारः । तेन समुद्रचमूचराणां गृहस्थाभ्यागतौपम्यप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥८१॥

तुरगेति । परितस्तुरगशतैराकुलस्य अपरिमिताश्वस्येत्यर्थः प्रतिपथं प्रतिमार्गम् । यथार्थ्येऽव्ययीभावे समासान्तः । प्रमथिताः क्षुण्णाः भूभृतो राजानो गिरयश्च येन तस्य न तु स्वयं केनापि मथितस्येति भावः । सततं धृता श्रीः शोभा रमा च येन तस्य धृतश्रियः पुरोऽग्रे नगराद्वा परिचलतः परिगच्छतः बलो रामस्तदनुजस्य हरेर्बलस्य सैन्यस्य । बलं सैन्ये बलो राम इत्युभयत्रापि शाश्वतः । परं केवलमेकस्यैव तुरगस्य जन्म जन्ममात्रं यस्य तस्यैकतुरगजन्मनः एकोऽपि जात एव न त्वस्तीति भावः । महीभृता मन्दराद्रिणा राज्ञा च मथितस्य न तु स्वयं कस्यापि मन्थितॄ सततं विगतश्रियः

# चतुर्थः सर्गः ।

निःश्वासधूमं सह रत्नभाभि-
र्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातु-
मसौ गिरिं रैवतकं ददर्श ॥ १ ॥

उत्पत्त्यनन्तरमेवाब्धेः हरिस्वीकरणादिति भावः जलधेश्च तदा प्रस्थानसमये महदन्तरं दूरगमनादिव्यवधानम् उक्तरीत्या महत्तारतम्यं चाभवत् । अत्रोपमेयस्य हरिबलस्य उपमानाज्जलधेराधिक्यवर्णनात् व्यतिरेकालङ्कारः । पञ्चकावली वृत्तम् । नजभजजा जरौ नरपते ! कथिता भुवि पञ्चकावलीति लक्षणात् ॥ ८२ ॥

इति श्रीमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये तृतीयः सर्गः ॥ ३ ॥

निःश्वासेति । नीलोपलैरिन्द्रनीलमणिभिः स्यूताः प्रोताः विचित्रा नानावर्णाः धातवो गैरिकादयो यस्य तम् अत एव रत्नभाभिर्मणिप्रभाभिः सह भूमिं भित्त्वा उत्थितम् ऊर्ध्वं निर्गतम् उरगाणां निःश्वासधूमं फूत्कारबाष्पमिव स्थितं रैवताख्यं गिरिमसौ हरिर्ददर्श । स्यूतेति, सीव्यतेः कर्मणि क्तः, च्छ्वोः शूडनुनासिके चेत्यूडादेशे यणादेशः । अत्र गिरेर्विशिष्टवर्णनीयत्वेन विशिष्टधूमत्वोत्प्रेक्षणाद् गुणनिमित्तजातिस्वरूपोत्प्रेक्षा । सर्गेऽस्मिन्नानावृत्तानि तत्रादावष्टादशोपजातयः । तल्लक्षणं तूक्तम् अतीतानन्तरसर्गादौ । अत्रासर्गसमाप्तेः [illegible] ॥ १ ॥

गुर्वीरजस्रं दृषदः समन्ता-
दुपर्य्युपर्य्यम्बुमुचां वितानैः ।
विन्ध्यायमानं दिवसस्य भर्त्तु-
र्मार्गं पुनारोद्धुमिवोन्नमद्भिः ॥ २ ॥

क्रान्तं रुचा काञ्चनवप्रभाजा
नवप्रभाजालभृतां मणीनाम् ।
श्रितं शिलाश्यामलताभिरामं
लताभिरामन्वितषट्पदाभिः ॥ ३ ॥

गिरिन्द्रदर्शैत्युक्तं कीदृगित्याकाङ्क्षायामेकान्वयेनाष्टाभिर्विशिनष्टि, गुर्वीरिति । गुर्वीर्महतीर्दृषदः शिलातटीरित्यर्थः । पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषदित्यमरः । उपर्य्युपरि दृषदां समीप उपरिप्रदेश इत्यर्थः । उपर्य्यध्यधसः सामीप्ये इति द्विर्भावे तद्योगात् द्वितीयेति । यथाह वामनः, उपर्य्यादिषु सामीप्ये द्विरुक्तेषु द्वितीयेति । समन्तादजस्रमुन्नमद्भिः देशकालाविच्छेदेनोत्पतद्भिरित्यर्थः अत एव तैरम्बुमुचां वितानैर्मेघवृन्दैर्निमित्तैर्दिवसस्य भर्त्तुः सूर्य्यस्य मार्गं पुनः रोद्धुम् । संहितायां रोरीति रलोपः ढ्लोप इति दीर्घः । विन्ध्यायमानमिव विन्ध्यवदाचरन्तं तद्वद्वर्द्धमानमिव स्थितमित्यर्थः । आचारे क्यङन्ताल्लटः शानजादेशः । अत्राविच्छिन्नमेघोन्नमनेन विन्ध्यायमानत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा ॥ २ ॥

क्रान्तमिति । पुनर्नवानि प्रभाजालानि बिभ्रतीति नवप्रभाजालभृतः तेषां मणीनां सम्बन्धिन्या काञ्चनवप्रभाजा स्वर्णसानुप्रसृतया रुचा दीप्त्या क्रान्तं व्याप्तं पुनः शिलानां मेचकोपलानाम् इन्द्रनीलानां वा श्यामलतया श्यामलिम्ना अभिरामन्तया आमन्वितषट्पदाभिः मकरन्दपूरितत्वादाहूतभृङ्गाभिः लताभिः श्रितं व्याप्तम् । इतः परं श्लोकान्तरमेकं यमकं वक्ष्यति । तत्र तदेवालङ्कारः । अर्थालङ्कारस्त्वभ्यूह्य इति यथासम्भवमूह्यम् । यमकलक्षणं त्वाचार्य्यदण्डिनोक्तम्, अव्य-

सहस्रसङ्ख्यैर्गगनं शिरोभिः पदैर्भुवं व्याप्य वितिष्ठमानम्।
विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम्॥४

क्वचिज्जलापायविपाण्डुराणि
धौतोत्तरीयप्रतिमच्छवीनि।
अभ्राणि बिभ्राणमुमाङ्गसङ्ग-
विभक्तभस्मानमिव स्मरारिम्॥ ५॥
छायां निजस्त्रीचटुलालसानां
मदेन किञ्चिच्चटुलालसानाम्।

पेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः। यमकन्तच्च पादानामादिमध्यान्तगोचरम्। एकद्वित्रिचतुष्पादयमकानां प्रकल्पना। आदिमध्यान्तमध्यान्तमध्याद्यास्चैव सर्वतः। अनन्ता बहवस्तेषां भेदाः सम्भेदयोनयः। सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचनेति॥ ३॥

सहस्रेति। सहस्रमिति सङ्ख्या येषां तैः सहस्रसङ्ख्यैः शिरोभिः शिखरैः शीर्षैश्च गगनन्तथा तत्सङ्ख्यैः पादैः प्रत्यन्तपर्वतैश्चरणैश्च भुवञ्च व्याप्य वितिष्ठमानम् अवतिष्ठमानम्। समवप्रविभ्यः स्थ इत्यात्मनेपदम्। विलोचनयोर्यत् स्थानं योग्यदेशः तद्गतावुष्णरश्मिनिशाकरो यस्य तम् अन्यत्र नेत्रीकृतार्केन्दुमित्यर्थः अतः साधु सत्यं हिरण्यगर्भं ब्रह्माणमिवेत्युत्प्रेक्षा सहस्रशीर्षेत्यादिश्रुतेरिति भावः। हिरण्यगर्भो निधिगर्भश्च॥ ४॥

कचिदिति। पुनः क्वचिदेकदेशे जलानामपायेनापगमेन विपाण्डुराणि शुभ्राणि अत एव धौतं चाविलं यदुत्तरीयं तत्प्रतिमा तत्समा छविर्येषान्तानि अभ्राणि मेघान् बिभ्राणं दधानम्। भृञः कर्त्तरि शानच्। अत एवोपमायाः पार्वत्याः अङ्गसङ्गेनार्द्धभागेन विभक्तम् एकभागस्थापितं भस्म यस्य तं स्मरारिं हरमिव स्थितमित्युपमालङ्कारः॥ ५॥

छायामिति। पुनः निजस्त्रीणां चाटुषु प्रियवचनेषु लालसाः

कुर्वाणमुत्पिञ्जलजातपत्रै-
र्विहङ्गमानां जलजातपत्रैः ॥ ६ ॥
स्कन्धाधिरूढोज्ज्वलनीलकण्ठा-
नुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रनर्त्तितानेकलताभुजाग्रान्
रुद्राननेकानिव धारयन्तम् ॥ ७ ॥
विलम्बिनीलोत्पलकर्णपूराः
कपोलभित्तीरिव लोध्रगौरीः ।

लोलुपाः । लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि चेति यादवः । तेषामिजलोचटुलालसानामसदेन किञ्चिदीपच्चटुलाश्चपलास्ते चलसाश्च । विशेषणयोरपि मिथोविशेषणविशेष्यभावविवक्षया विशेषणसमासः । तेषाञ्चटुलालसानां विहङ्गमानां हंसादीनाम् उत्पिञ्जलानि जातानि उत्पिञ्जलजातानि । पूर्ववत् समासः । तानि पत्राणि येषान्तैरुत्पिञ्जलजातपत्रैरुत्पिञ्जरीभूतदलैरित्यर्थः । रलयोरभेदः । जलजातपत्रैः जलजैरेवातपत्रैः छायां कुर्वाणम् । एतेन महती वालाकरसम्पद्भिर्व्यज्यते । यमकरूपकयोः सङ्करः ॥ ६ ॥

स्कन्धेति । पुनः स्कन्धं प्रकाण्डमधिरूढाः उज्ज्वला नीलकण्ठा मयूरा येषान्तान् अन्यत्र स्कन्धाधिरूढाः अंसस्थिताः नीलाः कण्ठा येषान्तान् । अंसप्रकाण्डयोः स्कन्ध इति विश्वः । अहीन्द्रैः श्लिष्टतनून् व्याप्तदेहान् एकत्र तदाश्रयत्वादन्यत्र तद्भूषणत्वाच्चेति भावः । प्रनर्त्तितानि अनेकलतानामिव भुजानां लतानामिव च भुजानाम् अग्राणि येषान्तानत एवानन्तानसङ्ख्यान् रुद्रानिव स्थितानित्युत्प्रेक्षा उर्वीरुहो वृक्षान् धारयन्तमुद्वहन्तम् ॥ ७ ॥

विलम्बीति । विलम्बिनो नीलोत्पलान्येव कर्णपूराः कर्णावतंसा यासान्ताः लोध्रेण लोध्ररजसा गौरीरवदाताः । षिद्गौरादिभ्यश्चेति ङीष् । कपोलभित्तीः लोध्र गण्डस्थलीरिव स्थिताः । उप-

नवोलपालङ्कृतसैकताभाः
शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥
राजीवराजीवशलोलभृङ्ग-
मुष्णन्तमुष्णन्ततिभिस्तरूणाम् ।
कान्तालकान्ता ललनाः सुराणां
रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ९ ॥
मुदे मुरारेरमरैः सुमेरो-
रानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीना-
मुच्छ्रायसौन्दर्य्यगुणा मृषोद्याः ॥ १० ॥

सान्तरमाह, नवा उलपा वल्वजतृणानि । उलपाः वल्वजाः प्रोक्ता इति विश्वः । तैरलङ्कृतानां सैकतानामाभेवाभा यासान्ताः कुतः शुचीः शुद्धाः शैवलिनीः शैवलवतीः अपो दधानम् । शुचित्वशैवलत्वाभ्यां विम्बप्रतिविम्बभावेनोपमाद्वयम् ॥ ८ ॥

राजीवेति । पुनः राजीवराजीनां पद्मपङ्क्तीनां वशा अधीनाः लोलाश्चला भृङ्गा यस्मिन् तं राजीवराजीवशलोलभृङ्गं तरूणां ततिभिः सङ्घैरुष्णमातपं मुष्णन्तं हरन्तं कान्ता रम्या अलकान्ताश्चूर्णकुन्तलान्ता यासान्ताः कान्तालकान्ताः । अलकाश्चूर्णकुन्तला इत्यमरः । सुराणां ललनाः स्त्रियोऽप्सरसः रक्षोभीराक्षसैः अक्षोभितमनभिभूतं यथा तथा उद्वहन्तम् ॥ ९ ॥

नन्वल्पीयानयं कश्चिद्रैवतको नाम शिलोच्चयः कथमियद्वर्ण्यत इति शङ्कां निरस्यति, मुद इति । मुरारेर्मुदे सन्तोषाय अमरैः कर्तृभिः सुमेरोः शृङ्गैः करणैरानीयोपचितस्य वर्द्धितस्य आनीतैः शृङ्गैरुपचितस्येत्यर्थः । उपचये करणानां शृङ्गाणामर्थादानयनकर्मत्वम् । यस्य शैलस्य उच्छ्रायः औन्नत्यं सौन्दर्यञ्च तयोः गुणा उत्कर्षा उद्दामगिरां प्रगल्भवाचां कवीनां मृषा उद्यन्त इति मृषोद्याः

यतः परार्घ्याणि भृतान्यनूनैः
प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्रापणिकादजस्रं
जग्राह रत्नान्यमितानि लोकः ॥ ११ ॥

अखिद्यतासन्नमुदग्रतापं
रविन्दधानेऽप्यरविन्दधाने ।
भृङ्गावलिर्यस्य तटे निपीत-
रसा नमत्तामरसा न मत्ता ॥ १२ ॥

मिथ्यावार्त्ता न भवन्ति मेरुशृङ्गेषु सर्वगुणसम्भवादिति भावः । राजसूयसूर्यमृषोद्येत्यादिना वदः क्यबन्तो निपातः । उत्कृष्टः आयः उच्छ्राय इति घञन्तेनोपसर्गस्य समासः नतूपसृष्टात् घञ्-प्रत्ययः । श्रीणीभुवोऽनुपसर्गे इति नियमात् । सद इत्यादिश्लोक-सम्पर्के यच्छब्दस्य दृष्टोऽयं शैलः स इत्यनेनान्वयः । मेरुशृङ्गासम्बन्धे-ऽपि सम्बन्धवर्णनादतिशयोक्तिः ॥ १० ॥

यत इति । लोकः परार्घ्याणि श्रेष्ठानि अनूनैर्महद्भिः भूरिभिः प्रभूतैः । प्रभूतं प्राज्यं भूरीत्यमरः । प्रस्थैः सानुभिर्मानविशेषैश्च । प्रस्थोऽस्त्री सानुमानयोरित्यमरः । भृतानि सम्भृतानि मितानि च उच्छिखान्युद्भूतशिखानि अमितानि अपरिमितानि रत्नानि यतः शैलादाढ्याद्धनिकात् । इभ्य आढ्यो धनीत्यमरः । प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक् । तदस्य प्रयोजनमिति ठक् । पण्याजीवाः प्रापणिका वैदेहा नैगमाश्च ते वणिज इति वैजयन्ती । तस्मादिवाजस्रं मुहुर्जग्राह । उपमालङ्कारः ॥ ११ ॥

अखिद्यतेति । आसन्नमौन्नत्यात् सन्निहितमत एवोदग्रतापं दुःसहातपं रविं दधानेऽपि अरविन्दधान इति विरोधः । अर-विन्दानां धाने निधाने इति परिहारः । धीयतेऽस्मिन्निति धानम् । अधिकरणे ल्युट् । शब्दश्लेषमूलो विरोधालङ्कारः । यस्य गिरेस्तटे

यत्राधिरूढेन महीरुहोच्चै-
रुन्निद्रपुष्पाच्छिसहस्रभाजा ।
सुराधिपाधिष्ठितहस्तिमल्ल-
लीलान्दधौ राजतगण्डशैलः ॥ १३ ॥
विभिन्नवर्णा गरुडाग्रजेन
सूर्य्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥ १४ ॥

निपीतरसा नितराम्पीतमकरन्दा नमन्ति तामरसानि पङ्केरुहाणि भारभूतया यया सा नमत्तामरसा । पङ्केरुहन्तामरसमित्यमरः । अत एव मत्ता भृङ्गावलिर्नाखिद्यत न खिन्ना । खिदेर्दैवादिकात् कर्त्तरि लङ् । अत्यन्तस्वच्छ सन्निधानेऽप्यरविन्दाकरविहारान्मधुकरास्तापं नापु-रित्यर्थः ॥ १२ ॥

यत्रेति । यत्र शैले रजतस्य विकारो राजतः । प्राणिरजता-दिभ्योऽञित्यञ्प्रत्ययः । स चासौ गण्डशैलस्य । गण्डशैलास्तु च्युताः स्थूलोपला गिरेरित्यमरः । उन्निद्राणि विकसितानि पुष्पा-ण्यच्छीणीवेत्युपमितसमासः । तेषां सहस्रं भजतीति तद्भाजा अधि-रूढेनोच्चैर्महीरुहा वृक्षेण सुराधिपेन देवेन्द्रेण अधिष्ठितो यो हस्ती मल्ल इव तस्यैरावतस्य लीलां शोभान्दधौ ऐरावतस्य धावल्यादिति भावः । हस्तिमल्लोऽभ्रमातङ्गे हस्तिमल्लो विनायके इति विश्वः । अत्र लीलामिव लीलामिति सादृश्याच्चेपान्निदर्शनालङ्कारः ॥ १३ ॥

विभिन्नेति । गरुडाग्रजेनारुणेन विभिन्नवर्णा अन्यथाकृतवर्णा अरुणिमानमापादिता इत्यर्थः । सूर्य्यस्य सम्बन्धिनो रथं वहन्तीति रथ्याः रथाश्वाः । तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः । यत्र शैले वंशकरीरनीलैः वंशाङ्कुरश्यामैः रत्नैर्मरकतैरित्यर्थः । वंशाङ्कुरे करीरोऽस्त्रीत्यमरः । [illegible] प्रतिपत्त्यर्थ-

यत्रोज्झिताभिर्मुहुरम्बुवाहैः
समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था
विपन्नगानामविपन्नगानाम् ॥ १५ ॥

फलद्भिरुष्णांशुकराभिमर्शात्
कार्शानवं धाम पतङ्गकान्तैः ।
शशंस यः पात्रगुणाद् गुणानां
सङ्क्रान्तिमाक्रान्तगुणातिरेकम् ॥ १६ ॥

त्वादपौनरुक्त्यम् । अत एवैकार्थपदप्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः । न विशेषश्चेदिति । परितः स्फुरन्त्या रुचा स्वप्रभया करणेन पुनः स्वां रुचं निजहरितवर्णमेव आनिन्यिरे आनीताः । नयतेर्द्विकर्मकात्प्रधाने कर्मणि लिट् । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात् । अत्र विभिन्नवर्णा इत्येकस्तद्गुणः । रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात्तुनस्तत्त्यागेन मरकतगुणग्रहणात्परस्तद्गुणस्तदुपजीवीति सजातीययोः सङ्करः । तेन गिरेः सूर्यमण्डलपर्यन्तमौन्नत्यं वस्तु व्यज्यते । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ॥१४॥

यत्रेति । यत्र शैले समुन्नमद्भिः समुत्पतद्भिरम्बुवाहैरुज्झिताभिर्मुक्ताभिरद्भिर्जलैः समुन्नं सम्यक् उन्नं क्लिन्नं सिक्तमित्यर्थः । उन्दी क्लेदने इति धातोः कर्मणि क्तः, नुदविदेत्यादिना निष्ठानत्वम् । विपन्नगा विगतसर्पा न भवन्तीत्यविपन्नगाः सपन्नगा इत्यर्थः । तेषामविपन्नगानामगानां वृक्षाणां वनं विषपावकोत्था विषाग्निसमुत्था विपदापत् न बबाधे नित्यं वर्षानुषङ्गाद्विषाग्निक्षोभो वृक्षाणामकिञ्चित्कर इति भावः ॥ १५ ॥

फलद्भिरिति । यः शैलः उष्णांशुकराभिमर्शाद्वर्करसम्पर्कात् कृशानोरिदं कार्शानवम् आग्नेयं धाम तेजः फलद्भिर्दद्भिरद्भिः

दृष्टोऽपि शैलः स मुहुर्मुरारे-
रपूर्ववद्विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति
तदेव रूपं रमणीयतायाः ॥ १७ ॥
उच्चारणज्ञोऽथ गिरान्दधान-
मुच्चारणत्पक्षिगणास्तटीस्तम् ।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरि-
मुत्कन्धरं दारुक इत्युवाच ॥ १८ ॥

अग्निकरसामर्थ्याभिव्यञ्जकैरिति भावः । पतङ्गकान्तैः सूर्यकान्तैः दृष्टान्तभूतैरिति भावः । गुणिनां संक्रान्तिमन्यत्र संक्रमणं संक्रान्तगुणानित्यर्थः । पात्रगुणादाधारगुणसहकारादाक्रान्तः प्राप्तो गुणातिरेकः कार्यविशेषाधानरूपो गुणोत्कर्षो यस्यास्तां शशंस प्रतिपादयामास अर्कत्विषां सर्वत्र संक्रमणाविशेषेऽपि सूर्यकान्तेष्वेव ज्वलनजननदर्शनात् सर्वत्रापि संक्रम्यकारिणां गुणानामाधारगुणसहकारात् कार्यविशेषाधायकत्वमिति निश्चयोऽत्रैव जायत इत्यर्थः । ततश्च सहकारशक्तिविरहिणी सहजशक्तिरनुपकारिणीति भावः । छेकानुप्रासोऽलङ्कारः ॥ १६ ॥

दृष्टोऽपीति । मुहुर्दृष्टोऽपि स शैलो मुरारेरपूर्वेण अदृष्टपूर्वेण तुल्यमपूर्ववत् । तेन तुल्यं क्रिया चेदिति वतिः । विस्मयमाततान अतिरमणीयत्वादिति भावः । तथाहि, क्षणे क्षणे प्रतिक्षणम् । वीप्सायां द्विर्भावः । नवतामपूर्ववद्भावम् उपैतीति यत्, तन्नवत्वोपगमनमेव रमणीयतायाः रूपं स्वरूपं लक्षणमित्यर्थः । अत्र रमणीयत्वलक्षणस्य वाक्यार्थस्य विस्मये हेतुत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १७ ॥

उच्चारणज्ञ इति । अथ हरिविस्मयानन्तरं गिरां वाक्यानामुच्चारणं जानातीत्युच्चारणज्ञः वाक्पटुः । आतोऽनुपसर्गे क इति

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥ १९ ॥

कप्रत्ययः, नेगुपधेत्यादिना आकारादनुपपदात् कर्मोपपदो भवति विप्रतिषेधेनेति वचनात् । दारुकः कृष्णसारथिः उच्चाः उन्नताः रणन्तः पञ्चिगणाः यासु ताः रणत्पञ्चिगणास्तटीर्दधानं तं पूर्वोक्तम् । धरतीति धरं पर्वतम् । पचाद्यच् । अहार्य्यधरपर्वता इत्यमरः । दृष्टुमुत्कम् उत्सुकम् । उत्क उन्मना इति निपातः । उत्कन्धरमौत्सुक्यादुन्नमितकन्धरं शौरिमवेक्ष्य इति वक्ष्यमाणक्रमेण वाचमुवाच । न ह्रीङ्गितज्ञोऽवसरेऽवसीदतीति भावः ॥ १८ ॥

इतः प्रभृति यमकानन्तरश्लोकेषु वसन्ततिलकावृत्तं नियमेनाह, आच्छादितेति । आच्छादितान्यावृतानि आयतानि दीर्घाणि दिशोऽम्बरं खञ्च दिगम्बराणि येन तम् अन्यत्र आच्छादितं वसितमायतं दिगेवाम्बरं वासो येन तं तथोक्तम् उच्चकैरुन्नतां गां भुवमाक्रम्य व्याप्य संस्थितम् । तथा उदग्राणि उन्नतानि विशालानि च शृङ्गाणि शिखराणि यस्य तम् अन्यत्र उदग्रे विशाले शृङ्गे विषाणे यस्य तम् उच्चकैरुन्नतं गां वृषभमाक्रम्याधिष्ठाय संस्थितमित्यर्थः । शृङ्गं विषाणे शिखर इति । गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः । अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मतेति च विश्वः । मूर्ध्नि शिखरे अन्यत्र शिरसि स्फुरन्ती तुहिनदीधितेरिन्दोः कोटिः रश्मिः कला च यस्य तमेनं नगेशं नगश्रेष्ठं रैवतकं कैलासनायकमीश्वरञ्चोद्वीक्ष्य को न विस्मयते सर्वोऽपि विस्मयत इत्यर्थः । नेयं तुल्ययोगिता प्रकृताप्रकृतविषये तदनुत्थानात्, नापि समासोक्तिः तस्याविशेषणसाम्यजीवित्वात्, नापि श्लेषः उभयश्लेषे विशेष्यश्लेषयोगात् । तस्मात्प्राकरणिकार्थमात्रपर्य्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरधीकृद् ध्वनिरित्याहुः । तदुक्तं काव्यप्रकाशे, अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयो-

उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम्॥ २०॥

वहति यः परितः कनकस्थलीः
सहरितालसमाननवांशुकः।
अचल एष भवानिव राजते
स हरितालसमाननवांशुकः॥ २१॥

गाद्यैरयाच्यार्थधीकद्यां ष्टतिरञ्जनमिति। वृत्तलक्षणन्तु, उक्ता वसन्त-तिलका तभजाजगौ ग इति॥ १९॥

उदयतीति। वितता ऊर्ध्वाश्च रश्मिरज्जवो रश्मयो रज्जव इव यस्य तस्मिन् विततोर्ध्वरश्मिरज्जौ अहिमरुचौ सूर्ये उदयति उद-यमाने। अथ गताविति स्वरितेतं केचिदिच्छन्ति ततः शतरि सप्तमी। तथा विततोर्ध्वरश्मिरज्जौ हिमधाम्नि चास्तं याति अस्त-मयमाने। यातेः शतरि सप्तमी। अयं गिरिर्विलम्बिना विशेषं लम्ब-मानेन घण्टाद्वयेन परिवारितस्य वेष्टितस्य वारणेन्द्रस्य लीलां शोभां वहति। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शना। तथा सूर्याचन्द्रमसावस्य कुक्षिसमानकक्षां बिभ्रत इति महत्त्वौचत्यं व्यज्यते। पुष्पिताग्रा वृत्तम्। अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा॥ २०॥

वहतीति। लसमाना दीप्यमाना नवांशवो यस्य स लसमान-नवांशुकः। शैषिकः कप्रत्ययः। योऽचलः सहरिताः सदूर्वाः। हरि-तेति च दूर्वायां हरिद्वर्णयुतेऽन्यवदिति विश्वः। कनकस्य स्थलीः स्वर्ण-भूमीः। जानपदेत्यादिना अकृत्रिमार्थे ङीप्। परितो वहति स एषोऽचलः हरितालेन कर्चूरेण समानं नवमंशुकं वासो यस्य स हरितालसमाननवांशुकः पीताम्बरो भवानिव राजते। द्रुतविल-

पाश्चात्यभागमिह सानुषु सन्निषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम् ।
सम्पूर्णलब्धललनालपनोपमान-
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः ॥ २२ ॥

कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो
मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः ।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्त-
स्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥२३ ॥

म्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ २१ ॥

पाश्चात्येति । इहाद्रौ सानुषु सन्निषण्णाः स्थिताः जनाः शान्तमलङ्कलङ्कस्य पुरोवर्त्तित्वान्निष्कलङ्कमत एव सान्द्रतरमंशुजालं यस्य तं सम्पूर्णं परिपूर्णं लब्धं प्राप्तं ललनालपनोपमानं स्त्रीमुखसादृश्यं येन तम् । आननं लपनं मुखमित्यमरः । कुतः उत्सङ्गसङ्गिहरिणस्य अङ्कस्थमृगस्य मृगाङ्का मृगचिह्ना मूर्त्तिर्यस्य तस्य मृगाङ्कमूर्त्तेश्चन्द्रस्य पश्चाद्भवः पाश्चात्यः । दक्षिणपश्चात्पुरसस्त्यक् । स चासौ भागश्च तं पाश्चात्यभागं पृष्ठभागं पश्यन्ति । पाश्चात्यभागदर्शनातिशयोक्त्या तादृगौच्चत्यध्वनिः । वसन्ततिलका वृत्तम् ॥ २२ ॥

कृत्वेति । अत्राद्रौ निर्झरौघाः गिरिनदप्रवाहाः । प्रवाहो निर्झरो झर इत्यमरः । चूतवृक्ष इत्यादिवत्सामान्यविशेषभावादपुनरुक्तिः । पुंवत् पुम्भिस्तुल्यम् । तेन तुल्यं क्रिया चेदिति वतिः । उच्चैर्भृगुभ्यस्तटेभ्यः । प्रपातस्तु तटो भृगुरित्यमरः । ग्राव्णां शिलानां मूर्ध्नि पातं कृत्वा पतित्वा जर्जराः शकलीभूताः द्यामाकाशमत्युत्पतन्तः स्मरार्त्तानां स्वर्लोकस्त्रीणां खेचरीणामप्सरसां गात्रनिर्वाणमङ्गनिर्वृतिं कुर्वन्ति । अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलसम्पातैर्मरणं प्रविधीयत इति विहितभृगुपातिनां पुंसां स्वर्लो-

स्थगयन्त्यमूः शमितचातकार्त्तस्वरा
जलदास्तडित्तुलितकान्तकार्त्तस्वराः ।
जगतीरिह स्फुरितचारुचामीकराः
सवितुः क्वचित् कपिशयन्ति चामी कराः ॥२४॥

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीवतरां शिरोभिः ।
श्रद्धेयनिर्झरजलव्यपदेशमस्य
विष्वक् तटेषु पतति स्फुटमन्तरीक्षम् ॥२५॥

कगाभिनाभिह्नोपमानता । शालिनी वृत्तम् । शालिन्युक्ता म्लौ तगौ गोऽब्धिलोकैरिति ॥ २३ ॥

स्थगयन्तीति । इहाद्रौ क्वचिदमूर्जगतीर्भूमीः । जगती भुवने भूमाविति विश्वः । शमितास्तातकानामार्त्तस्वरा यैस्ते शमितचातकार्त्तस्वराः । सर्वत्रापतितमम्बु न चातकानामिति भूमिगतस्य तेषां विषाभत्वाद्भौमाम्बुदानेनोज्जीवयन्तीत्यर्थः । किञ्च तडिद्भिस्तुलितानि उपमितानि कान्तानि कार्त्तस्वराणि सुवर्णानि यैस्ते तडित्तुलितकान्तकार्त्तस्वराः । तडित्स्फुरणे तेषामपि तद्वत् स्फुरणादिति भावः । ते जलदाः स्थगयन्ति आच्छादयन्ति । स्थग आच्छादने इति चौरादिकः । क्वचित्तु स्फुरितानि उल्लसितानि चारूणि चामीकराणि सुवर्णानि यैस्ते स्फुरितचारुचामीकराः अमी सवितुः कराः आतपाश्च कपिशयन्ति कपिशिताः कुर्वते क्वचिद्वृष्टिः क्वचिदातपश्चेति महदाश्चर्यमिति भावः । पथ्या वृत्तम् । सजसा यलौ च सह गेन पथ्या मता ॥ २४ ॥

उत्क्षिप्तमिति । उच्छ्रिताः उत्क्षिप्ताः सितांशोश्चन्द्रस्य कराः अंशवो हस्ताश्चावलम्बो येषान्तैः उत्तम्भितान्युडूनि यैस्तैः उडूनि चावष्टभ्येत्यर्थः । शिरोभिः शिखरैर्मस्तकैश्चातीवतरामभृशतरम् । अतीवशब्दादव्ययादामुप्रत्ययः । उत्क्षिप्तमुदयस्य छतम् अन्तरीक्षं

एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र ।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः ॥ २६ ॥
इतस्ततोऽस्मिन् विलसन्ति मेरोः
समानवप्रे मणिसानुरागाः ।

अज्ञेयः सादृश्यादविश्वसनीयः निर्झरजलमिति व्यपदेशो व्यवहारो यस्य तत् दृढतरां निर्झरजलधियं कुर्वदित्यर्थः । अस्याद्रेः तटेषु विष्वक् समन्तात् पतति स्फुटं सत्यम् इन्दुकरानुडूनि चावष्टभ्य शिरोभिर्ध्रियमाणमपि दुरुद्धरत्वाद् भ्रश्यदन्तरीयमिवेदं न तु जलं सादृश्यात्तु व्यपदेशो दुर्वार इति सर्वतः पातिता निर्झरजलं चोत्प्रेक्ष्यते तेनोत्सेधविस्तारावस्य व्यज्येते ॥ २५ ॥

एकत्रेति । एकत्र एकस्मिन् भागे स्फटिकस्य यत्तटन्तस्यांशुभिर्विभिन्ननीराः स्निग्धोदकाः शुभ्रजला इत्यर्थः । अपरत्रापरस्मिन् भागे नीलाश्मनामिन्द्रनीलानां द्युतिभिः भिदुराणि मिश्राण्यम्भांसि यासान्ताः नीलसलिला इत्यर्थः । इहाद्रौ सरितः कलिन्दस्याद्रेरपत्यं स्त्री कालिन्दी यमुना । कालिन्दी सूर्यतनया यमुना शमनस्वसेत्यमरः । तस्या जलैः जनिता श्रीः शोभा यासान्तास्ताः तत्सङ्गताया इत्यर्थः । सुरापगाया गङ्गायाः वैदग्धीं शोभां श्रयन्ते भजन्ति विदग्धस्य भावः वैदग्धी । ब्राह्मणादित्वाद् गुणवचनेत्यादिना ष्यञ्प्रत्ययः, षिद्गौरादिभ्यश्चेति ङीष्, सोऽपीत्वस्य बाहुलकत्वादिह वैकल्पिकः अत एव ष्यञः पित्करणादीकारो बहुलमिति वामनः । अत्र सितासितमणिगुणग्रहणात्सरितां यमुनासङ्गतगङ्गाशोभासादृश्याक्षेपात्तद्गुणोत्थापिता निदर्शना । प्रहर्षिणी वृत्तम् । म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ २६ ॥

इत इति । मेरोः समानवप्रे तुल्यप्रस्थे अत एवास्मिन्नद्रावितस्ततो मणिसानुरागा रत्नतटकान्तयो विलसन्ति प्रसरन्ति किञ्च

स्त्रियश्च पत्यौ सुरसुन्दरीभिः
समा नवप्रेमणि सानुरागाः ॥ २७ ॥

उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा।
अभ्येति भस्मपरिपाण्डुरितस्मरारे-
रुद्वह्निलोचनललामललाटलीलाम् ॥ २८ ॥

अयमतिजरठाः प्रकामगुर्वी-
रलघुविलम्बिपयोधरोपरुद्धाः।
सततमसुमतामगम्यरूपाः
परिणतदिक्करिकास्तटीर्बिभर्त्ति ॥ २९ ॥

ऊढं प्रेम यस्य तस्मिन् नवप्रेमणि पत्यौ अनुरागेण सह वर्त्तन्त इति सानुरागा सुरसुन्दरीभिः समाः सरूपाः स्त्रियश्च इतस्ततो विलसन्ति क्रीडन्ति अन्योन्यमनुरागिणोऽनुरूपाश्चेह विलासिनस्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः ॥ २७ ॥

उच्चैरिति। इहाद्रौ सान्द्रया सुधया लेपविशेषेणाक्तेन वा सवर्णा समानवर्णा। ज्योतिर्जनपदेत्यादिना समानस्य सादेशः। लेपभेदेऽमृते सुधेति वैजयन्ती। महारजतराजिविराजिता काञ्चनरेखाशोभिता असौ पुरोवर्त्तिनी उच्चैरुन्नता दुर्वर्णभित्तिः। महारजतकाञ्चने इति। दुर्वर्णं रजतं रूप्यमिति चामरः। भस्मना परिपाण्डुरितस्य स्मरारेरुद्वह्नि उद्गतार्चिर्लोचनमेव ललामं भूषणं यस्य तस्य ललाटस्य लीलां शोभामभ्येति भजतीति निदर्शनालङ्कारः। ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्यमरः ॥ २८ ॥

अयमिति। अयं गिरिरतिजरठाः अतिकठिनाः अतिजरतीश्च। जरठः कठिने जीर्णे इति वैजयन्ती। प्रकामं गुर्वीः श्रेष्ठाः स्थौल्यदुर्भराश्च प्रकामगुर्वीः। गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर इति शब्दार्णवः। विसृष्टपटुवत् मयूरव्यंसकादयश्चेति समासः।

धूमाकारं दधति पुरः सौवर्णे
वर्णेनाग्नेः सदृशि तटे पश्यामी ।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवो बिभ्राणाः ॥ ३० ॥
व्योमस्पृशः प्रथयता कलधौतभित्ती-
रुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।

अलघुभिर्विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः स्तनैश्च । स्त्रीस्तनाब्दौ पयोधराविल्यमरः । उपरुद्धाः आवृताः निबद्धाः सततं सर्वदा असुसताश्चाप्राप्ताभगम्यरूपाः अत्युन्नतत्वात् दुरारोहस्वरूपाः अन्यत्र वृद्धत्वाद्गमनानर्हा विरुद्धाः । त्यजेदन्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकान्तथेति गमननिषेधादिति भावः । परिणतास्तिर्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजाः यासु ताः परिणतदिक्करिकाः । तिर्यग्दन्तप्रहारस्तु गजः परिणतो मत इति हलायुधः । इतः स्त्रियामिति समासान्तः कप्प्रत्ययः । अन्यत्र परिणताः किणीभूताः दिशो दन्तक्षतविशेषाः करिकानखव्रणाश्च यासान्ताः । दिग्दष्टे वर्तुलाकारे करिका नखरेखिकेति वैजयन्ती । तटीर्बिभर्ति । अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गनाप्रतीतेः समासोक्तिः । पुष्पिताग्रा वृत्तमुक्तम् ॥ २९ ॥

धूमेति । इहाद्रौ पुरोऽग्रे वर्णेनाग्नेः सदृशि समाने अग्निसमानवर्णे इत्यर्थः । सौवर्णे सुवर्णविकारे तटे कुसुमसमूहे लीनां स्थिताम् । ल्वादिभ्यश्चेति निष्ठानत्वम् । अलीनां भृङ्गाणामालीमावलीम्बिभ्राणाः अत एव श्यामीभूताः अमी तरवो धूमाकारं धूमसाम्यं दधति त्वं पश्य । स्वर्णतटम् अग्निवद्भाति श्यामास्तरवो धूमवद्भान्तीत्युपमा । जलधरमाला वृत्तम् । अब्धरङ्गैः स्माज्जलधरमाला म्भौ स्माविति लक्षणात् ॥ ३० ॥

व्योमेति । व्योमस्पृशोऽभ्रङ्कषाः उन्निद्रैर्विकसितैः पुष्पैर्वित्ता उन्निद्रपुष्पचणाः । तेन वित्त इति चणप्प्रत्ययः । ते च ते चम्पकाश्च

सौमेरवीमधिगतेन नितम्बशोभा-
मेतेन भारतमिलावृतवद्विभाति ॥ २१ ॥

रुचिरचित्रतनूरुहशालिभि-
र्विचलितैः परितः प्रियकव्रजैः।
विविधरत्नमयैरभिभात्यसा-
ववयवैरिव जङ्गमतां गतैः॥ २२ ॥

कुशेशयैरत्र जलाशयोषिता
मुदा रमन्ते कलभा विकस्वरैः।

तद्वति पिङ्गभासः पिङ्गवर्णाः कलधौतभित्तीः कनकतटीः। कलधौतं रौप्यहेम्नोरिति विश्वः। प्रथयता प्रकटयता अत एव सौमेरवीं सुमेरुसम्बन्धिनीं नितम्बशोभां कटकलक्ष्मीम् अधिगतेन प्राप्तवता। गत्यर्थाकर्मकेत्यादिना गमेः कर्त्तरि क्तः। एतेन रैवतकाद्रिणा भारतं भरतस्य राज्ञ इदं भारताख्यं वर्षं भूखण्डम्। स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियामित्यमरः। इलावृतवदिलावृतवर्षमिव विभातीत्युपमा। नवखण्डस्य जम्बूद्वीपस्य हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात् सौमेरवापराख्यं मध्यमखण्डमिलावृतवर्षम् अत एव। नाम्नेदम्भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे। तेन हैमवतं नाम परेष्वप्येवमुन्नयेत्। इलावृतं सौमेरवं सुमेरोः परितो हि तदिति वैजयन्ती ॥ २१ ॥

रुचिरेति। असौ गिरिः रुचिरैः उज्ज्वलैः चित्रैर्नानावर्णैस्तनूरुहैः लोमभिः शालन्त इति तथोक्तैः परितः प्रचलितैः प्रसर्पद्भिः प्रियकाः कम्बलप्रकृतयो मृगविशेषाः। प्रियको रोमभिर्युक्तो मृदूच्चमसृणैर्घनैरिति वैजयन्ती। तेषां व्रजैः समूहैः जङ्गमतां चरिष्णुतां गतैर्विविधरत्नमयैरवयवैः स्वाङ्गैरिव प्रतिभातीत्युत्प्रेक्षा। द्रुतविलम्बितं वृत्तम् ॥ २२ ॥

कुशेशयैरिति। अत्रास्मिन् जलाशयोषिताः जलाशयेषु ह्रदेषु

प्रगीयते सिद्धगणैश्च योषितां-
मुदारमन्ते कलभाविकस्वरैः ॥ २३ ॥
आसादितस्य तमसा नियतेर्नियोगा-
दाकाङ्क्षतः पुनरपक्रमणेन कालम् ।
पत्युस्त्विषामिह महौषधयः कलत्र-
स्थानं परैरनभिभूतममूर्वहन्ति ॥ २४ ॥

उषिताः वसन्तः । गत्यर्थाकर्मकेत्यादिना वसतेः कर्त्तरि क्तः: संसारस्थं मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्वर्त्तमानार्थता । कलभास्त्रिंशद्वर्षकरिणः । त्रिंशद्वर्षस्तु कलभ इति वैजयन्ती । विकस्वरैर्विकसनशीलैः । स्थेशभासविकसो वरच् । कुमेशयैः शतपत्रैः मुदा प्रीत्या रमन्ते क्रीडन्ति करिविहाराणां कमलाकराणामयमाकर इति भावः । किञ्च कलाः अव्यक्तमधुराः विकारो मानसो भावः स प्रयोजनमेषां भाविका उद्दीपका इत्यर्थः कलाः भाविकाश्च स्वराः षड्जादयो येषान्तैः कलभाविकस्वरैः सिद्धगणैः सुरसङ्घैः योषितां स्वस्त्रीणामन्ते समीपे उदारमुच्चैः प्रगीयते च भूस्वर्गोऽयमिति भावः ॥ २३ ॥

आसादितस्येति । इहाद्रौ अमूर्महौषधयः नियतेर्नियोगादस्मिन् काले इदं भावीति दैवशासनात् । तमसाऽन्धकारेण तत्प्रावेण व्यसनेन वा आसादितस्याक्रान्तस्य पुनरपक्रमणेन पुनरावृत्त्या कालं समागमकालमाकाङ्क्षतः पुनरागत्य सङ्गन्तुमिच्छत इत्यर्थः । त्विषां पत्युः सूर्य्यस्य सम्बन्धि परैस्तेजोऽन्तरैः पुरुषान्तरैश्चानभिभूतमतिरस्कृतमनुपहतञ्च कलत्रस्थानं कलत्रभूतानां त्विषां स्थानं स्थितिं वहन्ति निर्वहन्तीत्यर्थः । स्त्रीणां स्त्रीभ्य एव रक्षणं कार्य्यमिति भावः । यथा केनचिदापदि न्यासीकृतानि कलत्राणि संरक्ष्य कालान्तरे बान्धवस्तस्मै प्रयच्छन्ति तद्वदोषधयोऽपि त्विषः त्विषां पत्युरर्पयन्तीत्यर्थः एतच्च तासां सूर्य्यास्तमये प्रज्वलनादुदये विपर्य्ययाच्चोपचर्य्यते । अत्र विशेषणसाम्यादर्कादीनामापन्नादिसाम्यप्रतीतेः समासोक्तिरलङ्कारः ॥ २४ ॥

वनस्पतिस्कन्धनिषण्णबाल-
प्रवालहस्ताः प्रमदा इवाव।
पुष्पोच्चयैर्लम्भितलोचकैर्वा
मधुव्रतव्रातवृतैर्व्रतत्यः॥ २५॥

विहगाः कदम्बसुरभाविह गाः
कलयन्त्यनुक्षणमनेकलयम्।
भ्रमयन्नुपैति मुहुरभ्रमयं
पवनश्च धूतनवनीपवनः॥ २६॥

वनस्पतीति। पत्वाद्रौ वनस्पतयो वृक्षाः। वनस्पतिर्द्रुमे मान्ने विना पुष्पफलद्रुम इति विश्वः। तेषां स्कन्धेषु प्रकाण्डेषु अंसेषु च निषण्णाः सक्ताः बालप्रवाला बालपल्लवा हस्ता इव यासान्तास्तथोक्ताः मधूनि व्रतयन्ति भुञ्जते इति मधुव्रता मधुपास्तेषां व्रातेन वृन्देन वृतैः छन्नैः अत एव लम्भिताः प्रापिताः लोचकास्तारकाणि कज्जलानि यैस्तैर्वातैरिव स्थितैरित्युत्प्रेक्षा। इवार्थे वाशब्दः तद्वदुत्प्रेक्षायाश्च उक्तः। लोचको मांसपिण्डे स्यादक्षितारे च कज्जल इति विश्वः। पुष्पैरोच्चयैरिव पुष्पोच्चयैरुपलक्षिताः व्रतत्यो लताः प्रमदा इव लक्ष्यन्त इति शेषः। न प्रसिद्धे क्रियाध्याहारदोष इत्याह वामनः। लिङ्गाध्याहारवदिति॥ २५॥

विहगा इति। कदम्बैः सुरभिः सुगन्धिस्तस्मिन् कदम्बसुरभाविहाद्रौ विहगाः पक्षिणः अनुक्षणं प्रतिक्षणम् अनेके बहुविधा लया विच्छेदा यस्मिन् कर्मणि तद् यथा तथा गाः वाचः शब्दानित्यर्थः। कलयन्ति। अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मतेति विश्वः। किञ्च धूतानि कम्पितानि नवानि नीपवनानि कदम्बकाननानि येन स धूतनवनीपवनः। नीपप्रियकदम्बास्तु हलिप्रिय इत्यमरः। अयं पवनः मुहुरभ्रं मेघं भ्रमयन्नुपैति। प्रमिताक्षराहृत्तम्। प्रमिताक्षरा सजससैरुदितेति लक्षणात्॥ २६॥

विद्वद्भिरागमपरैर्विवृतं कथञ्चित्
श्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः ।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं
गूढार्थमेष निधिमन्त्रगणं बिभर्त्ति ॥ ३७ ॥

विम्बौष्ठं बहु मनुते तुरङ्गवक्त्र-
श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।
श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री-
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ ३८ ॥

विद्वद्भिरिति । एषोऽद्रिः श्रेयान् श्रेष्ठः द्विजातिर्ब्राह्मण इवा-गमो निधिकल्पो मन्त्रशास्त्रञ्च स एव परः प्रधानं येषान्तैरागमपरैर्वि-द्वद्भिर्निधीनां मन्त्राणां च साधनविधानज्ञैः कथञ्चिद्विवृतं स्वरूपतः प्रकाशितं नास्ति निश्चिता इदमित्थमिति निश्चयात्मिका धीर्येषान्तैर-निश्चितधीभिरन्यैरशास्त्रज्ञैः श्रुत्वापि इह निधिरस्ति ईदृक् महिमा असौ मन्त्र इति चाप्तमुखादाकर्ण्यापि दुर्ग्रहं दुःसाधनम् अघानि दुःखान्येनांसि च हन्तुं दक्षं समर्थम् । दुःखैनोव्यसनेष्वघमिति वैज-यन्ती । गूढः संवृतोऽर्थो धनमभिधेयञ्च यस्मिन् तं गूढार्थं निधयो मन्त्रा इवान्यत्र निधय इव मन्त्रास्तेषां गणं बिभर्त्ति द्विजातिर्मन्त्र-गणमिव निधिगणमेष बिभर्त्तीत्युपमार्थः ॥ ३७ ॥

विम्बौष्ठमिति । इहाद्रौ तुरङ्गस्य वक्त्रमिव वक्त्रं यस्य स तुर-ङ्गवक्त्रो देवयोनिविशेषः । सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तर-पदलोपश्चेत्युष्ट्रमुखवत् समासः । विम्बकल्प ओष्ठो यस्य तं विम्बौष्ठ-मित्युपमालङ्कारः । ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यमित्यौ-कारः । प्रियायाः मुखं चुम्बन्तं किन्नरं मानुषमुखमश्वाङ्गं देव-योनिविशेषं बहु गुरु यथा तथा मनुतेऽवबुध्यते तुरङ्गवक्त्रस्य चुम्बनासम्भवादिति भावः । इतरः किन्नरोऽपि उत्तुङ्गस्तनभरेण यो भङ्गस्तस्माद्भीरुर्मध्यो यस्यास्तां निजस्त्रीं स्वास्त्रियम् । वाम्शसोरिति

यदेतदस्यानुतटं विभाति
वनं ततानेकतमालतालम् ।
न पुष्पितात्र स्थगितार्करश्मा-
वनन्ततानेकतमा लतालम् ॥ ३९ ॥

दन्तोज्ज्वलासु विमलोपलमेखलान्ताः
सद्रत्नचित्रकटकासु बृहन्नितम्बाः ।
अस्मिन् भजन्ति घनकोमलगण्डशैला
नार्योऽनुरूपमधिवासमधित्यकासु ॥ ४० ॥

विकल्पादियडादेशाभावः । सुष्ठुः स्निग्धत्वं मानुषाङ्गत्वादाविष्कृत्वं तं तुरङ्गवक्त्रं बहु यथा तथा मनुते तुरङ्गपुषः किन्नरस्याश्लेषासम्भवादिति भावः । दुर्लभं प्रियं भवतीति रहस्यम् । मध्यस्याभङ्गेऽपि अङ्गोक्तेरतिशयोक्तिः उपमया संसृज्यते । प्रहर्षणीवृत्तमुक्तम् ॥३८॥

यदिति । अस्याद्रेरनुतटं तटेषु । विभक्त्यर्थेऽव्ययीभावः । तताः विस्तृता अनेके बहवस्तमालास्तालाश्च यस्मिन् तत्ततानेकतमालतालं यदेतत् पुरोवर्त्ति वनं विभाति स्थगितार्करश्मौ तिरोहितातपे अनन्तताने अपारविस्तारेऽत्र वने कतमा लता का वा लता अलमत्यन्तं न पुष्पिता सञ्जातपुष्पा न भवतीति शेषः । सर्वापि पुष्पितेत्यर्थः ॥ ३९ ॥

दन्तोज्ज्वलास्विति । अस्मिन्नद्रौ दन्ता निकुञ्जा दशनाश्च । दन्तौ निकुञ्जे दशने इति विश्वः । तैरुज्ज्वलासु रुचिरासु सद्रत्नैश्चित्राणि कटकानि सानूनि वलयानि च यासान्तासु । कटकं वलये सानाविति विश्वः । अधित्यकासूर्ध्वभूमिषु । भूमिरूर्ध्वमधित्यकेत्यमरः । उपाधिभ्यान्त्यकन्नासन्नारूढयोरित्यधिशब्दात्त्यकन्प्रत्ययः । विमलोपलाः उज्ज्वलशिला उज्ज्वलमणयो वा मेखलाः काञ्च्यो नितम्बभूमयश्च । मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोरिति विश्वः । ताभिरन्ता रम्याः । अन्तावसिते रम्ये समाप्तावन्तमन्त इति शब्दार्णवे ।

अनतिचिरोज्झितस्य जलदेन चिर-
स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ।
विरलविकीर्णवज्रशकला सकला-
मिह विदधाति धौतकलधौतमही ॥ ४१ ॥

वर्जयन्त्या जनैः सङ्गमेकान्तत-
स्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।
योषयैष स्मरासन्नतापाङ्गया
सेव्यतेऽनेकया सन्नतापाङ्गया ॥ ४२ ॥

बृहन्तो नितम्बाः कटिपश्चाद्भागाः शिखराणि च यासान्ताः । नितम्बो रोधसि स्कन्धे शिखरेऽपि कटेरध इति विश्वः । घना विपुलाः कोमलाः स्वच्छाः गण्डशैलाः गण्डस्थलानि स्थूलोपलाश्च यासान्ताः नार्योऽनुरूपलिप्साशृङ्गस् आत्मसदृशं वाधिवासं भजन्ति । अत्र नारीणामद्रिस्थलानाञ्च प्रकृतत्वात् केवलप्रकृतगोचरास्योपस्थापिता तुल्ययोगिता । अत एवोभयविशेषणानि उभयत्र विभक्तिविपरिणामेन योज्यानि ॥ ४० ॥

अनतिचिरेति । इहाद्रौ विरलं यथा तथा विकीर्णा वज्रशकला यस्यां सा धौता शुभ्रा कलधौतमही रजतभूमिः जलदेनानतिचिरोज्झितस्य तत्कालमुक्तस्य शुभ्रस्येति भावः । चिरस्थितािश्चरस्थायिनो बहवश्च बुद्बुदा जलस्फोटा यस्मिन् तस्य पयसोऽम्भसः सकलामनुकृतिं सम्यक्सादृश्यं विदधाति अत्र मेघोज्झितजलस्य स्थिरबुद्बुदासम्बन्धेऽपि सम्भावनया सम्बन्धोक्तेरतिशयोक्तिः । कुररीरुता वृत्तम् । कुररीरुता नजभजैर्लगयुगिति लक्षणात् ॥ ४१ ॥

वर्जयन्त्येति । एकान्ततः एकान्ते रहसीत्यर्थः । कान्ततः कान्तेन प्रियेणेत्यर्थः । उभयत्रापि सार्वविभक्तिकस्तसिः । सङ्गमे सति सुखं तर्कयन्त्या उत्प्रेक्षमाणया विस्रब्धं विहारमाकाङ्क्षन्त्येत्यर्थः । अत एव जनैः सङ्गं वर्जयन्त्या युवतीः [illegible] सन्ततापानि प्राप्तज्वराणि

सङ्कीर्णकीचकवनस्खलितैकवाल-
विच्छेदकातरधियश्चलितुं चमर्य्यः ।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र-
निर्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥४३॥

भुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलदलासु ।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥४४॥

अङ्गानि यस्यास्तया अरालचलतापाङ्ग्या । अङ्गगात्रकण्ठेभ्यश्चेति वक्त-व्यमिति विकल्पादिह पक्षे टाप् । चलतावपाङ्गौ यस्यास्तया चलता-पाङ्गया अरतापात् कूणितनेत्रया अनेकया योषया अनेकाभिर्योषा-भिरित्यर्थः । जातावेकवचनम् । स्त्री योषिदबला योषा नारी सीम-न्तिनी वधूरित्यमरः । एषोऽद्रिः सेव्यते इच्छाविहारस्थानानि इह सन्तीति भावः । स्त्रिग्वणी वृत्तम् । तैश्चतुर्भिर्युता स्त्रग्विणी सम्मतेति लक्षणात् ॥ ४२ ॥

सङ्कीर्णेति । अस्मिन्नद्रौ सङ्कीर्णाः मिथः सन्दष्टाः कीचकाः वेणुविशेषाः । वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरः । तेषां वने स्खलितस्यैकवालस्यैकरोमणो विच्छेदात् कातरा तस्मा धीर्यासान्ताश्चमर्य्यः मृदुश्वसनो मन्दमारुतो गर्भे येषान्तेभ्यस्तदीय-रन्ध्रेभ्यः कीचकविवरेभ्यो निर्य्यतो निर्गच्छतः स्वनस्य श्रुत्या श्रवणेन यत् सुखं तस्मादिवेति हेतूत्प्रेक्षा । चलितुं नोत्सहन्ते वस्तुतस्तु वाल-प्रियत्वादिति भावः । शकधृषेत्यादिना तुमुन्प्रत्ययः ॥ ४३ ॥

भुक्तमिति । इहाद्रावन्तर्लीनानि महानीलदलानि इन्द्रनील-विशेषखण्डानि यासु तासु । सिंहलस्याकरोद्भूता महानीलास्तु ते मता इति भगवानगस्त्यः । वापीषु दीर्घिकासु अभ्रैर्मेघैर्भुक्तं दृष्टं मुक्तागौरं मौक्तिकसमम् अत एव क्षीरमिव स्थितं शस्त्री छुरिका ।

या न ययौ प्रियमन्यवधूभ्यः सारतरागमना यतमानम् ।
तेन सहेह बिभर्त्ति रहः स्त्री सा रतरागमनायतमानम् ॥ ४५ ॥

भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
रुच्चावचैरुपगतेषु सहस्रसङ्ख्याम् ।

स्याच्छस्त्री वासिपुत्री च छुरिका वासिधेनुकेत्यमरः । बह्वादिभ्यश्चेति ङीप् । यस्त्रीवत् श्यामैरंशुभिरन्तर्गतेन्द्रनीलमरीचिभिः आशु तत्क्षणमेव द्रुतं लोलितं सत् छुरितमित्यर्थः नीलीसलिलस्य नीलाख्यौषधिपत्ररसस्य । नीली काला क्लीतकिकेत्यमरः । अच्छां छायां कान्तिमृच्छति तत्सदृशीं छायां गच्छतीत्यर्थः । अतो निदर्शनालङ्कारः । स च शुक्लागौरं क्षीरमिव यस्त्रीश्यामैरिति चोपमाश्रयेणान्तर्लीनसङ्गानीलदलासु वापीष्विति पदार्थहेतुकं काव्यलिङ्गं तेनोत्थापितेनांशुभिर्द्रुतमिति तद्गुणोत्थापित इत्यङ्गाङ्गिभावेन सङ्करः । क्षीरमिवेत्यनेनेन्द्रनीलानां सौक्ष्म्यं सूचितम् । क्षीरमध्ये क्षिपेन्नीलं क्षीरश्चेन्नीलतां व्रजेत् । इन्द्रनीलमिति ख्यातम् इति लक्षणसम्भवात् । तेनात्र नीलीरसोपमानेन तद्वर्णा एवेति सूचितम् । नीलीरसनिभाः केचिच्छम्भुकण्ठनिभाः पर इत्यादिना अगस्त्येन रत्नशास्त्रे एषानेकादशविधच्छायाभिधानादिति । मत्तमयूरं वृत्तम् । वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरमिति लक्षणात् ॥ ४४ ॥

या नेति । इहाद्रावन्यवधूभ्यः स्त्र्यन्तरेभ्य । पञ्चमीविभक्तेरिति पञ्चमी । सारतरं श्रेष्ठमागमनं यस्याः सा सारतरागमना श्लाघ्यसङ्गमेत्यर्थः । या स्त्री यतमानं स्वप्राप्त्यै प्रयतमानं प्रार्थ्यमानमित्यर्थः । यतो प्रयत्ने शानच् । प्रियं न ययौ सा तथा प्रतिकूलापि स्त्री रहस्तेन प्रियेण सह अनायतमानमदीर्घरोषं यथा तथा रतरागं सुरताभिलाषं बिभर्त्ति अयमतिमानवतोरपि सद्य एवोद्दीपयतीति भावः । दोधकवृत्तम् । दोधकवृत्तमिदम्भभभागाविति लक्षणात् ॥ ४५ ॥

भिन्नेष्विति । इहाद्रौ रत्नकिरणैः किरणेषु उच्चावचास्त्र तैरुच्चा-

दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥ ४६ ॥
अपशङ्कमङ्कपरिवर्त्तनोचिता-
श्चलिताः पुरः पतिमुपेतुमात्मजाः।
अनुरोदितीव करुणेन पत्रिणां
विरुतेन वत्सलतयैष निम्नगाः ॥ ४७ ॥

वचैरनेकविधैरित्यर्थः। उच्चावचं नैकभेदमित्यमरः। मयूरव्यंसका-दिषूच्चोच्चनीचाच् पराञ्चोच्चावचकिञ्चनाकुतोभयानीति तत्पुरुषे निपा-तनात् साधुः। रत्नकिरणैर्भिन्नेषु मिश्रेषु ध्वत एव सहस्रसङ्ख्या-मुपगतेषु सत्सु नलिन्यः पद्मिन्यः। नलं पद्मे नलं तृणमिति शाश्वतः। असौ प्रकाशमानोऽहिमांशुः किलेति सहस्रकिरणत्वात् सूर्य्य एवेति सम्भावना बुद्ध्येत्यर्थः। वार्त्तासम्भाव्ययोः किलेत्यमरः। दोषापि रात्रावपि। सप्तम्यर्थेऽव्ययम्। दिवाह्नीत्यथ दोषा च नक्तञ्च रजनाविल्यमरः। व्याकोशकोकनदतां विकचपद्मतां दधते नूनमित्युत्प्रेक्षायाम्। अथ रक्तसरोरुहम्। रक्तोत्पलं कोकनदमिति व्याकोशविकचस्फुटा इति चामरः। इह देवभूमित्वान्नित्यपद्मा नलिन्य इति भावः। इह नलिनीनां दोषातनविकासासम्बन्धेऽपि तत्स-म्बन्धरूपयातिशयोक्त्या तद्धेन्द्रावर्कभ्रान्तिमदलङ्कारो व्यज्यते ॥ ४६ ॥

अपशङ्कमिति। अपशङ्कं निःशङ्कमङ्कपरिवर्त्तनेषु उत्सङ्गलु-ठनेषूचिताः परिचिताः पतिं भर्त्तारमुपैतुं पुरोऽग्रे चलिताः प्रयाताः आत्मजाः स्वसम्भवा दुहितृश्च निम्नगाः नदीः करुणेन दीनेन पत्रिणां पक्षिणां विरुतेन क्रोशनेन निमित्तेनैषोऽद्रिर्वत्सलतया वात्सल्येन स्नेहेनेत्यर्थः। श्रीमान् स्निग्धस्तु वत्सलः इत्यमरः। वत्सांसाभ्यां कामबले इति वलच्प्रत्ययः। अनुरोदितीवानुक्रोशतीवेत्युत्प्रेक्षा। रुदश्च पञ्चभ्य इति गुणः रुदादिभ्यः सार्वधातुके इतीट् ॥ ४७ ॥

मधुकरविटपानमिता-
स्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलता-
रजसा रोधश्चकास्ति कपिशङ्गलता ॥ ४८ ॥

प्राग्भागतः पतदिहेदमुपत्यकासु
शृङ्गारितायतमहेभकराभमम्भः ।
संलक्ष्यते विविधरत्नकरानुविद्ध-
मूर्ध्वप्रसारितसुराधिपचापचारु ॥ ४९ ॥

दधति च विकसद्विचित्रकल्प-
द्रुमकुसुमैरभिगुम्फितानिवैताः ।

मधुकरेति । मधुकरा एव विटास्तेषां पानश्चुम्बनमिताः प्राप्ताः । इणः कर्त्तरि क्तः । विटपैः शाखाविस्तारैरानमिताः विटपानमिताः । विस्तारो विटपोऽस्त्रियामित्यमरः । तरुपङ्क्तीर्बिभ्रतोऽस्याद्रेः रोधो नितम्बो गलता पतता परिपाकेण पिशङ्गीनां लतानां रजः पुष्परेणुः तेन परिपाकपिशङ्गलतारजसा कपिशं पिशङ्गं चकास्ति । लालार्द्धर्त्तास्वियमार्य्यागीतिरष्टगणा । यद्वै वसुगणा आर्य्यागीतिरिति पिङ्गलनागः ॥ ४८ ॥

प्राग्भागत इति । इहाद्रौ प्राग्भागतः ऊर्ध्वप्रदेशात् उपत्यकासु अधःप्रदेशेषु । उपत्यकाद्रेरासन्नेत्यमरः । उपाधिभ्यामित्यादिनोपशब्दात् त्यकन्प्रत्ययः । पतत् । शृङ्गारः सिन्दूरादिमण्डनमस्य सञ्जातः शृङ्गारितः । शृङ्गारः सुरते नाट्ये रसे दिग्गजमण्डन इति विश्वः । आयतो दीर्घः तस्य महेभकरस्याभेवाभा यस्य तत् विविधरत्नानां करैरंशुभिरनुविद्धमनुरञ्जितमिदमम्भः ऊर्ध्वं प्रसारितं यत् सुराधिपचापमिन्द्रधनुस्तद्वच्चारु संलक्ष्यते । अत्रेन्द्रचापस्योर्ध्वत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । अभूतोपमेति मतान्तरम् । तिरोहितविनचायां [illegible] प्रतिपत्नानुपमेयम् ॥ ४९ ॥

चणमलघुविलम्बिपिच्छदाम्नः
शिखरशिखाः शिखिशेखरानमुष्य ॥ ५० ॥

सवधूकाः सुखिनोऽस्मिन्ननवरतममन्दरागतामरसदृशः ।
नासेवन्ते रसवन्नवरतममन्दरागतामरसदृशः ॥ ५१ ॥

आच्छाद्य पुष्पपटमेष महान्तमन्त-
रावर्त्तिभिर्गृहकपोतशिरोधराभैः ।

दधतीति । किञ्चेति चार्थः, अमुष्याद्रेरेताः शिखराणि शृङ्गाण्येव शिखाः केशपाश्यः । शिखा चूड़ा केशपाशीत्यमरः । विकसद्भिर्विचित्रैः नानावर्णैः कल्पद्रुमकुसुमैरभिगुम्फितान् ग्रथितानिव स्थितानित्युत्प्रेक्षा । अलघूनि विलम्बीनि लम्बमानानि च पिच्छान्येव दामानि स्रजो येषु तान् शिखिनः केकिन एव शेखरान् आपीड़ान् क्षणं दधतीव । शिखावलः शिखी केकीति, शिखास्वापीड़शेखरा इति चामरः । अत्र कुसुमगुम्फनोत्प्रेक्षाविङ्गेन पिच्छादीनां दामादिरूपकसिद्धिस्तदुत्थापिता चोत्प्रेक्षेति सङ्करः । पुष्पिताग्रा वृत्तमुक्तम् ॥ ५० ॥

सवधूका इति । अस्मिन्नद्राववरे न भवन्तीत्यनवराः श्रेष्ठाः अनवरतमाः श्रेष्ठतमाश्च मन्दरागतैरमरैः सदृशः सरूपाश्च अनवरतममन्दरागतामरसदृशः अमन्दरागाण्यतिरक्तानि तामरसानि पङ्केरुहाणीव दृशो येषान्ते अमन्दरागतामरसदृशः रक्तनेत्राः । पङ्केरुहन्तामरसमित्यमरः । सुखिनो भोगिनः सह वधूभिः सवधूकाः सन्तः । तेन सहेति तुल्ययोगे बहुव्रीहिः, नद्यृतश्चेति कप् । रसवत् सानुरागम् । गुणे रागे द्रवे रस इत्यमरः । नवरतं नूतनसुरतन्नासेवन्त इति न किन्त्वासेवन्त एवेत्यर्थः । सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः विशिष्टसुरतानां सेवनस्य सामान्यतः प्रसक्तेः । उपमालङ्कारः । गतेयमार्य्यागीतिः ॥ ५१ ॥

आच्छाद्येति । एषोऽद्रिर्महान्तं समग्रमेव पट इति रूपक-

स्वाङ्गानि धूमरुचिमागुरवीं दधानै-
र्धूपायतीव पटलैर्नवनीरदानाम् ॥ ५२ ॥
अन्योन्यव्यतिकरचारुभिर्विचित्रै-
रत्रस्यन्नवमणिजन्मभिर्मयूखैः ।
विस्मेरान् गगनसदः करोत्यमुष्मि-
न्नाकाशे रचितमभित्ति चित्रकर्म ॥ ५३ ॥
समीरशिशिरः शिरःसु वसतां
सतां जवनिकानिकामसुखिनाम् ।

न्यमाच्छाद्य अन्तः पटाभ्यन्तरे आवर्त्तिभिरभीक्ष्णं भ्रमद्भिः । बहुलमाभीक्ष्ण्ये इति णिनिः । गृहकपोतशिरोधराया गृहपारावतकण्ठस्याभेवाभा येषान्तैरित्युपमा । पारावते कपोतः स्यादिति विश्वः । अगुरोः कालागुरोरिमामागुरवीम् । कालागुर्वगुरुः स्यादित्यमरः । धूमरुचिन्धूमकान्तिन्दधानैर्धूमवर्णानित्यर्थः । अत एव निदर्शना । दधानैर्नवनीरदानां पटलैः स्वाङ्गानि धूपायतीव धूपैरिवाधिवासयतीवेत्युत्प्रेक्षा रूपकोपमानिदर्शनाभिरङ्गैः सङ्कीर्यते । धूप सन्तापे इति धातोः, गुपूधूपविच्छिपणिपनिभ्य आय इत्यायप्रत्ययः ॥ ५२ ॥

अन्योन्येति । अमुष्मिन्नद्रावन्योन्येषां व्यतिकरेण मिश्रणेन चारुभिः अतएव विचित्रैर्नानावर्णैरत्रस्यन्तः त्रासदोषेणादुष्यन्तः । त्रासो भीमणिदोषयोरिति विश्वः । वा भ्राशेत्यादिना वैकल्पिकः श्यन्प्रत्ययः । तेभ्यो नवमणिभ्यो जन्म येषान्तैर्मयूखैराकाशे रचितमभित्ति अकुड्यम् अनाधारमित्यर्थः चित्रकर्म कर्त्तृ गगनसदः खेचरान् विस्मेरान् विस्मयशीलान् करोति । नमिकम्पीत्यादिना रप्रत्ययः । अत्र मणिमयूखेषु खे चित्रकर्मभ्रान्तिमतामेवाभित्तिचित्रकर्मेति अकारणकार्योत्पत्तिवर्णनात् भ्रान्तिमदलङ्कारोत्थापिता विभावनेति सङ्करः । कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावनेति । प्रहर्षिणी वृत्तम् ॥५३॥

समीरेति । समीरेण मारुतेन शिशिरः शीतलः शिरःसु

बिभर्त्ति जनयन्नयं मुदमपा-
मपायधवला वलाहकततीः ॥ ५४ ॥
मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसवीजयोगाः।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥५५॥

शिखरेषु वसतां निकामसुखिनाम् अत्यन्तसुखिनां सतां पुण्यवतां मुदञ्जनयन्नयमद्रिरपामम्भसामपायेनापगमेन धवला वलाहकततीर्मेघपङ्क्तीरेव जवनिकास्तिरस्करिणीर्बिभर्त्ति। अनावृतेष्वपि शिखरेषु क्रीड़ने मेघैरेवावरणतां सम्पाद्य मुदञ्जनयतीत्यर्थः। अत्र वलाहकततिष्वारोप्यमाणानां जवनिकानां मुदञ्जनयन्निति प्रकृतोपयोगिवर्णनात् परिणामालङ्कारः। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात्। रूपके तूपरञ्जनमात्रमिति भेदः। जलोद्धतगतिर्वृत्तम्। रसैर्जसजसा जलोद्धतगतिरिति लक्षणात् ॥ ५४ ॥

मैत्रीति। इहाद्रौ समाधिं योगं बिभ्रतीति समाधिभृतो योगिनः। मैत्री करुणा मुदिता उपेक्षेति चतस्रश्चित्तवृत्तयः। तत्र पुण्यकृत्सु मैत्री दुःखिषु करुणा सुखिषु मुदिता अनुमोदनं पापिषु उपेक्षा। मैत्री आदिर्येषामेतानि चित्तस्य परिकर्माणि प्रसाधकानि शोधकानीत्यर्थः तानि विन्दन्ति लभन्ते इति तद्विदः तल्लाभैः शोधितान्तःकरणमला इत्यर्थः अत एव क्लेशप्रहाणं विधाय। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः। तत्रानित्येषु नित्यत्वाभिमानः अनात्मनि च देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या। अस्मिता अहङ्कारः। रागोऽभिमतविषयाभिलाषः। द्वेषोऽनभिमतेषु रोषः। अभिनिवेशः कार्य्याकार्य्येष्वाग्रहः। ते हि पुरुषं क्लिश्यन्तीति क्लेशाः क्लेशहेतवः। पचाद्यच्। तेषां प्रहाणं क्षयः। क्षत्यय इति णत्वम्। तद् विधाय क्लेशान् हित्वेत्यर्थः। अतो लब्धः सवीजः सावलम्बनो योगो यैस्ते लब्धसवीजयोगाः सन्तः। आलम्बनेन व्यनक्ति, सत्त्वेति।

मरकतमयमेदिनीषु भानो-
स्तरुविटपान्तरपातिनो मयूखाः।
अवनतशितिकण्ठकण्ठलक्ष्मी-
मिह दधति स्फुरिताणुरेणुजालाः॥ ५६॥

या बिभर्त्ति कलवल्लकीगुणस्वानमानमतिकालिमालया।
नात्र कान्तमुपगीतया तया स्वानमा नमति कालिमालया ५७

सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन मिथोभिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वेत्यर्थः। प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसारः, विवेकग्रहणान्मुक्तिरिति साङ्ख्याः। अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति वृत्तिरूपां तां निवर्त्य स्वयम्प्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः। प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिरिति साङ्ख्यसिद्धान्तः। न केवलं भोगभूरियं किन्तु मोक्षक्षेत्रमपीति भावः॥ ५५॥

मरकतेति। इन्द्राद्रौ मरकतानां विकारा मरकतमय्यस्तासु मेदिनीषु। स्त्रियः पुंवदित्यादिना पुंवद्भावः। तरूणां विटपाः पल्लवाः तेषामन्तरैरवकाशैः पतन्तीति तथोक्ताः। विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोरिति विश्वः। स्फुरितान्यणुरेणूनां सूक्ष्मरजसां जालानि येषु ते भानोर्मयूखाः अवनतस्य शितिकण्ठकण्ठस्य मयूरकन्धरायाः लक्ष्मीं दधतीति निदर्शनालङ्कारः। पुष्पिताग्रा वृत्तम्॥ ५६॥

येति। अत्राद्रावत्यन्तः कालिमा कार्ष्ण्यं यस्याः सा अतिकालिमा अतिश्यामेत्यर्थः। न विद्यते लयो लयनं क्वचिदवस्थानं यस्याः सा अलया भ्रमन्तीत्यर्थः। अतएव सस्वनेति भावः। या अलिमाला कलोऽव्यक्तमधुरः वल्लकीगुणस्वानस्य वीणातन्त्रीशब्दस्य मानमुपमानं बिभर्त्ति तन्त्रीवद्ध्वनतीत्यर्थः। उपमालङ्कारः। उपगीतया समीपे गातुमारब्धयैव न तु पूर्वं गायन्त्येवेति भावः। आदिकर्मणि क्तः। कर्त्तरि चेति क्तः। तया अलिमालया भृङ्गावल्या स्वानमा सुखेनानमयितुमाक्रष्टुं शक्या। [illegible]। का वा स्त्री

सायं शशाङ्ककिरणाहतचन्द्रकान्त-
निस्यन्दिनीरनिकरेण कृताभिषेकाः ।
अर्कोपलोल्लसितवह्निभिरह्नि तप्ता-
स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ ५८ ॥

एतस्मिन्नधिकपयःश्रियं वहन्त्यः
संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्यः ॥ ५९ ॥

कान्तं प्रियं न नमति सर्वोऽपि मानं विहाय कान्तं सद्यः प्रणमत्येव तयोर्द्दीपकत्वान्मानखण्डनमित्यर्थः । रथोद्धता वृत्तम् । रो नराविति रथोद्धता लगाविति लक्षणात् ॥ ५७ ॥

सायमिति । इहाद्रौ वप्राः सानवः । वप्रोऽस्त्री सानुमानयो-रित्यमरः । सायं रात्रौ शशाङ्ककिरणैराहतेभ्यश्चन्द्रकान्तेभ्यो निस्य-न्दिना प्रस्राविणा नीरनिकरेण जलपूरेण कृताभिषेकाः कृतस्नानाः अह्नि अर्कोपलेभ्यः सूर्यकान्तेभ्यः उल्लसितैरुत्थितैर्वह्निभिस्तप्ताः सन्तः तीव्रम् उग्रं दुश्चरं महाव्रतं महातपश्चरन्तीवेत्युत्प्रेक्षा ॥ ५८ ॥

एतस्मिन्निति । एतस्मिन्नद्रावधिकपयःश्रियमधिकाम्बुसमृद्धिं वहन्त्यः अन्यत्र तु अधिकाः कपयः सुग्रीवादयो वर्ण्यत्वेन यासु ताः अधिकपयः श्रियं गुणालङ्कारादिशोभां वहन्त्यः पवनाद् भवतीति पवनभूस्तेन पवनभुवा वायुजन्येन जवेन वेगेन संक्षोभमुच्छलनं नीताः अन्यत्र तु जवेन जविना । जवो जविनि वेगे स्यादिति विश्वः । पवनभुवा हनुमता संक्षोभमौद्धत्यं नीता हनुमद्वेगवर्णनया प्रागल्भ्यं नीता इत्यर्थः । वाक्पक्षे सर्वत्र षष्ठ्या विपरिणामः कार्यः । महा-सरस्यो महासरांसि अरहितावविर्जितौ रामलक्ष्मणौ याभिस्तासाम् अन्यत्र तु रामो रमणः अरहितरामा अवियुक्तरामाः लक्ष्मणाः सारसयोषितो यासु ताः केचित्त्वरहितरामाः अवियुक्तस्त्रोकाः

इह मुहुर्मुदितैः कलभैरवः
प्रतिदिशं क्रियते कलभैरवः ।
स्फुरति चानुवनं चमरीचयः
कनकरत्नभुवां च मरीचयः ॥ ६० ॥

त्वक्साररन्ध्रपरिपूरणलब्धगीति-
रस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ।
कस्तूरिकामृगविमर्दसुगन्धिरेति
रागीव सक्तिमधिकां विषयेषु वायुः ॥ ६१ ॥

लक्ष्मणाः सारसा इति पुंपक्षिपरत्वेन व्याचक्षते तेषां हंसस्य योषि-
दरटा सारसस्य तु लक्ष्मणा लक्ष्मणौषधिसारस्योरित्याद्यमरविश्व-
प्रकाशादिवाक्यगतनियतस्त्र्यर्थताविरोधः । तासां वाल्मीकेर्गिरां साधर्म्यं
सादृश्यं दधति । अत्र पवनभुवा जवेनेत्यत्रैकवृन्तावलम्बिफलद्वयवद-
भङ्गैकपादगतत्वेनार्थद्वयप्रतीतेरर्थश्लेषः । अन्यत्र पदभङ्गेनार्थद्वय-
प्रतीतेर्जतुकाष्ठवच्छब्दयोरेव मिथःश्लिष्टत्वाच्छब्दश्लेष इत्युभयसाहि-
त्यादुभयश्लेषोऽयं प्रकृताप्रकृतगोचरः उपमा त्वङ्गमिति सङ्करः ॥५९॥

इहेति । इहाद्रौ मुदितैरिच्छाविहारसन्तुष्टैः कलभैः करि-
पोतैः । कलभः करिशावक इत्यमरः । दिशि दिशि प्रतिदिशम् ।
याथार्थ्येऽव्ययीभावः, अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तो-
ऽच्प्रत्ययः । कलश्चासौ भैरवश्च कलभैरवो मधुरभीषणः । विशेष-
णयोरपि कृपाणखञ्जवदैच्छिकोपसर्जनत्वविवक्षया विशेषणसमासः ।
रवो बृंहणध्वनिः शब्दः क्रियते अनुवनं वने वने चमरीचयः चमरी-
मृगसङ्घः स्फुरति । किञ्च कनकरत्नानां या भुवस्तासां मरीचयश्च
स्फुरन्ति, समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारे यमकस्याभ्युच्चयः ॥६०॥

त्वमिति । अस्मिन्नद्रौ त्वचि सारो येषां ते त्वक्सारा वंशाः ।
वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजा इत्यमरः । तेषां रन्ध्राणि
तेषां परिपूरणेन ध्मापनेन लब्धा गीतिर्गानसुखं येन सः मृदितानि

प्रीत्यै यूनां व्यवहिततपनाः
प्रौढ़ध्वान्तं दिनमिह जलदाः ।
दोषामन्यं विदधति सुरत-
क्रीड़ायासश्रमशमपटवः ॥ ६२ ॥

भग्नो निवासोऽयमिहास्य पुष्पैः
सदानतोयेन विषाणिनागः ।

सम्भृष्टानि पक्ष्मलानि लोमशानि रल्लकानां कम्बलमृगाणां कम्बलानां वाङ्गानि शरीराणि येन सः । रल्लकः कम्बलमृगे कम्बले परिकीर्त्तित इति वैजयन्ती । एतेन स्पर्शसुखमुक्तं कस्तूरिकामृगाणां विमर्द्देन संघर्षेण सुगन्धिः शोभनगन्धः । यद्यपि गन्धस्येत्त्वे तदेकान्तग्रहणं कर्त्तव्यमित्युक्तं तथापि निरङ्कुशाः कवय इत्यपर्य्यनुयोगः । असावेवंभूतो वायूरागीव कामीव विषयेषु प्रदेशेषु च । विषयः स्यादि- न्द्रियार्थे देशे जनपदेऽपि चेति विश्वः । अधिकां सक्तिं व्यासक्तिमेति गच्छति ॥ ६१ ॥

प्रीत्यै इति । इहाद्रौ युवतयश्च युवानश्च तेषां यूनाम् । पुमान् स्त्रियेत्येकशेषः । प्रीत्यै व्यवहिततपनाः तिरोहितार्काः अतएव सुरतान्येव क्रीड़ास्ताभिर्य आयासो व्यायामस्तेन यः श्रमः खेदः । श्रमः खेदोऽध्वरत्यादेरिति लक्षणात् । तस्य शमे वारणे पटवः समर्थाः जलदाः प्रौढ़ध्वान्तं मेघावरणाद् गाढ़ान्धकारं दिनं दिवसं दोषा रात्रिमात्मानं मन्यत इति दोषामन्यं रात्रिमानिनं विदधति मेघावरणमहिम्ना दिवसः स्वयमप्यात्मानं रात्रिं मन्यते किमुतान्य इत्यर्थः । दोषेत्यव्ययमत्तदुपपदान्मन्यतेर्धातोरात्ममाने खश् चेति खश्- प्रत्ययः । इह यूनां दोषावहिवापि विसब्धं विहाराः सम्भवन्तीति भावः । भ्रमरविलसितं वृत्तं, म्भौ न्लौ गः स्याद् भ्रमरविलसित- मिति लक्षणात् ॥ ६२ ॥

भग्न इति । इहाद्रावस्य नागस्य निवासः आश्रयः सदा पुष्पै- रानतो नम्रोऽयं  ...दानैः बहु वर्त्तते

तीव्राणि तेनोज्झति कोपितोऽसौ
सदानतोयेन विषाणि नागः ॥ ६२ ॥

प्रालेयशीतमचलेश्वरमीश्वरोऽपि
सान्द्रेभचर्मवसनावरणोऽधिशेते ।
सर्वर्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥ ६४ ॥

नवनगवनलेखाश्यामसध्याभिरामैः
स्फटिककटकभूमिर्नाटयत्येष शैलः ।

यस्तेन सदानतोयेन मत्तेनेत्यर्थः । येन विषाणिना दन्तिना मत्तेन विषाणिना कोपितः कोपं प्रापितः असौ नागः सर्पस्तीव्राणि विषाणि गरलान्युज्झति वमति परप्रतीकाराक्षमस्य क्रोधः स्वाश्रयमेव व्याहन्तीति भावः ॥ ६२ ॥

प्रालेयेति । ईश्वरः शिवोऽपि किमुतान्य इति भावः । सान्द्रं यदिभचर्म तदेव वसनं तदेवावरणं छादनं यस्य सः तथा सान्द्रत्वनावरणो नापि शिथिलावरण इति भावः । प्रलयादागतं प्रालेयं हिमम् । तत आगत इत्यणि केकयमित्रयुप्रलयानां यादेरिय इति यशब्दस्येयादेशः । तेन शीतं शीतलमचलेश्वरं हिमवन्तमधिशेते तस्मिन् शेते इत्यर्थः । अधिशीङ्स्थासां कर्मेति कर्मत्वम् । सर्वर्तुभिर्निर्वृतिकरे सदा सुखकरे इहाद्रौ निवसन् पुनर्नास्ति किञ्चनास्येत्यकिञ्चनो निःस्वोऽपि । उच्चावचेत्यादिना मयूरव्यंसकादिषु निपातनात्सत्पुरुषः । किञ्चिदल्पमपि द्वन्द्वदुःखं शीतोष्णदुःखं नोपैति नित्यं सन्निहितानामृतूनामन्योन्यदोषनिवारकत्वादिति भावः । द्वन्द्वं युग्महिमोष्णादि मिथुनं कलहोरह इति वैजयन्ती । अतोपमानाद्धिमाचलादुपमेयस्याधिक्यवर्णनाद्व्यतिरेकः ॥ ६४ ॥

नवेति । एष शैलो रैवतको नवया नगवनलेखया तरुवनपङ्क्त्या श्यामो सध्यो मध्यभागो याभिस्ताभिरामैः स्फटिकानां कटकभूमिः

अङ्घ्रिपरिकरभाजो भास्मनैरङ्गरागै-
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ६५॥
दधद्भिरभितस्तटौ विकचवारिजाम्बू नदै-
र्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः।
निषेव्य मधु माधवाः सरसमत्र कादम्बरं
हरन्ति रतये रहः प्रियतमाङ्गकादम्बरम् ॥ ६६ ॥

नटप्रदेशैः करणैरङ्घ्रिरेव परिकरो गात्रिकाबन्धस्तं भजतीति तस्य अङ्घ्रिपरिकरभाजः। भवेत्परिकरो व्राते पर्य्यङ्कपरिवारयोः। प्रगाढ़े गात्रिकाबन्धे विवेकारम्भयोरपीति विश्वः। भर्गो शिवः। भास्मनैः भस्ममयैः। वैकारिकोऽण्प्रत्ययः, अन्नीति प्रकृतिभावान्नस्तद्धित इति टिलोपो न। अङ्गरागैरनुलेपनैरधिगतधवलिम्नः प्राप्तधावल्यस्य शूलं पाणौ यस्य तस्य शूलपाणेरीश्वरस्य। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः। अभिख्यां शोभाम्। अभिख्या नामशोभयोरित्यमरः। आतश्चोपसर्गे इत्यण् प्रत्ययः। नाटयत्यनुकरोति। निदर्शनालङ्कारः। मालिनीवृत्तमेतत् ॥ ६५ ॥

दधद्भिरिति। अत्राद्रौ माधवस्य इमे माधवाः यादवाः विकचानि वारिजानि येषु तान्यम्बूनि ययोस्तौ विकचवारिजाम्बू अभित उभयतस्तटौ दधद्भिः नदैः। अम्बुप्रयाहैः प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदाः नर्मदां विनेत्याहुः। विनोदितो दिनक्लमो येषान्ते विहारापनीताह्निकसन्तापा इत्यर्थः किञ्च जाम्बूनदस्य विकारैर्जाम्बूनदैः कनकभूषणैः कृतरुचो जनितशोभाः सन्तः रसवत् स्वादवत्। रसो गन्धे रसे स्वाद इति विश्वः। कादम्ब इक्षुः। कादम्बः कलहंसेक्ष्वोरिति विश्वः। कादम्बं राति रलयोरभेदाल्लाति प्रकृतित्वेनादत्त इति कादम्बरमैक्षवम्। पानसन्द्राक्षमाधूकं खार्जूरन्तालमैक्षवमिति स्मरणात्। आतोऽनुपसर्गे कः। मधु मद्यम्। एवञ्च मधुकादम्बरशब्दयोः सामान्यविशेषपरत्वादपौनरुक्त्यम्। निषेव्य पीत्वा। क्षत्रियाणां पैष्ट्या एव निषेधादिति भावः। रतये सुरतार्थं रहः

दर्पणनिर्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति मुहुः ।
व्रीड़मसम्मुखोऽपि रमणैरपहृतवसनाः
काञ्चनकन्दरासु तरुणीरिह नयति रविः ॥ ६७ ॥
अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।

प्रियतमानां प्रेयसीनामङ्गादेवाङ्गकाङ्गात्वादम्बरं वस्त्रं हरन्ति, यादया- स्वेह मधुपानरतोत्सवैर्विस्रब्धं विहरन्तीति भावः । पृथ्वी वृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ॥ ६६ ॥

दर्पणेति । इहाद्रौ रविर्दर्पणनिर्मलासु पुरः रौप्यभित्तिषु । काञ्चनकन्दराग्रवर्त्तिरजतसानुषु पतिते संक्रान्ते घनं सान्द्रं यत्ति- मिरन्तन्मुष्णाति हरतीति तन्मुट् । क्विप् । तस्मिन् ज्योतिषि स्वते- जसि काञ्चनकन्दरासु मुहुः प्रतिफलति सम्मूर्च्छति सति रमणैरपहृत- वसनास्तरुणीरसम्मुखोऽपि कन्दरानभिमुखोऽपि व्रीड़ं त्रपाम् । यद्यपि गुरोश्च हल इति स्त्रियामप्रत्ययः अत एव मन्दाक्षं ह्रीस्त्रपा व्रीड़ेत्यमरः तथापि तत्र स्त्रीत्वाविवक्षायां बाहुलकत्वान्नपुंसकत्वं च । अतएवाविधौ गुरोः स्त्रियां बहुलविवक्षेति वामनः । नयति प्राप- यति । नीवह्योर्हरतेश्चैवेति द्विकर्मकता । यस्मिन् सुवर्णकन्दरासु क्रीड़ार्थं प्रविष्टाः स्त्रियोऽन्धकार इति कृत्वा पुरुषैरपहृतवस्त्राः सत्यः पुरःस्थितरौप्यभित्तितेजसामन्तःप्रतिबिम्बवत् प्रकाशे सति सलज्जा इति भावः । अत्र काञ्चनकन्दराणामसम्मुखार्कज्योतिःप्रतिफलनासम्ब- न्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । वंशपत्रपतितं वृत्तं, दिङ्मुनि- वंशपत्रपतितं भरनभनलगैरिति लक्षणात् ॥ ६७ ॥

अनुकृतेति । असावुच्चैरुन्नतोऽद्रिः रैवतकः त्वयि अभ्यागते सति अनुकृता शिखरौघाणां श्रीर्यैस्तैस्तथोक्तैः शिखरौघभ्रमकारिभिरिति भावः । अतएवात्र श्रीरिव श्रीरिति निदर्शनया भ्रान्तिमदलङ्कारो

द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ६८ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
रैवतकवर्णनं नाम चतुर्थः सर्गः ।

---

व्यज्यते । द्रुतमरुता शीघ्रमारुतेनोपनुन्नैः प्रेरितैः अतएव सहेलं सलीलमुन्नमद्भिः धरतीति धरः । पचाद्यच् । हलस्य धरो हलधरो बलभद्रः तस्य परिधानानि अम्बराणि तद्वत् श्यामलैः श्यामैरम्बुवाहैः निमित्तेन सरभसमभ्युत्तिष्ठतीव प्रत्युत्थानं करोतीवेति क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा विशिष्टमेघोन्नमनक्रियया प्रत्युत्थानक्रियोत्प्रेक्षणात् सा चोक्तनिदर्शनानुप्राणितेति सङ्करः, शाब्दस्तु वृत्त्यनुप्रासः मालिनी वृत्तम् ॥ ६८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
चतुर्थः सर्गः ॥ ४ ॥

---

# पञ्चमः सर्गः ।



इत्यङ्गिरः प्रियतमा इव सोऽव्यलीकाः
शुश्राव सूततनयस्य तदा व्यलीकाः ।
रन्तुं निरन्तरमियेष ततोऽवसाने
ताराङ्गिरौ च वनराजिपटं वसाने ॥ १ ॥

तं स द्विपेन्द्रतुलितातुलतुङ्गशृङ्ग-
मभ्युल्लसत्कदलिकावनराजिमुच्चैः ।
विस्तारवद्द्विवसुधोऽन्यचलच्चचाल
लक्ष्मीन्दधत्प्रतिगिरेवलवुर्वलीघः ॥ २ ॥

इत्यमिति । स हरिरित्यनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । अव्यलीकाः अप्रियरहिताः । व्यलीकस्त्वप्रियेऽनृते इत्यमरः । प्रियतमाः प्रेयस्य इव स्थिताः कान्तासम्मिता इत्यर्थः व्यलीका विगतानृताः सत्याः सूततनयस्य सारथिकुमारस्य दारुकस्य गिरः तदा शुश्राव, ततः श्रवणानन्तरं ताराङ्गिरावसाने सानौ निरन्तरं नीरन्ध्रं वनराजिरेव पटस्तं वसाने आच्छादयनि । वस आच्छादन इति धातोः कर्त्तरि लटः शानजादेशः । गिरौ रैवतकाद्रौ रन्तुं क्रीडितुमियेष तत्र वसतिं कर्तुमिच्छति स्मेत्यर्थः । उपमायमकयोः संसृष्टिः । सर्गेऽस्मिन् वसन्ततिलका वृत्तम् । उक्ता वसन्ततिलका तभजा जगौ ग इति ॥ १ ॥

तमिति । कदल्य एव कदलिकाः वैजयन्त्यो रम्भातरवश्च । कदली वैजयन्त्यां च रम्भायां हरिणान्तरे इति विश्वः । अभ्युल्लसन्त्यः कदल्यो वैजयन्त्यो वनराजय इव यस्य सः अभ्यत् रक्षावन-

भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन।
संविव्युरम्बरविकाशि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः॥ २॥

पङ्क्तयो यस्य तमिति योज्यम्। उच्चैरुन्नतः विस्तारेण रुद्धककुभः व्याप्तभूमिः अतएव प्रतिगिरेर्लक्ष्मीन्दधत् स्वयमप्यन्यो गिरिरिव स्थित इत्यर्थः अवधुनङ्गान् स बलौघः सेनासङ्घः द्विपेन्द्रैः स्खलितान्यतुलान्यप्रतिमानि द्विपेन्द्रव्यतिरिक्तप्रतिमारहितानि उत्तुङ्गशृङ्गाणि यस्य तन्नयोन्नमत्त्वचलं रैवतकमनु चचाल तत्प्राति ययावित्यर्थः। अनुर्लक्षण इति कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। अत्र प्रतिगिरेः कस्यचिदप्रसिद्धत्वात् गिरिधर्मयोगी बलौघः प्रतिगिरेर्लक्ष्मीमिव लक्ष्मीन्दधातीति निदर्शनामुखेन प्रतियोगित्वेनोत्प्रेक्ष्यते इत्युत्प्रेक्षैवेयं स्वोपात्तप्रापितेति सङ्करः॥ २॥

भास्वदिति। आशा दिशो भास्वत्करव्यतिकरेण सूर्यांशुव्याप्त्या उल्लसिताम्बरान्ताः प्रकाशिताकाशप्रदेशाः अन्यत्र भास्वान् भास्करः अभिरूपः। भास्वान् भास्करसूर्ययोरिति विश्वः। तस्य हस्तस्य स्पर्शनेन उल्लसिताम्बरान्ताः स्रस्तवस्त्राञ्चलाः अतएव महाजनदर्शनेन सापत्रपा इव। लज्जा सापत्रपान्यत इत्यमरः। अम्बरविकाशि व्योमव्यापि वासःशोभि च। अम्बरं व्योमवाससोरिति विश्वः। चमूषु समुत्थं करभः उष्ट्रपोतः। उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुरित्यमरः। तस्य कण्ठ इव कडारं कपिशम्। कडारः कपिशः पिङ्ग इत्यमरः। पृथ्वीरजः संविव्युः संवव्रुराच्छादयामासुरित्यर्थः। व्येञः संवरणे लिट्, कित्वात्सम्प्रसारणे द्विर्भावः, एरनेकाच इति यणादेशः। स्त्रियो वस्त्रापहारे लज्जया यत्किञ्चिदाच्छादयन्तीति भावः। अत्राचेतनास्वाशासु श्लिष्टविशेषणमहिम्ना स्त्रीप्रतीतौ तदभेदाध्यवसायेन संव्यानव्यवहारसमारोपात् समासोक्तिः। सा च सापत्रपत्वोत्प्रेक्षयानुप्राणितेति सङ्करः॥ ३॥

आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः
सम्पन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः पिधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥ ४ ॥

आवर्त्तिन इति । आवर्त्तिनो दशावर्त्तवन्तः । प्रशंसायामिति णिनिः । ते च द्वावुरस्यौ शिरस्यौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एको भाले ह्यपाने च दशावर्त्ता ध्रुवाः स्मृता इत्युक्ता दश ध्रुवाख्या विवक्षिताः । अन्येषामनन्तरमेव पृथगभिधानात् । अन्यत्र तु जलभ्रमवन्तः । स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः । रोमसंस्थाने तु तत्साम्याद्व्यपदेशः । तदुक्तम्, आवर्त्तसाम्यादावर्त्तो रोमसंस्थानमङ्गिनामिति । शुभफलानि राज्यलाभादीनि प्रददतीति शुभफलप्रदाः । प्रे दाज्ञ इति कः । ताभिः शुक्तिभिः संस्थानैरावर्त्तविशेषैर्युक्ताः । तदुक्तं, वक्षःस्थाः शुक्तयश्चैव ऊर्ध्वरोमा जयावहा इति । अन्यत्र शुभफलानि मुक्ताफलानि तत्प्रदाः शुक्तयो मुक्तास्फोटाः ताभिर्युक्ताः । मुक्तास्फोटे ऽप्यावर्त्ते शुक्तिः शङ्खकपालयोरिति यादवः । सम्पन्नाः समग्राः देवमणयो निगालावर्त्ताः कौस्तुभादिदिव्यमणयश्च येषान्ते । आवर्त्तो रोमजो देवमणिस्त्वेष निगालजः । निगालस्तु गलोद्देशे स्मृत इति वैजयन्ती । भृताः पूर्णा रन्ध्रभागाः पार्श्वदेशा निम्नप्रदेशाश्च येषान्ते अतिशयिता रोचमानाः कण्ठावर्त्ता येषान्ते अतिरोचमानाः । कण्ठजो रोचमानश्च स्वामिसौभाग्यवर्द्धन इति वैजयन्ती । अन्यत्र तु अत्यन्तं दीप्यमाना इत्यर्थः ऊर्मिभिर्गतिविशेषैर्वीचिभिश्च पतन्तः आधावन्तः । पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः । अतिवेगसमायुक्ता गतिरूर्मिरुदाहृतेति वैजयन्ती । ईदृशोऽश्वाः पयोधय इव तूर्णं वसुमतीं पिधुः छादयन्ति स्म । अपिधानतिरोधानपिधानच्छदनानि चेत्यमरः । अपिपूर्वाद्दधातेर्लुङ्, वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः । एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेरर्थश्लेषोऽयं प्रकृताप्रकृतगोचरः उपमा [illegible] सङ्करः ॥ ४ ॥

आरब्धमग्नमवमत्य सृणिं सिताग्र-
मेकः पलायत जवेन कृतार्त्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभार-
मन्योन्यतः पथि वताबिभितामिभोष्ट्रौ ॥ ५ ॥

आयस्तमैक्षत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारुमश्वम् ।
नागं पुनर्मृदु सलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ६ ॥

आरब्धेति । पथि मार्गे इभोष्ट्रावन्योन्यतः अन्योन्यस्मादबिभितां भीतवन्तौ । ञिभी भये लङ्, भियोऽन्यतरस्यामितीत्वम् । वतेत्यनयोरपि भीतिरिति खेदेऽतिविस्मये वा । खेदानुकम्पासन्तोषविस्मयामन्त्रणे वतेत्यमरः । तत्र विशेषमाह, एक इभ आरब्धः कुम्भयोरधस्तात् मग्नं प्रविष्टं शिताग्रतीक्ष्णमुखं सृणिमङ्कुशम् । अङ्कुशोऽस्त्री सृणिर्द्वयोरित्यमरः । अवमत्यावधूय कृत आर्त्तनादो येन सः अतिकरुणं क्रन्दन्नित्यर्थः जवेन पलायत पलायितवान् । परापूर्वादयतेर्लङ्, उपसर्गस्यायताविति रेफस्य लत्वम् । अन्यः पुनरुष्ट्रस्तु अस्तभारन्निरस्तभारं यथा तथा मुहुरुदप्लवत उत्प्लुवितवान् । प्लु गताविति लङ् । स्वभावोक्तिः ॥ ५ ॥

आयस्तमिति । जनश्चटुलाग्रपादं चञ्चलपूर्वचरणं यथा तथा गच्छन्तं शीघ्रं धावन्तमित्यर्थः उच्चलितैः चञ्चलितैश्चामरैश्चारुमश्वमायस्तं प्रयत्नमाहृतं यथा तथा । यसु प्रयत्ने कर्त्तरि क्तः । क्लान्तं क्रियाविशेषणम् । ऐक्षत ईक्षितवान् । ईक्षतेर्लङ्, आडजादीनामाटश्चेति वृद्धिः । नागं पुनर्गजं सलीलं निमीलिते अक्षिणी यस्मिन् कर्मणि तत् । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । मृदु मन्दं गच्छन्तमायस्तमैक्षत । कथं शीघ्रमन्दयोस्तुल्यदृष्टिरत आह, सर्वः प्राणी अनुरूपचेष्टः स्वजात्युचितव्यापारः सन् प्रीणातीति प्रियः प्रीतिकरो

त्रस्तः समस्तजनहासकरः करेणो-
स्तावत् खरः प्रखरमुल्ललयाञ्चकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥

शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।
भूरेणवो नभसि नद्धपयोदचक्रा-
श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ ८ ॥

भवति खलु । इगुपधज्ञाप्रीति कर्त्तरि कः । अर्थान्तरन्यासः ॥ ६ ॥

तत्र इति । करेणोरिभ्याः । करेणुरिभ्यां स्त्रीनेभे इत्यमरः । भीत्रार्थानां भयहेतुरित्यपादानत्वम् । त्रस्तो भीतः खरो गर्दभः समस्तजनस्य हासं करोतीति तत्करः सन् । कृञो हेत्वित्यादिना टप्रत्ययः । तावत्तदवधि प्रखरं भृशमुल्ललयाञ्चकार उत्पपात यावत् चलात् स्थानचलितादासनात् विलोलोऽपसृतस्तस्मान्नितम्बबिम्बाद्विस्रस्तं वस्त्रं यस्मिन् कर्मणि तद्यथा तथा अवरोधवधूः पपात । स्वभावोक्तिः ॥ ७ ॥

शैलेति । शैलस्य रैवतकाद्रेरुपशल्यं प्रान्तम् । यद्यपि ग्रामान्त उपशल्यं स्यादित्यमरः तथापि उपचाराददोषः । तत्र निपततां धावतां रथानां नेमयश्चक्रान्ताः । चक्रं रथाङ्गन्तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमानित्यमरः । तासां धाराभिः निष्पिष्टानां चूर्णितानां निष्ठुरशिलातलानां चूर्णं गर्भे येषान्ते तथोक्ताः नभसि नद्धानि पयोदचक्राणि पयोदाकारमण्डलानि यैस्ते चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । चक्रीवन्तस्तु वालेयरासभाः गर्दभाः खरा इत्यमरः । आसन्दीवच्चक्रीवदष्ठीवदित्यादिना साधुः । तस्याङ्गरुहाणि रोमाणि तद्वत् धूम्ररुचः कृष्णलोहितवर्णाः । धूम्रधूमलौ कृष्णलोहिताविस्यमरः । भूरेणवो विसस्रुः प्रसृताः ॥ ८ ॥

उद्यत्कृशानुशकलेषु खुराभिघाता-
द्भूमीसमायतशिलाफलकाचितेषु ।
पर्य्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
शैलस्य दर्दुरपुटानिव वादयन्तः ॥ ९ ॥
तेजोनिरोधसमतावहितेन यन्त्रा
सम्यक्कशात्रयविचारवता नियुक्तः ।

उद्यदिति । खुराः शफानि । शफं क्लीबे खुरः पुमानित्यमरः । तेषामभिघातादुद्यन्तः कृशानुशकलाः स्फुलिङ्गाः येभ्यस्तेषु टङ्कप्रायाः खुरा इति भावः, भूम्यां समानि समतलानि आयतानि च यानि शिलाः फलकानीव शिलाफलकानि तैराचितेष्वास्तृतेषु शैलस्य पर्य्यन्तवर्त्मसु प्रान्तमार्गेषु महाश्वा दर्दुराणां वाद्यविशेषाणां पुटान् मुखानि वादयन्त इव विचक्रमिरे जग्मुः पादन्यासैः तादृशं शब्दमकुर्वन्नित्यर्थः । वेः पादविहरणे इत्यात्मनेपदम् । दर्दुरस्तोयमेके च वाद्यभाण्डाद्रिभेकयोरित्यमरः । उत्प्रेक्षालङ्कारः ॥ ९ ॥

तेज इति । तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशको ऽन्तःसारविशेषः । यथाह भोजराजः, तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणा इति । तच्च द्विविधं सततोत्थितमुत्थाप्योत्थितञ्चेति । यथाह स एव, धारासु योजितानाञ्च निसर्गात्प्रेरणं विना । अविच्छिन्नमिवाभाति तत् तेजः सततोत्थितम् । कशापादादिघातैर्यत् साध्वसात् स्फुरितं तु तदिति । अत्र तेजःशब्देन तत्कार्य्यं वेगो लक्ष्यते तथा च तेजसि वेगे निरोधे तन्निवारणे समतायां वेगसाम्ये चावहितेन वल्गाविभागकुशलेनेत्यर्थः । कशा ताड़िनी । अश्वादेस्ताड़िनी कशेत्यमरः । अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमेषु यथासङ्ख्यं मृदुसमनिष्ठुरत्वेन त्रिरूपं त्रितयन्तस्य विचारः एतेषु निमित्तेषु अङ्गम्बेवत्ताश्च इति विमर्शः तद्वता तज्ज्ञेन । यथाह भोजः, मृदुनैकेन घातेन दण्डकादिषु ताड़येत् । तीक्ष्णं

आरट्टजश्चटुलनिष्ठुरपातमुच्चै-
श्चित्रं चकार पदमर्द्धपुलायितेन ॥ १० ॥

अध्यं पुनर्द्वाभ्याञ्जघन्यस्त्रिष्ठुरैस्त्रिभिः । उपवेशेऽथ निद्रायां स्खलिते दुश्चेष्टिते । वड़वालोकनौत्सुक्ये बहुगर्वितहेषिते । सन्त्रासे च दुरुत्थाने विमार्गगमने भये । शिक्षात्यागस्य समये सञ्जाते चित्तविभ्रमे । दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि । ग्रीवायामौतसाद्वन्यात् नस्तञ्चैव च वाजिनम् । विभ्रान्तचित्तमधरे त्वक्शिरश्च ताड़येत् । प्रहेषितं स्कन्धबाह्वोर्वड़वालोकनं तथा । उपवेशे च निद्रायां कटिदेशे च ताड़येत् । दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा । जघने स्खलितं हन्यान्नलाग्रे दुरुत्थितम् । यः क्रुद्धप्रकृतिर्वाजी तं सर्वत्रैव ताड़येदिति । एवम्भूतेन यन्त्रा सादिना सम्यग् यथाशास्त्रं नियुक्त ईरितः उच्चैस्तनः आरट्टोऽश्वयोनिदेशविशेषः तज्जोऽश्व आरट्टजः । विशेषणमात्रप्रयोगे सागराम्बरादिवत्तावतैव विशेष्यप्रतीतेरित्याह वामनः विशेषणप्रयोगो विशेष्यप्रतिपत्ताविति । चटुलश्चपलो निष्ठुरः परुषश्च पातः प्रक्षेपो यस्मिन् कर्मणि तद् यथा तथा । अर्द्धपुलायितेन मण्डलगतिविशेषेण चित्रमद्भुतमपदमपदक्रमञ्चकार । यतार्द्धाद्धक्रमादूर्द्धैर्मण्डलायितवल्गितैः । उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति लक्षणात् । पुला नाम प्लुताद्यनेकापरनामा हयानां गतिविशेषः । तदुक्तं हयलीलावत्यां, प्लुतां प्लवङ्गिताभाङ्गर्या धारा पुलनाभिधा । पुनरेनां रत्नोपान्तां पुलामित्याह देशिकः । तल्लक्षणञ्च तत्रैवोक्तम् । क्षिपति समविशेषानुत्क्षिप्यत्यपपादान् प्रसरति पुरतोऽश्वः साथ धारा पुलाख्या । विलसति समपादोत्क्षेपणा कुञ्चनानां करणमिह गतिज्ञाः प्राहुरन्ये पुलाख्यामिति पार्ष्णिप्रधानं प्रविधाय रागाद्वल्गां स्थिरीकृत्य वहेत् पुलाख्यामित्यादि । पुलाख्यया अयितं गतिः पुलायितम् । अय गतौ भावे क्तः, तच्छतार्द्धेत्याद्युक्तरीत्या अनुष्ठितमर्द्धपुलायितमित्यलमतिविस्तरेण ॥ १० ॥

नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन् वधूजनविलोचनपक्ष्ममालाः ।
क्षुण्णः क्षणं यदुबलैर्दिवमाततांसुः
पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः ॥ ११ ॥

उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रा-
निन्द्रानुजानुचरभूपतयोऽध्यवात्सुः ।
वन्येभमस्तकनिखातनखाग्रमुक्त-
मुक्ताफलप्रकरभाञ्जि गुहागृहाणि ॥ १२ ॥

विभ्राणया बहलयावकपङ्कपिङ्ग-
पिच्छावचूडमनुमाधवधाम जग्मुः ।

नीहारेति । नीहारजालवत् तुहिनव्यूहवन्मलिनः वधूजनविलोचनानां पक्ष्ममालाः पुनरुक्तसान्द्राः द्विगुणसान्द्राः कुर्वन् स्वभावतोऽपि सान्द्रत्वादिति भावः । मयूरव्यंसकादित्वाद्विस्पष्टवद्भवत् समासः । क्षणं यदूनां बलैः सैन्यैः क्षुण्णः अद्रेरुत्थितः दिवमाकाशमाततनितुमवततनितुमिच्छुः आततांसुः । तनोतेः सन्नन्तादुप्रत्ययः, सनीवन्तर्धेत्यत्र तनिपतिदरिद्राणामुपसङ्ख्यानाद्वैकल्पिक इडभावः, तनोतेर्विभाषेति दीर्घः । पांशुर्दिशां मुखमतुत्थयदाच्छादयति स्म । तुत्थ आच्छादने इति धातोश्चौरादिकाल्लङ् ॥ ११ ॥

उच्छिद्येति । इन्द्रानुजस्योपेन्द्रस्य हरेरनुचरा अनुजीविनो भूपतयो मृगेन्द्रान् सिंहान् विद्विषः शत्रूनिव प्रसभं प्रसह्योच्छिद्य हत्वा वन्येभानां मस्तकेषु निखातैर्निक्षिप्तैर्नखाग्रैः सिंहनखमुखैर्मुक्तान् विकीर्णान् मुक्ताफलप्रकरान् भजन्तीति तथोक्तानि गुहा गृहाणीवेत्युपमितसमासः । विद्विष इवेति लिङ्गात् अध्यवात्सुरध्युषितवन्तः । उपान्वध्याङ्वस इति कर्मत्वं, वस निवासे लुङि सिचि वृद्धिः, सस्यार्धधातुक इति सत्वम् ॥ १२ ॥



विभ्राणयेति । अन्ये भूपतयः याव एव यावकोऽलक्तकः ।

चञ्च्वग्रदष्टचटुलाहिपताकयान्ये
स्वावासभागमुरगाशनकेतुयष्ट्या ॥ १२ ॥
छायामपास्य महतीमपि वर्त्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्वो हि नोपगतमप्यपचीयमानं
वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥ १४ ॥
अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन।

राचा आचा जलु क्लीबे यावोऽलक्तो द्रुमामय इत्यमरः। याव?-दिभ्यः कन्निति स्वार्थे कन्। बहलेन यावकपङ्केन पिङ्गं पिङ्गलं शिखण्डं यस्मैवावचूड़म् अधोलम्बि कलापबिम्बाणया। अस्योच्चूड़ाव-चूड़ाख्यावूर्ध्वाधोमुखचूड़काविति ध्वजाङ्गेषु हलायुधः। चञ्चुस्त्रोटिः। चञ्चुस्त्रोटिरुभे स्त्रियामित्यमरः। तस्या अग्रेण दष्टा चटुला अहि-रेव पताका यस्यास्तया उरगाशनो गरुड़स्तस्य केतुर्यष्टिस्तदधिष्ठितो ध्वजदण्ड इत्यर्थः तया अभिज्ञानेनेति भावः अनुमाधवधाम हरि-शिविरमनु स्वावासभागं स्वनिवेशदेशञ्जग्मुः प्रापुः दूरादेव गरुड़ध्वजेन माधवधाम ज्ञात्वा तत्सन्निहितान्नियतदिक्कान् स्वावासांश्चिचित्य जग्मुरित्यर्थः। १२ ॥

छायामिति। जनानां समूहाः जनताः। ग्रामजनबन्धुसहाये-भ्यस्तल्। तरूणां वर्त्तमानां विद्यमानां महतीमपि छायामपास्य त्यक्त्वा आगामिनीं छायां जगृहिरे वर्द्धिष्णुत्वादिति भावः। न च प्राप्तत्यागो दोषाय त्यागस्वीकारयोः क्षयवृद्धिप्रयुक्तत्वादिति भावः। सर्व इति। तथाहि, सर्वो जनः उपगतं प्राप्तमप्यपचीयमानं क्षीयमाणम्। कर्म-कर्त्तरि प्रयोगः। आश्रयन्नोपैति न गृह्णाति किं त्वनागतमप्राप्त-मपि वर्द्धिष्णुं वर्द्धनशीलम् आश्रयमुपैति। सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥ १४ ॥

यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुनाजुहुविरे मुहुरात्मवर्ग्याः ॥ १५ ॥
सिक्ता इवामृतरसेन मुहुर्जनानां
क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ १६ ॥
यानाज्जनः परिजनैरवतार्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।

अप इति । अप्पे गतेन पुरः प्रयातेन रम्यां वसतिं निवासम् । वहिवसार्तिभ्यश्चेति वसेरौणादिकोऽतिप्रत्ययः । परिग्रह्यापतन्तीत्या-पत्याः स्वयमाक्रमितुमागच्छन्तः । अव्यगेयेत्यादिना कर्त्तरि यदन्तो निपातः । तेषां सैनिकानां निराकरणे निरसने आकुलेन व्यग्रेण उद्बाहुना उद्यतहस्तेन केनचिदिति शेषः अन्यतो यान्तो गच्छन्तः आत्मवर्ग्याः स्वयूथ्याः प्लुतान्त्रिमात्रिकं यथा तथा कृतः स्वरो नादः आह्वानं यस्मिन् कर्मणि तद्यथा तथा । दूराद्धूते चेति दूरादाह्वाने प्लुतविधानादिति भावः । आशु दूरान्मुहुराजुहुविरे आहूताः । ह्वयतेराङ्पूर्वात् कर्मणि लिट्, अभ्यस्तस्य चेति सम्प्रसारणे द्विर्वचन-मुवङादेशश्च ॥ १५ ॥

सिक्ता इति । अमृतरसेन सिक्ता इवेत्युत्प्रेक्षा मुहुर्जनानां क्लान्तिच्छिदः श्रमहराः कल्पद्रुमवदमृतसेकाभावादपि तद्वदाह्लादका इति भावः, शाखास्वयसक्तैर्लग्नैर्वसनैराभरणैश्चाभिरामा एकत्र सेना-स्थापितैरन्यत्र स्वप्रसूतैरिति भावः, वनवनस्पतयो वनवृक्षाः विचित्र-फलैर्वस्त्राभरणाद्यनेकफलयुक्तैः कल्पद्रुमैस्तत्रत्यैरिति शेषः सह तदानीं विरेजुः तद्वद्विरेजुरित्यर्थः । सहेति सादृश्ये । सह साकल्य-सादृश्ययौगपद्यसमृद्धिष्विति विश्वः । तथा चोपमालङ्कारः ॥ १६ ॥


यानादिति । परिजनैर्यानाद्वाहनादवतार्यमाणा अवरोध-

स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ १७ ॥

कण्ठावसक्तमृदुबाहुलतास्तुरङ्गा-
द्राजावरोधनवधूरवतारयन्तः ।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलीः शुचितया न चुचुम्बुरासाम् ॥ १८ ॥

दृष्ट्वेव निर्जितकलापभरामधस्तात्
व्याकीर्णमाल्यकबरां कबरीं तरुण्याः ।
प्रादुद्रवत् सपदि चन्द्रकवान् द्रुमाग्रात्
संहर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ १९ ॥

माणाः । लक्षेर्दर्शनात् कर्मणि लटः शानजादेशः, लक्षः णोऽन्यतरस्यामिति णकारः । नराणामालोकिजनानामपनयनेऽपसारे व्याकुलाः सौविदल्लाः कञ्चुकिनो यासान्ताः । सौविदल्लाः कञ्चुकिन इत्यमरः । स्रस्ता अवरोपणसंक्षोभादपसृता अवगुण्ठनपटा यासान्ताः अतएव क्षणं लक्ष्यमाणाः वक्त्रश्रियो यासान्ताः तथोक्ताः राज्ञीः राजस्त्रीः । पुंयोगादाख्यायामिति ङीप् । सभयकौतुकमीक्षते स्म । तास्पर्शनाद्भयं, कामात् कौतुकम् ॥ १७ ॥

कण्ठेति । तुरङ्गाद्राजावरोधनवधूः राज्ञामवरोधस्त्रीरवतारयन्तोऽवरोपयन्तोऽधिकृताः अन्तःपुराधिकारिणः कण्ठेषु स्वकीयेष्ववसक्ता मृदवो बाहुलतास्तदीया येषान्ते तथोक्ताः सन्तः स्फुटं व्यक्तमालिङ्गनान्यापुरेव अन्यथा दुरवरोहत्वाद् व्याजाच्चेति भावः । आसां वधूनां गण्डस्थलीः शुचितया स्वयं शुद्धवर्त्तित्वाद्गण्डानां नैर्मल्याच्च न चुचुम्बुः यावत्कर्त्तव्यकारिणः शुद्धात्मानो नातिचरन्तीति भावः, अन्यत्र ते पापाचाराः पापलिङ्गानि प्रकाशयन्तीति भावः ॥ १८ ॥

दृष्ट्वेति । अधस्तात्तरुतले निर्जितः कलापभरो बर्हभारो यया ताम् । कलापो भूषणे बर्हे इत्यमरः । व्याकीर्णेन विच्छिन्नेन माल्येन

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा
वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।
भूभर्तुरायतनिरन्तरसन्निविष्टाः
पादा इवाभिबभुरावलयो रथानाम् ॥ २० ॥
छायाविधायिभिरनुज्झितभूतिशोभै-
रुच्छ्रायिभिर्बहलपाटलधातुरागैः ।

कवरां सारम् । कवरः कर्बुरः सारः इति हलायुधः । तद्वत्याः कवरीं केशपाशम् । कवरी केशपाशोऽयेत्यमरः । जानपदेत्यादिना ङीप् । इष्टवेत्युत्प्रेक्षा । सपदि चन्द्रका अस्य सन्तीति चन्द्रकवान् मयूरः द्रुमाश्रयात् प्रादुद्रवत् प्रद्रुतवान् । द्रु गतौ लुङि णिश्रीत्यादिना चङ्, सचि स्रुधात्वित्यादिना उवङादेशः । तथाहि, संहर्षिणा मत्सरिणा कर्त्रा गुणाभ्यधिकैर्गुणोत्कृष्टैः सह दुरासमासितुमशक्यमित्यर्थः । आसेरकर्मकादीषद्दुःसुरित्यादिना खल्प्रत्ययः, तयोरेव कृत्यक्तखलार्था इति नियमात् । अत भयहेतुकस्य पलायनस्य कवरीदर्शनहेतुकत्वमुत्प्रेक्ष्य तत्समर्थनात्समर्थोऽयम् अर्थान्तरन्यासः कृत इत्यस्यानयाङ्गेन सङ्करः । न हि जितैर्जेतुरग्रे स्थातुमुचितमिति भावः ॥ १९ ॥

रोचिष्णुरिति । रोचिष्णवो रोचनशीलाः । अलङ्कृञित्यादिना इष्णुच्प्रत्ययः । तेषां काञ्चनचयानां कनकचयानामंशुभिः पिशङ्गिताः पिशङ्गीकृताः आशा याभिस्ताः वंशानां तत्सङ्घातकुलानां ध्वजैः प्रतिनियतकुलानामङ्कुशादिचिह्नितकेतुभिः अन्यत्र वंशा वेणवस्तैरेव ध्वजैर्जलदसंहतिं मेघसङ्घातमुल्लिखन्त्यः आयतन्दीर्घं निरन्तरैरच्छिद्रं सन्निविष्टाः संस्थिताः रथानामावलयः भूभर्तुरैवतकाद्रेः पादाः प्रत्यन्तपर्वता इवाभिबभुः भान्ति स्म । आशापि शङ्गीकरणादिक्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा ॥ २० ॥

छायेति । क्षितिभृतां राज्ञां निवसन्त्यत्रेति निवासाः निवासदेशाश्छायाविधायिभिः कान्तिकरैरनातपस्मादैस्र । छाया त्वनातपे

दूष्यैरिव क्षितिभृतां द्विरदैरुदार-
तारावलीविरचनैर्व्यरुचन्निवासाः ॥ २१ ॥
उत्क्षिप्तकाण्डपटकान्तरलीयमान-
मन्दानिलप्रशमितश्रमघर्मतोयैः ।
दूर्वाप्रतानसहजास्तरणेषु भेजे
निद्रासुखं वसनसद्मसु राजदारैः ॥ २२ ॥
प्रस्वेदवारिसविशेषविषक्तमङ्गे
कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती ।

कान्त्यामिति विश्वः । अनुज्झिता भूतीनां भस्मरचनानां सम्पदां च शोभा यैस्तैः । भूतिर्भस्मनि सम्पदीत्यमरः । उच्छ्रायिभिरुन्नमद्भिर्वंशैः सान्द्रः पाटल आरक्तधातुरागो गैरिकादिरञ्जनं येषान्तैः उदारा तारावलीनां शुद्धमुक्तावलीनां विरचना येषु तैः मुक्तासारभूषितैरित्यर्थः । तारा मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके इति विश्वः । दूष्यपक्षे तारावली रज्जुसन्ततिरिति केचित् द्विरदैर्दूष्यैः पटमण्डपैरिव । दूष्यं वस्त्रे च तद्गृहे इति विश्वः । व्यरुचन् रोचन्ते स्म । रुच दीप्तौ द्युद्भ्यो लुङीति परस्मैपदं पूषादीत्यादिना ल्ङोरङादेशः । अत्र द्विरदानां दूष्याणाञ्च प्रकृतत्वान्नोपमा नापि श्लेषभेदः विशेष्यस्य विशेषणानां च केषाञ्चिदश्लिष्टत्वात् तस्मात् केवलप्रकृतास्पदा तुल्ययोगितेयम् इवशब्दस्तु साहश्यमात्रानुवादक इति सङ्क्षेपः ॥२१॥

उत्क्षिप्तेति । उत्क्षिप्त उद्धृतो यः काण्डपट एव काण्डपटकः दूष्याधोवर्त्ति वायुसञ्चारार्थः पटः । अपटः काण्डपटी स्यादिति वैजयन्ती । तस्यान्तरेऽवकाशे लीयमानेन मन्दानिलेन प्रशमितं श्रमेणाध्वखेदेन यत् घर्मतोयं स्वेदाम्बु तद्येषान्तैः राजदारैः राजावरोधैः दूर्वाणां प्रतानं प्रचय एव सहजमकृत्रिममास्तरणं तल्पं येषु तेषु वसनसद्मसु पटमण्डपेषु निद्रासुखम्भेजे ॥ २२ ॥


प्रस्वेदेति । अङ्गे गात्रे प्रस्वेदवारिणा सविशेषं सातिशयं

आविर्भवद्घनपयोधरबाहुमूला

शातोदरी युवदृशां क्षणमुत्सवोऽभूत् ॥ २३ ॥

यावत्स एव समयः सममेव ताव-

दव्याकुलाः पटमयान्यभितो वितत्य ।

पर्य्यापतत्क्रयिकलोकमगण्यपण्य-

पूर्णापणा विपणिनो विपणीर्विभेजुः ॥ २४ ॥

अल्पप्रयोजनकृतोरुतरप्रयासै-

रुद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम् ।

यथा तथा विषक्तम् अतिश्लिष्टं कूर्पासकञ्चोलकं कञ्चुकमित्यर्थः। चोलः कूर्पासकोऽस्त्रियामित्यमरः। क्षतानि पुनर्विदोर्णानि नखक्षतानि यस्मिन् कर्मणि तद्यथा तथा उत्क्षिपन्ती उन्मोचयन्ती अतएवाविर्भवत् प्रकाशमानं घनपयोधरबाहुमूलं घनौ पयोधरौ बाहुमूले च यस्याः सा शातोदरी। नासिकोदरेत्यादिना ङीप्। युवदृशां क्षणमुत्सवोऽभूत्। एतेन यूनां त्वराचिन्तादिकरमिष्टवस्त्ववलोकननिमित्तकालाक्षमत्वजक्षणमौत्सुक्यं व्यज्यते। नायिकाभिसारिणी प्रगल्भा वा ॥ २३ ॥

यावदिति। विपणो व्यवहारः स एषामस्तीति विपणिनो वणिजो यावत् स एव समयः सेनानिवेशक्षण एव तावत्क्षण एव समं युगपत् अव्याकुलाः अव्यग्राः सन्तः पटमयानि पटविकाराणि पटमण्डपानीत्यर्थः अभितो वितत्य उभयतः श्रेण्या वितत्य विस्तार्य्य क्रयेण जीवतीति क्रयिकः। वस्तुक्रयविक्रयादिति ठक्। पर्य्यापतन् परितो धावन् क्रयिकलोकः क्रेतृजनो यस्मिन् कर्मणि तत् अगण्यैरसङ्ख्येयैः पण्यैः पण्यद्रव्यैः पूर्णा आपणाः पण्यप्रसारणस्थानानि यासु ताः विपणीः पण्यवीथीः। आपणस्तु निषद्यायां विपणिः पण्यवीथिकेत्यमरः। विभेजुरसङ्कीर्णन्निर्ममुरित्यर्थः। स्वभावोक्तिरनुप्रासौ ॥ २४ ॥

उद्यन्तमुद्द्रुतमनोकहजालमध्या-
दन्यः शशं गुणमनल्पमवन्नवाप ॥ २५ ॥
त्रासाकुलः परिपतन् परितो निकेतान्
पुम्भिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाना-
माकर्णपूर्णनयनेषु हतेक्षणश्रीः ॥ २६ ॥

अल्पेति । अल्पप्रयोजनेनाल्पफलेन निमित्तेन इतर उरुतरो भूयान् प्रयासो यैस्तैः अल्पस्यैकस्य शशपिण्डस्य भूयसामकिञ्चित्करत्वादिति भावः, उदूर्णाः उद्यताः लोष्टानि मृत्खण्डाः लगुडाश्च दण्डकाष्ठानि यैस्तैः पुम्भिरिति शेषः परितोऽनुविद्धमनुरुद्धम् अनसः शकटस्याकं गतिं घ्नन्तीत्यनोकहा वृक्षाः तेषाञ्जालमध्यादुद्यन्तमुत्थितम् । उत्पूर्वा-दितेः कर्त्तरि शतृ । उद्द्रुतमपलायितं शशं मृगविशेषम् अन्यः परः अवन् हन्तुर्निवार्य्य रक्षन् अनल्पं गुणं महान्तमुत्कर्षमवाप । दया-लोरनामिषलोलुपस्य सुकीर्त्तिः सुलभेति भावः । अत्रार्थान्तरश्लेषः, अन्यो गुणं पाशमवन् प्रयुञ्जानः शशमवाप जघान यो हन्ता तस्यैव मृग इति व्याधलक्षणादिति भावः ॥ २५ ॥

त्रासेति । त्रासाकुलो जनदर्शनाद्भयविह्वलोऽतएव निकेतान् निवेशान् परितः सर्वतः । अभितः परित इत्यादिना द्वितीया । परिपतन् धावन् मृगो हरिणः कैश्चिदपि धन्विभिर्धनुष्मद्भिः । धन्वी धनुष्मान् धानुष्क इत्यमरः । व्रीह्यादित्वादिनिरिति स्वामी । पुम्भिर्ना-न्वबन्धि नानुयातः । बध्नातेः कर्मणि लुङ् । तथाप्यङ्गनानामाकर्ण-पूर्णा विस्तीर्णा आकर्णाश्च ये नयनान्येव इषवस्तैर्हता ईक्षणश्रीर्यस्य सः अतः क्वचिदपि न तस्थौ किन्तु वीरविशिखापाताभावेऽप्यङ्गनापा-ङ्गविशिखपातात्पलायित एवेति भावः । अत्र जनालोकनोत्थभय-हेतुकस्य मृगानवस्थानस्याङ्गनापाङ्गेषु हतिहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगात् प्रतीयमाना । हेतोश्च हतेक्षणश्रीरिति विशेषण-गत्योक्तत्वात् काव्यलिङ्गमिति सङ्करः ॥ २६ ॥

आस्तीर्णतल्परचितावसथः क्षणेन
वेश्याजनः कृतनवप्रतिकर्मकाम्यः ।
खिन्नानखिन्नमतिरापततो मनुष्यान्
प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ २७ ॥

सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिविसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन् नगनिम्नगानाम् ॥ २८ ॥

आस्तीर्णेति । क्षणेनास्तीर्णतल्पं वेश्यावृत्तेः शय्याप्रधानत्वात् प्रागेव सज्जितशय्यं यथा तथा रचितावसथः कल्पितनिकेतः । स्यादावसथवास्तु चेति कोषः । कृतेन नवप्रतिकर्मणा नूतनेन प्रसाधनेन काम्यः स्पृहणीयः अखिन्नमतिरश्रान्तचित्तः अगणिताध्वखेद इत्यर्थः । वेश्याजनः खिन्नानध्वश्रान्तानापतत आगच्छतो मनुष्यान् पुरुषान् चिरनिविष्ट इव तत्रैव नित्यवास्तव्य इवेत्युत्प्रेक्षा उपचारैः शीताम्बुताम्बूलदानादिसत्कारैः प्रत्यग्रहीत् वशीचकारेत्यर्थः ॥ २७ ॥

सस्नुरिति । सेनायां समेताः सैन्याः सैनिकजनाः । सेनाया-श्चेति ण्यप्रत्ययः । नगनिम्नगानां याः श्रियः सम्पदः तासामनु-पभोगः उपभोगाभावः । क्वचित् प्रसज्य प्रतिषेधेऽपि नञ्समास इष्यते । यथाऽदर्शनमश्रवणमनुच्चारणम् अनुपलब्धिरभाव इत्यादि । तेन यन्निरर्थकत्वं निष्फलत्वं तदेव दोषः तेन यः प्रवादो निन्दा तम-मृजन् अमार्जन् । मृजूष् शुद्धौ अदादित्वाल्लङि शपो लुक्, मृजे-रजादौ क्ङिति विभाषावृद्धिर्वक्तव्येति विकल्पाद् वृद्ध्यभावः । मार्ज-नप्रकारमाह । सस्नुः स्नानञ्चक्रुः पयः पानीयं पपुः । ष्णा शौचे पा पाने लिट् । अम्बराण्यनेनिजुः अक्षालयन् । णिजिर शौचे जुहोत्यादित्वाल्लङि श्लाविति द्विर्भावः, णिजयस्त्रविदिभ्यश्चेति अभ्यासादेशः, णिजान्त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः । धृतानि

नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि ।
जग्मुर्जलानि जलमण्डुकवाद्यवल्गु-
वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ २९ ॥

आलोलपुष्करमुखोल्लसितैरभीक्ष्ण-
मुक्षाम्बभूवुरभितो वपुरम्बुवर्षैः ।
खेदायतश्वसितवेगनिरस्तमुग्ध-
मूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ३० ॥

विकाशिविसप्रसूनानि विकसितपुष्कराणि येषां ते । विसप्रसूनराजीव-पुष्कराम्भोरुहाणि चेत्यमरः । विसम्मृणालञ्चक्षुः भच्चयाञ्चक्रुः । घसेर्लिटि गमहनेत्यादिना उपधालोपे चुत्वं, शासिवसिघसीनां चेति षत्वम् । स्नानाद्युपभोगैर्नोन्नैरर्थ्यं निराचक्रुरित्यर्थः । अत्र दोष-मार्जनस्य स्नानादिनाकृतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स्नाना-दिक्रियासमुच्चयस्तदङ्गमस्तीति सङ्करः ॥ २८ ॥

नाभीति । स्त्रीणां नाभिभिरेव ह्रदैः परिगृहीतरयाणि प्रतिषिद्धवेगानि बृहद्भिर्जघनैरेव सेतुभिर्निवारितानि प्रतिहतगति-कानीत्यर्थः । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः । जलमेव मण्डूकवाद्यं वाद्यविशेषः जलसेकेन पाणिनोत्थापितमपरेण ताडितम्मण्डूकवत् स्वनतीति प्रसिद्धन्तेन वल्गु सुन्दरं वल्गद्भिश्चलैः घनैः स्तनतटैः स्खलितानि स्खलनङ्गतानि गमितानि वा जलानि पूर्वोक्तनगनिम्नगासलिलानि मन्दञ्जग्मुः । अत्र जलमन्दगमनस्य विशेषणगत्या रयप्रतिबन्धादिपदार्थहेतुकत्वात् काव्यलिङ्गम् ॥ २९ ॥

आलोलेति । हस्तिनां समूहा हास्तिकानि । अचित्तहस्तिधेनो-ष्ठक् । आलोलानि यानि पुष्कराणि हस्ताग्राणि । पुष्करं करि-हस्ताग्र इत्यमरः । तेषां मुखैरग्रैरुल्लसितानि उद्भिन्नानि तैरम्बु-

वर्षैः खेदेनाध्वश्रमेणायतेन द्राघीयसा श्वसितस्योच्छ्वासमारुतस्य वेगेन

ये पक्षिणः प्रथममम्बुनिधिङ्गतास्ते
येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।
ते जग्मुरद्रिपतयः सरसीर्विगाढु-
माक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ २१ ॥
आत्मानमेव जलधेः प्रतिबिम्बिताङ्ग-
मूर्मौ महत्यभिमुखापतितं गजेन ।

निरस्ताः बहिरुत्क्षिप्ताः ये मुख्याः सुन्दराः मूर्द्धन्याः मूर्द्धभिर्भवाः । शरीरावयवाच्चेति यत्प्रत्ययः, ये चाभावकर्मणोरिति प्रकृतिभावान्न-स्तद्धित इति टिलोपाभावः । रत्ननिकरा मुक्ताफलप्रकारास्तैरित्युत्-प्रेक्षा वपुरभीक्ष्णमुक्षाम्बभूवुः सिषिचुः । उक्ष सेचने इजादेश्च गुरु-मतोऽनृच्छ इत्याम्प्रत्ययः । गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भ-वङ्कवेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरीति गजानां मुक्ताकरत्वे प्रमाणम् ॥ २० ॥

य इति । ये पक्षिणः पक्षवन्त इन्द्रेणाच्छिन्नपक्षा इत्यर्थः । संसर्गे इनिप्रत्ययः । तेऽद्रिपतयो मैनाकादयः प्रथममम्बुनिधिङ्गताः प्रविष्टाः येऽपि ये ये इत्यर्थः इन्द्रस्य पाणिना तुलितेन प्रेरितेनायुधेन वज्रेण लूनपक्षाः छिन्नगरुतस्तेऽद्रिपतयः आक्षिप्ताः अपनीताः केतवो ध्वजाः कुथाः पृष्ठास्तरणानि च येषाम् । प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोरित्यमरः । तेषां सैन्यगजानां छलेन सरसीर्विगाढुं विगाहितुम् । स्वरतिसूतीति विकल्पादिडागमः । जग्मुः । अत्र गजच्छलेति छलशब्देन गजत्वमपह्नुत्याद्रित्वारोपणा-च्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । तेन पक्षवता-मद्रीणां सागरावगाहनदर्शनात् मत्सरात् स्वयमपि सलिलमवगाढु-माना: साक्षाल्लूनपक्षाः पर्वता इवेत्युत्प्रेक्षा व्यज्यते ॥ २१ ॥

आत्मानमिति । महेभो जलधेर्जलाशयस्य महत्यूर्मौ प्रतिबि-

म्बितमङ्गं यस्य तमभिमुखापतितमभिमुखमागतमात्मानमेव आत्मप्रति-

क्रोधाद्धावदपभीरभिहन्तुमन्य-
नागाभियुक्त इव युक्तमहो महेभः॥ ३२॥
नादातुमन्यकरिमुक्तमदाम्बुतिक्तं
धूताङ्कुशेन न विहातुमपीच्छताम्भः।
रुद्धे गजेन सरितः सरुषावतारे
रिक्तोदपात्रकरमास्त चिरं जनौघः॥ ३३॥
पन्थानमाशु विजहीहि पुरः स्तनौ ते
पश्यन् प्रतिद्विरदकुम्भविशङ्किचेताः।
स्तम्बेरमः परिणिनंसुरसावुपैति
षिड्गैरगद्यत ससम्भ्रममेव काचित्॥ ३४॥

यिस्वमेवेत्यर्थः निरीक्ष्यान्यनागेन प्रतिगजेनाभियुक्तोऽभिद्रुत इवाति-तूर्णमपभीर्निर्भीकः सन् क्रोधादधावत् अहो इति मौढ्येन विस्मयः तच्च युक्तं महेभस्येति भावः। अभियुक्त इवेत्युत्प्रेक्षायाः प्रतिगज-भ्रान्तिनिबन्धनत्वात् भ्रान्तिमदुत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः॥ ३२॥

नेति। अन्यकरिणा प्रतिगजेन मुक्तेन मदाम्बुना तिक्तं सुरभि। कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिता इति केशवः। अम्भ आदातुं ग्रहीतुं नेच्छता विहातुमुत्स्रष्टुमपि नेच्छता अनिच्छता क्रोधपिपासाभ्यामिति भावः। धूताङ्कुशेन सरुषा सक्रोधेन गजेन सरितोऽवतारे तीर्थे रुद्धे सति जनौघः रिक्तान्युदपात्राणि येषु ते करा यस्मिन् तद्यथा तथा चिरमास्त अतिष्ठत्। आस उप-वेशने लङ्। एकहलादौ पूरयितव्येऽन्यतरस्यामित्युदकशब्दस्योदा-देशः॥ ३३॥

पन्थानमिति। पन्थानमाशु विजहीहि। ओहाक् त्यागे लोटि हेर्धिरादेशः, आ च हाविति विकल्पादीकारादेशः। पुरोऽग्रे ते स्तनौ पश्यन् प्रतिद्विरदस्य कुम्भौ विशङ्कत इति तद्विशङ्कि चेतो यस्य सः कुम्भभ्रान्तिमानित्यर्थः। अतएव भ्रान्तिमदलङ्कारः। स्तम्बे

कीर्णं शनैरनुकपोलमनेकपानां
हस्तैर्विगाढमदतापरुजः शमाय।
आकर्णमुल्लसितमम्बु विकासिकाश-
नीकाशमाप समतां सितचामरस्य ॥ ३५ ॥

गण्डूषमुज्झितवता पयसः सरोषं
नागेन लब्धपरवारणमारुतेन।
अम्भोधिरोधसि पृथुप्रतिमानभाग-
रुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६ ॥

स्वे रमत इति स्तम्बेरमः। इभः स्तम्बेरमः पद्मीत्यमरः। स्तम्ब-कर्णयोरमिजपोरित्यच् प्रत्ययः। तत्पुरुषे कृति बहुलमित्यलुक्। परिरणन्तुं तिर्यक् प्रहर्तुमिच्छुः परिरिरणंसुः। नमेः सन्नन्तादुप्रत्ययः, एकाच उपदेशेऽनुदात्तादितीट् प्रतिषेधः। असावुपैति पुरेति पाठे पुरोपैतीत्यन्वयः उपैष्यतीत्यर्थः। यावत्पुरानिपातयोर्लडिति भविष्य-दर्थे लट्। पिङ्गैर्विटैः। पिङ्गः पल्लविको विट इति कोषः। काचिदेवमुक्तरीत्या ससम्भ्रमं सत्वरम् अगच्छत मदिता ॥ ३४ ॥

कीर्णमिति। अनेकपानां द्विपानां विगाढः प्रवृद्धो यो मदेन तापः स एव रुक् रोगः तस्याः रुजः शमाय शनैर्मन्दं हस्तैरनु-कपोलं कपोलयोः कीर्णं क्षिप्तम् आकर्णं कर्णपर्यन्तम्। आङ्मर्यादाभिविध्योरित्यव्ययीभावः। उल्लसितमुत्पतितं विकासि यत् काशकुसुमं तेन सदृशं काशनीकाशम्। नित्यसमासत्वादस्वपदविग्रहः। अतएव स्युरुत्तरपदे त्वमी। निभसङ्काशनीकाशप्रतीकाशोपमादय इत्य-मरः। अम्बु सितचामरस्य समतां सादृश्यमाप। तुल्यार्थैरित्यादिना षष्ठी। उपमालङ्कारः ॥ ३५ ॥

गण्डूषमिति। लब्धः परवारणस्य प्रतिगजस्य मारुतो मदगन्ध-वाहो येन तेन अतएव सरोषं यथा तथा पयसः पानीयस्य गण्डूषं मुखपूरणं मुखान्तर्गतं पय इत्यर्थः। गण्डूषो मुखपूरण इति हला-

दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ ३७ ॥
अन्तर्जलौघमवगाढवतः कपोलौ
हित्वा क्षणं विततपक्षतिरन्तरीक्षे ।

क्रुधः । द्विलिङ्गत्वेऽपि पुंलिङ्गमेवाह, वामनो लिङ्गाध्याहारावित्यत्र । उज्झितवता त्यक्तवता नागेन गजेन । मतङ्गजो गजो नाग इत्यमरः । अम्भोधिरोधसि सागरतीरे । दन्तयोरुभयोर्मध्यप्रतिमानमिति स्मृतम् । पृथुना प्रतिमानभागेन रुद्धः प्रतिबद्धः ऊरू दन्तौ मुसलाविव तयोः प्रसरः प्रसारो यस्मिन् कर्मणि तत् । ऊर्वोष्ठो मुसलोऽस्त्री स्यादित्यमरः । निपेते निपतितम् । भावे लिट् । क्रोधवेगादलब्धरोधाः प्रहृत्य पारवश्यात् स्वयञ्चाधोमुखः पपातेत्यर्थः । क्रोधान्धाः किन्न कुर्वन्तीति भावः ॥ ३६ ॥

दानमिति । दीयत इति दानं धनं मदश्च । दानं गजमदे त्याग इति विश्वः । तद्ददति वितरत्यपि दातर्यपीत्यर्थः । सहसा अकस्मात् । स्वरादित्वादव्ययमिति शाकटायनः । जलैर्जडैर्नीरैश्च । जलं गोकलले नीरे ह्रीबेरे च जडोऽन्यवदिति विश्वः । अधिरूढे आक्रान्ते सति विद्यमानगतिः गत्यन्तरवान् समर्थश्च कः पुमानासितुमत्र स्थातुमुत्सहेत न कोऽपीत्यर्थः । शकधृषेत्यादिना तुमुन् । यस्मात् मिमङ्क्षोर्मङ्क्तुमिच्छोः । मज्जेः सन्नन्तादुप्रत्ययः । दन्तिनः कटो गण्डः स कटाहः खर्पर इव । कटाहः खर्परस्तुष इति वैजयन्ती । तस्य तटात्प्रदेशादलीनां पटलैः परितो मङ्क्षु द्राक् । द्राक् मङ्क्षु सपदि द्रुतमित्यमरः । उदपाति उत्पतितम् । भावे लुङ्, चिण् भावकर्मणोरिति चिण् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

अन्तरिति । जलौघे अन्तर्जलौघम् । विभक्त्यर्थेऽव्ययीभावः

द्रव्याश्रयेष्वपि गुणेषु रराज नीलो
वर्णः पृथग्गत इवालिगणो गजस्य ॥ ३८ ॥
संसर्पिभिः पयसि गैरिकरेणुरागै-
रम्भोजगर्भरजसाङ्गनिषङ्गिणा च।
क्रीड़ोपभोगमनुभूय सरिन्महेभा-
वन्योन्यवस्त्रपरिवर्त्तमिव व्यधत्ताम् ॥ ३९ ॥
याश्चन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः।

अथवा जलौघस्नुलपूरमन्तरभ्यन्तरे अवगाढ़वतः प्रविष्टवतः। गाहे-र्निष्ठान्तवतुप्रत्ययः ढत्वष्टुत्वढलोपाः। गजस्य कपोलौ हित्वा चपमन्त-रीक्षे उपर्याकाशे विततपक्षतिर्विस्तृतपक्षमूलः आमूलात् विततपक्ष इत्यर्थः। स्त्री पक्षतिः पक्षमूलमित्यमरः। पक्षात्तिरिति तिप्रत्ययः। अलिगणो गुणेषु रूपादिषु द्रव्यमाश्रयो येषान्तेषु द्रव्याश्रयेषु अपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वाञ्च द्रव्याधीनसत्ताकेषु सत्स्वपीत्यर्थः। पृथग्गतः जलमज्जनभयात् स्वाश्रयपरिहारेण स्थितो नीलो वर्णो नीलरूपञ्जजस्य नीलिमेव रराज। गुणे शुक्लादयः पुंसीत्यमरः। अत्रालिगणे सादृश्याद्गजनीलत्वाश्रयादन्यत उपलक्षिनिर्वाहाय पृथक् स्थितिविशिष्टत्वमुत्प्रेक्ष्यते ॥ ३८ ॥

संसर्पिभिरिति। सरिञ्च महेभश्च सरिन्महेभौ पयसि संसर्पिभिः गजात्सरिज्जले विसृत्वरैः गैरिकरेणव एव रागास्तैः। करणे घञ्। अङ्गनिषङ्गिणा गजाङ्गसङ्गिना अम्भोजगर्भरजसा पद्मान्तःपरागेण च निमित्तेन क्रीड़या लीलया उपभोगं सम्भोगमनुभूयान्योन्यस्मियो-वस्त्रयोः परिवर्त्तं विनिमयं व्यधत्तामकुरुतामिव। दधातेर्लङि परस्मै-पदे तसस्तामादेशः। अत्र सरिन्महेभयोः प्रतीयमाननायिकादेरभेदा-ध्यवसायेन वस्त्रविनिमयोत्प्रेक्षा ॥ ३९ ॥

यामिति। गजेन्द्राः विकसतः समन्तात्पयसि तैलविन्दुवत् प्रस-

ताम्प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्त्रैः ॥ ४० ॥
प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न-
निर्याणनिर्यदसृजं चलितं निषादी ।
रोद्धुम्महेभमपरिढ्ढिमानसागा-
दाक्रान्तितो न वशमेति महान् परस्य ॥ ४१ ॥
सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।

रतो मदजलस्य चन्द्रकैश्चन्द्राकारैर्मण्डलैर्महानदीनां यान्नेतच्चिर्त्त विदधुः चक्रुस्तां नेत्रप्रियमुत्तरन्तो जलान्निर्गच्छन्तो धौतेषु क्षालिते-ष्वङ्गेषु लग्नैः सक्तैर्नवनीलपयोजपत्त्रैर्नवनीलोत्पलदलैरविलम्बितङ्क्षिप्र-मेव प्रत्यवापुः प्रतिभेजिरे । अत्र गजानां नदीनां च समनेत्रप्रीतिवि नि-मयोक्त्या समपरिवृत्तिरलङ्कारः । समन्यूनाधिकानाञ्च यदा विनिमयो भवेत् । साकं समाधिकन्यूनैः परिवृत्तिरसौ मतेति लक्षणात् ॥ ४० ॥

प्रतीति । अन्यदन्तिनम्प्रति प्रत्यन्यदन्ति प्रतिगजाभिमुखमित्यर्थः । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । चलितं धावन्तम् अतएव निशितेनाङ्कुशेन दूरङ्गाढं यथा तथा भिन्नं यत् निर्याणमपाङ्गदेशः । अपाङ्गदेशो निर्याणमित्यमरः । तस्मान्निर्यत् निःसरदसृक् यस्य तं महेभं रोद्धुं ग्रहीतुन्निषादी यन्ता परिवृंहते प्रभवतीति परिवृढः प्रभुः । वृहतेर्वृंहेर्वा कर्त्तरि क्तप्रत्यये प्रभौ परिवृढ इति नकार-हकारयोर्लोपः निष्ठातकारस्य ढत्वञ्च निपात्यते अन्यथा ढलोपस्य सर्वत्रासिद्धेरिष्ठनादिषु रऋतो हलादेर्लघोरिति रेफादेशो न स्यात् तस्मादिमनिचि रेफादेशे परिव्रढिमा ततो नञ्समासः । तमपरिव्रढि-मानमसामर्थ्यमागात्प्राप । इणो गा लुङीति गादेशः । तथाहि, महान् बलवान् आक्रान्तितो बलात्कारात्परस्य वशन्नैति । सामा-न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४१ ॥

नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते॥ ४२॥

अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाष-
सङ्क्रान्तदानपयसो वनपादपस्य।
सेनागजेन मथितस्य निजप्रसूनैः
सस्ने यथागतमगामि कुलैरलीनाम्॥ ४३॥

नोच्चैर्यदा तरुतलेषु ममुस्तदानी-
माधोरणैरभिहिताः पृथुमूलशाखाः।

सेव्य इति। यन्त्रा निषादिना आकलनाय बन्धनाय सानुनयं ससान्त्वं नीतेन समीपमापितेन गजेन वन्यगजदानैः कृतोऽधिवासो वासना यस्य सः तद्गन्धीत्यर्थः शाखी वृक्षः। व्रीह्यादित्वात् णिनिः। सेव्योऽपि सन्नाभाजि नासेवि। भज सेवायां कर्मणि लुङि चिणो लुगुपधावृद्धिश्च। किन्तु केवलमभाज्यभञ्जीत्यर्थः। भञ्जि आमर्दने भञ्जेश्चिणीति विभाषानलोपः शेषं पूर्ववत्। तथाहि, मानभृतोऽहङ्कारिणोऽन्यस्य गन्धमपि न सहन्ते परं किमुतेति भावः। अतो वृक्षभञ्जनं युक्तमेवेत्यर्थः। पूर्ववदलङ्कारः॥ ४२॥

अद्रीन्द्रेति। अद्रीन्द्रस्य रैवतकस्य कुञ्जेषु चरति यस्तस्य कुञ्जचरस्य कुञ्जरस्य गण्डकाषेण कपोलकषणेन संक्रान्तं दानपयो मदाम्बु यस्य तस्मात् एव सेनागजेन मथितस्य भग्नस्य वनपादपस्य निजैरात्मीयैः प्रसूनैः पुष्पैः। निजमात्मीयनित्ययोरिति वैजयन्ती। सस्ने स्नानम्। स्नायतेर्भावे लिट्। अलीनां कुलैस्तु यथागतमगामि गतम्, आगतक्रमेणैव गतं न तु स्नानमित्यर्थः। आपद्यात्मीयानात्मीययोर्भेद इति भावः। गमेर्गत्यर्थत्वादकर्मकत्वविवक्षया भावे लुङ्। इभवनपादपादीनां विशेषणसाम्यादापन्नाद्यौपम्यप्रतीतेः कथञ्चित्समासोक्तिरूह्या॥ ४३॥

नेति। इभा यदा उच्चैरुन्नतेषु तरुतलेषु न ममुर्नावर्त्तन्त तदानीम्

बन्धाय चिच्छिदुरिभास्तरसात्मनैव
नैवात्मनीनमथवा क्रियते मदान्धैः ॥ ४४ ॥
उष्णोष्णशीकरसृजः प्रबलोष्मणोऽन्त-
रुत्फुल्लनीलनलिनोदरतुल्यभासः ।
एकान् विशालशिरसो हरिचन्दनेषु
नागान् बबन्धुरपरान्मनुजा निरासुः ॥ ४५ ॥
कण्डूयतः कटभुवं करिणो मदेन
स्कन्धं सुगन्धिमनुलीनवता नगस्य ।

स्थाणोरश्वैर्नियन्तृभिरभिहिताः इमांश्छिन्त्युपदिष्टाः पृथुमूलशाखाः बन्धाय स्वबन्धनायैव तरसा बलेनात्मना स्वयमेव चिच्छिदुः न चैतद्युक्तमिति भावः। यद्वा मूढानां युक्तमेवेत्याह, अथवेति। अथवा मदान्धैरात्मनीनमात्मने हितं न क्रियत एव। आत्मन्विश्वजनभोगोत्तरपदात् ख इति खप्रत्ययः, आत्माध्वानौ खे इति प्रकृतिभावान्नस्तद्धित इति टिलोपो न। पूर्ववदर्थान्तरन्यासः ॥ ४४ ॥

उष्णोष्णेति। मनुजा नरा उष्णोष्णा उष्णप्रकाराः। प्रकारे गुणवचनस्येति द्विर्वचनं कर्मधारयवत्सुपो लुक्। तान् शीकरान् सृजन्ति मुञ्चन्तीति तथोक्तान्। क्विप्। अन्तः प्रबलोष्मणः प्रवृद्धतापान् उत्फुल्लं विकचम्। उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानमित्युपसर्गेऽपि फुलेर्निष्ठात्वम्। तस्य नीलनलिनस्य नीलोत्पलस्योदरेण तुल्यभासः समानकान्तीन् कृष्णवर्णानित्यर्थः विशालशिरसो विपुलमस्तकान् एकान् कतिचिन्नागान् गजानित्यर्थः हरिचन्दनेषु चन्दनविशेषेषु। तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियामित्यमरः। बबन्धुः अपरान्नागान्नहीनित्यर्थः। दुष्टाश्चाहिगजा नागा इत्युभयत्रापि वैजयन्ती। निरासुः निष्कासयामासुः। अस्यतेर्लिट्। अतोभयेषामपि नागानां प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ४५ ॥

कण्डूयत इति। कटभुवङ्कण्डूस्वङ्कण्डूयतः कषतः। कण्डू-

स्थूलेन्द्रनीलशकलावलिकोमलेन
कण्ठे गुणत्वमलिनां वलयेन भेजे ॥ ४६ ॥

निर्धूतवीतमपि बालकमुच्छलन्तं
यन्ता क्रमेण परिसान्त्वनतर्जनाभिः ।
शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ॥ ४७ ॥

ड्भ्यो यक्, ततः शतृप्रत्ययः । कण्डूयतेर्ञिद्धातुप्रकृतित्वादुभयपदित्वम् । कारणो मदेन सुगन्धि शोभनगन्धम् । गन्धस्येत्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः । नगस्य वृक्षस्य स्कन्धं प्रकाण्डम् अनुलीनवता तत्र संश्लिष्टेनेत्यर्थः । लीयतेर्निष्ठेति क्तवतुप्रत्ययः, ल्वादिभ्य इति निष्ठानत्वम् । स्थूलानामिन्द्रनीलशकलानाम् आवलिवत् कोमलेन मनोहरेणालिनां वलयेन कण्ठे गुणत्वं कण्ठवलयत्वम् । मूर्द्धमस्तकात् स्वाङ्गादकाम इत्यलुक् । भेजे प्राप्तम् । कर्मणि लिट् । अत्रालिवलये इन्द्रनीलमयकण्ठभूषणत्वारोपाद्रूपकालङ्कारः ॥ ४६ ॥

निर्धूतेति । यन्ता निषादी निर्धूतं निरस्तं वीतं पादघाताङ्कुशवारणं यस्मिन् कर्मणि तद्यथा तथा उच्छलन्तमुत्प्लवमानमपि । पादकर्म यतं प्रोक्तं यतमङ्कुशवारणम् । उभयं वीतमाख्यातमिति हलायुधः । बालकमप्रञ्चवर्षगजम् । पञ्चवर्षो गजो बालः पोतस्तु दशवार्षिक इति वैजयन्ती । शिक्षावशेन स्वकीयेन गजशास्त्राभ्यासबलेन क्रमेण परिपाट्या परिसान्त्वनान्युपलालनानि तर्जना भर्त्सनाश्च ताभिः शनैरेव शनकैः । अव्ययसर्वनाम्नामकच् प्राक् टेरिति स्वार्थेऽकच्प्रत्ययः । वशं शान्तिमानिनाय । तथाहि, सुष्ठु निश्चितार्था धीरेषान्ते शास्त्रं शासित्यर्थः शास्त्रं क्व सिद्धिं नैति स्वभ्यस्तं शास्त्रं सर्वत्र फलतीत्यर्थः । विभक्तधना भ्रातरो विभक्ता इतिवद्विनिश्चितार्था धीर्निश्चितेत्युपचर्यते अतएवात्र गम्यमानार्थत्वादुत्तरपदस्याप्रयोगलक्षणो लोप इत्याहुः ॥ ४७ ॥

स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सरसाग्रहस्तः ।
बद्धापराणि परितो निगडान्यलावीत्
स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ ४८ ॥

जघ्ने जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः ।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥ ४९ ॥

स्तम्भमिति । करेणुश्चासौ राजा च करेणुराजो गजश्रेष्ठः करेणूनां राजेति गजपतिः राजा च ध्वन्यते । उभयत्रापि राजाहःसखिभ्य इति टच् । उज्ज्वलमुच्छ्रङ्खलं स्वातन्त्र्यं स्वेच्छाचारित्वमवाप । तदेवाह, उचितश्चिरपरिचितं महान्तं स्तम्भमालानं जाड्यञ्च सहसा मुमोच । स्तम्भः स्थूणाजड़त्वयोरिति विश्वः । सरसः आर्द्रोऽग्रहस्तः पुष्करस्याणिश्च यस्य स सन् दानमदन्दीयत इति दानं धनञ्चातितरामतिमात्रम् । अव्ययादामुप्रत्ययः । ददौ ववर्षेत्यर्थः । परितो बद्धापराणि बद्धपश्चिमपादानि बद्धान्यानि च । अपरः पश्चिमः पाद इति गजप्रकरणे वैजयन्ती । निगडानि शृङ्खलानि । अथ शृङ्खले अन्दुको निगडोऽस्त्रियामित्यमरः । अलावीत् लुनाति स्म । लूञ् छेदने लुङ् अस्तिसिचोऽपृक्ते इतीट्, इट ईटीति सलोपः । अत्र करेणुराजपादसाधर्म्यध्वनिः विशेष्यस्यापि श्लिष्टत्वाच्च श्लेष इत्युक्तम् ॥ ४८ ॥

जघ्न इति । गम्भीरमान्द्यं वेत्तीति गम्भीरवेदी । त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि । आत्मानं यो न जानाति तस्य गम्भीरवेदितेति राजपुत्रीये । चिरकालेन यो वेत्ति शिक्षाम्परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिरिति मृगचर्मीये । तस्मिन् गम्भीरवेदिनि करीन्द्रे संरब्धः कुपितः हस्तिनं पातीति हस्तिपः स

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम् ॥ ५० ॥

दुःखेन भोजयितुमाशयिता शशाक
तुङ्गाग्रकायमनमन्तमनादरेण ।
उत्क्षिप्तहस्ततलदत्तविधानपिण्ड-
स्नेहस्नुतिस्नपितबाहुरिभाधिराजम् ॥ ५१ ॥

एव हस्तिपको निषादी । आधोरणा हस्तिपका हस्त्यारोहा निषा-दिन इत्यमरः । तस्य निष्ठुराभिश्चोदनाभिस्तर्जनाभिरपि सङ्कुचिताक्षं निमीलितनेत्रं यथा तथा पुरः कवलं ग्रासम् अनाददाने सति । मन्दो मूढोऽपि । मूढाल्पापटुनिर्भाग्या इत्यमरः । गजभेदोऽपि । भद्रो मन्दो मृगश्चैव विज्ञेयास्त्रिविधा गजा इति । महान् बलाधि-कोऽवग्रहो निग्रहो साध्यो न नाम न खल्विति जनैर्जज्ञे ज्ञातम् । जानातेः कर्मणि लिट् । मन्दोऽपीत्यादिवाक्यार्थः कर्म ॥ ४९ ॥

क्षिप्तमिति । वारणपतिः करिवरो स्तब्धः पुरः क्षिप्तमग्रे न्यस्तमिक्षुकाण्डमिक्षुदण्डं न जगृहे न स्वीचकार निकटोपगतां समीपस्थां करेणुं करिणीञ्च नापेक्षते स्म नेच्छति स्म । लट् स्म इति भूतार्थे लट् । किन्तु परिमीलिताक्षं यथा तथेति स्वत्यनुभावः इच्छया विहारा येषु ते वनवासा एव महोत्सवास्तेषां सस्मार तानेव चिन्तयामासेत्यर्थः । अधीगर्थदयेशाङ्कर्मणीति शेषत्वविवक्षायां षष्ठी । न स्वच्छन्दचारिणां निर्बन्धे भोगेषु मनः प्रवर्त्तत इति भावः । वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ॥ ५० ॥

दुःखेनेति । उत्क्षिप्ते उद्यते हस्ततले दत्तो निहितो यः विधा-नस्य गजग्रासस्य पिण्डः । विधानं हस्तिकवल इति वैजयन्ती । तस्य स्नेहस्नुत्या घृतादिनिःस्यन्देन स्नपितबाहुराप्लुतभुजः । स्नातेर्ण्यं-

शुक्लांशुकोपरचितानि निरन्तराभि-
र्वेश्मानि रश्मिविततानि नराधिपानाम् ।
चन्द्राकृतीनि गजमण्डलिकाभिरुच्चै-
र्नीलाभ्रपङ्क्तिपरिवेशमिवाधिजग्मुः ॥ ५२ ॥

गत्यूनमार्गगतयोऽपि गतोरुमार्गाः
स्वैरं समाचकमिरे भुवि वेल्लनाय ।
दर्पोदयोल्लसितफेनजलानुसार-
संलक्ष्यपल्ययनवध्रपदास्तुरङ्गाः ॥ ५३ ॥

न्तात् कर्मणि क्तः, अर्त्तिह्रीत्यादिना पुगागमः, मित्त्वाद्ध्रस्वः । व्याश-यिता भोजयिता । अशेर्ण्यन्तात्तृच् । तद्व्यापकार्यं स्वभावत एवोर्ध्व-कायम् अनादरेणानमन्तं कवलग्रहणाय नतिमकुर्वाणमिभाधिराजम् । गतिबुद्धीत्यादिना अणिकर्त्तुर्णौ कर्मत्वम् । दुःखेन कृच्छ्रेण भोज-यितुं शक्यः स्वभावोच्चतानानतत्वाग्रहङ्कारग्रस्तानां को नमयितेति भावः ॥ ५१ ॥

शुक्लेति । शुक्लांशुकैः शुक्लपटैः उपरचितानि उपकल्पितानि अन्यत्र तु अल्पाः अंशवोऽंशुकाः सूक्ष्मास्तेजोऽवयवाः । अल्पा इत्यल्पार्थे कन्प्रत्ययः । शुक्लैस्तैरुपचितानि व्याप्तानि रश्मिभिः प्रग्रहैः किरणैश्च विततानि विस्तृतानि । किरणप्रग्रहौ रश्मी इत्यमरः । चन्द्रस्येवाकृतिर्येषान्तानि चन्द्राकृतीनि चन्द्रमण्डलनिभानीत्यर्थः नरा-धिपानां वेश्मानि दूष्याणि निरन्तराभिर्नीरन्ध्राभिरुच्चैर्गजमण्डलिका-भिर्गजपरिधिभिः । स्वार्थे कप्रत्ययः, कात्पूर्वस्येकारः । नीलाभ्र-पङ्क्तिभिः परिवेशम्परिधिम्परिवेष्टनमिति यावत् । परिवेशस्तु परिधि-रित्यमरः । अधिजग्मुरित्युत्प्रेक्षा ॥ ५२ ॥

गत्यूनेति । गत्यूना विशिष्टगमनहीना मार्गगतयोऽध्वगमनानि येषान्ते तथापि गतोरुमार्गाः प्रस्थितदूराध्वान इति विरोधः । अपिर्विरोधे गत्यूना मार्गा मृगसम्बन्धिनी गतिर्येषां त इति विरोध-

आजिघ्रति प्रणतमूर्द्धनि वाह्लिजेऽश्वे
तस्याङ्गसङ्गमसुखानुभुवोत्सुकायाः ।
नासाविरोकपवनोल्लसितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥ ५४ ॥

परिहारः । अतएव विरोधाभासोऽलङ्कारः । दर्पस्य तेजसोऽन्तःसारस्योदयेनौत्कट्येनोल्लसितस्योद्धतस्य फेनजलस्य फेनीभूतोद्धतस्वेदोदकस्यानुसारेण संलग्नानि पल्ययनचर्माणामासनवस्त्रचर्मवरत्राणां पदानि तत्चोदनाच्चिह्नीभूतस्थलानि येषान्ते तथोक्ताः । तुरङ्गाः भुवि वेल्लनायाङ्गपरिवर्त्तनाय स्वैरं मन्दं समाचक्रमिरे समाक्रष्टाः अध्वश्रमापनोदनार्थमिति भावः । वर्द्धते दृढबन्धनाद्दीर्घीभवतीति वर्द्धं वृद्धिवपिभ्यां रन्नित्यौणादिके रन्प्रत्यये लघूपधगुणोरपरः । वर्ध्रं त्रपुवरत्रयोरिति विश्वः । अमरस्तु नध्री वध्री वरत्रा स्यादित्याह । तदा वृन्नित्यौणादिके वृन्प्रत्यये पूर्ववत् गुणोरपरः प्रत्ययतकारस्य झषस्तथोर्धोऽध इति धत्वे षित्त्वात् स्त्रीलिङ्गे ङीष् ॥ ५३ ॥

आजिघ्रतीति । वाह्लिरश्वयो निर्देशविशेषः तज्जे वाह्लिजेऽश्वे वाह्लिदेश्ये इति पाठे विशेष्याप्रयोगो गम्यमानत्वादित्युक्तम् । गर्गादिभ्यो यञिति भवार्थे यञ्प्रत्ययः । तदन्तविधिस्तु मृग्यः । प्रणतमूर्द्धनि नम्रशिरसि कृतप्रणामे च आजिघ्रति गन्धं गृह्णाति चुम्बति च सति स्वभावात् कामाच्चेति भावः । नासाविरोकं नासारन्ध्रं तस्य पवनो निश्वासः तेनोल्लसितमुद्धूतं तनीयस्तनुतरं रजस्तस्याश्वस्याङ्गसङ्गेन वेल्लनप्रयुक्तेन यत् सुखं तस्यानुभवे उत्सुकायाः उत्कण्ठितायाः पृथिव्याः रोमाञ्चतां जगामेवेत्युत्प्रेक्षा । सा च भूतुरङ्गमयोः प्रतीयमानचेतननायकाद्यभेदाध्यवसायादित्यवधेयम् । विरोचतेऽनेनेति विरोकम् । घञ्प्रत्ययः, चजोः कु घिण्यतोरिति कुत्वं, लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति नपुंसकत्वाविरोधः । अतएव छिद्रं निर्व्यथनं रोकमित्यमरः । रोको रश्मौ विले न पुंसिति वैजयन्ती । रोको दीप्तौ विले रोकमिति विश्वः । ये तु कैनाथ्यमिप्रायेण विरेकपवनेति

हैम्नः स्थलीषु परितः परिवृत्य वाजी
धुन्वन् वपुः प्रविततायतकेशपङ्क्तिः ।
ज्वालाकणारुणरुचा निकरेण रेणोः
शेषेण तेजस इवोल्लसता रराज ॥ ५५ ॥

दन्तालिकाधरणनिश्चलपाणियुग्म-
मर्द्धोदितो हरिरिवोदयशैलमूर्ध्नः ।
स्तोकेन नाक्रमत वल्लभपालमुच्चैः
श्रीवृक्षको पुरुषकोन्नमिताग्रकायः ॥ ५६ ॥

पठन्ति तेषां परोत्सर्गैकजीविनाशितिवद्पानीयपवनप्रतीतेरश्लीलाख्यो दोषः, अश्लीलं तदमङ्गल्यजुगुप्साव्रीडधीकरमिति लक्षणात् ॥ ५४ ॥

हैम्न इति । हैम्नः स्थलीषु स्वर्णभूमिषु । जानपदेत्यादिना अकृत्रिमार्थे ङीष् प्रत्ययः । परितः परिवृत्य परिवृत्तिं कृत्वा वपुर्धुन्वन् धूलिनिर्गमाय कम्पयन् अतएव प्रवितता विश्लिष्टा आयता च केश-पङ्क्तिः रोमसङ्घातो यस्य स वाजी ज्वालाकणाः स्फुलिङ्गाः तद्वदरुण-रुचा रक्तवर्णेन रेणोर्निकरेण उल्लसता अत्युत्कटतया बहिरुद्गच्छता तेजसोऽन्तःसारस्य दर्पस्य शेषेणातिरेकेणेव रराज । उत्प्रेक्षाल-ङ्कारः ॥ ५५ ॥

दन्तालिकेति । पुरुषकोऽश्वानां स्थानकभेदः । तदुक्तम्, पश्चिमेना-ग्रपादेन भुवि स्थित्वाग्रपादयोः । ऊर्ध्वप्रेरणया स्थानमश्वानां पुरुषः स्मृत इति । पुरुष एव पुरुषकः तेन पुरुषकेण स्थानकेनोन्नमित ऊर्ध्वा-वस्थितोऽग्रकायः पूर्वकायो यस्य स तथोक्तः अतएवोदयशैलस्य मूर्ध्नो मस्तकादर्द्धमुदितोऽर्द्धोदितः हरिः सूर्य्य इव स्थित इत्यर्थः अर्द्धोदित-विशेषणात् उच्चैरुन्नतः श्रीवृक्ष एव श्रीवृक्षकः आवर्त विशेषस्तद्वा-नश्वः श्रीवृक्षकी । वक्षोभवावर्त चतुष्टयञ्च कण्ठे भवेद्यस्य च रोच-मानः । श्रीवृक्षकी नाम हयः स भर्तुः श्रीपुत्रपौत्रादिविवृद्धये स्यादिति लक्षणात् । श्रीवृक्षकी वक्षसि भवेदावर्तो मुखेऽपि चेति तु वैजयन्ती ।

रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्त्ति-
र्देवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः ।
श्रीसन्निधानरमणीयतरोऽश्व उच्चै-
रुच्चैःश्रवा जलनिधेरिव जातमात्रः ॥ ५७ ॥
अश्रावि भूमिपतिभिः क्षणवीतनिद्रै-
रश्नन् पुरो हरितकं मुदमादधानः ।

दन्तालिका मुखरज्जुः । मुखरज्जुश्च दन्तालौ राणिका रश्मीति चेति वैजयन्ती । तस्याधरणे ग्रहणे निश्चलं स्थिरम्पाणियुग्मं यस्य तं पाणिभ्यां दृढं गृहीतोभयवल्गमित्यर्थः । वल्लभपालमुत्तमाश्वपालम् । वल्लभो दयितेऽध्यक्षे कुलीनेऽश्वेऽपि वल्लभ इति विश्वः । स्तोकेन नाक्रमत वल्गाग्रहणदार्ढ्यात् स्तोकेनापि अभिभवितुम् शक्तोऽभूदित्यर्थः । इह क्षपयितुं क्षणमक्षमताङ्गना न इन्दुःखमिह किञ्चिदित्यादिवदुपर्यर्थस्य सामर्थ्यलब्धत्वादपेरप्रयोगः । अन्यथा स्तोकेन नाक्रमत किन्तु भूय इति व्याख्याने निश्चलपाणियुग्मत्वादिविशेषणावगतवाहकौशल्यप्रकाशनतात्पर्यभङ्गप्रसङ्गात् । करणे च स्तोकेत्यादिना विकल्पात् तृतीया, अनुपसर्गाद्वेति विकल्पादात्मनेपदम् । उपमालङ्कारः ॥ ५६ ॥

रेज इति । स्नपनेनाभिषेचनेन सान्द्रतरार्द्रमूर्त्तिः अनिमिषदृष्टिभिः विस्मयादनिमिषाक्षैर्जनैर्देवैरिव तादृग्भिरीक्ष्यमाणः श्रियः शोभायाः देव्याश्च सन्निधानेन रमणीयतरः । तत्र सन्निहिता लक्ष्मीः सन्ति यत्नोत्तमा हया इत्यागमादिति भावः । उच्चैरुन्नतोऽश्वो जलनिधेः समुद्राज्जात एव जातमात्रः सद्यो जात इत्यर्थः । अन्ययोन्नसाधर्म्याल्लक्ष्यत्वादिति भावः । मात्रं कार्त्स्न्येऽवधारण इत्यमरः । उच्चैरुन्नतं श्रवः कीर्त्तिरुच्यते श्रवसी कर्णौ वा यस्य सः उच्चैःश्रवाः शक्राश्व इव रेजे । उपमालङ्कारः ॥ ५७ ॥

अश्रावीति । पुरोऽग्रे हरितकं हरितदृणमश्नन् अतएव श्रीवायां लोलाः चलाः किङ्किणीकाः क्षुद्रघण्टिकाः तासां

ग्रीवाग्रलोलकलकिङ्किणिकानिनाद-
मिश्रं दधद्दशनचुर्चुरशब्दमश्वः ॥ ५८ ॥

उत्खाय दर्पचलितेन सहैव रज्ज्वा
कीलं प्रयत्नपरमानवदुर्ग्रहेण ।
आकुल्यकारि कटकस्तुरगेण तूर्ण-
मश्वेति विद्रुतमनुद्रवताश्वमन्यम् ॥ ५९ ॥

अव्याकुलं प्रकृतमुत्तरधेयकर्म-
धाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।

निनादेन मिश्रं दशनानां दन्तानां चुर्चुरशब्दं चुर्चुरध्वनिं दधत् अत एव मुदमादधान उत्पादयन्नश्वः । जातावेकवचनम् । अश्वेन वीतनिद्रैः । अल्पनिद्रोऽल्पभुग्वाग्मी मितभाष्यनसूयकः इति सौभाग्यलक्षणादिति भावः । भूमिपतिभिरश्रावि श्रुतः अश्वस्य शब्दोऽश्रावीत्यर्थः । वीणाः श्रूयन्ते भेर्यः श्रूयन्त इत्यादिवत् शब्दधर्मः शब्दिन्युपचर्यते । स्वभावोक्तिरलङ्कारः ॥ ५८ ॥

उत्खायेति । दर्पाच्चलितेनोच्चलितेन अतएव रज्ज्वा पाशेन सह कीलं शङ्कुम् । शङ्कावपि द्वयोः कीलेत्यमरः । उत्खाय उत्पाट्य तूर्णं विद्रुतं धावन्तम् अन्यमश्वम् अश्वेत्यनुद्रवता वडवेति भ्रान्त्यानुधावता प्रयत्नपरैर्ग्रहीतुं प्रयतमानैरपि मानवैर्मनुष्यैर्दुर्ग्रहेण तुरङ्गेण कटकः शिबिरमाकुल्यकारि आकुलीकृतः । आकुलशब्दादभूततद्भावे च्विः अस्य च्वाविती कारः । करोतेः कर्मणि लुङि चिणो लुक् ॥ ५९ ॥

अव्याकुलमिति । वल्गा मुखरज्जुः सा चोत्क्षिप्तादिभेदेन चतुर्दशविधा । तदुक्तं हयलीलावत्याम् । उत्क्षिप्ता शिथिला तथोत्तरवती मन्दा च वैहायसी विक्षिप्तैककरार्द्धकम्परसमोत्कीर्णा विभक्ता तथा । अप्युत्क्षिप्तलोद्धृते खलु तथा व्यागूढगोकर्णिके वाहानां कथिताश्चतुर्दशविधा वल्गाप्रभेदा अमीति । तल्लक्षणानि तु तत्रैव

स्फिढं मुखे नवसु वीथिषु कश्चिदश्वं
वल्गाविभागकुशलो गमयाम्बभूव ॥ ६० ॥

दूष्टव्यानि विस्तरभयान्न लिख्यन्ते । तस्या विभागो विविच्य प्रयोगः तत्र कुशलो वल्गाविभागकुशल इति षड्विधप्रेरणाभिज्ञ इत्यर्थः वल्गापदस्य रागाद्युपलक्षणत्वात् । यथाह भोजः । वाहनं प्रतिवाहानां षड्विधम्प्रेरणं विदुः । रामावल्गाकषापार्ष्णि प्रतोदरवभेदत इति । कश्चित् कश्चन वाहकः अव्याकुलं ससम्भ्रमन्त्वस्तमिति यावत् प्रकर्षेण कृतं प्रकृतं सज्जितमित्यर्थः । मुखे मुखकर्मणि स्फिढं स्फिढिमन्तमश्वं चतुष्काख्ये गतिविशेषे मुखे संस्थानविशेषादिविशेषणविशिष्टमश्वमित्यर्थः । तदुक्तं रैवतोत्तरे । स्रक्काधरोष्ठसितफेनलवाभिरामफूत्कारवायुपदसुन्नतकन्धराग्रम् । नीत्वोपकुञ्चितमुखं नवलोहसास्यमश्वञ्चतुष्कसमये मुखसिद्धमाहुः । उत्तरधेयकर्म युद्धाद्युत्तरकाले धेयं विधेयं प्रयोज्यं यत् कर्म क्रिया तद्रूपा इत्यर्थः । अव्यतिकीर्णरूपा असङ्कीर्णरूपा धारा गतिभेदाः । अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा । आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतमिति वैजयन्ती । गतयोऽमूः पञ्चधारा इत्यमरश्च । अश्वशास्त्रे तु तन्त्रान्तरेणोक्ताः । गतिः पुला चतुष्का च तद्वन्मध्यजवापरा । पूर्णवेगा तथा चान्या पञ्चधाराः प्रकीर्त्तिताः । एकैका त्रिविधा धारा हयशिक्षाविधौ मता । लघ्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमादिति । तथाच पञ्चदशविभेदा भवन्ति ताः पञ्च धाराः प्रसाधयितुं परिवेतुं नवसु वीथिषु सञ्चारस्थानेषु गमयाम्बभूव । वीथयो नवाश्वानां सर्वत्र धारादार्ढ्यार्थाः परिमिताः प्रचारदेशाः तास्च तिस्र इत्येके नवेत्यन्ये तत्रोत्तरपक्षमाश्रित्योक्तं कविना नवस्विति । यथाह भोजः । वीथ्यस्तिस्रोऽथ धाराणां लघ्वी मध्योत्तमाः क्रमात् । तासां स्यादङ्कुषां मानमशीतिर्नवतिः शतम् । श्रेष्ठमध्योत्तमानान्तु वाजिनां वीथिकाः स्मृताः । नवानां कथिता वीथ्यो दुष्टानां क्रमशक्रमे । अन्येषामपि सर्वत्र गतिदार्ढ्यार्थमीरिताः । समोन्नता सा विषमाम्बु-

मुक्तास्तृणानि परितः कटकं चरन्त-
स्तुत्यद्वितानतनिकाव्यतिषङ्गभाजः ।
सस्रुः सरोषपरिचारकवार्यमाणा
दामाञ्चलस्खलितलोलपदं तुरङ्गाः ॥ ६१ ॥
उत्तीर्णभारलघुनाप्यलघूलपौघ-
सौहित्यनिःसहतरेण तरोरधस्तात् ।
रोमन्यमन्थरचलद्गुरुसास्नमासा-
ञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥ ६२ ॥

जीर्णा शुक्ला नताग्रा तृणयोरुदाद्या । स्याच्चुप्रकीर्णोपलसम्प्रकीर्णा पार्श्वोन्नताख्या नवधेति वीथ्यः । सर्ववीथिषु यो वाजी दृढशिक्षा-समन्वितः । तेन राजा रणे नित्यं मृगयायां मुदं व्रजेदिति । अन्ये तु उरसाल्याद्यो गतिविशेषा वीथय इत्याहुः । उरसाजी वरश्वाजी पृथुलो मध्यनामकः । आलीढः शोभनैरङ्गैः प्रत्यालीढस्तथापरः । उपशेनव उक्तं च पादचालो च सर्वगः । निर्दिष्टा वीथयस्त्वेता इति ॥ ६० ॥

मुक्ता इति । मुक्ता विहारार्थमुत्सृष्टा अतएव कटकं शिबिर-म्परितः । अभितः परित इत्यादिना द्वितीया । तृणानि चरन्तो भक्षयन्तः तुद्यन्तीषु छिद्यमानासु वितानतनिकासु पटमण्डपरज्जुषु व्यति-षङ्गं सङ्गम्भजन्तीति तथोक्ताः । अतएव सरोषैः परिचारकैः किङ्करैर्वार्यमाणाः अपसार्यमाणाः तुरगा दामाञ्चलानि पादपाशाः । दामाञ्चलम्पादपाश इति वैजयन्ती । दुष्यवरत्राबन्धनशङ्कव इति केचित् । तेषु स्खलितेन लोलानि पदानि यस्मिन् कर्मणि तद्व यथा तथा सस्रुरपसस्रुः ॥ ६१ ॥

उत्तीर्णेति । उत्तीर्णभारमवरोपितावपनम् अतएव लघुः तेन तथोक्तेन तथाप्यलघुना उलपानां बल्लजतृणानाम् ओघेन यत् सौहित्यम्पूर्तिः । पर्याप्तमुपसम्पन्नं पूर्तिः सौहित्यमुच्यत इति हला॰

स्तम्भखण्डशेखरितकोटिभिरर्धचन्द्र-
शृङ्गैः शिखाग्रगतलक्ष्ममलं हसद्भिः।
उच्छृङ्गितान्यवृषभाः सरितां नदन्तो
रोधांसि धीरमवचस्करिरे महोक्षाः॥ ६२॥
मेदस्विनः सरभसोपगतानभीकान्
भङ्क्त्वा परानन्डुहो मुहुराहवेन।

युधः। तेन निःसहतरेणात्यन्तमसहतरेण वाह्यभारावतारेऽप्यन्तर-गुरुभोजनाद् गुरुभवतेत्यर्थः। सहेः निःपूर्वात् पचाद्यजन्तात्तरप्-प्रत्ययः। उलपा वल्वजाः प्रोक्ता इति विश्वः। औचकेण उल्णां समूहेन। गोत्रोक्षेत्यादिना वुञ्प्रत्ययः। तरोरधस्तात्तस्तले रोमन्थः पम्नूनाञ्चर्वितचर्वणन्तेन मन्थरम्मन्दञ्चलन्त्यो गुर्व्यः सास्ना गलकम्ब-लानि यस्मिन् कर्मणि तद् यथा तथा। सास्ना तु गलकम्बल इत्यमरः। किञ्च निमीलन्ति सुखान्मुकुलीभवन्ति चक्षूंषि नेत्राणि यस्मिन् कर्मणि तद् यथा तथा आसाञ्चक्रे आसितम्। आस उप-वेशने भावे लिट्। दयायासश्चेत्याम्प्रत्ययः। कृञ्चानुप्रयुज्यते लिटीति कृञोऽनुप्रयोगः। इतः प्रभृत्याचतुष्टयात् स्वभावोक्तिः॥ ६२॥

स्तम्भखण्डेति। स्तम्भखण्डैर्वप्रक्रीडाभग्नैर्मृत्खण्डैः शेखरिताः सञ्जातशेखराः कोटयोऽग्राणि येषान्तैरतएव शिखाग्रगतमुभयकोट्य-न्तर्गतं लक्ष्म मलं यस्य स एवम्भूतं यतमर्धचन्द्रं हसद्भिरित्यतिशयो-क्तिभेद इत्युक्तम्। अभूतोपमेति मतान्तरम्। शृङ्गैर्विषाणैरु-च्छृङ्गा उत्पतितशृङ्गाः कृता उच्छृङ्गिताः अन्यवृषभाः प्रतिवृषभा यैस्ते अतएव धीरं गम्भीरं नदन्तो गर्जन्तः महान्त उक्षाणो महोक्षाः। अचतुरेत्यादिना निपातात् साधुः। सरितां रोधांसि अवचस्करिरे आलिलिखुः हर्षाद् रुरुजुरित्यर्थः। अवपूर्वात् किरतेः कर्त्तरि लिट्, किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यमित्यात्मनेपदम्, ऋच्छत्यृ-तामिति गुणः, अवाच्चतुष्पाच्छकुनिष्वालेखने इति सुडागमः॥ ६२॥

मेदस्विन इति। कर्त्ता बलमस्यास्तीति तेन कर्जस्वलेन बलिना।

ऊर्जस्वलेन सुरभीरनु निःसपत्नं
जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ॥ ६४ ॥
बिभ्राणमायतिमतीमवथा शिरोधिं
प्रत्यग्रतामतिरसामधिकं दधन्ति ।
लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणा-
मभ्रंलिहानि लिलिहे नवपल्लवानि ॥ ६५ ॥
सार्धं कथञ्चिदुचितैः पिचुमर्दपत्रै-

ज्योत्स्नातमिस्रेत्यादिना निपातः । उक्ष्णा वृषभेण मेदस्विनो मांसलान् । अस्मायामेधास्रजो विनिः । अतएव समरं सत्वरमुपगतान् अभिकामयन्त इत्यभीकान् कामुकान् । कम्रः कामयिताऽभीक इत्यमरः । अनुकाभिकाभीकः कमितेति निपातः । परानडुहो बलीवर्दान् हुङ्काराढ्येन युद्धेन भङ्क्त्वा निर्जित्य जयेनोद्धुर-निर्भरे । ऋक्पूरित्यादिना समासान्तः । विशाले च विषाणे यस्मिन् कर्मणि तद्यथा तथा निःसपत्नमप्रतिपक्षं सुरभीरनु गवां पृष्ठतः । कर्मप्रवचनीययुक्ते द्वितीया । जग्मे गतम् । भावे लिट् ॥ ६४ ॥

बिभ्राणमिति । आयतिमतीं दैर्घ्यवतीं न च तथा दैर्घ्यमित्याह, अवथेति । उच्चैस्तरपल्लवग्रहणात् सफलामित्यर्थः शिरो धीयतेऽस्यामिति शिरोधिं ग्रीवाम् । शिरोधिः कन्धरेत्यपीत्यमरः । कर्मण्यधिकरणे चेति किप्रत्ययः । बिभ्राणन्दधानम् उदग्रमुखं पल्लवग्रहणार्थमूर्ध्वीकृतमुखमौष्ट्रकमुष्ट्रसमूहः । गोत्रोक्षेत्यादिना वुञ् । अतिशयितो रसः स्वादो यासान्तानतिरसाः प्रत्यग्रतामभिनवत्वं दधन्ति दधति । वा नपुंसकस्येति वैकल्पिको नुमागमः । अभ्रं लिहन्तीति अभ्रंलिहान्युन्नतराणि । वहाभ्रे लिह इति खश्प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः । तरूणां नवपल्लवानि । पल्लवोऽस्त्री किसलयमित्यमरः । लोलौष्ठं यथा तथा ओत्वोष्ठयोः समासे वेति पररूपं वक्तव्यम् । लिलिहे आस्वादयामास जघासेत्यर्थः ॥ ६५ ॥

रास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकः सपदि संवलितं निषादै-
र्विप्रं पुरा पतगराडिव निर्जगार ॥ ६६ ॥

स्पष्टं बहिः स्थितवतेऽपि निवेदयन्त-
श्चेष्टाविशेषमनुजीविजनाय राज्ञाम् ।
वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥ ६७ ॥

उन्नम्रताम्रपटमण्डपमण्डितन्त-
न्नानीलनागकुलसङ्कुलमाबभासे ।
सन्ध्यांशुभिन्नघनकर्बुरितान्तरीक्ष-
लक्ष्मीविडम्बि शिबिरं शिवकीर्तनस्य ॥ ६८ ॥

सार्द्धमिति । उचितैरभ्यस्तैः । अभ्यस्तोऽप्युचितं न्याय्यमिति यादवः । पिचुमर्दपत्रैर्निम्बदलैः सार्द्धम् । पिचुमर्दश्च निम्ब इत्यमरः । कथञ्चित्प्रमादादास्यान्तरालगतं मुखान्तर्गतं म्रदीयो मृदुतरमाम्रदलं चूतपल्लवं दासेरक उष्ट्रः पुरा निषादैः म्लेच्छैः संवलितं विप्रम्पतगराट् गरुत्मानिव निर्जगार उद्गीर्णवान् । पुरा किल कुतश्चित् कारणात् म्लेच्छभक्षणे तैः सहान्तः प्रविष्टं गलं दहन्तं विप्रं गरुड़ उज्जगारेति पौराणिकी कथात्रानुसन्धेया ॥ ६६ ॥

स्पष्टमिति । बहिः स्थितवतेऽपि अनुजीविजनाय राज्ञोऽवसरकाङ्क्षिण इति भावः । राज्ञां चेष्टाविशेषं तत्कालोचितचरित्रविशेषं स्पष्टं निवेदयन्तः तद्व्यञ्जकप्रबन्धपाठैरिति भावः । कलगिरो मधुरवाचो वैतालिका मङ्गलपाठकाः अवसरेषु तत्तद्वेलासु स्फुटैः प्रसिद्धैः पदैः प्रकटः प्रकाशोऽर्थोऽभिधेयं यस्मिन् कर्मणि तद् यथा तथा उच्चैः भोगावलीः प्रबन्धान् पेठुः पठन्ति स्म । अत एकाहन्मध्येनादेशादेर्लिटीत्येत्वाभ्यासलोपौ ॥ ६७ ॥

उन्नम्रेति । उन्नम्रैरुन्नतैस्ताम्रैः धातुरक्तैः पटमण्डपैर्दूष्यै-

धरस्योद्धर्त्तासि त्वमिति ननु सर्वत्र जगति
प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः ।
उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ
बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ ६९ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
पञ्चमः सर्गः ॥ ५ ॥

---

मण्डितम् च्चा समन्तान्नीलैर्नागकुलैर्गजसङ्घैः सङ्कुलम् अतएव सन्ध्यांशुभिन्नैः सन्ध्यारागलिप्तैर्घनैर्मेघैः कर्बुरितस्य चित्रीकृतस्यान्तरीक्षस्य लक्ष्मीं विडम्बयत्यनुकरोतीति तत्तथोक्तं शिवकीर्त्तनस्य सङ्कलकीर्त्तेः कृष्णस्य तच्छिबिरं कटकमावभासे मनोहरमभूदित्यर्थः । उपमालङ्कारः ॥ ६८ ॥

धरस्येति । बलैः सैन्यैराक्रान्तो गिरिपतीरैवतकः क्रीडद्भिर्विहरमाणैर्द्विरदैर्मथितानां भग्नानामुर्वीरुहाणां वृक्षाणां रवैः शब्दैर्निमित्तेन श्रीपतिं हरिम् । नन्वङ्ग त्वं धरस्य पर्वतस्योद्धर्त्ता उद्धारकोऽसीति सर्वत्र जगति प्रतीतः प्रसिद्धः गोवर्द्धनोद्धरणादिति भावः । तर्हि किं किमर्थम् अतिभरमतिभारवन्तं मामधः प्रापिपयिषुः प्रापयितुमिच्छुरसि । प्रापयतेः सन्नन्तादुप्रत्ययः । इत्युच्चैरुपालब्धेव आक्रुश्यदिवेत्युत्प्रेक्षा । उपाङ्पूर्वाल्लभेर्लुङ्, एकाच उपदेश इति नेट्, झषस्तथोर्धोध इति तकारस्य धकारः, धि चेति सिचः सकारलोपः । शिखरिणी वृत्तम् । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात् ॥ ६९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
पञ्चमः सर्गः ॥ ५ ॥

# षष्ठः सर्गः ।

अथ रिरंसुममुं युगपद्गिरौ
कृतयथास्वतरुप्रसवश्रिया ।
ऋतुगणेन निषेवितुमादधे
भुवि पदं विपदन्तकृतं सताम् ॥ १ ॥
नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम् ।

अथ ऋतुवर्णनमस्तौति, अथेति । अथ सेनानिवेशानन्तरं गिरौ रैवतके रिरंसुं रन्तुमिच्छुम् । रमेः सन्नन्तादुप्रत्ययः । एतेन ऋतुवर्णनप्रवृत्तेः प्रभुचित्तवृत्तिज्ञानपूर्वकत्वमुक्तम् । सतां साधूनां विपदामन्तं करोतीति विपदन्तकृत् । क्विप् । तं विपदन्तकृतं सेव्यमिति भावः । अमुं हरिं निषेवितुं स्वतरून् स्वस्वनियतवृक्षान् अनतिक्रम्य यथास्वतरु । यथार्थेऽव्ययीभावः । यथास्वतरुस्थिता प्रसवश्रीः पुष्पफलसम्पत्तिः यथास्वतरुप्रसवश्रीः । प्रसवस्तु फले पुष्पे इत्यमरः । शाकपार्थिवादिषु द्रष्टव्यः । सा कृता येन तेन कृतयथास्वतरुप्रसवश्रिया यथास्वतरुकृतप्रसवश्रियेत्यर्थः ऋतुगणेन युगपद् भुवि पदमादधे आहितं युगपदृतुगणः प्रादुरभूदित्यर्थः । नह्यवसरं सेवकाः क्षिपन्तीति भावः । अत्र सर्गे सर्वत्र यमकशब्दालङ्कारः । तल्लक्षणं तूक्तं चतुर्थे । अर्थालङ्कारस्तु यथासम्भवमूह्यः । अस्मिन् सर्गे द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह, नभौ भराविति लक्षणात् ॥ १ ॥

अथ लोकवेदयोः प्राथम्येन व्यवहाराद् वसन्तमादौ वर्णयति,

मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥ २ ॥
विलुलितालकसंहतिरामृषन्
मृगदृशां श्रमवारि ललाटजम् ।
तनुतरङ्गततिं सरसां दलत्-
कुवलयं वलयन्मरुदाववौ ॥ ३ ॥
तुलयति स्म विलोचनतारकाः
कुरवकस्तवकव्यतिषङ्गिणि ।

नवेति । स हरिः पुरोऽग्रे प्रथमं वा नवपलाशानि नूतनपर्णानि पलाशवनानि किंशुककाननानि यस्मिंस्तं नवपलाशपलाशवनम् । बहु-व्रीहिपूर्वपदो बहुव्रीहिः । पलाशः किंशुके पत्रे पलाशमिति विश्वः । स्फुटानि विकचानि परागै रजोभिः परागतानि व्याप्तानि च पङ्क-जानि यस्मिन् तं स्फुटपरागपरागतपङ्कजं मृदुलाः कोमलाः अतएव तान्ताः आतपसमये किञ्चित् म्लानाः लतान्ताः पल्लवा यस्मिन् तं मृदुलतान्तलतान्तं सुमनोभरैः पुष्पसमृद्धिभिः सुरभिं सुगन्धिं सुरभिं वसन्तमलोकयदपश्यत् । सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च वाच्यवदिति विश्वः । इह प्रतिपादं प्रथमा-क्षरद्वयात्परतोऽक्षरत्रयावृत्तिरूपयमकप्रक्रमाच्चतुर्थपादेऽपि तदेव यम-कम् । एकस्मादप्यपरमिति सजातीयसंसृष्टिः ॥ २ ॥

विलुलितेति । विलुलितालकसंहतिर्विधुतचिकुरनिकरः सन् मृगदृशां ललाटजं श्रमवारि स्वेदमामृषन् परिमृजन् मन्द इति भावः । सरसां तनुतरङ्गततिं दलन्ति विकसन्ति कुवलयानि यस्मिन् कर्मणि तद् यथा तथा वलयन् चालयन् शीतल इति भावः । मरुद्वसन्तवायुराववौ आवाति स्म ॥ ३ ॥

तुलयतीति । कुरवकस्तवके व्यतिषङ्गिणि लग्ने अतएव गुणवतः शुक्लगुणस्य कुरवकस्तवकस्याश्रयेणाश्रयणेन लब्धो गुणोदयो निजनी-

शुचवदाश्रयलब्धगुणोदये
मलिनिमालिनि माधवयोषिताम् ॥ ४ ॥
स्फुटमिवोज्ज्वलकाञ्चनकान्तिभि-
र्युतमशोकमशोभत चम्पकैः।
विरहिणां हृदयस्य भिदाभृतः
कपिशितं पिशितं मदनाग्निना ॥ ५ ॥
स्मरहुताशनमुर्मुरचूर्णतां
दधुरिवाम्रवणस्य रजःकणाः।
निपतिताः परितः पथिकव्रजा-
नुपरि ते परितेपुरतो भृशम् ॥ ६ ॥

लब्धगुणोत्कर्षो येन तस्मिन् षट्पदे नीलस्य स्फुरणादिति भावः॥ अलिनि भ्रमरे मलिनस्य भावो मलिनिमा कृष्णत्वं माधवयोषितां हरिवधूनां विलोचनानां तारकाः कनीनिकाः। तारकाक्ष्णः कनीनिकेत्यमरः। तुलयति स्म समीचकार तद्वद्बभावित्यर्थः। तुलाशब्दात् सदृशपर्य्यायात्तत्करोतीति ण्यन्ताल्लट् स्म इति भूते लट्। उपमालङ्कारः॥ ४॥

स्फुटमिति। उज्ज्वलकाञ्चनकान्तिभिः शुभ्रसुवर्णप्रभैश्चम्पकैर्युतं चम्पकसमूहमध्यगतमित्यर्थः स्फुटं विकचमशोकपुष्पं भिदा भेदः। षिद्भिदादिभ्योऽङ्। तां बिभर्त्ति यत्तस्य भिदाभृतो भिन्नस्य विरहिणां हृदयस्य हृदयपिण्डस्य सम्बन्धि मदनाग्निना कपिशितं कपिशीकृतं पिशितं मांसमिवाशोभतेत्युत्प्रेक्षा॥ ५॥

स्मरेति। आम्रवणस्य चूतवनस्य। आम्रश्चूतरसालश्चेत्यमरः। प्रनिरन्तःशरेत्यादिना वननकारस्य णत्वम्। रजःकणाः परागचूर्णाः स्मरहुताशनः कामाग्निः स एव मुर्मुरस्तुषाग्निः। मुर्मुरस्तु तुषानल इति वैजयन्ती। तस्य चूर्णतां दधुरिवेत्युत्प्रेक्षा। अतो मुर्मुरचूर्णत्वादेव परित उपरि निपतिताः ते रजःकणाः पन्थानं गच्छन्तीति

रतिपतिप्रहितेव कृतक्रुधः
प्रियतमेषु वधूरनुनायिका ।
बकुलपुष्परसासवपेशल-
ध्वनिरगान्निरगान्मधुपावलिः ॥ ७ ॥

प्रियसखीसदृशं प्रतिबोधिताः
किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सर-
च्छिदुरयादुरयाचितमङ्गनाः ॥ ८ ॥

मधुकरैरपवादकरैरिव

पथिकाः । पथः कन्निति कन्प्रत्ययः । तेषां व्रजान् भृशमस्मरितेषुः स्मरितापयामासुः । अतो मुर्मुरचूर्णत्वोत्प्रेक्षणमिति भावः ॥ ६ ॥

रतिपतीति । प्रियतमेषु विषये कृतक्रुधः कृतरुषः । प्रतिघा रुट्क्रुधौ स्त्रियामित्यमरः । वधूरनुनायिका: कुपितस्त्रीरनुनेष्यन्ती । तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति भविष्यदर्थे ण्वुल्प्रत्ययः, अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधाद् वधूरिति द्वितीया । रतिपतिना कामेन प्रहिता प्रेषितेव तद्वाणीश्रवणानन्तरमेव तासां कोपत्यागदर्शनादियमुत्प्रेक्षा । बकुलपुष्पाणां रसो मकरन्दः स एवा- सवस्तेन तत्पानेन पेशलध्वनिर्मधुरस्वरा मधुपावलिः कर्त्री न गच्छ- तीत्यगाद् इच्छान्निरगान्निर्गता । इणो गा लुङीति गादेशः ॥ ७ ॥

प्रियसखीति । गुरोर्महतो मत्सरस्य द्वेषस्य छिदुरया छेत्त्र्या । विदिभिदिच्छिदेः कुरच् । काम्यगिरा ग्राह्यवाचा परपुष्टया कोकिलया प्रियसख्या सदृशं यथा तथा किमपि परैर्दुर्बोधं रहस्यं हितं प्रति- बोधिता उपदिष्टा अङ्गनाः प्रियतमाय अयाचितम् अप्रार्थितमेव वपुर्निजाङ्गमदुरर्पयामासुः । ददातेर्लुङि गातिस्थेत्यादिना सिचो लुक् । कोकिलाकूजितश्रवणानन्तरमेवाङ्गार्पणादौत्सुक्यहेतुकार्यान्तरङ्गयेव तया किमपि बोधिता इत्युत्प्रेक्षा ॥ ८ ॥

स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादिनी-
स्वरजिता रजिता वशमाययुः ॥ ९ ॥

समभिसृत्य रसादवलम्बितः
प्रमदया कुसुमावचिचीषया ।
अविनमन्न रराज वृथोच्चकै-
रनृतया नृतया वनपादपः ॥ १० ॥

मधुकरैरिति । मधुकरैः कर्तृभिः अपवादं मृगवञ्चनाय घण्टादिकुत्सितवाद्यं कुर्वन्तीत्यपवादकराः व्याधास्तैरिव पथिकाः हरिणा इव परिवादिनीस्वरजिता वीणाविशेषध्वनिजयिन्या । सप्तभिः परिवादिनीत्यमरः । जेः क्विपि तुक् । वचसो गीतस्य कलतया माधुर्येण करणेन रजिता आकृष्टाः सन्त इत्यर्थः । रञ्जेर्ण्यन्तात् कर्मणि क्तः, रञ्जयतौ मृगरमण इति उपधानकारलोपः । इहोपमानमृगसादृश्यादौपचारिकं मृगत्वम् उपमेयेषु पथिकेष्वस्तीत्यविरोधः स्मृतिभुवः स्मरस्य मृगपातचिन्ताविषयत्वान्मृगग्रहणगर्त्तदेशस्य च वशमाययुः यथा व्याधगानाकृष्टा गर्त्ते मृगाः पतन्ति तद्वन्मधुकरझङ्काराकृष्टाः पान्थाः स्मरपारवश्यमभजुरित्यर्थः । अनेकैवेयमुपमा ॥ ९ ॥

समभिसृत्येति । प्रमदया कर्त्र्या कुसुमानामवचिचीषयावचेतुमिच्छया रिरंसयेति भावः । चिनोतेः सन्नन्तादप्रत्ययादिति स्त्रियामकारप्रत्ययः, विभाषा चेरिति विकल्पात् कुत्वाभावः । रसाद्रागात् समभिसृत्य समागत्यावलम्बितो हस्तेन गृहीतस्तथाप्यविनमन् वशमगच्छन् अतएव वृथोच्चकैर्व्यर्थमुन्नतो वनपादपः न तु नागरिक इति भावः न ऋतेत्यनृता असत्या तया अनृतया पुंभावे नृता तया नृतया पुंस्त्वेन रराज । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नर इत्यमरः । यः कान्ताकरगृहीतोऽपि न द्रवति स नपुंसक एव लौकिकस्तु पुंस्त्वव्यपदेशो मिथ्यैवेति भावः ॥ १० ॥

इदमपास्य विरागि परागिणी-
रलिकदम्बकमम्बुरुहान्ततीः ।
स्तनभरेण जितस्तवकानम-
न्नवलते वलतेऽभिमुखं तव ॥ ११ ॥
सुरभिनिःश्वसिते दधतस्तृषं
नवसुधामधुरे च तवाधरे ।
अलमलेरिव गन्धरसावमू
मम न सौमनसौ मनसो मुदे ॥ १२ ॥

अथ कश्चित् स्वयंग्रहाश्लेषसुखार्थं प्रियामलिपातेन भीषयन् त्रिभिः कुलकेनाह, इदमित्यादि । स्तनभरेण साधनेन जिताभ्यां स्तवकाभ्यामानमन्ती नवलता यया सा तथोक्ता तस्याः सम्बुद्धिर्जित॰ स्तवकानमन्नवलते स्तवकानमन्नवलतोपमे इत्यर्थः । अतएवेदं विरागि विरक्तिमदलिकदम्बकं परागिणीः परागवतीरिति विरक्तिहेतूक्तिः अम्बुरुहान्ततीरपास्य तवाभिमुखं वलते चलति विशिष्टलताभ्रमादिति भावः । तथाच भ्रान्तिमदलङ्कारो व्यज्यते ॥ ११ ॥

अथालेस्तदभिमुखागमनेन कारणमाह, सुरभीति । तव सुरभिनिःश्वसिते निःश्वासमारुते नवसुधावन्मधुरे अधरे च तृषं तृष्णां दधतो दधानस्यालेर्भ्रमरस्य ममेवामू उपलभ्यमानौ सुमनसां पुष्पाणां सम्बन्धिनौ सौमनसौ गन्धरसौ सौरभमाधुर्ये मनसोऽन्तःकरणस्य मुदे नालं न पर्याप्तौ अतस्त्वद्वदनरसगन्धलोभादागच्छतीत्यर्थः । नमः स्वस्तीत्यादिना चतुर्थी । अत्र कान्ताकर्तृकस्वयंग्रहाश्लेषसुखार्थिनः प्रियस्य तद्भयहेतोरलेरेवागमनहेतुत्वेनात्र दृष्टान्तेन सुखसौरभरसलोभकुसुमवैराग्ययोर्वर्णयितुमौचित्याद्यमकानुसारेण विप्रकृष्टेनापि ममशब्देनेवशब्दस्यान्वयः वलतेऽभिमुखन्तव अलिभयादिव सस्वज इत्युपक्रमोपसंहाराभ्यामलेः प्रकृतत्वेनोपमेयत्वावगमात् । अन्यथा मध्ये तद्वैमु-ख्ये तद्विरोधाद्विलम्ब[illegible] अत्रोपमानुप्रासयमका-

इति गदन्तमनन्तरमङ्गना
भुजयुगोन्नमनोच्चतरस्तनी ।
प्रणयिनं रभसादुदरश्रिया
वलिभयालिभयादिव सस्वजे ॥ १३ ॥

वदनसौरभलोभपरिभ्रमद्-
भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखला-
कलकलोऽलकलोलदृशान्यया ॥ १४ ॥

नान्तावद्विजातीयानां संसृष्टिः स्पष्टैव तथा यमकानां त्रयाणां चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यान्त्रिभ्यश्च परतोऽक्षरत्रयादृत्तिलक्षणानां स्थितत्वात् सजातीयसंसृष्टिश्चेष्टा ॥ १२ ॥

इतीति । इतीत्यङ्गदन्तं प्रणयिनम् अनन्तरं भुजयुगस्योन्नमनेनोच्चतरावत्युन्नतौ स्तनौ यस्याः सा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीष् । वलिभया वलयो विद्यन्ते यस्यास्तया वलिमत्या । तुन्दिवलिवटेर्भ इति भप्रत्ययः । उदरश्रिया मध्यशोभया उपलक्षिता अङ्गना अलिभयादिव रभसात् सस्वजे आलिलिङ्ग । वस्तुतस्तु रागादेवेति भावः । ष्वञ्ज परिष्वङ्गे इति धातोः कर्त्तरि लिट् । लज्जामन्मथमध्यस्था मध्येयं नायिका मता ॥ १३ ॥

वदनेति । वदनस्य सौरभे सौगन्ध्ये लोभेन परिभ्रमता भ्रमरेण हेतुना यः सम्भ्रमस्तेन संभृतशोभया सम्पादितश्रिया चलितया अलिसम्भ्रमात् प्रस्थितया अतएवालकैरलकपातैर्लोलदृशा चञ्चलाक्ष्या अन्यया स्त्र्यन्तरेण कलो मेखलायाः कलकलः कोलाहलो विदधे विहितः अलिभयादपसरन्त्याः काञ्चीगुणध्वनिरजनीत्यर्थः । एतेन चकितत्वमुक्तम् । चकितं भयसंभ्रमः । अनुप्रासयमकयोः सजातीयशब्दालङ्कारयोः संसृष्टिः स्पष्टैव तावत् तथा यमकयोश्च द्वयोः सजा-

अजगणन् गणशः प्रियमग्रतः
प्रणतमप्यभिमानितया न याः ।
सति मधावभवन्मदनव्यथा-
विधुरिता धुरि ताः कुकुरस्त्रियः ॥ १५ ॥

कुसुमकार्मुककार्मुकसंहित-
द्रुतशिलीमुखखण्डितविग्रहाः ।
मरणमप्यपराः प्रतिपेदिरे
किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ १६ ॥

वरुदिषा वदनाम्बुरुहश्रियः
सुतनु ! सत्यमलङ्करणाय ते ।

तीययोः चतुर्थपादादावेकस्मादक्षरात् द्वाभ्यां च परतोऽक्षरत्रयावृत्ति-लक्षणयोः स्थितत्वात् संसृष्टिः ॥ १४ ॥

अजगणन्निति । याः कुकुरस्त्रियो यादवाङ्गनाः गणशो बहुशः । बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति शस्प्रत्ययः । अग्रतः प्रणतमपि प्रियञ्जातावेकवचनं प्रियानित्यर्थः । अभिमानिनीनां भावोऽभिमानिता तया । त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । नाजगणन्न गणयन्ति स्म । गणेश्चौरादिकात्णौ चङि ई च गण इत्यभ्यासस्य पाक्षिक इत्वाभावः । ताः कुकुरस्त्रियो मधौ वसन्ते सति प्रवर्त्तमाने । मधुश्चैत्रे वसन्ते चेति विश्वः । मदनव्यथाविधुरिताः विह्वलिताः सत्यः धुरि अग्रेऽभवन्नवर्त्तन्त स्वयमेव पुरः प्रवृत्ता इत्यर्थः ॥ १५ ॥

कुसुमेति । गतभर्तृकाः वियोगिन्यः । नद्यृतश्चेति कप् । अपराः काश्चिदङ्गनाः कुसुमकार्मुकस्य कामस्य कार्मुके संहितैः द्रुतैर्जवनैः शिलीमुखैः शरैः खण्डितविग्रहाः पाटितशरीराः सत्यो मरणमपि प्रतिपेदिरे मुहुः पुनः पुनः मुमुहुर्मुमूर्च्छुरिति किमु वक्तव्यमित्यर्थः ॥ १६ ॥

अथ कस्याश्चित्प्रोषितभर्तृकाया बन्धुजनसमाश्वासनं विशेषकेणाह,

तदपि सम्प्रति सन्निहिते मधा-
वधिगमं धिगमङ्गलमसुणः ॥ १७ ॥
त्यजति कष्टमसावचिरादसून्
विरहवेदनयेत्यघशङ्किभिः ।
प्रियतया गदितास्त्वयि बान्धवै-
रवितथावितथाः सखि ! मा गिरः ॥ १८ ॥
न खलु दूरगतोऽप्यतिवर्त्तते

रुरुदिषेति । हे सुतनु ! शुभाङ्गि ! अम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं, दीर्घोत्तरपदो बहुव्रीहिः अन्यथा गुणः स्यात् । रुरुदिषा रोदनेच्छा अश्रुविमोचनमित्यर्थः । रुदः सन्नन्तादुप्रत्यये टाप् । ते तव वदनाम्बु-रुहश्रियः अलङ्करणाय सत्यं रम्याणां विकृतिरपि श्रियन्तनोतीति न्यायादिति भावः । गम्यमानक्रियापेक्षत्वाच्चतुर्थी । तदपि तथापि सम्प्रति मधौ वसन्ते सन्निहिते सन्निहितोत्सवे सति असुणोऽधिगमं प्राप्तिममङ्गलं धिक् । धिङ् निर्भर्त्सननिन्दयोरित्यमरः । धिगुपर्य्यादिषु त्रिष्विति द्वितीया । अतो मा रुद इत्यर्थः ॥ १७ ॥

त्यजतीति । प्रियतया इष्टतया अघशङ्किभिरनर्थोत्प्रेक्षिभिः । प्रेम पश्यति भयान्यपदेऽपीति भावः । बान्धवैस्त्वयि विषये गदिताः उच्चारिताः कष्टं वत असौ बाला विरहवेदनया अचिरादसून् प्राणांस्त्यजति त्यक्ष्यति । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । इत्येवंविधा गिर उक्तीः हे सखि ! विगतं तथात्वं यासान्ताः वितथाः अनृताः । वितथं त्वनृतं वच इत्यमरः । बहुव्रीहौ विशेष्यलिङ्गता आह्वाणादित्वाद्भ्रस्वः ततो नञ्समासः । अवितथाः सत्याः मा वितथाः मा कृथाः इयातिशोकेन मा कृथा इत्यर्थः । विपूर्वात्तनोतेर्लुङि थास् तनादिभ्यस्तथासोरिति विभाषासिचो लुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः न माङ्योगे इत्यड़ागमप्रति-षेधः ॥ १८ ॥

महमसाविति बन्धुतयोदितैः ।
प्रणयिनी निशमय्य वधूर्बहिः
स्वरमृतैरमृतैरिव निर्ववौ ॥ १९ ॥

विशेषकम् ।

मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥ २० ॥

नेति । किञ्चासौ ते प्रणयी दूरगतो दूरस्थोऽपि महं वसन्तोत्सवम् । मह उद्धव उत्सव इत्यमरः । नातिवर्त्तते नातिक्रामति खलु इति बन्धुतया बन्धुसमूहेन । ग्रामजनबन्धुसहायेभ्यस्तल् इति तल्प्रत्ययः । उदितैरुक्तैः । वदेः कर्मणि क्तः । ऋतैः सत्यवचनैः । सत्यन्तथ्यमृतं सम्यगित्यमरः । बहिः प्रणयिनस्तदैव दैवादागतस्य प्रियस्य स्वरं कण्ठगतं शब्दं निशमय्य श्रुत्वा । शमु अदर्शने इति चौरादिकात् ल्यप् मित्त्वाद्ध्रस्वः ल्यपि लघुपूर्वादित्ययादेशः । वधूरमृतैः सुधाभिरिव निर्ववौ निर्ववार । वातेर्लिट् । निर्वाणं निर्वृतिः सुखमिति ॥ १९ ॥

मधुरयेति । मधुरया मनोहरया मधुना वसन्तेन बोधिताः विकासितास्ता माधव्यस्ता । पुष्पधर्मः पुष्पितास्वपचर्य्यते । तासां माधवीनामतिमुक्तलतानाम् । अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लतेत्यमरः । मधुसमृद्ध्या मकरन्दसम्पदा समेधितमेधया संवर्द्धितप्रतिभया अतएवोन्मदयतीत्युन्मदो मदकरः । पचाद्यच् । तं ध्वनिं बिभर्त्तीत्युन्मदध्वनिभृत् तया मधुकराङ्गनया मुहुर्निभृताक्षरं अव्यक्तया स्थिरनादं यथा तथेत्यर्थः । अथवा सर्वः शब्दो वर्णात्मक एव व्यञ्जकविशेषाभावादस्फुट इति मतमाश्रित्योक्तं सर्वपथीनाः कवय इति । उज्जगे उच्चैर्गीतम् । गायतेरविवक्षितकर्म-

अरुणिताखिलशैलवना मुहु-
र्विदधती पथिकान् परितापिनः।
विकचकिंशुकसंहतिरुच्चकै-
रुदवहद्दवहव्यवहश्रियम् ॥ २१ ॥
रवितुरङ्गतनूरुहतुल्यतां
दधति यत्र शिरीषरजोरुचः।
उपययौ विदधन्नवमल्लिकाः
शुचिरसौ चिरसौरभसम्पदः ॥ २२ ॥
दलितकोमलपाटलकुड्मले
निजवधूश्वसितानुविधायिनि।

त्याद्भावे लिट्। वत्त्ववैपस्यराहित्यं समता पदगुम्फने इति लक्षणात्समताख्यो गुणः ॥ २० ॥

अरुणितेति। अरुणितान्यरुणीकृतानि अखिलानि शैलवनानि यया सा मुहुः पथिकानध्वगान् विरहिणश्च परितापिनः सन्तापवतो विदधती उच्चैरुच्चकैरुन्नता। अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच्प्रत्ययः। विकचा विकसिता या किंशुकसंहतिः पलाशकुसुमराशिः स दवहव्यवहश्रियं दवाग्निशोभामुदवहत्। निदर्शनालङ्कारः। इति वसन्तवर्णनम् ॥ २१ ॥

अथ ग्रीष्मवर्णनमारभते, रवीत्यादि। यत्र शुचौ शिरीषरजसां रुचः कान्तयो रवितुरङ्गतनूरुहतुल्यतां सूर्याश्वरोमसावर्ण्यं दधति हरिद्वर्णा भवन्तीत्यर्थः। असौ शुचिर्ग्रीष्मः। शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोस्तथा ग्रीष्मे हुतवहेऽपि स्यादिति विश्वः। नवमल्लिकाः। पुष्पे जातीप्रभृतयः स्वलिङ्गा इत्यमरः। पुष्पफलेषु बहुत्वमिति वहुत्वग्रहणात् लुप् लुपि युक्तवद् व्यक्तिवचने भवतः। चिरश्चिरावस्थायिनी सौरभसम्पद् यासान्ताः स्थिरगन्धा इत्यर्थः विदधत् कुर्वन् उपययौ प्राप्तः ॥ २२ ॥

मरुति वाति विलासिभिरुन्मद-
भ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥
निदधिरे दयितोरसि तत्क्षण-
स्नपनवारितुषारभृतस्तनाः ।
सरसचन्दनरेणुरनुक्षणं
विचकरे च करेण वरोरुभिः ॥ २४ ॥
स्फुरदधीरतडिन्नयना मुहुः
प्रियमिवागलितोरुपयोधरा ।

दलितेति । पाटलायाः अवयवाः पाटलाः । लुक्प्रकरणे पुष्पमूलेषु बहुलमिति बहुलग्रहणादलुक् । ते च ते कुड्मलाश्च दलिता विभिन्नाः कोमलाः पाटलकुड्मला येन तस्मिन् निजवधूनां श्वसितं निःश्वासमनुविधत्तेऽनुकरोतीति तथोक्ते तादृशीत्यर्थः उन्मदा भ्रमन्तश्चालयो यस्मिन् तस्मिन् उन्मदभ्रमदलौ मरुति ग्रीष्मानिले वाति वहति सति । वातेर्लटः शत्रादेशः । विलासिभिर्विलसन-शीलैः कामिभिः । वौ कषलसकत्थस्रम्भ इति घिनुण्प्रत्ययः । मदेन लौल्यञ्चापल्यमुपाददे मत्तैर्जातमित्यर्थः ॥ २३ ॥

निदधिर इति । वरोरुभिः स्त्रीभिः तत्क्षणस्नपनेन सद्यःसेकेन वारितुषारभृतो जलशीकरधारिण इत्यर्थः । तुषारौ हिमशीकरा-विति शाश्वतः । स्तना दयितोरसि निदधिरे निहिताः तेषां सन्ताप-शान्तये स्नानार्द्राङ्गा एव आलिङ्गन्नित्यर्थः । किञ्च करेण पाणिना सरस आर्द्रश्चन्दनरेणुः घृष्टचन्दनपङ्कश्चानुक्षणं विचकरे विकीर्णः । किरतेः कर्मणि लिट् ऋच्छत्यृतामिति गुणः । करेणुकरोरुभिरिति पाठस्तु जहत्स्वपदार्थौपम्य इत्युङ् प्रसङ्गाद्धेयः । इति ग्रीष्मवर्ण-नम् ॥ २४ ॥

अथ वर्षावतारमाह, स्फुरदिति । स्फुरन्ती अधीरे चञ्चले तडितौ नयने इव तडिन्नयने यस्याः सा अगलिता अरिक्ता उरुपयो-

जलधरावलिरप्रतिपालित-
स्वसमया समयाज्जगतीधरम् ॥ २५ ॥
गजकदम्बकमेचकमुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे ।
अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥ २६ ॥
अनुययौ विविधोपलकुण्डल-
द्युतिवितानकसंवलितांशुकम् ।

धरा मेघा यस्याम् अन्यत्र ऊरू च पयोधरौ च ऊरुपयोधरम् । प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः न गलितं न पतितं यस्यां सा जलधरावलिर्मेघपङ्क्तिः अत्र जलधरावलेः पयोधराणाञ्चावयवावयविभावात् पृथङ् निर्देशः । अप्रतिपालितस्वसमया अनपेक्षितनिजवेला सती एकत्र यौगपद्यादन्यत्राधैर्याच्चेति भावः । जगतीधरं रैवतकं भूधरम्प्रियमिव समयात् समागच्छत् । यातेर्लिङ् । पयोजगतीशब्दयोः पचाद्यजन्तेन धरशब्देन षष्ठीसमासः । अत्र विशेषणमहिम्ना जलधरावलौ नायिकात्वप्रतीतेः समासोक्तिः सा तु प्रियमिवेत्युपमयाङ्गेन सङ्कीर्यते ॥ २५ ॥

गजेति । नभसि श्रावणमासे । नभः श्रावणिकश्च स इत्यमरः । अम्बरे व्योम्नि गजकदम्बकमिव मेचकं श्यामलम् । कालश्यामलमेचका इत्यमरः । उच्चैरेवोच्चकैरुन्नतं नवाम्बुदं वीक्ष्य अङ्गना एकः एकायनः रसो रागो यस्य तम् एकरसं तिरस्कृतरसान्तरमित्यर्थः । कं वल्लभम्प्रियं रहः एकान्ते न चकमे न कामयते स्म तथा नाभिससार च सर्ववल्लभं सर्वापि तत्तदङ्गना चकमे अभिससार चेति । नवाम्बुदस्योद्दीपकत्वातिशयोक्तिः इह कामनापूर्वकत्वादभिसरणस्य तयोरर्थक्रमबलीयस्त्वन्यायेन यमकवशात् पाठक्रमबाधेन योजना न्याय्यैव ॥२६॥

अनुययाविति । धृतधूर्जटिरुद्रस्य धृतेन्द्रचापखण्डस्य पयोमुचो

धृतधनुर्वलयस्य पयोमुचः
शबलिमा बलिमानमुषो वपुः ॥ २७ ॥

द्रुतसमीरचलैः क्षणलक्षित-
व्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरो-
रचिररोचिररोचत वारिदैः ॥ २८ ॥

पटलमम्बुमुचां पथिकाङ्गना
सपदि जीवितसंशयमेष्यती ।

मेघस्य सम्बन्धी शबलस्य भावः शबलिमा विचित्रता । पृथ्वादिभ्य इमनिज्वा । विविधा नानावर्णा उपला मणयो ययोस्तयोः कुण्डलयोः द्युतिवितानकेन कान्तिपुञ्जेन संवलिता मिलिता अंशवो निजनीलभासो यस्य तत्तथोक्तम् । शेषाद्विभाषेति कप्प्रत्ययः । बलिमानमुषो बल्यसुराहङ्कारापहरस्य हरेर्वपुरनुययौ अनुचकार तद्वद् बभावित्यर्थः । उपमालङ्कारः ॥ २७ ॥

द्रुतेति । द्रुतसमीरेण शीघ्रमारुतेन चलैर्वारिदैः क्षणं लक्षिता च व्यवहिता च सा क्षणलक्षितव्यवहिता क्षणिकाविर्भावतिरोधानेत्यर्थः । स्नातानुलिप्तवत् पूर्वकालैकेत्यादिना समासः । अचिरं रोचिर्यस्याः सा अचिररोचिर्विद्युत् द्रुतसमीरचलैः विटपैः शाखाभिः क्षणलक्षितव्यवहिता नवतमालनिभस्य नवतमालेन सदृशस्य तद्वन्नीलस्येत्यर्थः । नित्यसमासः । नभस्तरुरिव तस्य नभस्तरोर्मञ्जरीगुच्छ इवारोचत । उपमालङ्कारः । अत्र नभस्तरोर्नभःश्रेष्ठस्येति व्याख्याने तरुशब्दस्य व्याघ्रादिवच्छ्रेष्ठार्थगोचरत्वात् तमालशब्देन विशेषवाचिना तन्नीलसामान्येन पौनरुक्त्यमिति वल्लभः । तमालशब्दस्येन्द्रनीलवन्नैल्यमात्रोपमानत्वात्तरुशब्दस्य स्वार्थवृत्तित्वेऽपि न पौनरुक्त्यमित्यन्ये ॥ २८ ॥

पटलमिति । पथिकाङ्गना काचित् प्रोषितभर्तृका अतएव सपदि

सनयनाम्बु सखीजनसम्भ्रमा-
द्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥
प्रवसतः सुतरामुदकम्पय-
द्विदलकन्दलकम्पनलालितः ।
नमयति स्म वनानि मनस्विनी-
जनमनोनमनो घनमारुतः ॥ ३० ॥
जलदपङ्क्तिरनर्त्तयदुन्मदं
कलविलापि कलापिकदम्बकम् ।

जीवितसंशयं मरणमेष्यती निश्चितमरणेत्यर्थः। आच्छीनद्योर्नुमिति विकल्पान्नुमभावः। अतएव सनयनाम्बोः सवाष्पस्य सखीजनस्य संभ्रमात् क्षोभात् विधुरबन्धुः संभ्रमदर्शनात् विह्वलबन्धुजना सती अम्बुमुचां पटलम् अबन्धुरमशोभनं सदैन्यरोषमिति यावत्। ऐक्षत। ईक्षतेर्लङ् आटश्चेति वृद्धिः। इह विरहवेदनाक्षमा या नायिका सा मरणसाधनमेघपटलावेक्षणवर्णनायां तदुद्योगलक्षणा मरणावस्थोक्ता सा हि द्विविधा तदुद्योगस्तद्योगश्चेत्याहुः। दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेत्यवस्थासंग्रहः ॥ २९ ॥

प्रवसत इति। कन्दली भूकन्दली। द्रोणपर्णी स्निग्धकन्दा कन्दली भूमिकन्दलीति शब्दार्णवे। तस्याः पुष्पाणि कन्दलानि। फले लुगित्यणो लुक्। विदलानां विकचानां कन्दलानां कम्पनेन अवधूननेन लालितः उपस्कृतः मनस्विनीजनस्य मनसां नमनो नमयिता मानिनीमानभञ्जन इत्यर्थः। कर्त्तरि ल्युट्। घनमारुतो मेघवायुः वनानि नमयति स्म प्रवसतः प्रोषितान् सुतरामुदकम्पयत् उद्वेजितवान् मनस्विनीमानमर्दनस्य वननमनं प्रोषितकम्पनं वा कियदिति भावः ॥ ३० ॥

जलदेति। [illegible] जतः समार्जनस्य

कृतसमार्जनमर्दलमण्डल-
ध्वनिजया निजया स्वनसम्पदा ॥ ३१ ॥

नवकदम्बरजोरुणिताम्बरै-
रधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः ।
मनसि रागवतामनुरागिता
नवनवा वनवायुभिरादधे ॥ ३२ ॥

शमिततापमपोढमहीरजः
प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् ।
प्रविरलैरचलाङ्गनमङ्गना-
जनसुगं न सुगन्धि न चक्रिरे ॥ ३३ ॥

मार्जनाख्यसंस्कारसहितस्य मर्दलमण्डलस्य ध्वनेर्जयो यया सा तथोक्ता मार्जनं नाम मर्दलानां ध्वननार्थमम्भस्सहिताम्भःपुष्करलेपनम् । जलदपङ्क्तिरुन्मदमुत्कटमदं कलविलापि मधुरालापि कलापिकदम्बकं मयूरवृन्दमनर्त्तयत् ॥ ३१ ॥

नवेति । नवकदम्बरजोभिररुणितमरुणीकृतमम्बरमाकाशं यैस्तैः शिलीन्ध्राणां कन्दलीकुसुमानां यः सुगन्धः स एषामस्तीति शिलीन्ध्रसुगन्धिनः तैः । गन्धस्येत्वे तदेकान्तग्रहणादिनृप्रत्ययाश्रयणम् । कदल्याञ्च शिलीन्ध्रः स्यादिति शब्दार्णवे । वनवायुभिः पुरन्ध्रीषु स्त्रीषु विषये अधिपुरन्ध्रि । विभक्त्यर्थेऽव्ययीभावः । रागवतां कामिनां मनसि नवनवा नवप्रकारा । प्रकारे गुणवचनस्येति द्विर्भावः कर्मधारयवद्भावात् सुपो लुक् । अनुरागिता आदधे अनुराग उत्पादित इत्यर्थः ॥ ३२ ॥

शमितेति । अम्बुमुचो मेघाः प्रविरलैरम्भसां प्रथमबिन्दुभिः शमिततापमपोढमहीरजो निरस्तधूलिकं न तु पङ्किलमिति भावः । सुगन्धि मन्दमसेकादुद्भूतसौरभम् । इह तदेकान्तत्वाद्गन्धस्येत्वम् । अचलाङ्गनं देवखाताङ्गनम् । अङ्गणं चत्वराजिरे इत्यमरः । अङ्गना-

द्विरददन्तवलक्षमलच्युत
स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनौघविघट्टनया दिवः
कृशशिखं शशिखण्डमिव च्युतम् ॥ २४ ॥

दलितमौक्तिकचूर्णविपाण्डवः
स्फुरितनिर्झरशीकरचारवः ।
कुटजपुष्पपरागकणाः स्फुटं
विदधिरे दधिरेणुविडम्बनाम् ॥ २५ ॥

नवपयःकणकोमलमालती-
कुसुमसन्ततिसन्ततसङ्गिभिः ।

जनस्य सुखेन गच्छन्त्यस्मिन्निति सुगं सुखसञ्चारमित्यर्थः । सुदुरोरधिकरणे इति गमेर्डप्रत्यये टिलोपः । न न चक्रिरे चक्रिरे इत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ॥ २३ ॥

द्विरदेति । द्विरददन्तवलक्षं गजदन्तधवलम् । वलक्षो धवलोऽर्जुन इत्यमरः । भृङ्गो मृग इव भृङ्गमृगः तस्य छविः सा स्फुरिता यस्मिन् तत्तथोक्तं केतक्याः पुष्पं केतकम् । पुष्पमूलेषु बहुलमित्यणो लुक् नादिष्टद्भिः लुक् तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् । घनघनौघविघट्टनया निविडमेघसङ्घोपघातेन दिवोऽन्तरिक्षात् च्युतं कृशशिखं सूक्ष्माग्रं शशिखण्डमिवालक्ष्यतेत्युत्प्रेक्षा ॥ २४ ॥

दलितेति । दलितमौक्तिकानां निष्पिष्टमुक्ताफलानाञ्चूर्णं इव विपाण्डवोऽतिशुभ्राः स्फुरिता ये निर्झराणां शीकराः कणास्त इव चारवः कुटजपुष्पपरागकणाः स्फुटं दधिरेणुविडम्बनां दधिचूर्णानुकारं विदधिरे चक्रिरे तद्वद्बभुरित्यर्थः । पूर्वोपमानद्वयानुप्राणितेयमुपमेति सङ्करः ॥ २५ ॥

नवेति । नवपयःकणवत् नवाम्बुकणवत् कोमलानां मालती-कुसुमानां जातिपुष्पाणां सन्ततिषु सन्ततसङ्गिभिर्निरन्तरासक्तैः ।

प्रचलितोडुनिभैः परिपाण्डिमा
शुभरजोभरजोऽलिभिराददे ॥ ३६ ॥

निजरजः पटवासमिवाकिर-
द्धृतपटीपमवारिमुचां दिशाम् ।
प्रियवियुक्तवधूजनचेतसा-
मनवनी नवनीपवनावलिः ॥ ३७ ॥

प्रणयकोपभृतोऽपि पराङ्मुखाः
सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमथाङ्गना
ववलिरे वलिरेचितमध्यमाः ॥ ३८ ॥

सुमना मालती जातीत्यमरः । अतएव प्रचलितोडुनिभैः परागभूषणात् सञ्चरन्नक्षत्रकल्पैरित्युत्प्रेक्षा । अलिभिः शुभाद्रजोभरात् परागपुञ्जाज्जातः शुभरजोभरजः परिपाण्डिमा धवलिमा आददे स्वीकृतः ॥ ३६ ॥

निजेति । प्रियवियुक्तवधूजनचेतसाम् । कर्मणि षष्ठी । अनवनी अरक्षणी किन्तु हन्त्रीत्यर्थः । अवतेः कर्त्तरि ल्युटि ङीप् । नवनीपवनावलिः नवकदम्बकाननपङ्क्तिः धृताः पटीपमाः पटकल्पा वारिमुचो मेघा याभिस्ताः मेघपटावृता इत्यर्थः । तासान्दिशां निजरजः स्वपरागम्पटवासं पिधानमिवेत्युत्प्रेक्षा अकिरत् अक्षिपत् सखीवदिति भावः ॥ ३७ ॥

प्रणयेति । प्रणयकोपभृतः अतएव पराङ्मुखाः विमुखा अपि । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति विकल्पादाकारः । सपदि वारिधरारवेभ्यो गर्जितेभ्यो भीरवो भीताः स्त्रिय इति शेषः । अथ अनन्तरङ्गर्जिताकर्णनानन्तरमेव प्रणयिनः प्रियान् परिरब्धुमालिङ्गितुं वलिरेचितान्यालिङ्गनार्थमङ्गप्रसारणात् विवलिरिक्तीकृतानि मध्यमान्यवलग्नानि यासान्ताः सत्यो ववलिरे प्रवृत्ताः । वलतेर्वकारा-

विगतरागगुणोऽपि जनो न क-
श्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकै-
रनन्नते नन्नते नवपल्लवैः ॥ ३९ ॥
अरमयन् भवनादचिरद्युतेः
किल भयादपयातुमनिच्छवः ।
यदुनरेन्द्रगणन्तरुणीगणा-
स्तमथ मन्मथमन्थरभाषिणः ॥ ४० ॥
ददतमन्तरिताहिमदीधितिं
खगकुलाय कुलायनिलायिताम् ।

दित्वाच्च असद्दवादिगुणानामित्यत्वाभ्यासलोपप्रतिषेधः ॥ ३८ ॥

विगतेति । पयोदनभस्वति मेघमारुते वाति वहति सति । वातेर्लटः शत्रादेशः । विगतरागगुणो विरक्तोऽपि को नरो न चलति सर्वोऽपि चलत्येवेत्यर्थः । एवमलिभिरुच्चकैरुच्चैस्तारासन्ततमसत्यं न भवतीत्यनन्नतं तस्मिन् अनन्नते सत्यवचने अभिहिते सति नवपल्लवैर्नन्नत इव नन्नत्वं कृतमिवेत्युत्प्रेक्षा । नन्नतेर्भावे लिट् ॥ ३९ ॥

अरमयन्निति । अचिरद्युतेर्विद्युतो भयात् किल भयादिव न तु तथा किन्तु रागादेवेति भावः । किलेत्यलीके । भवनाद्रमणगृहादपयातुं निर्गन्तुमनिच्छवः भयव्याजात्तत्रैव स्थिता इति भावः । विन्दुरिच्छुरित्युप्रत्ययान्तो निपातः । मन्मथेन मन्थरमलसम्भाषन्त इति मन्मथमन्थरभाषिणः कामवशा इत्यर्थः तरुणीगणाः तमुक्तं यदव एव नरेन्द्रास्तेषाङ्गणमरमयन् रमयन्ति स्म । अत्र भयेन रागनिगूहनान्मीलनालङ्कारः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् । सोऽप्यागन्तुकेन भयेन सहजरागतिरोधानादागन्तुकेन सहजतिरोधानरूपः ॥ ४० ॥

अथ शरद्वर्णनमारभते । ददतमिति । रणावयवायुधस्तक्रायुधो

  

जलदकालमबोधकृतं दिशा-
मपरथाप रथावयवायुधः ॥ ४१ ॥
स विकचोत्पलचक्षुषमैक्षत
क्षितिभृतोऽङ्कगतां दयितामिव ।
शरदमच्छगलद्वसनोपमा-
क्षमघनामघनाशनकीर्त्तनः ॥ ४२ ॥
जगति नैशमशीतकरः करै-
र्वियति वारिदवृन्दमयन्तमः ।
जलजराजिषु नैद्रमदिद्रव-
न्न महतामहताः क्व च नारयः ॥ ४३ ॥

हरिरन्तरिता हिमदीधितिं तिरोहितोष्णांशुं तथा खगकुलाय पक्षिसङ्घाय कुलायेषु नीडेषु निलीयन्त इति कुलायनिलायिनः । कुलायो नीडमस्त्रियामित्यमरः । तेषां भावस्तत्ता तां ददतं प्रयच्छन्तं पक्षिसञ्चारं प्रतिबध्नन्तमित्यर्थः । नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः । दिशामिति । कर्मणि षष्ठी । अबोधकृतम् अबोधकारिणं मेघावरणेन प्राच्यादिविवेकं लुम्पन्तमित्यर्थः जलदकालम् प्रावृट्कालम् अपरथा प्रकारान्तरेण आप प्राप । मेघोदयोपाधिना प्रावृट् व्यवहारभाजं तमेव कालं मेघात्ययोपाधिना शरत्संज्ञयोपलेभे इत्यर्थः कालो हि एक एव सन्ननेकोपाधिसम्बन्धान्नानात्वेनोपचर्य्यत इति तद्विदः ॥४१॥

स इति । अघानां नाशनं निवर्त्तनं कीर्त्तनं यस्य सोऽघनाशनकीर्त्तनः स हरिर्विकचमुत्पलमेव चक्षुर्यस्यास्तामच्छं शुभ्रङ्गलत् स्रंसमानं यद् वसनं तस्योपमा सादृश्यं तस्याः क्षमा योग्या घना मेघा यस्यां सा ताम् अतएव क्षितिभृतोऽङ्कगतामुत्सङ्गगतान्दयितामिवेत्युत्प्रेक्षा । शरदमैक्षत ॥ ४२ ॥

जगतीति । अशीतकर उष्णांशुः करैः स्वांशुभिः जगति लोके निशायाम्भवं नैशम् । निशाप्रदोषाभ्याञ्चेति विकल्पादण्प्रत्ययः । तम-

समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृत-
स्वरमयूरमयूरमणीयताम् ॥ ४४ ॥
तनुरुहाणि पुरो विजितध्वने-
र्धवलपक्षविहङ्गमकूजितैः ।

स्तिमिरमदिद्रवत् द्रावयति स्म निरस्तवानित्यर्थः । द्रु गतौ णौ चङि उपधाया ह्रस्वः सन्वद्भावः स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वेत्यभ्यासस्य विकल्पादित्वम् । वियत्याकाशे वारिदवृन्दमयं मेघसङ्घरूपम् । स्वार्थे मयट् । तमः अदिद्रवत् जलजराजिषु निद्रामिव नैद्रं निमीलनं तदेव तमः अदिद्रवत् । तथाहि, महतां महात्मनाम् । अरयः क्व च क्व वा न नाहताः अहता न किन्तु सर्वत्र हता भवन्तीत्यर्थः द्वितीयनिषेधप्रापितस्य प्रकृतार्थस्य हननस्य तृतीयेन निषेधः पुनः क्वेति कशब्दसामर्थ्यात् प्रकृतार्थपर्य्यवसानम् । वैधर्म्येण सामान्यात् विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४३ ॥

समय इति । समयः काल एव शरीरिणां बलाबलं बलाबले । विप्रतिषिद्धं चानधिकरणवाचीति विकल्पात् द्वन्द्वैकवद्भावः । करोतीति प्रणिगदन्तः प्रतिपादयन्त इवेत्युत्प्रेक्षा । नेर्गदनदपतेत्यादिना णत्वम् । शरदि हंसरवाः परुषीकृतस्वरा निष्ठुरीकृतनादा मयूरा यस्मिन् कर्मणि तत् परुषीकृतस्वरमयूरं यथा तथा रमणीयतामयुः प्राप्ताः । यातेः लङि लङः शाकटायनस्यैवेति झेर्जुसादेशः उस्य पदान्तादिति पररूपं संहितायां ढ्रलोपे पूर्वस्य दीर्घोऽणः । शरत्प्रावृषोर्हंसमयूरकूजिते माधुर्य्यामाधुर्य्यविपर्ययदर्शनात्काल एव प्राणिनां बलाबलनिदानं व्यक्तमभूदित्यर्थः ॥ ४४ ॥

तनुरुहाणीति । पुरोऽग्रे धवलपक्षविहङ्गमाः हंसपक्षिणः । हंसास्तु श्वेतगरुत इत्यमरः । तेषां कूजितैर्विजितध्वनेः शिखण्डिनो

जगलुरक्षमयेव शिखण्डिनः
परिभवोऽरिभवो हि सुदुःसहः ॥ ४५ ॥
अनुवनं वनराजिवधूमुखे
बहलरागजवाधरचारुणि ।
विकचबाणदलावलयोऽधिकं
रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४६ ॥
कनकभङ्गपिशङ्गदलैर्दधे
सरजसारुणकेसरचारुभिः ।
प्रियविमानितमानवतीरुषां
निरसनैरसनैरवृथार्थता ॥ ४७ ॥

मयूरस्य तनौ रुहाणि रुढ़ानि तनुरुहाणि बर्हाणि । इगुपधलक्षणः कप्रत्ययः । अक्षमया हंसकूजितेर्ष्ययेव जगलुर्गलन्ति स्म । कालप्रयुक्तस्य बर्हिगलनस्याक्षमाहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । युक्तञ्चैतदित्याह । अरिभवः परिभवः सुदुःसहः अत्यसह्यो हि । पराजयदुःखितस्याङ्गसादो युज्यत इति भावः । कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः स च अक्षमोत्प्रेक्षया सङ्कीर्य्यते ॥ ४५ ॥

अनुवनमिति । अनुवनं प्रतिवनं बहलो रागो यस्याः सा चासौ जवा च । ओड्रपुष्पं जवेत्यमरः । पुष्पेषु जातीप्रभृतित्वात् स्त्रीलिङ्गता । सैवाधरस्तेन चारुणि रम्ये वनराजिरेव वधूस्तस्या मुखं प्रारम्भः तदेव मुखं वक्त्रमिति श्लिष्टरूपकं तस्मिन् रुचिराणामीक्षणानां विभ्रम इव विभ्रमः शोभा यासान्ताः विकचबाणदलावलयो नीलझिण्टीप्रसवपङ्क्तयः । बाणोऽस्त्री नीलझिण्ट्यां चेति वैजयन्ती । अधिकं रुरुचिरे शुशुभिरे । उपमारूपकयोः सङ्करः ॥ ४६ ॥

कनकेति । कनकभङ्गाः स्वर्णखण्डा इव पिशङ्गानि दलानि येषान्तैः सह रजसा सरजसं सरजस्का इत्यर्थः । अतएव न सरजसमित्यव्ययीभाव इति वामनः । अथवा महाकविप्रयोगप्राचुर्य्यदर्शनाद्-

मुखसरोजरुचं मदपाटला-
मनुचकार चकोरदृशां यतः ।
धृतनवातपमुत्सुकतामतो
न कमलं कमलम्भयदम्भसि ॥ ४८ ॥
विगतशस्यनिघत्समघट्टयत्
कलमगोपवधूर्न मृगव्रजम् ।

व्ययीभावदर्शनं प्रायिकमिति पक्षाश्रयणाद्‌ बहुव्रीह्याश्रयणेऽपि साधुरेव । तथाच सरजसं सरजसा वा ये अरुणकेशराः तैश्चार्वभिः तथा प्रियैः विमानिता अवमानिता मानवत्यो मानिन्यः तासां या रुषो रोषास्तासाञ्चिरलनैर्निरासकैः । अस्यतेः कर्त्तरि ल्युट् । अलनैः प्रियकप्रसूनैः । सर्जकासनवन्धूकपुष्पप्रियकजीवका इत्यमरः । अर्थान्तरं तमानिरा सत्त्वादस्यन्तीत्यसना नीत्यन्वर्थनामकत्वं दधे दध्रे । दधातेः कर्मणि लिट् ॥ ४७ ॥

मुखेति । धृतो नवातपो येन तद्धृतनवातपं बालातपताम्रमित्यर्थः अम्भसि कमलम् अम्भःस्थं कमलम् । चाम्भोग्रहणं स्थलकमलनिवृत्त्यर्थम् अम्लानताद्योतनार्थं वा यतो मदपाटलाश्चकोरदृशां स्त्रीणां मुखसरोजरुचं मुखारविन्दशोभामनुचकार । अनुपराभ्यां कृञ इति परस्मैपदनियमः । अतोऽनुकरणाद्धेतोः कं पुमांसमुत्सुकतां प्रेयसीमुखावलोककौतुकितां नालम्भयत् नागमयत् सर्वञ्चालम्भयदेव तत्स्मारकत्वादित्यर्थः । एतेनोत्सुक्यवस्तुना कार्येण कारणभूता कमलदर्शनोत्था मुखस्मृतिर्व्यज्यत इति वस्तुनालङ्कारध्वनिः । एतेन स्त्रीमुखसादृश्यात् कमलं साधारेऽम्भसि पुंस उत्सुकतामलम्भयदिति रङ्गराजव्याख्यानं काकस्य कार्ष्ण्याद्धवलः प्रासाद इतिवदसङ्गतं मन्तव्यमिति । अलम्भयदिति लभेण्यन्ताल्लङ्, लभेश्चेति नुमागमः, लभेश्चात्र प्राप्त्युपसर्जनकगत्यर्थत्वाद्गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वे द्विकर्मता । गत्युपसर्जनकप्राप्त्यर्थत्वे तु वैपरीत्यमित्युक्तं सितं सितिकण्ठ्यत ॥ ४८ ॥

श्रुततदीरितकोमलगीतक-
ध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥
कृतमदं निगदन्त इवाकुली-
कृतजगत्त्रयमूर्जमतङ्गजम् ।
ववुरयुक्छदगुच्छसुगन्धयः
सततगास्ततगानगिरोऽलिभिः ॥ ५० ॥

विगतेति । इष आश्वयुजमासे । स्यादाश्विन इषोऽप्याश्वयुज इत्यमरः। कलमगोपी शालिगोप्त्री सा चासौ वधूश्च कलमगोपवधूः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । श्रुत आकर्णितस्तया वध्वा ईरितस्य आलापितस्य कोमलगीतकस्य मधुरगानस्य ध्वनिर्येन तं श्रुततदीरितकोमलगीतकध्वनिम् अतएवाग्रतोऽग्रे न निमिषति विस्मयानन्दाभ्यामित्यनिमिषम् । इगुपधलक्षणः कप्रत्ययः । तदीक्षणं यस्य तमनिमिषेक्षणम् । घस्तुमत्तुं नेच्छा जिघत्सा । घस्लरदादेशाद्वा सन्नन्तादप्रत्ययादिति स्त्रियामप्रत्ययः । विगता शस्यस्य जिघत्सा यस्य तं विगतशस्यजिघत्सम् । उपसर्जनाद्ध्रस्वः । मृगव्रजं नाघट्टयत् नाताड़यत् सिद्धे साधनाप्रयोगादिति भावः । अत्र दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन सुखार्थस्य गानस्य कारणत्वकथनात्समाधिरलङ्कारः । कारणान्तरयोगात् कार्यसुकरत्वं समाधिरिति सूत्रात् ॥ ४९ ॥

कृतेति । अयुजो विषमाश्छदा येषान्ते अयुक्छदाः सप्तपर्णास्तेषां गुच्छैः स्तबकैः सुगन्धयः शोभनगन्धा गजमदगन्धिन इति भावः अलिभिर्भृङ्गैः तता विस्तृता गानगिरो येषान्ते अलिभिर्गीयमाना इत्यर्थः । सततङ्गच्छन्तीति सततगाः सदागतयो वायव इति यावत् कृतमदञ्जनितमदम् अतएवाकुलीकृतजगत्त्रयम् ऊर्जः कार्त्तिकः । बाहुलोर्जौ कार्त्तिकिक इत्यमरः । स एव मतङ्गज इति रूपकम् । तं निगदन्त इव अयमागच्छतीत्यावेदयन्त इव ववुः वान्ति स्म ।

विगतवारिधरावरणाः क्वचि-
द्दद्दशुरुल्लसितासिलतासिताः।
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः
शरदि नीरदिनीर्यदवो दिशः॥ ५१॥
विलुलितामनिलैः शरदङ्गना
नवसरोरुहकेशरसम्भवाम्।
विकरितुं परिहासविधित्सया
हरिवधूरिव धूलिमुदक्षिपत्॥ ५२॥
हरितपत्रमयीव मरुद्गणैः
स्रगवनद्धमनोरमपल्लवा।

मत्तमातङ्गगमनेऽप्येवंविधवायुवहनसम्भवादियमुत्प्रेक्षा रूपकं तदङ्गमस्याः॥ ५०॥

विगतेति। शरदि यदवो यादवाः यदुशब्देन रघुशब्दवत् तदपत्यलक्षणा जनपदशब्दानामेव तद्राजस्य बहुष्विति लुक्सम्भवादिति। क्वचिद्विगतवारिधरावरणाः निवृत्तमेघावरणाः अतएवोल्लसिता कोशादुद्धृतासिलतेवासिलता तद्वदसिताः श्यामा इत्युपमा क्वचिन्नीरदिनीर्मेघवतीः शुभ्राभ्रपटलच्छन्ना इत्यर्थः अतएवेन्द्रगजाजिनम् ऐरावतचर्म तदेव कञ्चुकः कूर्पासको यासान्ता इव स्थिता इत्युत्प्रेक्षा। दिशो ददृशुः। उक्तालङ्कारयोः संसृष्टिः॥ ५१॥

विलुलितामिति। शरदेवाङ्गना इति रूपकम् अनिलैर्विलुलितां विक्षोभितां नवसरोरुहकेशरसम्भवां धूलिं परागं परिहासविधित्सया नर्मरीतिचिकीर्षया। दधातेः सन्नन्तात् स्त्रियामप्रत्ययटाप्। हरिवधूः विकरितुं विक्षेप्तुमिव। तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति तुमुन्प्रत्ययः। उदक्षिपत् प्रेरितवती। रूपकोज्जीवितेयमुत्प्रेक्षा। किरतिरयं कीर्यमाणकर्मा। यथा रजः किरति मारुतः। क्वचित्तत्कारकोद्देश्यकर्मा यथाऽत्र वर्तते विवेकः॥ ५२॥

मधुरिपोरभिताम्रमुखी मुदं
दिवि तता वितताम शुकावलिः ॥ ५३ ॥
स्मितसरोरुहनेत्रसरोजला-
मतिसिताङ्गविहङ्गहसद्दिवम् ।
अकलयन्मुदितामिव सर्वतः
स शरदं शरदन्तुरदिङ्मुखाम् ॥ ५४ ॥
गजपतिद्वयसीरपि हैमन-
स्तुहिनयन् सरितः पृषतांपतिः ।

हरितेति । अभिताम्रमुखी अरुणमुखी । स्वाङ्गाच्चोपसर्जना-दित्यादिना विकल्पात् ङीष् । शुकावलिर्मरुद्गणैः सुमनोगणैर्दिवि तता हरिप्रियार्थमावाशे वितता हरितानां हरिद्वर्णानां पत्राणां विकारो हरितपत्रमयी । टिड्ढाणञित्यादिना विकल्पात् ङीप् । तयाऽवनद्धाः ग्रथिताः मनोरमाः पल्लवा यस्यां सा स्रगिवेत्युत्प्रेक्षा । मधुरिपोः कृष्णस्य मुदं वितताम ॥ ५३ ॥

स्मितेति । स हरिः स्मितानि विकसितानि सरोरुहाण्येव नेत्राणि येषु तानि सरोजलानि यस्यास्तान्तथोक्तामतिसिताङ्गाः धवलपक्षा ये विहङ्गा हंसास्तैर्हसन्ती अयनानेव स्थिता द्यौर्यस्यां तान्तथोक्तां शरैस्तृणविशेषैर्दन्तुराण्युन्नतदन्तानि हासात् प्रकाशदश-नानीति यावत् । दन्त उन्नत उरजित्युरच्प्रत्ययो मत्वर्थीयः । तानि दिङ्मुखानि यस्यां तां शरदन्तुरदिङ्मुखां शरदं सर्वतो मुदिता-मिवाकलयत् सर्वत नेत्रविकाशादिलिङ्गैर्हृष्टामिवामन्यतेत्यर्थः । अत्र सरोजहंसशरेषु नेत्रहासदन्तत्वारोपणाद्रूपकालङ्कारः । तद्वशात् प्रती-यमानाङ्गनाभेदाध्यवसायाच्छरदि मुदितत्वोत्प्रेक्षेति सङ्करः ॥ ५४ ॥

अथ हेमन्तं वर्णयति, गजपतीति । गजपतिः प्रमाणमासां गजपतिद्वयसीः महागजप्रमाणाः । प्रमाणे द्वयसच्दघ्नच्मात्रच् इति प्रमाणार्थे द्वयसच्प्रत्ययः । टिड्ढाणञित्यादिना ङीप् । ता अपि

सलिलसन्ततिमध्वगयोषिता-
मतनुतातनुतापकृतं दृशाम् ॥ ५५ ॥
इदमयुक्तमहो महदेव य-
द्वरतनोः स्मरयत्यनिलोऽन्यदा ।
स्मृतसयौवनसोष्मपयोधरान्
सतुहिनस्तु हिनस्तु वियोगिनः ॥ ५६ ॥

तरितस्तुहिनयन् हिमीकुर्वन् । तत्करोति ण्यन्तात्क्विप् णिलोपः । हेमन्ते भवो हैमनः । सर्वत्राण् च तलोपश्चेति हेमन्तशब्दाच्छैषिकोऽण्प्रत्ययः तकारलोपश्च । पृषतां विन्दूनां पतिर्वायुः । पृषन्ति विन्दुपृषता इत्यमरः । अध्वानं गच्छन्तीत्यध्वगाः पथिकाः । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । तद्योषितां प्रोषितभर्तृकाणां दृशामतनुतापकृतं महासन्तापकारिणीं सलिलसन्ततिम् अतनुत । उष्णाश्रूत्पादयामासेत्यर्थः । हेमन्तमारुतो विरहिणीदुःसहोऽजनीति भावः ॥ ५५ ॥

सर्वदापि वियोगिनामुद्दीपकवायोर्हैमन्ते वैशिष्ट्यमाचष्टे, इदमिति । अनिलो वायुरन्यदाऽन्यस्मिन् काले ग्रीष्मादावित्यर्थः । सर्वैकान्येत्यादिना दाप्रत्ययः । वियोगिनो वियुक्तान् । गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वम् । वरतनोर्वरतनुमित्यर्थः । अधीगर्थेत्यादिना कर्मणि शेषे षष्ठी । स्मरयतीति यत् स्मरतेराध्याने मित्त्वाद्ध्रस्वत्वम् । इदं स्मारकत्वमपि महदत्यन्तमयुक्तमेव सहकारि विरहादिति भावः । अहो अत्यन्ताकिञ्चित्करत्वाद्विस्मयः । हेमन्ते तु हन्तृत्वमप्यस्य सम्भवतीत्याह । सतुहिनस्तुहिनसहितस्तु सयौवना यौवनयुक्ताः अतएव सोष्माणो ये पयोधराः कुचास्ते स्मृता यैस्तान् स्मृतसयौवनसोष्मपयोधरान् वियोगिनो वियुक्तान् । तथा युक्तं चानीप्सितमिति कर्मत्वम् । हिनस्तु हन्तु । सम्भावनायां लोट् । हेमन्ते हि हिमसहकारात् कुचोष्मैकसाध्यदुःखोत्पादनसामर्थ्याद्वियोगिमारकत्वमपि सम्भाव्यते ग्रीष्मादौ तु तादृक्सहकारिविरहात् स्मार-

प्रियतमेन यया सरुषा स्थितं
न सहसा सहसा परिरभ्य तम् ।
श्लथयितुं क्षणमक्षमताङ्गना
न सहसा सहसा कृतवेपथुः ॥ ५७ ॥

अशमदूयत याधरपल्लव-
क्षतिरनावरणा हिममारुतैः ।
दशनरश्मिपटेन च शीत्कृतै-
र्निवसितेव सितेन सुनिर्वृतौ ॥ ५८ ॥

कृत्समप्ययुक्तमित्यर्थः । अमारके मारकशब्दश्लोक्तेरतिशयोक्तिभेदः इह सहजकविप्रौढोक्तिसिद्धयोरभेदाध्यवसाय इति रहस्यम् ॥ ५६ ॥

प्रियतमेति । बलाद्यपर्य्याये सहसा इति त्रेधा विभागः अन्यत्र सहसेत्येकं पदं सरुषा सरोषया यया स्त्रिया कर्त्र्या प्रियतमेन सह न स्थितम् । नपुंसके भावे क्तः । सा अङ्गना स्त्री सहसा मार्गशीर्षमासेन । मार्गशीर्षे सहामार्ग इत्यमरः । कृतवेपथुः जनितकम्पा सती । ट्वितोऽथुजित्यथुच्प्रत्ययः । तं पूर्वमगणितमेव प्रियं हसेन सह वर्त्तत इति सहसा सहासा सती । अथो हसो हासो हास्यं चेत्यमरः । स्वनहसोर्वेति विकल्पादप्प्रत्ययः । सहसा शीघ्रम् । स्वरादिपाठादव्ययत्वम् । परिरभ्याश्लिष्य क्षणं क्षणमपीत्यर्थः । अन्यथा वैरं स्यात् । अतएव सामर्थ्यलभ्यार्थत्वादपेरप्रयोगः । श्लथयितुं नाक्षमत शिथिलीकर्त्तुं नोत्सहते स्मेत्यर्थः । मानिनीमानभञ्जनक्षमोऽयं मास इति भावः । कलहान्तरितेयं नायिका । कोपात् कान्तं पराणुद्य पश्चात्तापसमन्वितेति लक्षणात् ॥ ५७ ॥

अशमिति । अनावरणा आवरणरहिता या अधरपल्लवस्य क्षतिर्व्रणो हिममारुतैर्भृशमदूयत अतप्यत । दूङो दैवादिकात् कर्त्तरि लङ् । सा क्षतिर्यत्तदोर्नित्यसम्बन्धः । शीत्कृतैः शीत्कारैः कर्तृभिः सितेन शुभ्रेण दशनरश्मय एव पटस्तेन करणेन निवसितेवाच्छादिते-

व्रणभृता सुतनोः कलशीत्कृत-
स्फुरितदन्तमरीचिमयं दधे ।
स्फुटमिवावरणं हिममारुतै-
र्मृदुतया दुतयाधरलेखया ॥ ५९ ॥

धृततुषारकणस्य नभस्वत-
स्तरुलताङ्गुलितर्जनविभ्रमाः ।
पृथु निरन्तरमिष्टभुजान्तरं
वनितयानितया न विषेहिरे ॥ ६० ॥

हिमऋतावपि ताः स्म भृशस्विदो
युवतयः सुतरामुपकारिणि ।

त्युत्प्रेक्षा । वस्त्राच्छादनार्थात् कर्मणि क्तस्येडागमः । सुनिर्ववौ सुष्ठु निर्ववार । शीतातुराच्छाद्यत इति भावः । हिमहृताधरनिर्वाणस्य शीत्कारकारणकस्य दशनरश्मिपटाच्छादने हेतुत्वोत्प्रेक्षणाद्रूपकोत्प्रेक्षयोः सङ्करः ॥ ५८ ॥

उक्तमेवार्थम्भङ्ग्यन्तरेणाह, व्रणेति । मृदुतया मार्दवेण हेतुना हिममारुतैर्दुतया पीडितया । टु दुञ् उपतापे इति धातोर्भौवादिकात् कर्मणि क्तः । व्रणभृता दन्तव्रणवत्या सुतनोः स्त्रियाः अधरो लेखेव तया अधरलेखया कर्त्र्या कलशीत्कृतेन हेतुना स्फुरिताः प्रकाशिता ये दन्तमरीचयस्तन्मयन्तद्रूपं स्फुटमावरणमाच्छादनं दधे इव धृतमिवेत्युत्प्रेक्षा । दधातेः कर्मणि लिट् ॥ ५९ ॥

धृतेति । धृतास्तुषारकणास्तुहिनशीकरा येन तस्य नभस्वतः पवनस्य सम्बन्धिनः तरुलता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमाः विलासाः पृथु विशालमिष्टस्य दयितस्य भुजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमनितया अप्राप्तया गाढालिङ्गनमलभमानया इत्यर्थः । इणः कर्त्तरि क्तः । वनितया स्त्रिया न विषेहिरे न सोढाः विरहिण्यस्तर्जिता इव नभस्वतो बिभ्यतीति भावः ॥ ६० ॥

प्रकटयत्यनुरागमकृत्रिमं
स्मरमयं रमयन्ति विलासिनः ॥ ६१ ॥

कुसुमयन् फलिनीरलिनीरवै-
र्मदविकाशिभिराहितहुङ्कृतिः ।
उपवनं निरभर्त्सयत प्रियान्
वियुवतीर्युवतीः शिशिरानिलः ॥ ६२ ॥

हिमेति । स्मरमयं स्मरादागतं स्मरप्रयुक्तमित्यर्थः । तत आगत इति मयट् । अकृत्रिममनुरागं सहजं प्रेम प्रकटयति प्रकटीकुर्वाणे तत्कार्य्येण स्वेदेनेति भावः । अतएव सुतरामुपकारिणि पुंसां रिरंसाजननात्तेभ्यः स्वानुरागप्रकाशनाच्चात्यन्तोपकर्त्तरीत्यर्थः । एवंभूते हिमऋतौ हेमन्तेऽपि स्वेदसम्भावनारहितकालेऽपीत्यर्थः । सांहितऋत्यक इति प्रकृतिभावः । कथं स्विद्यन्ति रागोष्मणा कथस्विद इति सात्विकोक्तिः । क्विप् । हेमन्तेऽपि रागिणां स्वेदहेतुरेव तद्धेतुरागहेतुत्वादिति भावः । तास्तथा धीरा युवतयो विलासिनः प्रियान् रमयन्ति स्म हेमन्तस्योद्दीपकत्वादिति पीड़ाक्षमत्वात् दीर्घरात्रित्वाच्चोभयेच्छावशादरमन्तेत्यर्थः ॥ ६१ ॥

अथ शिशिरं वर्णयति, कुसुमयन्नित्यादिना । उपवनं वन इत्यर्थः । विभक्त्यर्थेऽव्ययीभावः तृतीयासप्तम्योर्बहुलमिति विकल्पादम्भावः । फलिनीः प्रियङ्गुलताः । प्रियङ्गुः फलिनी फलीत्यमरः । कुसुमयन् कुसुमवतीः कुर्वन् । इत्युद्दीपनसामग्रीवर्णनम् । कुसुमयते-र्मत्वन्तप्रकृतिकात्तत्करोतीति णयन्तात् लटः शत्रादेशः, णाविष्टवद्भावे विन्मतोर्लुक् । मदविकाशिभिर्मदेन विजृम्भमाणैरलिनीरवैः भृङ्गीझङ्कारैराहितहुङ्कृतिः कृतहुङ्कारः माधुर्य्याद्युद्दीपकत्वातिशयद्योतनार्थमलिनीति स्त्रीलिङ्गनिर्देशः शिशिरानिलः प्रियान्वियुवतीः कोपाद्वियुञ्जानाः । यौतेः शतरि धातोरुवङादेशः, उगितश्चेति ङीप् । युवतीः वधूः यूनस्तिरिति तिप्रत्ययः । निरभर्त्सयत अतर्जयत । तर्जिभर्त्सोश्चौरादिकयोरनुदात्तत्वादात्मनेपदम् । अत्र वायौ

उपचितेषु परेष्वसमर्थतां
व्रजति कालवशाद् बलवानपि ।
तपसि मन्दगभस्तिरभीषुमा-
न्नहि महाहिमहानिकरोऽभवत् ॥ ६३ ॥

अभिषिषेणयिषुम्भुवनानि यः
स्मरमिवाख्यत लोध्ररजश्चयः ।
क्षुभितसैन्यपरागविपाण्डुर-
द्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६४ ॥

अचेतने चेतनधर्मो निर्भर्त्सनमुत्प्रेक्ष्यते सा चाविनोऽङ्कारभङ्कारा-
ज्जीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद् गम्या च ॥ ६२ ॥

उपचितेष्विति । कालवशाद् बलवानपि परेषु शत्रुषु उप-
चितेषु प्रवृद्धेषु सत्सु असमर्थतां दौर्बल्यं व्रजति । हि यस्मात्तपसि
माघमासे । तपा माघे इत्यमरः । मन्दगभस्तिर्मृदुरश्मिरभीषुमानंशु-
मान् । अभीषुः प्रग्रहे रश्मावित्यमरः । महत उपचितस्य हिमस्य
हानिं नाशं करोतीति महाहिमहानिकरस्तद्वेतुर्नाभवत् । कृञो
हेत्वित्यादिना हेत्वर्थे टप्रत्ययः । विशेषेण सामान्यसमर्थनरूपोऽर्था-
न्तरन्यासः ॥ ६३ ॥

अभीति । क्षुभित उद्धतो यः सैन्यपरागः सेनारजः स इव
विपाण्डुरद्युतिः शुभ्रवर्णः यो लोध्ररजश्चयः भुवनान्यभिषिषेणयिषुं
सेनया अभियातुमिच्छन्तम् । यत् सेनयाभिगमनमरौ तदभिषेणन-
मित्यमरः । सत्यापपाशेत्यादिना सेनाशब्दात् णिचि सनि सनाद्यंस-
भिक्षभ्य उरिति उप्रत्ययः । स्थादिष्वभ्यासेनेति धात्वभ्याससकारयोः
षत्वम् । स्मरमाख्यतेव ख्यातवानित्युत्प्रेक्षा । चक्षिङः ख्याञ् अस्यति-
वक्तिख्यातिभ्योऽङिति च्लेरङादेशः । अयं लोध्ररजश्चयो दिशः
तिरयन् तिरस्कुर्वन् । तिरःशब्दात्तत्करोतीति ण्यन्ताल्लटः शत्रादेशः,
णाविष्टवद्भावे टिलोपः । उदभूत् ॥ ६४ ॥

शिशिरमासमपास्य गुणोऽस्य नः
क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे
घनमतो नमतोऽनुमतान् प्रियाः ॥ ६५ ॥

अधिलवङ्गममी रजसाधिकं
मलिनिताः सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोऽहसत्
सपदि कुन्दलता दलतालिनः ॥ ६६ ॥

अतिसुरभिरभाजि पुष्पश्रिया-
मतनुतरतयेव सन्तानकः ।

शिशिरेति । शिशिरमासमपास्यापहाय शीतं हरतीति शीतहरस्य । हरतेरनुद्यमनेऽजित्यच् प्रत्ययः । नोऽस्माकमस्य कुचोष्मणः कुचोष्णस्य क इव गुणः किम्फलं सम्पाद्यत इति शेषः । गम्यमानक्रियापेक्षया क्वानिर्देशः । इवशब्दो वाक्यालङ्कारे । इति धिया अतोऽस्मिन् शिशिरमासे । सार्वविभक्तिकस्तसिः । प्रियाः कान्ता अस्तरुषो निरस्तरोषाः सत्यो नमतः प्रणताननुमतान् स्वप्रियान् घनं निविडं परिरेभिरे आश्लिष्टवत्यः । इति धियेति सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते व्यञ्जकाप्रयोगाद् गम्यत्वञ्च ॥ ६५ ॥

अधीति । लवङ्गेष्वधिलवङ्गम् । विभक्त्यर्थेऽव्ययीभावः । सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्ति इति सुमनोदलतालिनः । ताच्छील्ये आभीक्ष्ण्ये वा णिनिः । अमी अलिनो मधुपाः रजसा परागेणार्त्तवेन च अधिकं मलिनाः मलीमसाः पापिनश्च कृताः मलिनिताः इति हेतोः पुरोऽग्रे सपदि कुन्दलता माघ्यवल्ली । माघ्यं कुन्दमित्यमरः । दलता विकसता प्रसवेन निजकुसुमेन अहसत् जहास स्फुटमित्युत्प्रेक्षायां रजस्वलाक्रान्तारं कामिनं सपत्न्यो हसन्तीति भावः । कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा ॥ ६६ ॥

तरुणपरभृतः स्वनं रागिणा-
मतनुत रतये वसन्तानकः॥ ६७॥
नोज्झितुं युवतिमाननिरासे
दक्षमिष्ट मधुवासरसारम्।
चूतमालिरलिनामतिरागा-
दक्षमिष्टमधुवासरसारम्॥ ६८॥
जगद्वशीकर्त्तुमिमाः स्मरस्य
प्रभावनीके तनवै जयन्तीः।

अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिर्ऋतून् वर्णय-न्नाद्यैश्चतुर्भिर्वसन्तं वर्णयति। अतिसुरभिरिति। अतिसुरभिरत्यन्त-सुगन्धिः सन्तानकः कल्पवृक्षः पुष्पश्रियां पुष्पसम्पदाम् अतनुतरतया महत्त्वेन। अतनुशब्दात्तरबन्तात्तल्प्रत्ययः। अभाजीवामञ्जीवेत्युत्-प्रेक्षा। तथा नष्ट इत्यर्थः। भञ्जेश्चिणीति विभाषा नलोपे उपधा-वृद्धिः चिणो लुक्। किञ्च वसन्तस्यानको वसन्तानकः दुन्दुभिरिति रूपकं तरुणपरभृतस्तरुणकोकिलो रागिणां कामिनां रतये रागवर्द्ध-नाय स्वनमतनुत मधुरं चुकूजेत्यर्थः। प्रभावृत्तम्। स्वरशरविरति-र्ननौ रौ प्रभेति लक्षणात्॥ ६७॥

नोज्झितुमिति। अरमत्यन्तमिष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसो रागो यस्याः सा दृष्टमधुवासरसा मधुपानप्रिये-त्यर्थः अतएवालिनामालिर्भृङ्गश्रेणिर्युवतिमाननिरासे दक्षं कुशलम् उद्दीपकत्वादिति भावः। मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं मधु-वासरसारन्तत्कालश्लाघ्यमित्यर्थः चूतं सहकारम् अतिरागादति-लौल्यादुज्झितुं त्यक्तुमक्षमिष्ट नासहिष्ट। क्षमेर्भौवादिकाल्लुङ्। स्वागता वृत्तम्। स्वागतेति रनभाद्गुरुयुग्ममिति लक्षणात्॥ ६८॥

जगदिति। प्रभावयतीति प्रभावनी सम्पादयित्री। कर्त्तरि ल्युटि ङीप्। मधुश्रीः वसन्तश्रीः जगद्वशीकर्त्तुमिमौ समर्थे अस्य स्मर-

इत्यस्य तेने कदलीमंधुश्रीः
प्रभावनी केतनवैजयन्तीः ॥ ६९ ॥
स्मररागमयी वपुस्तमिस्रा
परितस्तार रवेरसत्यवश्यम् ।
प्रियमाप दिवापि कोकिले स्त्री
परितस्ताररवे रसत्यवश्यम् ॥ ७० ॥

स्वानीके सैन्ये जयन्तीर्जित्वरीः केतनवैजयन्तीः ध्वजपताकाः तनवै करवाणि । तनोतेः प्राप्तकाले लोट् टेरेत्वमित्यैकारः स्वाडुत्तमस्य पिच्चेति स्वाटि स्वाटश्चेति वृद्धिः । इति सनीपयेति शेषः । इमाः कदलीः रम्भातरून् तेने वितस्तार । कदली वारणवुषा रम्भामोचांशुमत्फलेत्यमरः । कदलीषु कामवैजयन्तीत्वोत्प्रेक्षा । वृत्तमुपजातिः ॥ ६९ ॥

स्मरेति । असती दुष्टा स्मरेण कामेन निमित्तेन यो रागो रमणेच्छा स एव तन्मयी तमिस्रा तमस्तोमः । तमिस्रा तिमिरे रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां चेति विश्वः । रवेर्वपुर्मण्डलं परितस्तार आवव्रे अहनि रजनीधियञ्जनयामासेत्यर्थः । परिपूर्वात् स्तृणातेर्लिट् । अवश्यं सत्यमित्यर्थः । कुतः परितः समन्तात्तारखे उच्चतरध्वनौ कोकिले रसति कूजति सति इत्युद्दीपकोक्तिः । स्त्री स्त्रिय इत्यर्थः । जातावेकवचनम् । दिवेति सप्तम्यर्थेऽव्ययं वशङ्गतो वश्यः । वशङ्गत इति यत्प्रत्ययः । न वश्यमसवश्यमवशङ्गतमपीत्यर्थः । प्रियमाप स्वयमभिससारेत्यर्थः । यदवगणयन्तमपि प्रियं दिवापि मानमनगणय्य निषेधश्चोल्लङ्घ्य समगच्छन् तत् सत्यं रागतिमिरतिरोहितमानभानुमण्डला मानिन्य इति रूपकानुप्राणिता प्रियाप्तिक्रियानिमित्ता परिस्तरणक्रियास्वरूपोत्प्रेक्षा अवश्यमिति व्यञ्जकप्रयोगाद्वाच्या । औपच्छन्दसिकं वृत्तम् । विषमे ससजागुरू समे चेत् संभरयाश्छन्दसिकन्तदौपपूर्वमिति लक्षणात् ॥ ७० ॥

वपुरम्बुविहारहिमं शुचिना
रुचिरं कमनीयतरा गमिता।
रमणेन रमण्यचिरांशुलता-
रुचिरङ्कमनीयत रागमिता ॥ ७१ ॥

मुदमब्दभुवामपां मयूराः
सहसायन्त नदी पपाट लाभे।
अलिना रमतालिनी शिलीन्ध्रे
सह सायन्तनदीपपाटलाभे ॥ ७२ ॥

अथैकेन ग्रीष्ममाह, वपुरिति। शुचिना ग्रीष्मेण प्रयोजककर्त्रा अम्बुविहारेण जलक्रीड़या हिमं शीतलम् अतएव रुचिरमुज्ज्वलं वपुर्देहङ्गमिता प्रापिता। गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वम्। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति अभिहितत्वं च। अतएव कमनीयतरा रमणीयतरा अचिरांशुर्लतेवाचिरांशुलता विद्युल्लता तस्या रुचिरिव रुचिर्यस्याः सा अचिरांशुलतारुचिः इत्युपमाद्वयं तया रागमनुरागमिता प्राप्ता। इणः कर्त्तरि क्तः। रमणी रमणेन प्रियेणाङ्कमुत्सङ्गमनीयत नीता। नीहृकृषवहिम्रहामिति नयतेर्द्विकर्मकता शेषं पूर्ववत्। तोटकं वृत्तम् ॥ ७१ ॥

अथ द्वाभ्यां वर्षर्त्तुं वर्णयति। मुदमित्यादि। अब्दभुवां मेघप्रभवाणाम् अपां लाभे मेघे वर्षति सतीत्यर्थः। सहसा मयूरा मुदमानन्दमायन्तालभन्त। अय गतौ लुङि आड़जादीनामित्याड़ागमे वृद्धिः। नदी पपाट नद्यः प्रावहन्नित्यर्थः। अट पट गतौ लिट्। जातावेकवचनम्। अलिना भृङ्गेण सह सायन्तनः सायम्भवः। सायञ्चिरमित्यादिना ट्युप्रत्ययः तुड़ागमश्च। स चासौ दीपश्च तद्वत् पाटलाभे पाटलप्रभे। इत्युपमालङ्कारः। तस्मिन् शिलीन्ध्रे कन्दलीकुसुमे अलिनी अरमत। अत्र मयूरमोदप्राप्त्याद्यनेककर्तृकक्रियायौगपद्याद्भिन्नाभिकर्त्तृकक्रियासमुच्चयरूपः समुच्चयालङ्कारभेदः। गुण-

कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनं च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥ ७३ ॥

अभीष्टमासाद्य चिराय काले
समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु
समुद्धृताशङ्कमनीचकाशे ॥ ७४ ॥

क्रियायौगपद्यं समुच्चय इति सामान्यलक्षणम् । औपच्छन्दसिकं वृत्तम् ॥ ७२ ॥

कुटजानीति । शिखरीन्द्रं समया रैवतकाद्रेः समीपे । अभितः परितः समयेत्यादिना द्वितीया । अवनौ प्रदेशे घनमदा भ्रमरा येषु तानि घनमदभ्रमराणि कुटजानि कुटजकुसुमानि वनौघेन पयःपूरेण नमन्त्यभ्राणि मेघा यस्मिन् तत् वनौघनमदभ्रम् । पयः कीलालममृतं जीवनं भुवनं वनमित्यमरः । गगनञ्च वीक्ष्य शिखिभिर्मयूरैर्गीतनिनदस्य गानध्वनेः समया तुल्यया । तुल्यार्थैरित्यादिना वैकल्पिकी षष्ठी । गिरा वाचा केकयेत्यर्थः । उच्चैरराणि रणितम् । रणशब्दे भावे लुङ् चिणो लुक् । कुटजा वृत्तम् । सजसा सवेदिह सगौ कुटजाख्यमिति लक्षणात् ॥ ७३ ॥

अथ त्रिभिः शरदं वर्णयति । अभीष्टमित्यादि । कामयत इति कमनी कामयित्री । कम्रः कामयिताभीकः कमनः कामनोऽभिक इत्यमरः । कमेः कर्त्तरि ल्युटि ङीप् । योषित् । जातावेकवचनम् । अनीचा उन्नताः काशा अम्बाला यस्मिन् अनीचकाशे काले शरदीत्यर्थः । मनोजन्मसुखोदयेषु कामसुखाविर्भावेषु धृता आशा अभिलाषो येन तम् अभीष्टं प्रियञ्चिराय चिरकालेन । चिराय चिररात्रायेत्यमरः । समुद्धृता उद्धृता आशङ्का शङ्का यस्मिन् कर्मणि

स्तनयोः समयेन याङ्गनाना-
मभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलाना-
मभिनद्धा रसमानसारसेन ॥ ७५ ॥
जातप्रीतिर्या मधुरेणानुवनान्तं
कामे कान्ते सारसिकाकाकुरुतेन ।

तत्पत्रदत्ताश्रङ्कं विस्रब्धं यथा तथा श्वासाद्य प्राप्य मुदा सह वर्त्तते इति समुत् सानन्दा सती चकाशे विललासेत्यर्थः । अत्र समुच्चकाशे इति योषितः प्रियप्राप्तिनिमित्तहर्षाख्यभावनिबन्धनात्प्रेयोऽलङ्कारः । रसभावतदाभासतत्प्रकाशसमानानां निबन्धे रसवत्प्रेय ऊर्जस्वि-समाहितानीति लक्षणात् । वृत्तमुपजातिः ॥ ७४ ॥

स्तनयोरिति । रसमानाः कूजनशीलाः । ताच्छील्यवयोवचन-शक्तिषु चानशिति ताच्छील्ये चानश्प्रत्ययः । रसतेः परस्मैपदित्वाच्च शानच्प्रत्ययः । ते सारसाः पक्षिविशेषाः यस्मिन् तेन रसमानसार-सेन समयेन शरत्कालेनेत्यर्थः सारसानां तत्रैव सम्भवात् । सारसो मैथुनी कामी गोनर्दः पुष्कराह्वय इति यादवः । अङ्गनानां स्तन-योर्या जलानां ततिः शारदोष्मजन्मा स्वेदोदबिन्दुसन्दोहः अभितो नद्धा अभिनद्धा । नह्यतेरभिपूर्वात् कर्मणि क्तः नहो ध इति धत्वम् । हारसमा मुक्ताहारतुल्या कुचमण्डलमण्डनायमानेति भावः । सा जलानां ततिः रसेन रागेण हेतुना वारीयसेति भावः । परिरम्भ-रुचिमालिङ्गनेच्छां नाभिनत् न बिभेद । शारदस्वेदस्याप्यलङ्कारतया उद्दीपकत्वाज्जुगुप्सितत्वाच्चिःसपत्नश्रृङ्गारा विजयन्त इत्यर्थः । अतएव रसनिबन्धनाद्रसवदलङ्कारः । लक्षणमुक्तं पूर्वश्लोके । औपच्छन्द-सिकं वृत्तम् ॥ ७५ ॥

जातेति । या स्त्री अनुवनान्तम् । विभक्त्यर्थेऽव्ययीभावः । मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस एव सारसिकाः सार-साङ्गनाः । कात्पूर्वस्येत्वम् । तासां काकुरुतेन विकृतशब्देन ।

तत्सम्पर्कमवाप्य पुरा मोहनलीलां
कामिकान्ते सा रसिका का कुरुते न ॥ ७६ ॥

कान्ताजनेन रहसि प्रसभं गृहीत-
केशे रते स्मरसहासवतोषितेन ।
प्रेम्णा मनःसु रजनीष्वपि हैमनीषु
के शेरते स्म रसहासवतोषितेन ॥ ७७ ॥

काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः । काकुश्च तद्रुतञ्च तेन । कामे कामकल्पे । सिंहो देवदत्त इतिवद्गौणप्रयोगः । कान्ते प्रिये जातप्रीतिः जातस्नेहा अभूत् । रसिका रसवती रागवतीत्यर्थः । अत इति ठनाविति ठन्प्रत्ययः । सा का स्त्री एकान्ते रहसि तस्य कान्तस्य सम्पर्कमवाप्य पुरा पुरुषप्रेरणात् पूर्वमेव कां मोहनलीलां सुरतक्रीडां न कुरुते सर्वापि स्त्री सर्वानपि सुरतविशेषान् कामतन्त्रप्रसिद्धान् विस्रब्धञ्चकारेत्यर्थः । तेन शृङ्गारस्य परा काष्ठा प्राप्तेत्यर्थः । मत्तमयूरं वृत्तम् ॥ ७६ ॥

अथैकेन हेमन्तमाह । कान्तेति । सहत इति सहः । पचाद्यच् । स्मरस्य सहः कामोद्दीपक इत्यर्थः । तेनासवेन तोषितः तेन स्मरसहासवतोषितेन अतएव रसहासावस्य स्त इति रसहासवता रागहासवता अतएव प्रेम्णा मनःसु पुंसां चित्तेषु उषितेन वसता । वसतेः कर्त्तरि क्तः वसतिक्षुधोरिडितीडागमः । गतिबुद्ध्यादिसूत्रे चकाराद्वर्त्तमानार्थता । कान्तैव जनस्तेन कान्ताजनेन । जातावेकवचनम् । प्रसभं रहसि बलाद् गृहीतकेशे आकृष्टशिरोरुहे रते सुरते हेमन्ते भवा हैमन्यस्तासु हैमनीषु अपि द्राघीयसीष्वपीति भावः । सर्वत्राण् च तलोपश्चेति हेमन्तशब्दादण्प्रत्ययः तकारलोपश्च टिड्ढाणञित्यादिना ङीप् । रजनीषु के युवानः शेरते स्म स्वपन्ति स्म न केऽपीत्यर्थः । लट् स्मे इति भूते लट् । एतेनातिभूमिं गतः शृङ्गार इति व्यज्यते । वसन्ततिलका वृत्तम् ॥ ७७ ॥

गतवतामिव विस्मयमुच्चकै-
रसकलामलपल्लवलीलया ।
मधुकृतामसकृद्गिरमावली-
रसकलामलपल्लवलीलया ॥ ७८ ॥

कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनां च न गानवाचः ।
श्रीमान् समस्तमनुसानु गिरा विहर्तुं
बिभ्रत्यचोदि स मयूरगिरा विहर्तुम् ॥ ७९ ॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

---

अथैकेन शिशिरं वर्णयति । गतवतामिति । असकलामल-पल्लवलीलया असकला असमग्रविकासिनोऽमला निर्मलाश्च ये पल्लवास्तेषां लीला तया नृत्यरूपयेत्यर्थः विस्मयं गतवतामिव स्थितानामिवेत्युत्प्रेक्षा मधुकृता मधुकराणां सम्बन्धिनी लवलीषु लताविशेषेषु लयो लयनं स्थितिर्यस्याः सा लवलीलया आवलिः पङ्क्तिः रसकलां रसेन मध्वास्वादेन कलामव्यक्तमधुराम् । ध्वनौ तु मधुरास्फुटे कल इत्यमरः । गिरं वाचमसकृदुच्चैरलपत् । मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मयहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ७८ ॥

कुर्वन्तमिति । इतीत्थं पुष्पैरेवातिभरेण महाभरेण तत्कृतेन वा गौरवेण नगान् वृक्षानवाञ्चन्तीत्यवाचो नम्रान् । ऋत्विग्दधृगित्यादिना क्विन्प्रत्ययः । कुर्वन्तमलिनां गानवाचो गीतध्वनेर्झङ्कारस्य च न विराममविराममसमाप्तिं कुर्वन्तं समस्तमृतुं सर्वानृतून् अनुसानु सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । बिभ्रति बिभ्राणे इह गिरौ

# सप्तमः सर्गः ।

---

अनुगिरमृतुभिर्वितायमाना-
मथ स विलोकयितुं वनान्तलक्ष्मीम् ।
निरगमदभिराद्धुमादृतानां
भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

रैवतकाद्रौ विहर्त्तुं क्रीड़ितुं श्रीमान् स हरिः मयूरगिरा केकया प्रचोदि प्रेरितः । भगवन्निह विहर ऋतुगणमनुगृहाणेति प्रार्थित इवेत्युत्प्रेक्षा । व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुक्तम् ॥ ७९ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
षष्ठः सर्गः ॥ ६ ॥

---

इत्थम् ऋतुगणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहारलीलावर्णनमारभते । अनुगिरमिति । अथर्त्तुप्रादुर्भावानन्तरं स हरिः गिरावित्यनुगिरम् । विभक्त्यर्थेऽव्ययीभावः । गिरेश्च सेनकस्येति समासान्तः । ऋतुभिर्वितायमानां वितन्यमानाम् । तनोतेः कर्मणि लटः शानजादेशः । तनोतेर्यकीति वैभाषिक आकारादेशः । वनान्तलक्ष्मीं विलोकयितुं निरगमत् निर्गतः । पुषादीत्यादिना गमेर्लुङि च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्त्तुमिति भावः । तथाहि, अभिराद्धुमाराधयितुमादृतानामादरं कुर्वतामास्थावतामित्यर्थः । कर्त्तरि क्तः । प्रयासः सेवायासः महत्सु निष्फलो न भवति न हि भक्तानुकम्पिनो महान्तस्तत्र वा व्यर्थयन्तीति भावः ।

दधति सुमनसो वनानि बह्वी-
र्युवतियुता यदवः प्रयातुमीषुः।
मनसिशयमहास्त्रमन्यथामी
न कुसुमपञ्चकमप्यलं विसोढुम्॥ २॥
अवसरमधिगम्य तं हरन्त्यो
हृदयमयत्नकृतोज्ज्वलस्वरूपाः।

अतो हरेरप्यृतुगुणानुग्रहणार्थं निर्गमो युक्त इति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतार्थसमर्थनादर्थान्तरन्यास इति सर्वस्वकृतम्। अत्र सर्गे पुष्पिताग्रा वृत्तम्। अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात्॥ १॥

दधतीति। यदवो यादवाः। व्याख्यातं चैतत्। बह्वीर्बह्वीः बहुविधा इत्यर्थः। बह्वादिभ्यश्चेति विकल्पादीकारः। सुमनसः पुष्पाणि। स्त्रियः सुमनसः पुष्पमित्यमरः। दधति दधन्ति। वा नपुंसकस्येति अस्यन्ताच्छतुर्वैकल्पिको नुम्प्रतिषेधः। वनानि युवतियुताः स्त्रीसमेताः एव प्रयातुमीषुरिच्छन्ति स्म। अत्र हेतुमाह। अन्यथा युवतिजनाभावे अमी यदवो मनसि शेते इति मनसिशयः कामः। अधिकरणे शेतेरित्यच्प्रत्ययः, हलदन्तात्सप्तम्याः संज्ञायामित्यलुक्। तस्य महास्त्रभूतं कुसुमपञ्चकमपि पञ्चानि कुसुमानीत्यर्थः। पञ्चानां सङ्घः पञ्चकम्। सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कप्रत्ययः। विसोढुं नालं न शक्ताः। सकलसुमनसां सामर्थ्ये तत्रारविन्दादीनामेव पञ्चबाणबाणत्वप्रसाणसिद्धत्वादिति भावः। अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः। अरविन्दमशोकञ्च चूतञ्च नवमल्लिका नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥ २॥

अवसरमिति। तमवसरं सहजिगमिषाकालम् अधिगम्य हृदयं हरन्त्यो हृदयङ्गमा भवन्त्यः सर्वं हि प्रार्थ्यमानमेव प्रियं भवतीत्यर्थः

अवनिषु पदमङ्गनास्तदानीं
न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥

नखरुचिरचितेन्द्रचापलेखं
ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे
भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥

यत्नेन कृतं न भवतीत्ययत्नकृतं तथाप्युज्ज्वलं स्वरूपं यासान्ताः स्वभा॰ वसुन्दरमूर्त्तय इत्यर्थः अङ्गनास्तदानीं तस्मिन्नवसरे अवनिषु पदं न्यद-धत निक्षिप्तवत्यः पादचारेणैव चेलुरित्यर्थः । दधातेर्लङ्यात्मनेपदेऽब्य-नत इति अस्यादादेशः । अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत तदानीं विलासाः प्रवृत्ता इत्यर्थः । अत्राङ्गनानां विलास-सम्पदां चोभयोनामपि प्रकृतानामेव हृदयङ्गमत्वादिना वर्णनात्साम्येनौ-पम्यस्य गम्यमानत्वात् केवलप्रकृतविषया तुल्ययोगिताळङ्कारः । वाच्य-भेदेनाप्यङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वावगमादेका-वलीभेदो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

न्यदधत विभ्रमसम्पदोऽङ्गनास्वित्युक्तं ता एव प्रपञ्चयति, नखेति । ललितगतेषु मन्दगमनेषु नखानां रुचिभिः प्रभाभिः रचिता इन्द्रचापलेखा यस्मिन् कर्मणि तद्यथा तथा गतागतं यातायाते । विप्रतिषिद्धं चानधिकरणवाचीति वैभाषिको द्वन्द्वैकवद्भावः । दधाना तरुण्याः भुजलतिका मुखराः कृता इति मुखरिताः ध्वनिता वलया यस्मिन् कर्मणि तद् यथा तथा । कटको वलयोऽस्त्रियामित्यमरः । पृथौ नितम्बे मुहुरस्खलत् चचाल । अत्र नखरुचीत्यालम्बनगुण उक्तः । गतागतं दधाना अस्खलदिति तच्चेष्टा । मुखरितवलयमिति तदलंकृतिः । तटस्थास्तूक्ता वसन्तादयः अग्यत्र विस्तारत इति चतुर्विधोऽप्युद्दीपनक्रम उक्तः । उक्तञ्च आलम्बनगुणाश्चैव तच्चेष्टा तदलंकृतिः । तटस्थाश्चेति विज्ञेयाः चतुष्कोद्दीपनक्रम इति । तत्रालम्बनं रसस्य विभावाधिकारे नायिका नायकश्च । तद्गुणो

अतिशयपरिणाहवान् वितेने
बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थलेऽपरस्या
ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥

गुरुनिविडनितम्बबिम्बभारा-
क्रमणनिपीडितमङ्गनाजनस्य ।
चरणयुगमसुस्रुवत्पदेषु
स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥

तव सपदि समीपमानये ता-

रूपलावण्यादिः । तच्चेष्टा भावहावादिः । अन्यत् सुगमम् । एवं सुन्दरतापि ॥ ४ ॥

अतिशयेति । अतिशयेन परिणाहवानतिविशाल इत्यर्थः । अन्यथा तज्जघनव्याप्त्यपर्याप्तेरिति भावः । परिणाहो विशालतेत्यमरः । उपसर्गात्समासेऽपि णोपदेशस्येति णत्वम् । बहुतरमर्पिता आहिता रत्नानां किङ्किण्यो यस्मिन् सः । नद्यृतश्चेति कप्प्रत्ययः । कलो मधुरारावो मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थले अधिकं ध्वनिं वितेने । तद्वदुक्तिरियम् ॥ ५ ॥

गुर्विति । गुरु गुरुत्वगुणयुक्तं निविडं दृढं च यन्नितम्बबिम्बं तदेव भारस्तस्याक्रमणेनाधिष्ठानेन निपीडितं निष्पीडितम् अङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेषु अलक्तकच्छलेन लाक्षारसमिषेण स्वरसं स्वद्रवमेव । गुणे रागे द्रवे रसः इत्यमरः । असक्तमविच्छिन्नं यथा तथा असुस्रुवत् स्रवति स्म । स्रवतेः चरणार्थाल्लुङि णिश्रीत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्यकर्तृक एवायमकर्मकः अन्यकर्तृकत्वे तु सकर्मकः । अत्रालक्तकच्छलेनेत्यलक्तापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैः रसत्वप्रतिपादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥

मद्दमिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञा-
मनृतगिरं गुणगौरि ! मा कृथा माम् ॥ ७ ॥

न च सुतनु ! न वेद्मि यन्महीया-
नसुनिरसस्तव निश्चयः परेण ।
वितथयति न जातु मद्वचोऽसा-
विति च तथापि सखीषु मेऽभिमानः ॥ ८ ॥

अथ कश्चाश्चित् सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह, तवेत्यादि । तां मत्सखीं सपदि तव समीपमह्मानवे आनयिष्यामि । भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः, कर्त्तुरभिप्राये चात्मनेपदम् । इति मया तस्याग्रतोऽभ्यधायि अभिहितम् । दधातेः कर्मणि लुङ्, आतो युक् चिण्कृतोरिति युगागमः । हे गुणगौरि ! गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्वतीति रूपकम् । अतिरभसेनातित्वरया कृता अलघुर्महती प्रतिज्ञा त्वदानयनार्था यया तां मामनृतगिरमसत्यवाचं मा कृथाः मा कार्षीः मद्वचनं सर्वथा कर्त्तव्यमित्यर्थः । करोतेः लुङि थास्, न माङ्योगे इत्यडागमप्रतिषेधः ॥ ७ ॥

ननु मत्प्रतिज्ञापि दुस्त्याज्येति विप्रतिषेधमाशङ्क्याह, न चेति । हे सुतनु ! शुभाङ्गि ! दीर्घान्तोत्तरपदात्सम्बुद्धिः अन्यथा गुणः स्यात् । अहं न वेद्मीति न किन्तु वेद्म्येवेत्यर्थः । किन्तद्वेत्सीत्यत आह । महीयान्महत्तरस्तव निश्चयः त्वदनैक्ये प्रतिज्ञापरेण जनान्तरेण सुनिरसः सुखमोच्यः । अस्यतेः खल्प्रत्ययः । स न भवतीत्यसुनिरस इति यत् तदित्यर्थलभ्यम् । उद्देश्येन विधेयाक्षेपाद्यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोग इति निबन्धः । तथापि विदितत्वेऽपि असौ मत्सखी जातु कदाचिदपि मद्वचो न वितथयति नान्तीकरोतीति सखीषु मध्ये मेऽभिमानः स्वप्रतिज्ञाभङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्कारोऽनिर्भङ्गस्यादि मातमित्यर्थः ॥ ८ ॥

सततमनभिभाषणं मया ते
परिपणितं भवतीमनानयन्त्या ।
त्वयि तदिति विरोधनिश्चितायां
भवति ! भवत्वसुहृज्जनः सकामः ॥ ९ ॥

गतधृतिरवलम्बितुं बतासू-
ननलमनालपनादहं भवत्याः ।
प्रणयिनि यदि न प्रसादबुद्धि-
र्भव मम मानिनि ! जीविते दयालुः ॥ १० ॥

प्रियमिति वनिता नितान्तमागः-
स्मरणसरोषकषायितायताक्षी ।

सततमिति । भवतीं त्वामनानयन्त्या आनयितुमशक्नुवत्या इत्यर्थः । मया सततं सदा ते तव । कर्मणि षष्ठी । अनभिभाषणमसंभाषणं परिपणितम् । भवतीति भातेर्डवतुरित्यौणादिको डवतुप्रत्ययः, उगितश्चेति ङीप् । तस्याः सम्बुद्धिर्हे भवति ! सुभगे ! त्वयि तदिति तदसम्भाषणमस्तु इति विरोधनिश्चितायां निश्चितविरोधायां सत्याम् । वाहिताग्न्यादिष्विति विकल्पान्निष्ठायाः परनिपातः । असुहृज्जनो विपक्षवर्गः सकामः फलितमनोरथो भवतु भवेत् । प्राप्तकाले लोट् । आवयोर्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥ ९ ॥

न केवलमावयोर्विरोधः प्राणहानिरपि मम स्यादित्याह, गतेति । गतधृतिरधीरा अहं भवत्यास्तवानालपनादसम्भाषणादालपनं विहायेत्यर्थः । ल्यब्लोपे पञ्चमी । असून् प्राणानवलम्बितुं धारयितुमनलमशक्ता । अलम्भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः । बतेति खेदे अतएव हे मानिनि ! प्रणयिनि प्रिये प्रसादबुद्धिरनुग्रहबुद्धिर्न यदि नास्ति चेत्तथापि मम जीविते दयालुर्भव । स्पृहीत्यादिना आलुच्प्रत्ययः । स धूर्त्तोऽपि मत्प्राणत्राणार्थमनुग्राह्य इति भावः ॥ १० ॥

चरणगतसखीवचोऽनुरोधात्
किल कथमप्यनुकूलयाञ्चकार ॥ ११ ॥
द्रुतपदमिति मा वयस्य ! यासी-
र्ननु सुतनुं परिपालयानुयान्तीम् ।
न हि न विदितखेदमेतदीय-
स्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥
इति वदति सखीजनेऽनुरागा-
द्दयिततमामपराऽस्थिरं प्रतीक्ष्य ।

प्रियमिति । इतीत्यं नितान्तमागसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अतएव कषाये लोहिते सते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता । निर्यासे च कषायोऽथ सौरभे लोहितेऽन्यवदिति विश्वः । वनिता नायिका चरणगतायाः पूर्वोक्तवाक्यान्ते प्रणतायाः सख्या वचसोऽनुरोधादनुलङ्घनात् किल । किलेत्यपरमार्थे । वस्तुतस्तु अनुरागादेवेति भावः । प्रियं कथमपि कथञ्चिदनुकूलयाञ्चकार अभिमुखीचकार अनुजग्राहेत्यर्थः । एषा खण्डिता नायिका । ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपकलक्षणात् । अतएव कविना आगःस्मरणरोषकषायिताक्षीत्युक्तम् । एषा चासक्ष्माप्रणयचिन्ताखेदाश्रुनिःश्वासाद्यनुभाववती ॥ ११ ॥

अथ काचित् सखी कञ्चिदग्रे शीघ्रगामिनं युग्मेनाह, द्रुतेति । हे वयस्य ! सखे ! इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीः मा गमः । यातेर्लुङि न माङ्योग इत्यट्प्रतिषेधः । अनुयान्तीमनुगच्छन्तीं सुतनुं शुभाङ्गीं प्रियामनुपालय प्रतीक्षस्व । असावपि शीघ्रमायातु तत्राह, न हीति । तव चेतोऽपि एतदीयस्तनजघनोद्वहने विदितखेदमनुभूतखेदञ्चेति न किन्तु वेत्त्येवेत्यर्थः । अतः कथं शीघ्रमायास्यतीति भावः । सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः ॥ १२ ॥

तदनुगमवशादनायतानि
व्यधित मिमान इवावनिम्पदानि ॥ १३ ॥
यदि मयि लघिमानमागतायां
त्वव धृतिरस्ति गतास्मि सम्प्रतीयम् ।
अनिभृतपदपातमापपात
प्रियमिति कोपपदेन कापि सख्या ॥ १४ ॥

इतीति । सखीजने इति वदति सति अपरः कश्चिद्दयिततमाम् अनुरागात् स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात् तस्याः प्रियायाः कर्त्र्याः अनुगमः पश्चाद्गमनं तस्य वशादनुसारादवनिं मिमानः मानं कुर्वाण इवेत्युत्प्रेक्षा । माङो लटः कर्त्तरि शानजादेशः श्लाविति द्विर्भावः । अनायतान्यनन्तरालानि पदानि व्यधित निहितवान् । धाञो लुङि तङ् स्थाध्वोरिच्चेतीकारः सिचः कित्त्वाच्च गुणः ह्रस्वादङ्गादिति सकारलोपः । एषा च नायिका स्वाधीनपतिका सा तु या न मुञ्चति वल्लभमिति लक्षणात् । वृत्ता चेयम् ॥ १३ ॥

अथ काचित्पुरः प्रयातप्रियमेलनाय शीघ्रानुधावनं प्रार्थयमानां सखीमाह, यदीति । हे सखि! मयि लघिमानमागतायां स्वयंगमनेन लाघवं प्राप्तायां तव धृतिरस्ति यदि सन्तोषो भवति चेत् । धृतिः सन्तोषधैर्ययोरित्यमरः । इयमेतदवस्थैव सम्प्रत्यस्मिन् क्षण एव गतास्मि इति वदन्तीति शेषः । इतिना गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यादिव्यालङ्कारिकाः । सख्या सह कोपपदेन कोपव्याजेन वस्तुतस्तु रागादेवेति भावः । व्याजोऽपदेशो लक्ष्यञ्च निमित्तं व्याजमस्पदमिति चामरः । काचिन्नायिका द्रुततराः शीघ्रतराः पदपाताः पादन्यासा यस्मिन् कर्मणि तद्यथा तथा प्रियं वल्लभमापपात अनुधावति स्म । एषा च स्वयम्प्रवृत्ता स्वलाघवशङ्कितया पूर्वं निर्वासितप्रिया अथेदानीं स्वयम्प्रवृत्तेः पश्चात्तप्ता चेति गम्यते । अतः कलहान्तरिता । कोपात् कान्तं पराणुद्य पश्चात्तापसमन्वितेति लक्षणात् ॥ १४ ॥

अविरलपुलकः सह व्रजन्त्याः
प्रतिपदमेकतरस्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्ष-
स्तटभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥

अशिथिलमपरावसज्य कण्ठे
दृढपरिरब्धबृहद्बहिस्तनेन ।
हृषिततनुरुहा भुजेन भर्त्तु-
र्मृदुममृदु व्यतिविद्धमेकबाहुम् ॥ १६ ॥

अविरलेति । सह व्रजन्त्याः पार्श्वमाश्लिष्य गच्छन्त्या इत्यर्थः तरुण्याः सम्बन्धी अविरलपुलकः प्रियाङ्गसङ्गसान्द्ररोमाञ्चः एकतरोऽन्यतरः द्वयोरन्यः सन्निकृष्ट इति भावः । एकाच्च प्राचामिति द्वयोरेकस्य निर्द्धारणे तरच्प्रत्ययः । स्तनः प्रियस्य वक्षस्तटमिव तस्य भूः प्रदेशस्तस्यां वक्षस्तटभुवि प्रतिपदं घटितविघटितः संयुक्तवियुक्तः पतितोत्पतितः सन्निति यावत् । विशेषणयोरपि मिथोगुणप्रधानभावविवक्षया विशेषणं विशेष्येण बहुलमिति समासः । कन्दुकविभ्रमं कन्दुकशोभाम् । गेन्दुकः कन्दुक इत्यमरः । बभार । अन्यविभ्रमस्यान्यसम्बन्धायोगात्सादृश्याक्षेपे निदर्शना । एषा च प्रियपार्श्वगामिनी । इतः प्रभृति मदनरसेत्यतः प्राग्वक्ष्यमाणाः षट् नायिकाः स्वाधीनपतिकाः हृष्टाः प्रगल्भाश्चेत्यनुसन्धेयम् ॥ १५ ॥

अथापरस्या अपरङ्गतिविशेषं विशेषकेणाह, अशिथिलमित्यादि । अपरा स्त्री दृढं परिरब्धो गृहीतो दृढबहिस्तनो येन तेन हृषितान्युद्धितानि तनुरुहि रोमाणि यस्य तेन पुलकितेनेत्यर्थः । क्तिवन्तोत्तरपदो बहुव्रीहिः हृषेर्लोमस्वितीड़ागमः । भुजेन भर्त्तुर्वामबाहुना अमृदु गाढं यथा तथा व्यतिविद्धं व्यतिषक्तं मृदुकोमलमेकबाहुं निजदक्षिणबाहुम्भर्त्तुः कण्ठे अशिथिलं दृढमवसज्यासज्य जगामेति भाविना सम्बन्धः ॥ १६ ॥

मुहुरसुसममाघ्नती नितान्तं
प्रणदितकाञ्चि नितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य-
क्कुचमितरत्तदुरःस्थले निपीड्य ॥ १७ ॥

गुरुतरकलनूपुरानुनादं
सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना
पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥

विशेषकम्

लघुललितपदं तदंसपीठ-
द्वयनिहितोभयपाणिपल्लवान्या ।

मुहुरिति । पुनः किं कृत्वा नितम्बमण्डलेन करणेन नितान्तमतिशयेन प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन् कर्मणि तद्यथा तथा । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । मुहुरसुसमं प्राणसमानमाघ्नती ताडयन्ती । हन्तेर्लटः शत्रादेशे ङीप् सकर्मकत्वात् न आङो यमहन इत्यात्मनेपदम् । विषमिता विषमीकृता पृथुहारयष्टिर्यस्मिन् कर्मणि तद्यथा तथा इतरं पूर्वश्लोकोक्तव्यतिरिक्तस्तनादन्यं दक्षिणमित्यर्थः कुचं तस्य भर्त्तुरुरःस्थले तिर्यक् निपीड्य पूर्ववत्सम्बन्धः ॥ १७ ॥

गुरुतरेति । पुनर्गुरुतरः सान्द्रतरः कलो मधुरश्च नूपुरस्यानुनादो ध्वनिर्यस्मिन् कर्मणि तद्यथा तथा सललितं सलीलं नर्त्तितं व्यापारितं वामं सव्यम्पादपद्मं यया सा इतरद्दक्षिणम्पदमनतिलोलं भर्त्तृचरणस्खलनादनतिचपलं यथा तथा आदधाना निःक्षिपन्ती सती मन्मथेन मन्थरमलसञ्जगाम । एषा च पार्श्वगामिनी ॥ १८ ॥

अथान्यासामप्येकैकेन गतिविशेषमाह, लघ्वित्यादि । अन्या अबला स्त्री तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणि-

सकठिनकुचचूचुकप्रणोदं
प्रियमबला सविलासमन्वियाय ॥ १९ ॥
जघनमलघुपीवरोरु कृच्छ्रा-
दुरुनिविरीसनितम्बभारखेदि ।
दयिततमशिरोधरावलम्बि-
स्वभुजलताविभवेन काचिदूहे ॥ २० ॥
अनुवपुरपरेण बाहुमूल-
प्रहितभुजाकलितस्तनेन निन्ये ।

पल्लवौ यया सा सती । उभादुदात्तो नित्यमिति मङ्गलखेटस्यायोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत् उभयशब्दस्यैव यथा स्यादित्यु-भयत्वेत्यादि भवतीति । लघुनी द्रुते ललिते च पदे यस्मिन् कर्मणि तद्यथा तथा कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीडनन्तेन सह यथा तथा । चूचुकन्तु कुचाग्रं स्यादित्यमरः । तेन सहेत्यादिना समासे वोपसर्जनस्येति सहशब्दस्य सभावः, णोप-देशत्वात्प्रणोद इति णत्वम् । सविलासं च प्रियमन्वियायानुजगाम । एषा पुष्पिताग्रा ॥ १९ ॥

जघनमिति । काचित् स्त्री अलघू गुरू पीवरौ पीनौ चोरू यस्य तत् उरुसंज्ञान् निविरीसो निबिडः । निबिडं निविरीसं च दृढं गाढं प्रचक्षते इति वैजयन्ती । नेर्बिड्जिरीसचाविति निशब्दा-द्विरीसच्प्रत्ययः । स च यो नितम्बः स्त्रीकटिपश्चाद्भागः । पश्चा-न्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः । स एव भारस्तेन खिद्यन्त इति तथोक्तम् । आभीक्ष्ण्ये णिनिः । जघनं कटीपुरोभागं दयिततमस्य शिरोधरायां ग्रीवायामवलम्बिन्योर्लम्बमानयोः स्वभुज-लतयोर्विभवेन सामर्थ्येन कृच्छ्रादूहे उवाह । वहेः स्वरितेत्त्वात् कर्त्र-भिप्राय आत्मनेपदम् । इयञ्च पुष्पिताग्रा प्रियकण्ठावलम्बा ॥ २० ॥

अनुवपुरिति । अन्या स्त्री वपुषा पश्चादनुवपुः स्त्रीपृष्ठभागः ।

निहितदशनवाससा कपोले
विषमवितीर्णपदं बलादिवान्या ॥ २१ ॥

अनुवनमसितभ्रुवः सखीभिः
सह पदवीमपरः पुरोगतायाः।
उरसि सरसरागपादलेखा-
प्रतिमतयानुययावसंशयानः ॥ २२ ॥

मदनरसमहौघपूर्णनाभी-
ह्रदपरिवाहितरोमराजयस्ताः।
सरित इव सविभ्रमप्रयात-
प्रणदितहंसकभूषणा विरेजुः॥ २३।

अव्ययं विभक्ति इत्यादिना पश्चादर्थेऽव्ययीभावः। बाहुमूलयोः स्तोकयोः प्रहिताबधःप्रसारितौ भुजौ ताभ्याम् आकलितस्तनेन गृहीतस्तनेन कपोले निहितदशनवाससा न्यस्ताधरेण किञ्चिदाष्टत्तमुख्याः सत्याः कपोलं चुम्बतेत्यर्थः अपरेण कामिना विषमश्रियांघ्रिसङ्कर्षात् श्लिष्टं वितीर्णपदं न्यस्तांघ्रि यथा तथा बलादिव निन्ये नीता आरोप्य नीयमानेव गमयाञ्चक्रे इत्यर्थः। एषा पुरोगामिनी ॥ २१ ॥

अनुवनमिति। अपरः कामी अनुवनं वनं प्रति सखीभिः सह पुरोगतायाः असितभ्रुवः स्वकान्तायाः पदवीमुरसि वक्षसि सरस आर्द्रः रागो लाक्षारञ्जनं यस्य तस्य पादस्य या रेखा विन्यासः सा प्रतिमा उपमानं यस्याः सा तत्प्रतिमा तस्य भावस्तत्ता तया तत्सदृशतयेत्यर्थः असंशयानोऽसन्दिहानः। शीङो लटः कर्त्तरि शानजादेशः। अनुययौ। अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरतकालीनं पादताडनं वस्तु सरागपदार्थमहिम्ना प्रतीयत इति पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुध्वनिः संलक्ष्यक्रमध्वनेर्भेदः ॥२२॥

मदनेति। मदनस्य रसः शृङ्गारः अन्यत्र रसो जलं तस्य महौघेन महापूरेण पूर्णा नाभ्य एव ह्रदास्तेभ्यः परिवाहाः जाताः परि-

श्रुतिपथमधुराणि सारसाना-
मनुनदि शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्य-
व्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥
मधुमथनवधूरिवाह्वयन्ति
भ्रमरकुलानि जगुर्यदुत्सुकानि ।

वाहिता जलोच्छ्वासीकृताः रोमराजयो यासान्ताः । जलोच्छ्वासाः परीवाहा इत्यमरः । सरिज्जलानि ह्रदानापूर्य परितः उच्छ्वसन्तीति प्रसिद्धिः । सविभ्रमैः सविलासैः प्रयातैः प्रकृष्टगमनैः प्रणादिताः शिञ्जिताः ये हंसकाः पादकटकाः । हंसकाः पादकटका इत्यमरः । अन्यत्र हंसा एव हंसकाः मरालास्त एव भूषणानि यासान्ताः स्त्रियः सरित इव विरेजुः । मदनरसपूर्णत्वेन नाभीनां तदुद्बोधकत्वं व्यज्यते । परिवाहितरोमराजय इति रोमराजीनां परिवाहत्वरूपणान्नाभ्य एव ह्रदा इति रूपकाश्रयणात्ताः सरितः एवेति श्लिष्टविशेषणोपमा श्लेष एवेत्यन्ये ॥ २३ ॥

श्रुतिपथेति । अनुनदि नदीनां समीपे । समीपार्थेऽव्ययीभावः, अव्ययीभावश्चेति नपुंसकत्वे ह्रस्वत्वम् । ताभिः स्त्रीभिः जनानां समूहो जनता । ग्रामजनेत्यादिना सामूहिकस्तल्प्रत्ययः । तस्याः मनांसि एव शरव्यं लक्ष्यम् । लक्ष्यं शरव्यं चेत्यमरः । तस्य व्यधः वेधः । व्यधजपोरनुपसर्गे इत्यप्प्रत्ययः । तत्र पटुः समर्थो यो मन्मथचापनादः स इति शङ्कां भ्रमं विदधति विदधानानि । वा नपुंसकस्येति वैकल्पिको नुम्प्रतिषेधः । श्रुतिपथमधुराणि श्राव्याणीत्यर्थः सारसानां रुतानि शुश्रुविरे श्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अत्र सारसरुते मन्मथचापनादभ्रमाद् भ्रान्तिमदलङ्कारः । कविसम्मतसादृश्याद्विषये पिहितात्मनि आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः इति लक्षणात् ॥ २४ ॥



मधुमथेति । उत्सुकान्युन्मनांसि भ्रमरकुलानि मधुमथनस्य

तदभिनयमिवावलिर्वनाना-
अतनुत नूतनपल्लवाङ्गुलीभिः ॥२५॥
असकलकलिकाकुलीकृतालि-
स्खलनविकीर्णविकाशिकेशराणाम्।
मरुदवनिरुहां रजो वधूभ्यः
समुपहरन् विचकार कोरकाणि ॥ २६ ॥

हरैर्वधूराह्वयन्त्याकारयन्तीवेत्युत्प्रेक्षा। हूतिराकारणाह्वानमित्यमरः। अपस्पर्धेर्नित्यमिति ह्वयतेः शतुर्नुमागमः। नगुरिति यत्। गायतेर्लिट्। वनानामावलिर्नूतनपल्लवा एवाङ्गुल्य एत्येकदेशवर्त्तिसावयवरूपकम् अस्यैव वनावलौ नर्त्तकीत्वरूपगमकत्वादिति। ताभिस्तदभिनयं व्यञ्जकचेष्टामतनुतेव। व्यञ्जकाभिनयौ समावित्यमरः। अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेदिति वचनात्। गीतार्थस्याह्वानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रियास्वरूपोत्प्रेक्षा। पूर्वोक्तरूपकानुप्राणिता साह्वानोत्प्रेक्षा सापेक्षेति सजातीयसङ्करोऽपीति ॥ २५ ॥

असकलेति। मरुद्वनानिलः असकला असमग्राः अर्द्धविकचा इत्यर्थः ताभिः कलिकाभिः कोरकैराकुलीकृतानां संक्षोभितानामलिनां स्खलनेन विघट्टनेन विकीर्णा विक्षिप्ताः विकाशिनः केशराः किञ्जल्का येषान्तेषामवनिरुहाम्। क्विप्। रजः परागम्वधूभ्यः समुपहरन् प्रयच्छन् यथा कश्चित् कामीति भावः। धनमर्जयन्वसतीतिवत् लक्षणहेत्वोः क्रियाया इति हेत्वर्थे शतृप्रत्ययः। कोरकाणि कुड्मलानि। कलिका कोरकः पुमानित्यमरकोषे पुंस्त्वाभिधानं प्रायिकाभिप्रायम्। कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोरिति विश्वप्रकाशादौ नपुंसकत्वस्याभिधानात्। विचकार विकाशयामासेत्यर्थः। विपूर्वात् किरतेः करोतेर्वा लिट्। अत्र कोरकविकाशकरणस्य समुपहरन्निति हेत्वर्थेन वधूसम्प्रदानकपरागोपहरणार्थत्वावगमात् फलोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ २६ ॥

उपवनपवनानुपातदक्षै-
रलिभिरलम्भि यदङ्गनागणस्य।
परिमलविषयस्तदुन्नताना-
मनुगमने खलु सम्पदोऽग्रतःस्थाः॥ २७॥

रथचरणधराङ्गनाकराब्ज-
व्यतिकरसम्पदुपात्तसौमनस्याः।
जगति सुमनसस्तदादि नूनं
दधति परिस्फुटमर्थतोऽभिधानम्॥ २८॥

उपवनेति। वने उपवनम्। विभक्त्यर्थेऽव्ययीभावः। तत्र यः पवनस्तस्यानुपातेनानुसारेण दक्षैर्विचक्षणैरलिभिर्यद्यतः कारणाद् अङ्गनाजनस्य सम्बन्धी परिमलो गन्धविशेषः। विमर्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः। स एव विषयो भोग्यार्थः। रूपं स्पर्शो गन्धरसशब्दाश्च विषया अमी इति। अलम्भि लब्धः। लभेः कर्मणि लुङ् विभाषाचिण्णमुलोरिति विकल्पाच्चिण्भावः, अत उपधाया इति वृद्धिः। तस्मादुन्नतानां महतामनुगमने पश्चाद्भावमे चानुवृत्तौ च सम्पदोऽग्रतःस्थाः पुरोवर्तिन्यः खलु। सुपि स्थ इति कप्रत्ययः। अत्रानुगमनयोर्द्वयोरभेदाध्यवसायात् श्लेषोत्थापितातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूपः॥ २७॥

रथेति। सुमनसः पुष्पाणि रथचरणं चक्रन्तस्य धरो धारयिता हरिः। पचाद्यच्। तस्याङ्गनास्तासां कराब्जैर्व्यतिकरः सम्पर्कः स एव सम्पत् तया उपात्तं लब्धं सौमनस्यं सुमनस्त्वं सन्तुष्टचित्तत्वं याभिस्ताः सत्यः अतएव सौमनस्यलाभ आदिर्यस्मिन् कर्मणि तत्तदादि ततः प्रभृतीत्यर्थः अर्थतः पूर्वोक्तावयवार्थात् परिस्फुटमविद्यावयवार्थम् अभिधानं सुमनस इति नामधेयं दधति। पूर्वन्त्वश्वकर्णादिवद्रूढमिति भावः। आख्याह्वे चाभिधानं च नामधेयं च नाम चेत्यमरः। स्त्रियः पुष्पाण्यवचेतुमप्रवृत्ता इति फलितोऽर्थः। नून-

अभिमुखपतितैर्गुणप्रकर्षा-
दवजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः
प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥

मुदितमधुभुजो भुजेन शाखा-
श्चलितविशृङ्खलशङ्खकं धुवत्याः ।
तरुरतिशयितापराङ्गनायाः
शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ३० ॥

लित्युत्प्रेक्षायाम् । अत्रोपात्तसौमनस्या इति सौमनस्योपादानस्य पदार्थस्य विशेषणगत्या सुमनःपदान्वर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् तदुत्थापिता चेयमुदादित्योत्प्रेक्षेति सङ्करः तेन चाङ्गनाकराणामति-श्लाघ्यत्वं व्यज्यते ॥ २८ ॥

अभिमुखेति । अभिमुखपतितैः भञ्जनार्थमभिमुखमागतैः उज्ज्व-लामुत्कृष्टामुद्धतिमुपरिप्रसारमौद्धत्यञ्च दधानैरङ्गनानामग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः । अतएव हस्ताग्राग्रहस्तयोर्गुण-गुणिनोरभेदादिति वामनः । तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षाद्धेतो-रवजितमवधीरितन्तरुकिसलयजालं प्रसभम्बलात् भङ्गं छेदं पराजय-ञ्चानीयत नीतम् । प्राधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति किसलयजालस्य प्रधान्यादभिधानम् । अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्यत्वस्य प्रतीतेः समासोक्तिरल-ङ्कारः ॥ २९ ॥

मुदितेति । मुदिता हृष्टा मधुभुजो मधुपा यासु ताः शाखाः भुजेन हस्तेन चलितानि विशृङ्खलानि अप्रतिहतरवाणि शङ्खकानि वलयानि यस्मिन् कर्मणि तद्यथा तथा धुवत्याः कम्पयन्त्याः । धू विधूनने इति धातोस्तौदादिकाच्छतरि ङीप् क्ङिति चेति गुणवृद्धि-प्रतिषेधादुवङादेशः । अतिशयिता सौन्दर्येणातिक्रान्ता अपराङ्गना

अनवरतरसेन रागभाजा
करजपरिक्षतिलब्धसंस्तवेन ।
सपदि तरुणपल्लवेन बध्वा
विगतदयं खलु खण्डितेन मम्ले ॥ २१ ॥

प्रियमभि कुसुमोद्यतस्य बाहो-
र्नवनखमण्डनचारु मूलमन्या ।
मुहुरितरकराहितेन पीन-
स्तनतटरोधि तिरोदधेंऽशुकेन ॥ २२ ॥

यथा सा तस्याः शिरसि तरुर्मुदेव तदभिसरणसम्भोगेच्छयेवेति गुणहेतू-त्प्रेक्षा पुष्पवर्षं पुष्पवृष्टिं मुमोच ॥ २० ॥

अनवरतेति । अनवरतरसेनानवच्छिन्नद्रवेण अन्यत्रानुवद्धरङ्गा-रेण रागभाजा रक्तेन प्रीतिभाजा च करजपरिक्षतिषु नखक्षतेषु लब्धसंस्तवेन प्राप्तपरिचयेन । संस्तवः स्यात् परिचय इत्यमरः । बध्वा विगतदयं निर्दयं यथा तथा खण्डितेन छिन्नेन निराकृतेन च तरुण-पल्लवेन नवकिसलयेन युवविटेन च । पल्लवः किसलये विटे इति विश्वः । सपदि मम्ले म्लानं खलु प्रसिद्धौ । म्लायतेर्भावे लिट् । अत्राभिधायाः प्रकृतार्थे नियन्त्रितत्वादप्रकृतार्थप्रतीतेः शब्दशक्तिमूलो ध्वनिः न श्लेषः तेन चौभयोः पल्लवयोरौपम्यव्यङ्ग्यते ॥ २१ ॥

अथासां पुष्पावचये शृङ्गारचेष्टाः वर्णयन् कस्याश्चिच्चेष्टाविशेष-मेकेनाह, प्रियमिति । अन्या स्त्री प्रियमभि प्रियस्याग्रत इत्यर्थः । अभिरभागे इत्यभेर्लक्षणार्थकर्मप्रवचनीयत्वात्तद्योगे द्वितीया । कुसुमे-भ्य उद्यतः कुसुमोद्यतः कुसुमग्रहणार्थमुत्क्षिप्त इत्यर्थः । प्रकृतिविका-रभावाभावान्न तादर्थ्ये चतुर्थीसमासः । तस्य बाहोर्नवं यन्नखं नख-क्षतं तदेव मण्डनं तेन चारु सुन्दरं मूलं कक्षभागमित्यर्थः मुहुरित-रकरेण सव्यपाणिना आहितेन निहितेनांशुकेनोत्तरीयेण पीनं स्तनतटं रुणद्धीति पीनस्तनतटरोधि सविलासं यथा तथा तिरोदधे

विततवलिविभाव्यपाण्डुलेखा-
कृतपरभागविलीनरोमराजिः ।
कृशमपि कृशतां पुनर्नयन्ती
विपुलतरोन्मुखलोचनावलग्नम् ॥ २३ ॥
प्रसकलकुचबन्धुरोद्धुरोरः-
प्रसभविभिन्नतनूत्तरीयबन्धा ।
अवनमदुदरोच्छ्वसद्दुकूल-
स्फुटतरलक्ष्यगभीरनाभिमूला ॥ २४ ॥

तिरश्चकार । अयञ्चापलाख्यः सञ्चारिभावः । चापलप्रकाशिनी चेष्टा रागाद्देश्चापलं मतमिति लक्षणात् । प्रौढा चेयम् ॥ २२ ॥

अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह, विततेत्यादि । काचिद् विततामिर्गात्रोन्नमनाद् विश्लिष्टाभिर्वलिभिस्त्रिवलिभिर्विभाव्याः संलक्ष्याः पाण्डुरेखाः रेखाकाराः वलोत्रयान्तरालभागाः ताभिः कृतपरभागजनितवर्णोत्कर्षाः अतएव विशेषेण लीना विलीना रोमराजिर्यस्याः सा तथोक्ता कृशमपि स्वभावत एवेति भावः अवलग्नं मध्यम् । मध्यमं चावलग्नं च मध्योऽस्त्रीत्यमरः । पुनः कृशतां नयन्ती अप्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः तथा विपुलतरे उन्मुखे च लोचने यस्याः सा अग्रपुष्पग्रहणार्थमिति भावः ॥ २३ ॥

प्रसकलेति । प्रसकलाभ्यामतिसम्पाभ्यां कुचाभ्यां बन्धुरमुन्नतानतम् । बन्धुरं तून्नतानतमित्यमरः । उद्धुरं निर्भरं दृढमिति यावत् । ऋक्पूरित्यादिना समासान्तः । तस्मादुरसः प्रसभाद् बलात्कारात् विभिन्नो विश्लिष्टस्तनूत्तरीयबन्धो यस्याः सा गात्रविजृम्भणाद्विस्रस्तकुचावरणेत्यर्थः । किञ्च अवनमतोऽन्तर्लीयमानादुदरादुच्छ्वसत् विश्लिष्यत् दुकूलं यस्य तत् अतएव स्फुटतरं यथा तथा लक्ष्यं गभीरमागाधं नाभेर्मूलमन्तरालं यस्याः सा ॥ २४ ॥

व्यवहितमविजानती किलान्त-
र्वणभुवि वल्लभमाभिमुख्यभाजम् ।
अधिविटपि सलीलमग्रपुष्प-
ग्रहणपदेन चिरं विलम्ब्य काचित् ॥ २५ ॥

अथ किल कथिते सखीभिरत्र
क्षणमपरेव ससम्भ्रमा भवन्ती ।
शिथिलितकुसुमाकुलाग्रपाणिः
प्रतिपदसंयमितांशुकावृताङ्गी ॥ २६ ॥

कृतभयपरितोषसन्निपातं
सचकितसस्मितवक्त्रयारिजश्रीः ।

व्यवहितमिति । काचित् पूर्वोक्तविशेषणविशिष्टा अङ्गना अन्तर्वणभुवि वनाभ्यन्तरप्रदेशे । प्रनिरन्तरित्यादिना वननकारस्य णत्वम् । व्यवहितं तिरोहितम् आभिमुख्यभाजम् अभिमुखावस्थितमित्यर्थः तं वल्लभं प्रियम् अविजानती किल जानानाप्यजानानेव अधिविटपि विटपिनि वृक्षे । विभक्त्यर्थेऽव्ययीभावः । सलीलं यथा तथा अग्रे वृक्षाग्रे यानि पुष्पाणि तेषां ग्रहणस्य पदेन मिषेण चिरं विलम्ब्य स्थिता स्वाङ्गप्रकाशनार्थमिति भावः ॥ २५ ॥

अथेति । अथ विलम्बानन्तरम् अत्रास्मिन् प्रिये सखीभिः कथिते सति । किलायमत्रैवास्ते इति निवेदिते सति क्षणं ससंभ्रमा अपरेव पूर्वविपरीतव्यापारकारणादन्येव भवन्ती बुद्धिपूर्वकारित्वसम्भ्रानगाटनेन वञ्चयन्तीत्यर्थः शिथिलितः पुष्पग्रहणान्निवर्त्तितः कुसुमाकुलः कुसुमव्याप्तोऽग्रपाणिर्यया सा तथोक्ता प्रतिपदं प्रतिस्थानं संयमितेन नियमितेनांशुकेन । अंशुकं सूक्ष्मवस्त्रे स्यादिति विश्वः । वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती ॥ २६ ॥

कृतभयेति । किञ्च कृतः भयपरितोषयोः भर्तृदर्शनोत्थसाध्वसहर्षयोः सन्निपातः सङ्करो येन तत् मनसि जातो मनसिजः स्मरः ।

मनसिजगुरुतत्क्षणोपदिष्टं
किमपि रसेन रसान्तरं भजन्ती ॥ २७ ॥
अवनतवदनेन्दुरिच्छतीव
व्यवधिमधीरतया यदस्थितास्मै ।
अहरत सुतरामतोऽस्य चेतः
स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ २८ ॥

षड्भिः कुलकम् ।

सप्तम्यां जनेर्डः इत्यदन्तात् सप्तम्याः संज्ञायामित्यलुक् । स एव गुरुराचार्यस्तेन तत्क्षणे उपदिष्टमन्तदेकहेतुकम् इत्यर्थः । किमप्यनिर्वाच्यं रसान्तरं लक्षणया भावान्तरं तच्चेह किलकिञ्चिताख्यं विवक्षितं कृतभयेत्यादिविशेषणेन, क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितमिति लक्षणार्थस्य प्रतीतेः । रसेन रागेण हेतुना भजन्ती अतएव सचकिता सभयसंभ्रमा । चकितस्भयसंभ्रम इत्यमरः । सस्मिता हर्षात् समन्दहासा वक्रवारिजश्रीर्यस्याः सा सती । अत्र चकितस्मितयोः पूर्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥ २७ ॥

अवनतेति । अवनतवदनेन्दुः लज्जया नम्रमुखीत्यर्थः । अधीरतया अधृष्टतया व्यवधिं किञ्चिद्व्यवधानम् । उपसर्गे घोः किरिति किप्रत्ययः । इच्छती वाञ्छतीव तथा व्याकुला सतीत्यर्थः । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । अस्मै प्रियाय अस्थित आत्मानं प्रकाशयन्ती स्थितेत्यर्थः । तिष्ठतेः कर्त्तरि लुङ् । प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं, स्थाघ्वोरिच्चेति सिचः कित्त्वमिकारस्य धातोरन्तादेशः, कित्त्वाच्च गुणः । इति यदसौ हेतोरस्य प्रियस्य चेतः सुतरामहरत । तथाहि, त्रपैव स्त्रियोऽभिभूषयति स्फुटं प्रसिद्धमित्यर्थः । अतोऽस्या अपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः । कुलकार्थान्तरन्यासौ । मध्या चेयं नायिका । लज्जामन्मथमध्यस्था मध्यमोदितयौवनेति लक्षणात् ॥ २८ ॥

किसलयशकलेष्ववाचनीयाः
पुलकिनि केवलमङ्गके निधेयाः ।
नखपदलिपयोऽपि दीपितार्थाः
प्रणिदधिरे दयितैरनङ्गलेखाः ॥ ३९ ॥

क्षतक्षतकरुषा सखीमपास्य
त्वमकुशलेति कयाचिदात्मनैव ।
अभिमतमभि साभिलाषमावि-
ष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥ ४० ॥

अभिमुखमुपयाति मा स्म किञ्चित्

किसलयेति । किसलयशकलेषु वर्त्तमाना इति शेषः अवाचनीयाः अप्रसिद्धलिपिवैलक्षण्याद् वाचयितुमनर्हाः किन्तु केवलं पुलकिनि दयितस्पृष्टत्वात्तत्स्पर्शादेव रोमाञ्चवत्यङ्गके वपुषि निधेया विरहतापशान्त्यर्थोऽर्पणीयाः नखपदानि नखाङ्का एव लिपयोऽक्षराणि येषु ते न तु प्रसिद्धाक्षराः अतोऽवाचनीया इत्यर्थः । नैतावताऽनुतापकारित्वं चेत्याह तथापि दीपितार्थाः सङ्केतितसन्निवेशवशादेव द्योतिताभिप्रेयाः लिख्यन्त इति लेखाः । कर्मणि घञ्प्रत्ययः । अनङ्गस्य लेखाः तत्प्रयुक्ता इत्यर्थः । दयितैः दयिताभिः दयितैश्च । पुमान्स्त्रियेत्येकशेषः । प्रणिदधिरे प्रणिहिता लिखिता इत्यर्थः । दधातेः कर्मणि लिट् । नेर्गदनदेत्यादिना नकारस्य णत्वम् । लोकप्रसिद्धलेख्यवैलक्षण्याद् व्यतिरेकालङ्कारः ॥ ३९ ॥

क्षतेति । क्षतक्षतकरुषा क्षतक्षतिसरोषया कया चिन्नायिकया त्वमकुशला माल्यग्रथने कुशला नासीति सखीमपास्य निरस्यात्मना स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषमाविष्कृतभुजमूलं प्रकाशितकक्षप्रदेशं यथा तथा मूर्ध्नि माला अबन्धि बद्धा । अयञ्च स्वाभिप्रायव्यञ्जकचेष्टारूपस्वापलाख्यः सञ्चारिविशेषः । नायिका प्रौढैव । स्मरमन्दीकृतव्रीड़ा प्रौढ़ा सम्पूर्णयौवनेति लक्षणात् ॥ ४० ॥

त्वमभिदधाः पटले मधुव्रतानाम्।
मधुसुरभिमुखाब्जगन्धलब्धे-
रधिकमधित्वदनेन मा निपाति ॥ ४१ ॥

सरजसमकरन्दनिर्भरासु
प्रसवविभूतिषु भूरुहां विरक्तः।
ध्रुवममृतपनामवाञ्छयासा-
वधरमसुं मधुपस्तवाजिहीते ॥ ४२ ॥

अथ काञ्चिन्नायिकां प्रति सखीवचनं विशेषकेणाह, अभिमुखी-मिति। मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रताः मधुपाः। कर्मण्यण्प्रत्ययः। तेषां पटले अभिमुखमुपयाति आगते सति त्वं किञ्चिन्मा स्माभिदधाः न किञ्चिदपि मौनं भजेत्यर्थः। स्मोत्तरे लङ् न माङ्योग इत्यट्प्रतिषेधः। मौनस्य मधुकरबाधनिवृत्तिरेव फल-मित्याह, मध्विति। मधुना मद्येन सुरभेर्मुखाब्जस्य यो गन्धस्तस्य लब्धेर्लाभात्। स्त्रियां क्तिन्। अनेन मधुव्रतपटलेन अधित्वत् त्वयि। विभक्त्यर्थेऽव्ययीभावः। त्वमावेकवचन इत्यत्रैकवचन इत्यर्थनिर्देशा-दिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदो मपर्यन्तस्य त्वादेशः अतएव विभक्त्यभावाच्च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम्। अधिक-मत्यन्तं सर्वत्रेत्यर्थः मा निपाति मा निपात्यताम्। भावे लुङि चिण्वदुपाङ्गः। अत्र निपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरल-ङ्कारः ॥ ४१ ॥

सरजसेति। किञ्च मधु पिबतीति मधुपो मधुलिट् मद्यपश्च। आतोऽनुपसर्गे कः। भुवि रोहन्ति जायन्त इति भूरुहां भूरुहाणां भौमानाञ्च देहिनां सम्बन्धिनीषु सह रजसा सरजसम्। अचतुरेत्या-दिना साकल्यार्थेऽव्ययीभावः समासान्तनिपातः। तेन सरजस्क इति बहुव्रीहावर्थो लभ्यः सुख्यो वा महाकविप्रयोगबाहुल्यात् अव्ययी-भावदर्शनं तु प्रायिकमित्युक्तं प्राक्। तथाच सरजसं सरजसो वा यो

इति वदति सखीजने निमीलद्-
द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।
अपतदलिभयेन भर्त्तुरङ्कं
भवति हि विक्लवता गुणोऽङ्गनानाम् ॥ ४२ ॥

विशेषकम् ।

अकरन्दस्तेन निर्भरात्तु पूर्णोऽस्तु न तु त्वदधराम्रतेन नाम्ररजस्केनेति भावः । अन्यत्र रजः स्त्रीपुष्पम् । स्याद्रजः पुष्पमार्त्तवमित्यमरः । तत्साहचर्यान्मकरन्दशब्देन शुक्रप्रतीतिः तेन शुक्रशोणितसन्निपात-प्रायास्त्वित्यर्थः प्रसवविभूतिषु पुष्पसम्पत्तिषु जन्मपरम्परासु च विरक्तः निःस्पृहः सन् अमृतं पिबतीति अमृतप इति नाम्नो वाञ्छयासाव-मुत्तवाधरमोष्ठं प्रति आजिहीते आगच्छति ध्रुवं सत्यमित्युत्प्रेक्षा-याम् । अन्यत्र तु अमृतपो देव इति नामवाञ्छया देवभूयापेक्षये-त्यर्थः । अथवा निःश्रेयसप्राप्तीच्छयेत्यर्थः । श्रेयो निःश्रेयसामृत-मित्यमरः । ध्रुवं शाश्वतम् अधरश्वरासम्बन्धरहितम् अमुष्परलोक-पथम् । शुभमिह चामुत्र चान्वेति इत्यादौ लोके वेदे चेदमदसोलौकद्वये रूढ़िप्रदर्शनात् । आजिहीते अन्विष्यतीत्यर्थः । ओ हाङ्गताविति धातोर्लुटि श्लाविति द्विभावः, ई हल्यघोरितीकारः । इह नायि-कावदनसौरभहेतुकस्य मधुपानामागमनस्यामृतपनामवाञ्छाहेतुकत्वोत्-प्रेक्षणाद् हेतूत्प्रेक्षा सा च ध्रुवमिति व्यञ्जकप्रयोगाद्वाच्या सती मधुपस्याधरोष्ठे यस्तासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्वोक्ताप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधया प्रकृ-तार्थनियन्त्रितत्वाच्छब्दशक्तिमूलो ध्वनिरेव न श्लेष इत्यलं विस्तारे-णेति ॥ ४१ ॥

इतीति । इति इत्थं सख्येव जनस्तस्मिन् सखीजने वदति सति निमीलन्त्यौ भयान्मुकुलीभवन्त्यौ अतएव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते । गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती ।

मुखकमलकमुन्नमय्य यूना
यदभिनवोढवधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्र-
ग्रहपरया विविदे विदग्धसख्या ॥ ४४ ॥

व्रततिविततिभिस्तिरोहितायां
प्रतियुवती वदनं प्रियः प्रियायाः ।
यदधयदधरावलोपनृत्य-
त्करवलयस्वनितेन तद् विवव्रे ॥ ४५ ॥

ते कृते द्विगुणिते अतएव सान्द्रतरे अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा काचिदिति शेषः । अक्षिग्रहणस्य पक्ष्मद्वयद्वैगुण्यवच्छ्री-रच्छोरेवेति द्योतनार्थत्वान्न पौनरुक्त्यम् । अलिभयेन भर्त्तुरङ्कमुत्स-ङ्गमपतत् प्राप्तवती । अहो महत् कष्टं यत् कीटकादपि भयमित्या-शङ्क्याह । अङ्गनानां न तु पुंसामिति भावः विक्लवता भीरुता गुणो भवति हि नतु दोष इति भावः । अतएव जनसमक्षं भर्त्तुरङ्कारो-हणमपि न दोषः पार्श्वस्थालम्बनादीनां भयानुभावत्वात् । कुवके-ऽलङ्कारोऽयमर्थान्तरन्यासः ॥ ४३ ॥

मुखेति । यूना अभिनवोढवधूर्नवोढाङ्गनापि बलात् बलात्का-रात् मुखं कमलमिवेत्युपमितसमासः । तदल्पं मुखकमलकम् । अल्पार्थे कन्प्रत्ययः । उन्नमय्य उदास्य । ल्यपि लघुपूर्वादित्ययादेशः । अचुम्बि चुम्बितेति यत् तच्चुम्बनं विदग्धसख्या चतुरसख्या बालपल्ल-वाग्राणां ग्रहो ग्रहणम् । ग्रहवृदृनिश्चिगमश्चेत्यप्प्रत्ययः । तत्परया तदासक्तया सत्या कश्चिद् व्यासङ्गं कल्पयन्त्येत्यर्थः न विविदे अपि किल न प्रकाशितमिति किमुत वक्तव्यमित्यपिशब्दार्थः । किलेत्यलीके वस्तुतो विदित्वाप्यविदित्वेव स्थितं वैदग्ध्यात् अन्यथा तयोर्विस्रम्भ-विहारविघातादिति भावः । मुग्धेयं नायिका । उदयद्यौवना मुग्धा लज्जाविदितमन्मथेति लक्षणात् ॥ ४४ ॥



व्रततीति । प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां व्रत-

विलसितमनुकुर्वती पुरस्ताद्
धरणिरुहाधिरुहो वधूर्लतायाः ।
रमणमृजुतया पुरः सखीना-
मकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥

सललितमवलम्ब्य पाणिनांसे
सहचरमुच्छ्रितगुच्छवाञ्छयान्या ।
सकलकलभकुम्भविभ्रमाभ्या-
मुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ४७ ॥

तिवितयो लताजालानि । वल्ली तु व्रततिर्लतेत्यमरः । साभिलि-रोहितायां सत्यां प्रियः प्रियाया वदनमपयत् अपिबदिति यत् । धेटो औणादिकाल्लङ् । तद्वदनपानम् अधरावलोपेनाधरखण्डनेन तज्जनितव्यथयेत्यर्थः स्खलतोश्चलतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवव्रे विवृतम् तदेव तस्यास्तदनुतापकमभूदित्यर्थः । अत्रैका दृष्टा अपरा त्वीर्ष्यानिर्वेदवतीत्यनुसन्धेयम् ॥ ४५ ॥

विलसितमिति । वधूः काचित् स्त्री पुरस्तादग्रे धरणिरुहमधिरोहतीति धरणिरुहाधिरुट् वृक्षाधिरूढा । रुहेः क्विप् । तस्या लतायाः विलसितं चेष्टितम् । भावे क्तः । अनुकुर्वती एवमित्यास्लेषप्रकारमभिनयन्ती ऋजुतया अकुटिलबुद्धितया सखीनां पुरोऽग्रे अकलितः अविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन् कर्मणि तद्यथा तथा रमणं प्रियमालिलिङ्ग । एषा हर्षौत्सुक्यवती मौढा च ॥ ४६ ॥

सललितमिति । अन्या स्त्री उच्छ्रितगुच्छवाञ्छया उन्नतस्तवकलिप्सया सललितं सविलासं यथा तथा सहचरं प्रियम्पाणिना औचित्याद्वामेनेति शेषः अंसे अवलम्ब्यावष्टभ्य सकलयोः समग्रयोः कलभकुम्भयोः करिकुम्भयोर्विभ्रम इव विभ्रमः सौन्दर्यं ययोस्ताभ्यां स्तनाभ्यां रसाद्रागादुरसि अवतस्तरे आच्छादयामास सहचरमित्यनु-

मृदुचरणतलाग्रदुःस्थितत्वा-
दसहतरा कुचकुम्भयोर्भरस्य।
उपरि निरवलम्बनं प्रियस्य
न्यपतदथोच्चतरोच्चिचीषयान्या॥ ४८॥

उपरिजतरुजानि याचमानां
कुशलतया परिरम्भलोलुपोऽन्यः।
प्रथितपृथुपयोधरां गृहाण
स्वयमिति मुग्धवधूमुदास दोर्भ्याम्॥ ४९॥

पङ्कः। अभिमुखावस्थानादिति भावः। स्तृणातेः कर्त्तरि लिट्। ऋतश्च संयोगादेर्गुणः शर्पूर्वाः खय इत्यभ्यासखकारलोपः। इयञ्च प्रौढ़ैव॥ ४७॥

मृद्विति। अन्या स्त्री उच्चतराणामत्युन्नतकुसुमानामुच्चेतुमवचेतुमिच्छया उच्चतरोच्चिचीषया। चिनोतेः सन्नन्तात् स्त्रियामप्रत्यये टाप्। विभाषा चेरिति कुत्वविकल्पः। मृदुचरणतलाग्रेण दुःस्थितत्वात् दुःखेन स्थितत्वात् कुचकुम्भयोर्भरस्य। पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः। न सहतेऽत्यन्तमित्यसहतरा। सहेः पचाद्यजन्तान्नञ्समासात्तरप्प्रत्ययः। भरमसहमानेत्यर्थः। कृद्योगात् कर्मणि षष्ठी। अथास्मिन्नवसरे निरवलम्बनं यथा तथा प्रियस्योपरि न्यपतत् निरवलम्बनत्वान्निपपातेत्यर्थः। एषा च प्रौढ़ा। स्वभावोक्तिरलङ्कारः॥ ४८॥

उपरिजेति। उपरिजानि उपरि जातानि तरोर्जातानि तरुजानि कुसुमानि तानि याचमानाम् अपचित्य देहीति प्रार्थयमानां प्रथितपृथुपयोधरां प्रशस्तपीवरकुचां मुग्धवधूम् अकुटिलधियं स्त्रियं परिरम्भलोलुपः आश्लेषलालसोऽन्यः कुशलतया वञ्चनापटुतया स्वयं गृहाण त्वमेवापचिनुष्व त्यर्थः इति गम्यमानार्थत्वादुक्तमिति न प्रयुक्तं

इदमिदमिति भूरुहाम्प्रसूनै-
मुहुरतिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन
त्वरयति रन्तुमहो जनं मनोभूः ॥ ५० ॥

विजनमिति बलादमुं गृहीत्वा
क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।
अभिपतितुमना लघुत्वभीते-
रभवदमुञ्चति वल्लभेऽतिगुर्वी ॥ ५१ ॥

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजावनद्धः ।

पौनरुक्त्याद् । दोर्म्यामुदास उद्यच्छति स्म । अयञ्चैकायत्तत्वादनुकूल-नायकः नायिका तु स्वाधीनपतिका प्रौढ़ा च ॥ ४९ ॥

इदमिति । अन्या स्त्री इदमिदमिति इदं ग्राह्यमिदं ग्राह्य-मित्युक्तेत्यर्थः भूरुहां वृक्षाणां प्रसूनैः पुष्पैः पुरः पुरो मुहुरतिलोभ-यता प्रलोभयता नायकेन रहोऽनु अनुरहसमेकान्तम् । अन्वयतप्त-मित्यव्ययीभावसमासान्तः । अनायि नीता । तथाहि, मनोभूः कामो जनं रन्तुन्त्वरयति देशकालानपेक्षयेति भावः । अतएवाश्चर्यमहो इति । पूर्ववन्नायिकानायकविवेकः । अर्थान्तरन्यासः ॥ ५० ॥

विजनमिति । अन्या स्त्री विजनमेकान्तमिति हेतोरमुं वल्लभं क्षणं बलाद् गृहीत्वा आकृष्य अथान्तिके विपक्षं सपत्नीजनं वीक्ष्य लघुत्वभीतेस्तुच्छत्वभयादभिपतितुं मनो यस्याः सा अभिपतितुमनाः । तुं काममनसोरपीति मकारलोपः । अपसर्तुकामेत्यर्थः वल्लभे अमु-ञ्चति अत्यजति सति तस्य विपक्षानवेक्षणादिति भावः । अतिगुर्वी अतिगौरववत्यभवत् स्वयंग्रहलाघवतिरोधानात् भर्तृवल्लभत्वप्रकाश-नाच्चेति भावः । भाग्यवतां सर्वं श्रेयसे भवतीति रहस्यम् । एषा त्वतिप्रगल्भैव ॥ ५१ ॥

पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥ ५२ ॥

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥ ५३ ॥

अधीति । अधिरजनि रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । तस्याः क्षपत्या इत्यर्थः । बुद्धिस्थत्वान्नामग्रहणासहत्वाच्च तच्छब्देन निर्देशः । धाम गच्छं जगामेति रुषा हेतुना प्रियतमया कयाचित् स्त्रजा करधृतेनाघनद्धो युवा पदमपि । अत्यन्तसंयोगे द्वितीया । चलितुं न सेहे न शशाक । तथाहि, ससाध्वसानां भयग्रस्तानां किमिव किंवा । इवशब्दो वाक्यालङ्कार इवेतीषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेष्विति गणव्याख्याने । शक्तिं हरतीति शक्तिहरम् । हरतेरनुद्यमनेऽजित्यच्प्रत्ययः । न भवतीति शेषः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीतिवचनात् । भवन्तीति लटः पूर्वाचार्याणां संज्ञा । सर्वस्यापि भीरूणां शक्तिहरत्वादबलाकृतः स्रग्बन्धोऽपि यूनः शक्तिहर इति युक्तम् इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । खण्डितेयं नायिका, ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति लक्षणात् । नायकस्तु दक्षिणः, भयसम्बन्धसहनादिभिस्तुल्यो नैकत्र दक्षिण इति लक्षणार्थप्रतीतेरिति ॥ ५२ ॥

अथ काचित् खण्डिता निजकान्तमागस्कारिणं पल्लवदानेन प्रसादयन्तं चतुर्भिर्भर्त्सयितुमारभते, नेत्यादि । वयममुष्य दानयोग्या न भवामः खलु किन्तु या असावेवासकौ त्वत्प्रिया । अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् । रहो रहसि । रहस्योपांशुचां लिङ्गे इत्यमरः । त्वां पिबति पानं करोति । पा पाने भौवादिकात् कर्त्तरि लिट् पाघ्रेत्यादिना पिबादेशः । पाति रक्षति च अन्यतो वारयति चेत्यर्थः । पा रक्षणे अदादित्वाच्छपो लुक् । तस्यै अमुं विटान्

तव कितव ! किमाहितैर्वृथा नः
क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकै-
श्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥
मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेनाम् ।

पातीति विटपं पल्लवम् । विटपः पल्लवे षिड्गे इति विश्वः । ददस्व प्रयच्छ । दद दाने इति भौवादिकाल्लोट् । व्रज गच्छ यतो दानाच्चिराय चिरकालात् । चिरार्थेऽव्ययं सदृशोरनुरूपयोर्योगो भवतु उभयोरपि विटपत्वादिति भावः । समालङ्कारोऽयम् । सा समालङ्कृतिर्योगो वस्तुनोरनुरूपयोरिति लक्षणात् ॥ ५३ ॥

तवेति । हे कितव ! धूर्त ! वृथा व्यर्थमेवाहितैः तत्कार्य्यस्यान्यथा सिद्धत्वादिति भावः तव सम्बन्धिभिः क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतंसाः । कर्मण्यण् । तैर्नोऽस्माकं किं तत्साध्यं न किञ्चिदस्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया कर्णपूराणां करणत्वात्तृतीया । उक्तञ्च न्यासोद्योते न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य अपि तु गम्यमानापीति । किन्तु नन्वङ्ग जनविदितैर्जनेष्वतिप्रसिद्धैः । जनेषु विदितैरिति सप्तमीसमासः क्तस्य च वर्त्तमान इति तद्योगे षष्ठीप्रतिप्रसवत्वेऽपि क्तेन च पूजायामिति षष्ठीसमासनिषेधात् जनानामाधारत्वविवक्षायां तदप्राप्ते । भवद्व्यलीकैस्तवाप्रियवचनैः कर्णयुग्मं चिरपरिपूरितं नित्यं पूर्णमेव अतः परिपूरितस्य पूरणायोगादलमेवैभिरित्यर्थः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वेनोपनिबन्धाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५४ ॥

मुहुरिति । अलिनादैर्मुहुरुपहसितां प्रतारणार्थेति प्रहस्यमानामिव स्थितामेनां कलिकां कोरकम् अलङ्कन्निह्नुलहृश्च । कलहे च युगे कलिरिति वैजयन्ती । स्त्रीप्रत्ययस्त्वविवक्षितः स्त्रैषे । नोऽस्माकं

वसतिमुपगतेन धाम्नि तस्याः
शठ! कलिरेष महांस्त्वयाऽद्य दत्तः ॥ ५५ ॥

इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेशरेण।
श्रवणनियमितेन कान्तमन्या
सममसिताम्बुरुहेण चक्षुषा च ॥ ५६ ॥

कलापकम्।

विनयति सुदृशो दृशः पराग-
मणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे ॥ ५७ ॥

किमर्थं वितरसि हे शठ! गूढविप्रियकारिन्! तस्यास्त्वत्प्रियाया धाम्नि भवने वसतिं स्थितिमुपगतेन त्वयाद्यैष वर्त्तमानो महान् कलिः कलहो दत्तः स्वदत्त एव महति कलौ स्थिते किं कल्यन्तरेणे-त्यर्थः। अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् कलिकामिति श्लेषोत्थापितया कोरककलहयोर्भेदे अभेद-रूपातिशयोक्त्यानुप्राणितमिति सङ्करः ॥ ५५ ॥

इतीति। इत्थमित्थं गदितवत्युक्तवती अन्या स्त्री रुषा कान्तं स्फुरितान्युज्ज्वलानि मनोरमाणि च पक्ष्माणीव केशराणि अन्यत्र केशराणीव पक्ष्माणि यस्य तेन श्रवणनियमितेन श्रोत्रे धृतेन निरुद्धेन च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगप-ज्जघान ताडयामास। एषा खण्डिता नायकस्तु धृष्टः। व्यक्ताङ्गो निर्भयो धृष्ट इति लक्षणात्। अत्र स्फुरितेत्यादितुल्यधर्मगस्यो-पमानयोरसिताम्बुरुहचक्षुषोरुभयोरपि ताडनसाधनतयोपात्तत्वेन प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता। लक्षणं तूक्तम् ॥ ५६ ॥

विनयतीति। प्रणयिनि प्रिये सुदृशः प्रियायाः दृशो लोचनात्

स्फुटमिदमभिचारमन्त्र एव
प्रतियुवतेरभिधानमङ्गनानाम् ।
वरतनुरमुनोपहूय पत्या
मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ ५८ ॥

समदनमवतंसितेऽधिकर्णं
प्रणयवता कुसुमे सुमध्यमायाः ।
व्रजदपि लघुतां बभूव भारः
सपदि हिरण्मयमण्डनं सपत्न्याः ॥ ५९ ॥

एकस्मादेवेति भावः कुसुमेषु भवं कौसुमम्परागं रजःकणमक्ष्णैकस्मैवेति भावः आननानिलेन निजमुखफुत्कारेण विनयत्यपनयति सति तद्दृहितयुवतेः तत्सपत्न्याः अक्ष्णोर्द्वयमपि न त्वेकमेवेति भावः रोषा एव रजांसि तैरभीक्ष्णमापुपूरे नैकेन रजःकणेन किञ्चित् स्पृष्टमात्रमिति भावः । पूरयतेः कर्मणि लिट् । पूर्णमित्यर्थः ॥ ५७ ॥

स्फुटमिति । इदम्प्रतियुवतेः सपत्न्याः अभिधानं नामधेयम् अङ्गनानामभिचारः परमारणकर्म यथा स्वेनेनाभिचरन् यजेतेति तस्य मन्त्रोऽभिचारमन्त्रः स एव स्फुटमित्युत्प्रेक्षा यद्यस्माद्वरतनुः स्त्री पत्या भर्त्रा अमुना सपत्नीनामधेयेनोपहूय मृदुकुसुमेन मृदुग्रहणमचिरावचितत्वद्योतनाय देवताभिचारमन्त्राणामासनादिसंस्कारभावं द्योतयति तेनाप्याहता अमूर्च्छत् यदुच्चारणपूर्वकं कुसुमताडनमपि मारकं सोऽभिचारमन्त्र एव सत्यम् अन्यथा केवलकुसुमेऽपि तत्प्रसङ्गादित्यर्थः ॥ ५८ ॥

समदनमिति । प्रणयवता प्रियेण सुमध्यमायाः प्रियायाः अधिकर्णं कर्णे । विभक्त्यर्थेऽव्ययीभावः । कुसुमे समदनं यथा तथा अवतंसिते अवतंसीकृते सति सपदि लघुतां हीनतामगुरुत्वं च व्रजदपि समान एकः पतिर्यस्यास्तस्याः सपत्न्याः । नित्यं सपत्न्यादिष्विति ङीप् नकारश्च । समानस्य सभाव-

अवजितमधुना तवाहमक्ष्णो-
रुचिरतयेत्यवनम्य लज्जयेव ।
श्रवणकुवलयं विलासवत्या
भ्रमररुतैरुपकर्णमाचचक्षे ॥ ६० ॥

अवचितकुसुमा विहाय वल्ली-
र्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां
न परिचयो मलिनात्मनाम्प्रधानम् ॥ ६१ ॥

निपातः । हिरण्यस्य विकारो हिरण्मयम् । दाण्डिनायनेत्यादिना निपातः । तन्मण्डनं भारो बभूव । यत्किञ्चिदपि प्रेम्णा कान्तेन स्वहस्तदत्तं श्लाघ्यं मण्डनं भवति अन्यत् महार्घमपि हीनं भारश्च न तु मण्डनमित्यर्थः । लघुगुरुत्वगुणविरोधस्य हीनार्घत्वेन परिहाराद् विरोधाभासभेदः ॥ ५९ ॥

अवजितमिति । विलासवत्याः स्त्रियः श्रवणकुवलयं श्रवणोत्पलं कर्तृ अहमधुना तवाक्ष्णोरुचिरतया रुचिरस्य भावः रुचिरता । भावे तल् । तया सौन्दर्येणावजितमिति वक्तव्यानुवादः । अतएव लज्जया अवनम्य भ्रमररुतैः तन्निघेषेणेत्यर्थः · उपकर्णङ्कर्णे । विभक्त्यर्थेऽव्ययीभावः । आचचक्ष इवेत्युत्प्रेक्षा ॥ ६० ॥

अवचितेति । अलीनां कुलानि अवचितानि युवतिभिरुपात्तानि कुसुमानि यासां ताः रिक्ताः इत्यर्थः वल्लीः पुष्पलताः विहाय कोमलानि माल्यानि मलन्ते धारयन्तीति तासु कोमलमाल्यमालिनीषु । मल मल्ल धारणे इति धातोर्णिनिः ऋन्नेभ्यो ङीप् । युवतिषु पदमुपदधिरे निदधुः । तथाहि, मलिनात्मनां कृष्णदेहानां दुष्टचित्तानां च परिचयश्चिरकालसाहचर्यं न प्रधानं न प्रयोजकं किन्तु भुक्तिरेवेति भावः । अतः परिचितलतात्यागो नाश्चर्यमित्यर्थः । अत्र मलिनात्मनामिति कृष्णत्वस्य दुष्टत्वेन ... भेदाध्यवसायेनार्थान्तर-

श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमङ्गिरंसभागैः ।
मुकुलितनयनैर्मुखारविन्दै-
र्घनमहतामिव पक्ष्मणाम्भरेण ॥ ६२ ॥

अधिकमरुणिमानमुद्वहद्भि-
र्विकसदशीतमरीचिरश्मिजालैः ।
परिचितपरिचुम्बनाभियोगा-
दपगतकुङ्कुमरेणुभिः कपोलैः ॥ ६३ ॥

अवसितललितक्रियेण बाह्वो-

न्यासस्योत्थापनात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितोऽयमिति सङ्करः ॥ ६१ ॥

अथोत्तरसर्गे जलक्रीडावर्णनाय तदुपोद्घातत्वेनासां वनविहारोद्भवं श्रमातिरेकं सप्तभिः कुलकेन दर्शयति । श्लथेत्यादि । शिरसि जाताः शिरोरुहाः । सप्तम्याश्जनेर्डः हलदन्तादित्यादिना सप्तम्या अलुक् । तेषां पाशः कलापः श्लथस्य तस्य यः पातः तस्य भारादिवेति हेतूत्प्रेक्षा । न पादादौ खल्वादय इति वामनीयनिषेधेऽपि इवशब्दस्य पादादौ प्रयोगः कवेः दोर्दण्डात् । नितरामतिशयेन । अव्ययादामुप्रत्ययः । नतिमङ्गिरंसभागैरुपलक्षिताभिर्नितम्बिनीभिरिति भाविना सम्बन्धः । एवमुत्तरत्रापि योज्यम् । नतांसत्वमुत्तमस्त्रीलक्षणम् । पुनर्घनमहतां सान्द्रदीर्घाणां पक्ष्मणां भरेणेवेति पूर्ववद्धेतूत्प्रेक्षा मुकुलितनयनैर्मुखारविन्दैः । अनयोरुत्प्रेक्षयोः संसृष्टिः ॥ ६२ ॥

अधिकमिति । पुनः परिचितानां प्रणयिनां परिचुम्बनैरभियोगादर्दनादपगतकुङ्कुमरेणुभिः अतएव विकसन्ति वैमल्यात् प्रतिफलन्ति अशीतमरीचेरुष्णांशो रश्मिजालानि येषु तैः । असम्बन्धे सम्बन्धोक्त्यातिशयोक्तिः । अतएवाधिकमरुणिमानमुद्वहद्भिः कुङ्कुमापायेऽप्यातपलङ्घनादतिलोहितैरित्यर्थः कपोलैरुपलक्षितैः ॥ ६३ ॥

ललिततरेण तनीयसा युगेन ।
सरसकिसलयानुरञ्जितैर्वा
करकमलैः पुनरुक्तरक्तभाभिः ॥ ६४ ॥

स्मरसरसमुरःस्थलेन पत्यु-
र्विनिमयसङ्क्रमिताङ्गरागरागैः ।
भृशमतिशयस्वेदसम्पदेव
स्तनयुगलैरितरेतरं निषण्णैः ॥ ६५ ॥

अतनुकुचभरानतेन भूयः
श्रमजनितानतिना शरीरकेण ।
अनुचितगतिसादनिःसहत्वं
कलभकरोरुभिरूरुभिर्दधानैः ॥ ६६ ॥

व्यवसितेति । पुनरवसिताः श्रमेण परिसमाप्ताः ललिताः क्रियाः सुकुमारचेष्टा अपि यस्य तेन ललिततरेण मृदुतरेण तनीयसा तनुतरेण बाह्वोर्युगेन पुनः सरसैरार्द्रैः किसलयैरनुरञ्जितैर्वा अनुरञ्जनं प्रापितैरिव पुनरुक्ता द्विगुणाः रक्ता भासो येषान्तैः पुनरुक्तरक्तभाभिः । हलिसर्वेषामिति यकारलोपः । करकमलैः पाणिपङ्कजैः । अत्नेतरलनकरापेक्षया पुनरुक्तरक्तत्वं स्वाभाविकमेव तत्र किसलयरञ्जनहेतुकत्वमुत्प्रेक्ष्यते । इवार्थे वाशब्दः तदुत्प्रेक्षायामप्रयुक्तः ॥ ६४ ॥

स्मरेति । पुनः स्मरेण सरसं सानुरागं यथा तथा पत्युरुरःस्थलेन कर्त्रा विनिमयेन व्यतिहारेण संक्रमिताऽङ्गरागोऽनुलेपनं तेन रागो रञ्जनं येषु तैः अतिशयोऽतिशयितो यः स्वेदस्तस्य सम्पदा महिम्नेवेत्युत्प्रेक्षा भृशमितरेतरन्निषण्णैः परस्परं संश्रितैः स्तनयुगलैः ॥ ६५ ॥

अतन्विति । पुनः अतनुना महता कुचभरेणानतेन नम्रेण प्रागेवेति भावः । भूयः पुनश्च श्रमजनिता आनतिर्यस्य तेन शरीरकेण सुकुमारशरीरेण किञ्च अनुचिता अनभ्यस्ता । अभ्यस्तेऽप्युचितं न्याय्य-

अपगतनवयावकैश्चिराय
क्षितिगमनेन पुनर्वितीर्णरागैः ।
कथमपि चरणोत्पलैश्चलद्भि-
र्भृशविनिवेशवशात्परस्परस्य ॥ ६७ ॥

मुहुरिति वनविभ्रमाभिषङ्गा-
दतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या
चिरमपि ताः किमुत प्रयासभाजः ॥ ६८ ॥

मिति यादवः । तया गत्या पादचारेण यः सादः कार्श्यं तेन यन्निः-सहत्वम् अक्षमत्वं तद्धानैः गन्तुमक्षमैरित्यर्थः । न सहन्त इति निःसहाः । पचाद्यजन्तेनोपसर्गस्य समासे त्वप्रत्ययः । करभकराः करिहस्ता इवोरवो महान्तस्तैरूरुभिः सक्थिभिः । सक्थि क्लीबे पुमानूरुरित्यमरः ॥ ६६ ॥

अपगतेति । पुनश्चिराय चिरं क्षितिगमनेनापगतो नवयावको नवलाक्षारागा येषान्तैः पुनस्तेनैव वितीर्णरागैः सौकुमार्यादुत्पादितरागैः परस्परस्य भृशविनिवेशवशात् स्थिरन्यासवलात् एकं स्थिरं निवेश्य तदवष्टम्भेनेतरचालनक्रमेणेत्यर्थः कथमपि महता प्रयत्नेन । कथमादि तयात्यन्तं यत्नगौरवभेदयोरित्युत्पलः । चलद्भिश्चरणोत्पलैः ॥ ६७ ॥

मुहुरिति । नितम्बिनीभिरुक्तधर्मोपलक्षिताभिः स्त्रीभिर्मुहुरित्येवं वनविभ्रमाभिषङ्गात् वनभ्रमणासङ्गात्तदा नितरामतमि तान्तम् । तमेर्ण्यन्ताद्भावे लुङ् नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिप्रतिषेधः । युक्तं च तदित्याह । मृदुतरतनवोऽतिकोमलाङ्गयस्ताः स्त्रियः प्रकृत्या अलसाः जडाः अथ चिरमपि प्रयासभाजश्चेत् किमुत सुतरामलसाः स्युरित्यर्थः । अत्र प्रकृतनैसर्गिकालस्यस्य कथनेनागन्तुकस्य कैमुत्यन्यायतः सिद्धत्वकथनादर्थापत्तिरलङ्कारः, एकस्य वस्तुनो भावा-

प्रथममलघुमौक्तिकाभमासीत्
श्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनकुचतटाग्रपाति पश्चा-
दथ शतशर्करतां जगाम तासाम् ॥ ६९ ॥

विपुलकमपि यौवनोद्धतानां
घनपुलकोदयकोमलं चकाशे ।
परिमलितमपि प्रियैः प्रकामं
कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ ७० ॥

अत्र वल्लभ्यदापतेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्कृयेति लक्षणात् । श्रमस्यात्र सञ्चारी वाच्यः, श्रमः खेदोऽध्वरत्योरिति लक्षणात् ॥ ६८ ॥

अथ श्रमानुभावं खेदं वर्णयति । प्रथममिति । अथ तासां स्त्रीणां श्रमजलं प्रथमसुज्ज्वलमण्डमण्डलेषु उज्ज्वलगण्डस्थलेषु अलघुमौक्तिकाभं स्थूलमुक्ताफलसदृशमासीत् । पश्चात्कठिनतरकुचाग्रपाति सत् अथ पतनान्तरं शतं शर्कराः शतशर्करम् । समाहारे द्विगुरेकवचनं वा टाबन्त इति नपुंसकत्वम् । तस्य भावस्तत्ता तां शतशर्करतां शतशकलत्वं जगाम । अत्रैकस्य श्रमजलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात् पर्य्यायालङ्कारभेदः, क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथ वानेकम्पर्य्यायालङ्कृतिर्मतेति लक्षणात् ॥ ६९ ॥

श्रमेऽपि कुचमण्डलमविकृतशोभमित्याह । विपुलकमिति । यौवनोद्धतानां कामिनीनां कुचयुगं विपुलकं पुलकरहितमपि घनपुलकोदयेन सान्द्ररोमोद्गमेन कोमलं सदिति विरोधः विपुलं विस्तृतं तदेव विपुलकमित्यविरोधः प्रियैः प्रकामम्परितो मलमस्येति परिमलं तत् कृतं परिमलितं मलिनीकृतं तथाप्युज्ज्वलं विमलमेव चकाशे इति विरोधः परिमलवत् कृतं परिमलितमित्यविरोधः । मत्वन्तात्तत्करोतीति णिचि कर्मणि क्तः णाविष्टवद्भावे विन्मतोर्लुक् । अपिर्विरोधे । विरोधाभासालङ्कारयोः संसृष्टिः ॥ ७० ॥

अविरतकुसुमावचायखेदा-
न्निहितभुजालतयैकयोपकण्ठम् ।
विपुलतरनिरन्तरावलग्न-
स्तनपिहितप्रियवक्षसा ललम्बे ॥ ७१ ॥

अभिमतमभितः कृताङ्गभङ्गा
कुचयुगमुन्नतिवित्तमुन्नमय्य ।
तनुरभिलषितं क्लमच्छलेन
व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥

हिमलवसदृशः श्रमोद्बिन्दू-

अथैकस्याः प्रियकण्ठावलम्बने श्रमानुभावमेकेनाह । अवि-रतेति । अविरतो यः कुसुमानामवचायो हस्तेन लवनम् । हस्ता-दाने चेरस्तेय इति घञ् । तेन यः खेदस्तस्माद्धेतोरुपकण्ठं कण्ठे । विभक्त्यर्थेऽव्ययीभावः । निहिते भुजालते यया तया । दोः प्रकोष्ठो भुजो बाहुर्भुजा च स्मर्यते बुधैरिति वैजयन्ती । विपुलतरौ निरन्तर-मवलग्नौ संश्लिष्टौ च यौ स्तनौ ताभ्यां पिहितं छादितम्प्रियस्य वक्षो यया तयैकया स्त्रिया ललम्बे लम्बितम् । भावे लिट् ॥ ७१ ॥

अथापरस्याः अङ्गभङ्गाख्यमपरमनुभावमाह, अभिमतमिति । तनुः काचित्तन्वी । वोतो गुणवचनादिति विकल्पादनीकारः । अभि-मतमभितः प्रियसमीपमित्यर्थः उन्नतिवित्तम् औन्नत्येन प्रती-तम् । वित्तो भोगप्रत्यययोरिति प्रत्ययार्थे निष्ठान्तत्वाभाव-निपातः । कुचयुगमुन्नमय्य उत्तुङ्गीकृत्य कृतोऽङ्गभङ्गो गात्रविजृम्भणं यया सा तथा वेल्लिते मिथश्चेष्टिते बाहुवल्लर्यौ भुजलते यया सा । तद्धृतस्येति कप् । क्लमच्छलेन श्रमापनोदकचेष्टाव्याजेनेत्यर्थः अभि-लषितमालिङ्गनाद्यभिलषितं व्यवृणुत प्रकटितवती । वृणोतेर्लङ् । मौढ्यमुत्सुका च ॥ ७२ ॥



अथ कस्याश्चिन्मुग्धायाः प्रियचापलोक्तिद्वारा स्वदोहदं प्रकटयति,

लपनयता किल नूतनोढवध्वाः ।
कुचकलशकिशोरकौ कथञ्चि-
त्तरलतया तरुणेन पस्पृशाते ॥ ७३ ॥
गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः ।
उन्नम्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान्
स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥ ७४ ॥
प्रियकरपरिमार्गाद्दङ्गनानां यदाभूत्

हिमेति । हिमलवसदृशो हिमकणनिभान् श्रमोदबिन्दून् स्वेदबिन्दूनित्यर्थः । मन्थोदनेत्यादिना उदकस्योदादेशः । अपनतया किल प्रमार्जनेव न तु तत्र तात्पर्यमिति भावः तरुणेन यूना नूतनोढवध्वाः कुचौ कलशाविव तौ च किशोरकाविव उल्लङ्घनसाम्यादश्वशावाविव । अश्वशावः किशोरक इत्यमरः । तौ कुचकलशकिशोरकौ । उभयत्राप्युपमितसमासः । कथञ्चित् क्लेशेन सप्रतिषेधमेवेत्यर्थः तरलतया चपलतया उत्सुकतयेत्यर्थः पस्पृशाते स्पृष्टौ । स्पृशे कर्मणि लिट् । पुष्पिताग्रा वृत्तम् ॥ ७३ ॥

अथ सर्वासामेव स्वेदोद्रेकं वर्णयति, गत्वेति । युवतय एव सरितस्तासां स्वेद एवापूरः प्रवाहः जघनमेव पुलिनं तत्रोद्रेकं गत्वा रुद्ध आवृतो मध्यप्रदेशोऽवलग्नभागः प्रवाहदेशश्च येन सः पूर्णनाभीह्रदान्तः । रेफान्तमकारान्तं वा । पूर्णेति पूरेर्ण्यन्तात् कर्मणि क्तः वा दान्तेत्यादिना णिलुगिट्प्रतिषेधनिपातः । उच्चैरुन्नतौ कुचावेव तटौ तयोर्भुवम्प्रदेशमुन्नम्य रोमकूपान् रोमाणि रोमरन्ध्राणि तान्येव कूपान् प्लावयन् पूरयन् गण्डस्थलानि कपोलभागान् उन्नतभूभागांश्च प्राप । अत्र युवतिषु सरित्त्वस्य तदवयवेष्ववयवानां च निरूपणात्समवस्तुविषयसावयवरूपकं श्लेषानुप्राणितम् । मन्दाक्रान्ता वृत्तम् । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति लक्षणात् ॥ ७४ ॥

एवमध्वश्रमानुभावं स्वेदोद्रेकं वर्णयित्वा तत्फलभूतां जल-

पुनरधिकतरैव खेदतोयोदयश्रीः ।
अथ वपुरभिषेक्तुमास्तदाम्भोभिरीषु-
र्वनविहरणखेदम्लानमम्लानशोभाः ॥ ७५ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
वनविहारो नाम सप्तमः सर्गः ॥ ७ ॥

---

विहारेच्छाभावान्दर्शयति, प्रियेति । यदा अङ्गनानां प्रियकरपरि-मार्गात् प्रियकरस्पर्शात् । मृजेर्घञ्प्रत्ययः । खेदतोयोदयश्रीः खेदो-द्गमसम्पत् पुनर्भूयोऽप्यधिकतरैवाभूत् तदा अम्लानशोभाः अक्षीण-कान्तयः वपुषि म्लानेऽपीति भावः ता अङ्गना वनविहरणखेदेन म्लानम् । म्लायतेः कर्त्तरि क्तः, संयोगादेरातोधातोर्यण्वत इति निष्ठानत्वम् । वपुरङ्गम् अथ कार्त्स्न्येन । मङ्गलानन्तरारम्भप्रश्नकार्त्-स्न्येष्वथो अथेत्यमरः । अम्भोभिरभिषेक्तुम् ईषुः इच्छन्ति स्म । इषे-र्लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थनहेतुकत्वेनोपनिबन्धा-द्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनी वृत्तम् ॥ ७५ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघ-
काव्यव्याख्याने सर्वङ्कषाख्ये सप्तमः सर्गः ॥ ७ ॥

---

# अष्टमः सर्गः ।



आयासादलघुतरस्तनैः स्तनद्भिः
श्रान्तानामविकचलोचनारविन्दैः ।
अभ्यभ्रः कथमपि योषितां समूहै-
स्तैरुर्वीनिहितचलत्पदं प्रचेले ॥ १ ॥

यान्तीनां सममसितभ्रुवां नतत्वा-
दंसानां महति नितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतया मिथो नितम्बैः
सम्बाधं बृहदपि तद् बभूव वर्त्म ॥ २ ॥

अथ वपुरभिषेक्तुमास्तताम्भोभिरीषुरित्युक्तं तदेव वर्णयितुमारभते, आयासादिति । अलघुतरस्तनैः पृथुतरकुचैरिति मान्द्यहेतूक्तिः । स्तनद्भिः पाभिः अमश्वासैर्वा शब्दायमानैः । स्तन शब्दे इति धातोर्लटः शत्रादेशः । अविकचलोचनारविन्दैः अमनिमीलिताक्षिपद्मैः आयासादनविहारखेदात् श्रान्तानां क्लान्तानां योषितां तैः समूहैः कर्तृभिः उर्व्यां निहितानि निःक्षिप्तानि । डुधाञ् धारणे इति धातोः कर्मणि क्तः । तथैव चलन्ति पदानि यस्मिन् कर्मणि तद्यथा तथा उत्क्षेपणाशक्त्या भुवि बलादाकृष्यमाणचरणमित्यर्थः अभ्यम्भोऽम्भः प्रति कथमपि प्रचेले प्रचलितम् । भावे लिट् । स्वभावोक्तिरलङ्कारः । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति लक्षणात् । अस्मिन् सर्गे प्रहर्षिणी वृत्तम् । म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ १ ॥

यान्तीनामिति । समम्पङ्क्तिशो यान्तीनाम् । आच्छीनद्योर्नुमिति वैकल्पिको नुमागमः । असितभ्रुवां स्त्रीणामंसानां नतत्वाद्धेतोर्नितान्तं

नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः
साशङ्कं मुहुरपि कौतुकात्करैस्ताः ।
पस्पर्श क्षणमनिलाकुलीकृतानां
शाखानामतुहिनरश्मिरन्तरालैः ॥ ३ ॥
एकस्यास्तपनकरैः करालिताया
बिभ्राणः सपदि सितोष्णवारणत्वम् ।
सेवायै वदनसरोजनिर्जितश्री-
रागत्य प्रियमिव चन्द्रमाश्चकार ॥ ४ ॥

महत्यन्तरे व्यवकाशे सत्यपि विपुलतया हेतुना मिथः संसक्तैरन्योन्य-श्लिष्टैर्नितम्बैर्बृहद्भिस्तनैरपि तद्वर्त्म सम्बाध्यत इति सम्बाधः सङ्कटम् । सङ्कटं ना तु सम्बाध इत्यमरः । घञन्तस्यापि विशेष्यलिङ्गत्वं सम्बाध-मनुवर्त्तत इति भाष्यकारादिप्रयोगादिष्यते । बभूव । नतांसत्वनित-म्बवैपुल्योक्त्या सौन्दर्यातिशय उक्तः । असम्बाधेऽपि सम्बाधाभिधाना-दतिशयोक्तिः ॥ २ ॥

नीरन्ध्रेति । नीरन्ध्रैः सान्द्रैर्द्रुमैः शिशिरां भुवं व्रजन्तीर्गच्छन्तीः ताः स्त्रीः अतुहिनरश्मिरुष्णांशुः क्षणमनिलेनाकुलीकृतानां चालि-तानां शाखानामन्तरालैर्नीरन्ध्रत्वेऽपि मुहुरनिलचालनजनितैरव-काशैर्मुहुः कौतुकादौत्सुक्यादिव साशङ्कस्मरदारत्वात् सभयमित्यर्थः करैः पस्पर्श स्पृष्टवान् । अत्र चलच्छाखाहेतुकस्य तपनकरस्पर्शस्यौत्-सुक्यहेतुकत्वोत्प्रेक्षणाद् गुणहेतूत्प्रेक्षा ॥ ३ ॥

अथ कस्याश्चिद् वृत्तं श्वेतातपत्रस्य चन्द्रत्वेनोत्प्रेक्षते, एकस्या इति । वदनसरोजेन स्त्रीमुखपङ्कजेन निर्जितश्रीश्चन्द्रमाः एतेन वदनसरोजस्य चन्द्रविजयात्सरोजान्तरवैलक्षण्यं चन्द्रस्य निकृष्टत्वञ्चो-क्तम् । अतएव सेवायै तत्सेवनार्थम् आगत्य तपनकरैः करालितायाः भीषितायाः पीड़िताया इत्यर्थः । करालो भीषणेऽन्यवदिति विश्वः । एतेन सेवावकाशो दर्शितः । एकस्याः कस्याश्चिदङ्गनायाः

स्रं रागादुपरि वितन्वतोत्तरीयं
कान्तेन प्रतिपदवारितातपायाः।
सच्छत्रादपरविलासिनीसमूहा-
च्छायासीदधिकतरा तदापरस्याः॥ ५॥
संस्पर्शप्रभवसुखोपचीयमाने
सर्वाङ्गे करतललग्नवल्लभायाः।
कौशेयं व्रजदपि गाढतामजस्रं
सस्रंसे विगलितनीवि नीरजाक्ष्याः॥ ६॥

अपदि आतपत्रस्य एव सितोष्णवारणत्वं स्वयमेव श्वेतातपत्रत्वभि-
भ्राणः सन् प्रियङ्करोरेव इति क्रियास्वरूपोत्प्रेक्षा। पराजितः
कयाचित् सेवनया जेतुश्चित्तसन्तोषमुपार्जयतीति भावः॥ ४॥

स्रमिति। रागाद्धेतोरुपरि प्रियाया मूर्द्धनि स्रं स्वकीयमुत्त-
रीयं वितन्वता विस्तारयता कान्तेन प्रियेण प्रतिपदम्पदे पदे वारितः
आतपो यस्याः तस्या अपरस्याः कस्याश्चिदङ्गनायाः सच्छत्रात् छत्रयुक्ता-
दपरविलासिनीसमूहात् सकाशात्। पञ्चमीविभक्ते इति पञ्चमी।
अधिकतरा छाया अनातपः कान्तिश्च तदा आसीत्। छत्रच्छाया-
तोऽपि कान्तस्वहस्तधृतोत्तरीयच्छायैवानन्यसाधारणी ज्यायसी मुख-
कान्तिरपि तस्या एव भूयसीति भावः। छाया त्वनातपे कान्ता-
वित्यमरः। एतेन सच्छत्रादच्छत्रस्याधिकच्छायेति विरोधोऽपि निरस्त
इति विरोधाभासोऽलङ्कारः॥ ५॥

संस्पर्शेति। करतले लग्नो वल्लभो यस्यास्तस्याः स्वहस्तेन
तद्धस्तं गृहीत्वा गच्छन्त्या इत्यर्थः। अतएव नीरजाक्ष्याः सर्वाङ्गे
संस्पर्शप्रभवेण प्रियाङ्गसङ्गप्रभवेण सुखेनोपचीयमाने पोषमुपगमिते
सति। अतएव गाढ़तां दृढत्वं व्रजदपि विगलितनीवि सुखपारव-
श्याद्विश्लिष्टग्रन्थि कौशेयं दुकूलम् अजस्रं सस्रंसे स्रस्तम्। एषा
हृष्टा हर्षितरोमा च॥ ६॥

गच्छन्तीरलसमवेक्ष्य विस्मयिन्य-
स्तास्तन्वीर्न विदधिरे गतानि हंस्यः ।
बुद्ध्वा वा जितमपरेण काममावि-
ष्कुर्वीत स्वगुणमपत्रपः क एव ॥ ७ ॥

श्रीमद्भिर्जितपुलिनानि माधवीना-
मारोहैर्निविडबृहन्नितम्बबिम्बैः ।
पाषाणस्खलनविलोलमाशु नूनं
वैलक्ष्यादयुरवरोधनानि सिन्धोः ॥ ८ ॥

मुक्ताभिः सलिलरयास्तशुक्तिपेशी-
मुक्ताभिः कृतरुचि सैकतं नदीनाम् ।

गच्छन्तीरिति । हंस्यो हंसाङ्गनाः अलसमन्दं गच्छन्तीस्तास्तन्वीः स्त्रीरवेक्ष्य विस्मयिन्यो गतिसौष्ठवाद्विस्मयवत्यः सत्यो गतानि स्वयं लीलागमनानि न विदधिरे न चक्रुः लज्जयेति भावः । तथाहि, परेण जितं स्वगुणं बुद्ध्वा वा बुद्ध्वापीत्यर्थः । क एव को वा अपत्रपः सन् कामम् आविष्कुर्वीत प्रकाशयेत् न कश्चिदपीत्यर्थः । इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वम् । अत्र तिरश्चां विवेकित्वातिशयोक्त्या गतिकरणनिषेधसमर्थनार्थोऽयमर्थान्तरन्यासः ॥ ७ ॥

श्रीमद्भिरिति । श्रीमद्भिः शोभावद्भिः निविडा दृढतरा नितम्बबिम्बाः कटिपश्चाद्भागा येषान्तैः माधवस्येमाः माधव्यस्तासां हरिवधूनाम् आरोहन्त इत्यारोहैः कटिपुरोभागैः जघनैः जितपुलिनानि जितसैकतानि सिन्धोरवरोधनानि समुद्रमहिष्यो नद्य इत्यर्थः । वैलक्ष्यात् पराजयकृतमनःसङ्कोचाद्धेतोः पाषाणेषु स्खलनेनाभिघातेन विलोलं यथा तथा आशु ययुः अगुः नूनम् । नदीनां स्वाभाविक्याः पाषाणस्खलिताशुगतेः वैलक्ष्यहेतुकत्वोत्प्रेक्षणात् गुणहेतूत्प्रेक्षा ॥ ८ ॥

मुक्ताभिरिति । सीविकः सीजनः कर्ता । सलिलरयेणास्ता

स्त्रीलोकः परिकलयाञ्चकार तुल्यं
पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥ ९ ॥
आघ्राय स्रगजमनिन्द्यगन्धबन्धुं
निःश्वासश्वसनमसक्तमङ्गनानाम् ।
आरण्याः सुमनस ईषिरे न भृङ्गै-
रौचित्यं गणयति को विशेषकामः ॥ १० ॥
आयान्त्यां निजयुवतौ वनात्सशङ्कं
बर्हाणामपरशिखण्डिनीं भरेण ।

शुक्ताः शुक्तयो मुक्तास्फोटास्त एव पेश्यः कोशाः पुटा इति यावत् ।
मुक्तास्फोटः स्त्रियां शुक्तिरिति, पेशी कोशो द्विहीने इति चामरः ।
ताभिर्मुक्ताभिर्विमुक्ताभिर्मुक्ताभिर्मौक्तिकैः । अथ मौक्तिकं मुक्तेत्य-
मरः । क्षतरुचि क्षतशोभं नदीनां सिकतामयं सैकतं पुलिनम् ।
तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः । सिकतासै-
कताभ्याञ्चेत्यण्प्रत्ययः । विगलितैर्विशीर्णैर्हारैः चारुभिः स्वैः
पल्यङ्कैः शयनैः । शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समा इत्यमरः ।
तुल्यं सदृशं परिकलयाञ्चकार मेने । पूर्णोपमेयम् ॥ ९ ॥

आघ्रायेति । भृङ्गैः कर्तृभिः स्रगजमध्वश्रमोत्थम् अनिन्द्यगन्धस्य
साध्यगन्धस्य बन्धुं सहचरं तद्वन्तमित्यर्थः । अङ्गनानां निःश्वास-
श्वसनन्निःश्वासमारुतम् असक्तमप्रतिबिद्धम् आघ्राय अरण्ये भवाः
आरण्याः सुमनसः पुष्पाणि नेषिरे नेष्टाः । इषु इच्छायां कर्मणि
लिट् । अनुचितोऽयमकाण्डे परिचितपरित्याग इत्याह । विशेषं
कामयते इति विशेषकामः । शीलिकामिभक्ष्याचरिभ्यो ण इति
णप्रत्ययः । क औचित्यङ्गणयति न कोऽपीत्यर्थः । अर्थान्तर-
न्यासः ॥ १० ॥

आयान्त्यामिति । निजयुवतौ वनादायान्त्यामागच्छन्त्यां सत्यां
सशङ्कं सभयम् अपरशिखण्डिनीं जारिणीं बर्हाणां भरेण व्यवदध-

आलोक्य व्यवदधतं पुरो मयूरं
कामिन्यः श्रद्दधुरनार्जवं नरेषु ॥ ११ ॥

आलापैस्तुलितरवाणि माधवीनां
माधुर्य्यादमलपतत्रिणां कुलानि ।
अन्तर्द्धासुपययुरुत्पलावलीषु
प्रादुःष्यात्क इव जितः पुरः परेण ॥ १२ ॥

मुग्धायाः स्मरललितेषु चक्रवाक्या
निःशङ्कं दयिततमेन चुम्बितायाः ।
प्राणेशानभि विदधुर्विधूतहस्ताः
शीत्कारं समुचितमुत्तरं तरुण्यः ॥ १३ ॥

तच्छादयन्तं मयूरं पुर आलोक्य कामिन्यः प्रियेष्वनार्जवं कौटिल्यं श्रद्दधुः अधुर्विश्वस्तवत्यः कुटिलाः पुरुषा इति निश्चिक्युरित्यर्थः । दधातेर्लुङि गातिस्थेत्यादिना सिचो लुक् आत इति श्रेर्जुसादेशः । श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्येति श्रच्छब्दस्य धातोः प्राक् प्रयोगः ॥११॥

आलापैरिति । माधवीनां हरिवधूनाम् आलापैः कर्तृभिः माधुर्य्याद्धेतोस्तुलितरवाणि तिरस्कृतरुतानि अमलपतत्रिणां हंसानां कुलानि उत्पलावलीष्वन्तर्द्धाम् । अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यमिति अन्तःशब्दस्योपसर्गत्वादातश्चोपसर्गे इत्यङ्प्रत्ययः । उपययुः । युक्तं चैतदित्याह । तथाहि, परेण जितः क इवशब्दो वाक्यालङ्कारे पुरो जेतुरग्रे प्रादुःष्यात् प्रादुर्भवेत् । उपसर्गप्रादुर्भ्यामस्तिर्यच्पर इति षत्वम् । अर्थान्तरन्यासः ॥ १२ ॥

मुग्धाया इति । दयिततमेन निःशङ्कं निर्विचारं चुम्बिताया दष्टायाः स्मरललितेषु चुम्बनाद्यनन्तरकृत्येषु शीत्कारादिकामचेष्टितेषु मुग्धायाः मूढायाः चक्रवाक्याः समुचितं योग्यं शीत्कारं शीत्काररूपम् उत्तरं कृत्यं तरुण्यः स्वयं प्राणेशान् अभि विधूतहस्ताः कान्तो विदधुः तादृशभावनया सह दृष्टा इव, शीच्चक्रुरिति

उत्फुल्लस्फुटितसरोरुहार्घ्यमुच्चैः
सस्नेहं विहगरुतैरिवालपन्ती।
नारीणामथ सरसी सफेनहासा
प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥ १४ ॥

नित्याया निजवसतेर्निरासिरे य-
द्रागेण श्रियमरविन्दतः कराग्रैः।
व्यक्तत्वं नियतमनेन निन्युरस्याः
सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥ १५ ॥

शीत्कारासम्बन्धे तत्सम्बन्धातिशयोक्त्या तत्कारणमुद्दीपकमासीदित्युक्तम् ॥ १३ ॥

उत्फुल्लेति। तथानन्तरमुत्फुल्लं स्फुटितसरोरुहं विकचारविन्दमेवार्घ्यमर्घ्यद्रव्यं यस्मिन् तत्तया सस्नेहं विहगरुतैरालपन्ती स्वागतादिवचनं व्याहरन्तीव स्थिता इत्युत्प्रेक्षा। फेन इव हासस्तेन सहिता सफेनहासा स्मितपूर्वाभिभाषिणीत्यर्थः। सरसी पुष्करिणी नारीणामूर्मिभिरेव हस्तैः पाद्यम्पादोदकम्। पादार्घाभ्याञ्चेति यत्प्रत्ययः प्रीत्येवेत्युत्प्रेक्षा व्यतनुत रूपकानुप्राणितोत्प्रेक्षाद्वयस्य सापेक्षत्वात् संसृष्टिः ॥ १४ ॥

नित्याया इति। क्षितिसुतविद्विषो नरकद्विषो हरेः महिष्यः कराग्रैः पाणिपल्लवैः कर्त्तृभिः रागेण रक्तवर्णेन इच्छया च श्रियं शोभां रमां च नित्यायाः सदातन्याः निजवसतेः स्वनिवासादरविन्दतोऽरविन्दान्निरासिरे निष्कासयाञ्चक्रुः निरस्यन्ति स्मेति यावत्। उपसर्गादस्यत्यूह्योर्वा वचनमिति विकल्पादात्मनेपदम्। अनेन निरासेनास्याः श्रियः सापत्न्यं सपत्नीत्वम्। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः। व्यक्तत्वं निन्युर्व्यक्तीचक्रुरित्यर्थः। अत्र श्रीशब्देन रमाशोभयोरभेदाध्यवसायेन श्रीनिवासस्य सापत्न्यव्यक्तीकरणार्थत्वोत्प्रेक्षणात् श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितेयं फलोत्प्रेक्षेति सङ्करः ॥ १५ ॥

आस्कन्दन् कथमपि योषितो न याव-
द्भीमत्यः प्रियकरधार्य्यमाणहस्ताः ।
औत्सुक्यात्त्वरितममूस्तदम्बु, ताव-
त्संक्रान्तप्रतिमतया दधाविवान्तः ॥ १६ ॥

ताः पूर्वं सचकितमागमय्य गाधं
कृत्वाथो मृदुपदमन्तराविशन्त्यः ।
कामिन्यो मन इव कामिनां सरागै-
रङ्गैस्तज्जलमनुरञ्जयाम्बभूवुः ॥ १७ ॥

संक्षोभं पयसि मुहुर्महेभकुम्भ-
श्रीभाजा कुचयुगलेन नीयमाने ।

आस्कन्दन्निति । भीमत्यः प्रवेशभीरवो योषितः प्रियकरैर्धार्य्यमाणहस्ताः प्रियकरावलम्बाः सत्यः यावत् कथमपि नास्कन्दन् न प्राविशन् तावत् संक्रान्तप्रतिमतया संक्रान्तप्रतिबिम्बतया तदम्बु, कर्तृ, औत्सुक्यादुत्कण्ठतया त्वरितममूरन्तर्दधाविव अन्तः प्रावेशयदिवेत्यर्थः । प्रतिबिम्बसंक्रमणादन्तर्धानोत्प्रेक्षणात् क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥ १६ ॥

ताः इति । ताः कामिन्यः कामिनः कामुकस्य मन इव तज्जलं पूर्वम्प्रथमं सचकितं सभयं यथा तथा गाधमुत्तानमागमय्य गमनेन ज्ञात्वा पुरःप्रविष्टपुरुषमुखेन गाधं तदिति परामृष्येत्यर्थः । अन्यत्र दूतमुखेन ज्ञात्वेत्यर्थः । अथोऽनन्तरं मृदु मन्दं पदं कृत्वा पदं न्यस्य अन्यत्र तु स्वयं सम्भाषणादिकं कृत्वेत्यर्थः । अन्तरमभ्यन्तरमाविशन्त्यः प्रविष्टाः सत्यः अन्यत्र रहस्यकर्मणि प्रवृत्ता इत्यर्थः । सरागैः साङ्गरागैः सानुरागैश्च अङ्गैर्गात्रैरनुरञ्जयाम्बभूवुः तद्वर्णाक्रान्तं चक्रुः अन्यत्र त्वनुरक्तं चक्रुरित्यर्थः । श्लेषसङ्कीर्णेयमुपमा ॥ १७ ॥

संक्षोभमिति । महेभकुम्भश्रीभाजा तत्सदृशश्रीभाजेत्यर्थः । अत-एवासम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः । कुचयुगलेनोच्छ्रसितेनेति

विश्लेषं युगमगमद्रथाङ्गनाम्नो-

रुद्वृत्तः क इव सुखावहः परेषाम् ॥ १८ ॥

आसीना तटभुवि सस्मितेन भर्त्रा

रम्भोरूरवतरितुं सरस्यनिच्छुः।

धुन्वाना करयुगमीक्षितुं विलासान्

शीतालुः सलिलगतेन सिच्यते स्म ॥ १९ ॥

नेच्छन्ती सममसुना सरोऽवगाढुं

रोधस्तः प्रतिजलमीरिता सखीभिः।

आश्लिष्यद्भयचकितेक्षणं नवोढा

वोढारं विपदि न दूषितातिभूमिः ॥ २० ॥

भावः। पयसि मुहुः संक्षोभं नीयमाने प्राप्यमाणे सति रथाङ्गनाम्नो-र्युगञ्चक्रवाकयुगलं विश्लेषं वियोगमगमत् वियोगासहमपीति भावः। तथाहि, उद्वृत्त उन्नतो वृत्तस्य उद्वर्त्तनं यस्येति वा उद्वृत्तः अन्य-तोद्वृत्त उन्मार्गवर्त्तीति यावत् स क इव को वा परेषां स्वेतरेषां सुखावहः सुखकरः न कोऽपीत्यर्थः। अयञ्च श्लेषमूलातिशयोक्ति-जीवितोऽर्थान्तरन्यासः ॥ १८ ॥

आसीनेति। शीतं न सहत इति शीतालुः शीतभीरुः। शीतो-ष्णाभ्यान्तदसहने आलुच् वक्तव्यः। अतएव सरसि अवतरितुं प्रवेष्टु-मनिच्छुरनभिलाषुका अतएव तटभुवि आसीना उपविष्टा। आसेः कर्त्तरि शानच् ईदास इतीकारः। रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूः स्त्री। ऊरूत्तरपदादौपम्य इत्यूङ्प्रत्ययः। सलिलगतेन स्वयं सलिलं प्रविष्टेन सस्मितेन भर्त्रा विलासानीक्षितुं करयुगन्धुन्वाना कम्पयन्ती। धुनोतेः कर्त्तरि शानच्प्रत्ययः। सिच्यते स्म सिक्ता ॥१९॥

नेति। असुना सममनेन भर्त्रा सह सरोऽवगाढुमवगाहितुम्। स्वरतिसूतिसूयतिधूञूदितो वेति विकल्पान्नेड़ागमः। नेच्छन्ती लज्जया अनिच्छन्ती। नञर्थस्य नशब्दस्य सुप्सुपेति समासः नञ्समासो

तिष्ठन्तमम्भसि पुमांसमंसमात्रे
तद्दघ्नन्तदवयती किलात्मनोऽपि ।
अभ्येतुं सुतनुरभीरियेष मौग्ध्या-
दाश्लेषि द्रुतममुना निमज्जतीति ॥ २१ ॥

आनाभेः सरसि नतभ्रुवावगाढे
चापल्यादथ पयसस्तरङ्गहस्तैः ।
उच्छ्रायि स्तनयुगमध्यरोहि लब्ध-
स्पर्शानां भवति कुतोऽथवा व्यवस्था ॥ २२ ॥

वा । अथ सखीभिः प्रतिजलं जलक्षति रोषस्तो रोषणः । प्रत्युस्या- सासिल् । ईरिता नुन्ना नवोढा नववधूः भयेन चकितेक्षणं संभ्रान्त- दृष्टि तथा तथा वोढारं भर्त्तारमाश्लिषत् आलिङ्गितवती । श्लिष आलिङ्गने इति धातोर्लुङि च्लेः क्सादेशः । न च धार्ष्ट्यदोषापत्ति- रित्याह । विपदि विपत्तौ अतिक्रान्ता भूमिरतिभूमिरमर्यादा न दूषिता । आपत्काले नास्ति मर्यादेति न्यायादिति भावः । अर्था- न्तरन्यासालङ्कारः ॥ २० ॥

तिष्ठन्तमिति । सुतनुः शुभाङ्गी स्त्री अंसः प्रमाणमस्येति अंस- मात्रे अंसप्रमाणे । प्रमाणे द्वयसज्दघ्नञ्मात्रचिति मात्रच्प्रत्ययः । पयसि जले तिष्ठन्तं पुमांसं वीक्ष्येति शेषः । आत्मनोऽपि तत् पयः तद्दघ्नं तावन्मात्रमंसमात्रम् अवयती जानती किल तथा सम्भा- वयन्तीत्यर्थः । वार्त्तासम्भाव्ययोः किलेत्यमरः । अवपूर्वादिणः शतरि इणो यणिति यणादेशः उगितश्चेति ङीप् । किलशब्दस्यालीकार्थत्वे मौग्ध्यविरोधः । अतएव मौग्ध्यादविवेकादभीर्निर्भीका सती अभ्येतुं पुमांसमभिगन्तुमियेष इच्छति स्म । अमुना पुंसा निमज्जतीति द्रुतमाश्लेषि आश्लिष्टा ॥ २१ ॥

आनाभेरिति । नतभ्रुवा स्त्रिया सरसि आनाभेर्नाभिपर्यन्तम् । आङ् मर्यादाभिविध्योरिति विकल्पादसमासः । अवगाढे प्रविष्टे

कान्तानां कुवलयमप्यपास्तमक्ष्णोः
शोभाभिर्न मुखरुचाऽहमेकमेव ।
संहर्षादलिविरुतैरितीव गाय-
ल्लोलोर्मौ पयसि महोत्पलं ननर्त्त ॥ २२ ॥
त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।

षति । गाहेः कर्मणि क्तः । अथ पयसश्चापल्याल्लौल्यात् । ब्राह्म-
णादिषु पाठात् ष्यञ्प्रत्ययः । तरङ्गैरेव हस्तैस्तरङ्गहस्तैरुच्छ्रायोऽस्या-
स्तीत्युच्छ्रायि उन्नतिमत् स्तनयुगमध्यरोहि अधिरूढम् । भिदुक-
षादप्रसारणन्यायादिति भावः । रोहतेः कर्मणि लुङ् । अथवा
तथाहीत्यर्थः । लब्धसर्शान्तरं लब्धप्रवेशानामित्यर्थः । कुतः कुत्र वा ।
सार्वविभक्तिकस्तसिल् । व्यवस्था मर्य्यादा भवति न कुत्रापीति भावः,
प्रायेण सर्वेऽप्यसम्भवब्रह्मचारिण एवेति भावः । अत्र चापल्यादिति
द्वयोरपि लौल्ययोरभेदाध्यवसायमूलातिशयोक्त्या तरङ्गहस्तैरिति
रूपकेण च पयसि कामित्वप्रतीतेः समासोक्तिः तदुपजीवी चार्थान्तर-
न्यास इति सङ्करः ॥ २२ ॥

कान्तानामिति । लोलोर्मौ चपलोर्मिणि । तृतीयादिषु भाषित-
पुंस्कं पुंवद्गालवस्येति विकल्पात् पुंवद्भावः । पयसि महोत्पलमरविन्दं
कर्तृ । अरविन्दं महोत्पलमित्यमरः । कान्तानां मुखरुचा अहमेकमेव
नापास्तं किन्तु तासामक्ष्णोः शोभाभिः कुवलयमप्यपास्तम् इति संह-
र्षात्सन्तोषाद्धेतोरलिविरुतैर्गायत् अलिरुतरूपं गानं कुर्वदिति रूप-
कम् । इत्थम्भूतलक्षण इति तृतीया । ननर्त्तेव । न दुःखम्पञ्चभिः
सहेति न्यायान्नृत्यति स्म । अत्रोर्मिचलनहेतुके महोत्पलचलने अलि-
नादसंहर्षहेतुकसमानन्दत्यत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्-
प्रेक्षा वाच्या ॥ २२ ॥


त्रस्यन्तीति । चलाः शफर्यः यासुकासा मत्स्यः । शोभी तु

क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ॥ २४ ॥
आकृष्टप्रतनुवपुर्लतैस्तरङ्गि-
स्तस्याम्भस्तदथ सरोमहार्णवस्य ।
अक्षोभि प्रसृतविलोलबाहुपक्षै-
र्योषाणामुरुभिरुरोजगण्डशैलैः ॥ २५ ॥
गाम्भीर्यन्दधदपि रन्तुमङ्गनाभिः
संक्षोभं जघनविघट्टनेन नीतः ।

शफरी द्वयोरित्यमरः । ताभिर्विघट्टितो विद्धावूरू यस्याः सा अतएव त्रस्यन्ती बिभ्यती । वा भ्राशेत्यादिना विकल्पात् श्यनि शतरि ङीप् । वामौ सुन्दरावूरू यस्याः सा वामोरूः स्त्री । संहितशफलक्षणवामा-देश्चेत्यूङ्प्रत्ययः । विभ्रमस्य विलासस्यातिशयमाप । तथाहि, रमण्यो हेतोर्विनापि कारणं विनापि । पृथग्विनेत्यादिना विकल्पात् पञ्चमी । लीलाभिर्विलासैः प्रसभप्रकारं क्षुभ्यन्ति अहो निष्कारणक्षोभादा-श्चर्यमित्यर्थः । कारणे सति किमु वक्तव्यम् । अत्राप्रकृतनिष्कारण-क्षोभकथनात् सकारणक्षोभस्य कैमुत्यन्यायलब्धत्ववर्णनादर्थापत्तिरल-ङ्कारः । दण्डापूपिकयार्थान्तरस्यापतनमर्थापत्तिरिति सूत्रम् ॥ २४ ॥

आकृष्टेति । अथानन्तरमाकृष्टाः प्रतनवो वपूंष्येव लता यैस्तै-स्तरङ्गैः प्लवमानैः प्रसृता आयता विलोलाश्चला बाहव एव पक्षा गरुन्ति येषां तैः । गिरिधर्मस्य पक्षवत्त्वस्य तदवयवेषूपचारः । उरु-भिर्महद्भिर्योषाणां स्त्रीणाम् उरोजैरेव गण्डशैलैर्गिरिच्युतैः स्थूलो-पलैस्तस्य सर एव महार्णवस्तस्य तदम्भः अक्षोभि । क्षुभ्यतेर्ण्यन्ता-दण्यन्ताद्वा कर्मणि लुङ् । समस्तवस्तुविषयकं सावयवं रूपकम् ॥ २५ ॥

गाम्भीर्यमिति । गाम्भीर्यं नगाधत्वम् अविकारिचित्तत्वं च दध-दपि गम्भीरः सन्नपि रन्तुं विहर्तुं सङ्गन्तुश्चाङ्गनाभिः जघनस्य विघट्टनेन सङ्घर्षेण प्रक्षोभश्चलनञ्चित्तविकारश्च नीतः अतएव विकसितं

अम्भोधिर्विकसितवारिजाननोऽसौ
मर्य्यादां सपदि विलङ्घयाम्बभूव ॥ २६ ॥
आदातुन्दयितमिवावगाढ़मारा-
दूर्मीणां ततिभिरभिप्रसार्य्यमाणः ।
कस्याश्चिद्विततचलच्छिखाङ्गुलीको
लक्ष्मीवान् सरसि रराज केशहस्तः ॥ २७ ॥
इन्निद्रप्रियकमनोरमं रमण्याः

वारिजमाननमिव वारिजमिव चाननं यस्य सः अम्भांसि धीयन्ते-ऽस्मिन्निति अम्भोधिर्जलाशयः कश्चित् पुमांश्च तत्तुल्यो गम्यते । कर्म-ण्यधिकरणे चेति किप्रत्ययः । सपदि मर्य्यादां सीमानम् औचितीञ्च विलङ्घयाम्बभूव लङ्घितवान् । धीरोऽपि स्त्रीसन्निकर्षाद्विक्रियते इति भावः । अत्र गाम्भीर्य्यादिप्रकृताम्भोधिविशेषणसाम्यादप्रकृतविशेष्य-पुरुषप्रतीतेः समासोक्तिरलङ्कारः । सा च प्रतीयमानाभेदाध्यवसायमूला-तिशयोक्त्यनुप्राणितेति सङ्करः ॥ २६ ॥

आदातुमिति । सरसि विततः प्रसारिताश्चलन्त्यश्च शिखा अग्रा-ण्येवाङ्गुल्यो यस्य सः । नद्यृतश्चेति कप् । लक्ष्मीवान् शोभावान् । मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतुपो मकारस्य वत्वम् । कस्या-श्चित्केशहस्तः केशपाशः । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे इत्यमरः । हस्त इति करश्च ध्वन्यते । आरात्समीपे । आराद् दूरसमीपयोरित्यमरः । अवगाढ़मन्तर्मग्नं दयितमादातुं ग्रहीतुमिव ऊर्मीणान्ततिभिः समूहैरभिप्रसार्य्यमाणोऽभितोव्यापार्य्यमाणः सन् रराज । अत्रादातुमिव प्रसार्य्यमाण इति प्रसारणस्यादानार्थत्वोत्-प्रेक्षणादियं क्रियानिमित्ता क्रियाफलोत्प्रेक्षा । सा च चलच्छिखा-ङ्गुलीक इति रूपकानुप्राणितया हस्त इति श्लेषमूलया वाच्यस्य केशकलापस्य प्रतीयमानात् कराङ्गदे अभेदरूपातिशयोक्त्या निर्व्यूढेति सङ्करः ॥ २७ ॥

संरेजे सरसि वपुः प्रकाशमेव ।
युक्तानां विमलतया तिरस्क्रियायै
नाक्रामन्नपि हि भवत्यलं जलौघः ॥ २८ ॥

किन्तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विव्वोकैर्वकसहवासिनां परोक्षैः ॥ २९ ॥

भृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः

उन्निद्रेति । उन्निद्रं यत् प्रियकम् असनकुसुमकम् । सर्जकासन-बन्धूकपुष्पप्रियकजीवका इत्यमरः । तदिव मनोरमं कनकगौरमित्यर्थः । रमण्या वपुः सरसि प्रकाशमेव जलमग्नमपि वैमल्यात्प्रत्यक्षमेव संरेजे । तथाहि, जलौघो जलपूरो जड़ौघो मूर्खजनौघश्च डलयोरभेदात् । आक्रामन्नाष्टण्वन्नपि अन्यत्र अधिक्षिपन्नपि विमलतया वैमल्येन युक्तानां शुद्धानां तिरस्क्रियायै तिरोधानाय परिभवाय च अलं समर्थो न भवति हि । श्लेषमूलया भेदेऽभेदरूपातिशयोक्त्यानु-प्राणितोऽयमर्थान्तरन्यासः ॥ २८ ॥

किमिति । सरस्यारात् दूरादेतत् पुरोवर्त्ति तावत्सरोजं किम् आहोस्वित् उत युवत्या मुखम् अवभासते इति क्षणं संशय्य संदिह्य । शीङः क्त्वाल्यप् । अयङ्यिक्ङितीत्ययङादेशः । कश्चिद् विलासी वक-सहवासिनां वकसहचारिणां पद्मानामित्यर्थः । विलासशून्यताद्योत-नार्थमित्यभिर्देशः । परोक्षैरप्रत्यक्षैरननुभूतचरैरविद्यमानैरिति यावत् विव्वोकैर्विलासैरित्यर्थः यद्यपि विव्वोकोऽनादरक्रियेत्युक्तं तथापि विशेषवाचिनां सामान्ये लक्षणेत्यदोषः । निश्चिकाय विशेषदर्शनान्मुख-मेवेति निश्चितवानित्यर्थः । सन्देहालङ्कारोऽयम् । विषयो विषयी यत्र सादृश्यात् कविसम्मतात् । सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सेति लक्षणात् । सोऽप्यन्त निश्चयोक्त्या निश्चयान्तः ॥ २९ ॥

कौसुम्भं पृथुकुचकुम्भसङ्गि वासः।
मार्द्वीकं प्रियतमसन्निधानमासन्
नारीणामिति जलकेलिसाधनानि ॥ २० ॥

उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम्।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुततरमङ्गना निपेतुः ॥ २१ ॥

अथ जलक्रीडासम्भारानाह, शृङ्गाणीति। द्रुतेन तप्तनिषिक्तेन कनकेनोज्ज्वलानि लिप्तानीत्यर्थः। शृङ्गाणि क्रीडाम्बुयन्त्राणि। शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके इति विश्वः। गन्धाश्चन्दनकुङ्कुमादिगन्धद्रव्याणि। अतएव पुंसि बहुत्वं च। गन्धस्तु सौरभे योगे गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृत इत्यभिधानात्। पृथु विशालं कुचकुम्भसङ्गि कुचावरणं कुसुम्भेन रक्तं कौसुम्भम्। तेन रक्तं रागादित्यण्प्रत्ययः। वासो वस्त्रं मृद्वीकाया विकारो मार्द्वीकं द्राक्षामद्यम्। मृद्वीका गोस्तनी द्राक्षेत्यमरः। किञ्च प्रियतमसन्निधानं सर्वसाफल्यकारणमिति भावः। इत्येतानि नारीणां जलकेलिसाधनानि जलक्रीडोपाया आसन्। उद्दीपकसम्पत्तिरुक्ता। अत्र शृङ्गादीनां केलिसाधनत्वस्वरूपतुल्यधर्मयोगात् प्रकृतत्वाच्च केवलप्रकृतगोचरा तुल्ययोगिता ॥ २० ॥

उत्तुङ्गादिति। अनिलेन वेगानिलेन चलांशुकाश्चलद्वसना अङ्गनाः उत्तुङ्गात्तटान्ताद्भयदर्शिनाम्भयोत्प्रेक्षिणामनर्थाशङ्किनामित्यर्थः। प्रियाणां चेतोभिः सह तेषान्तत्रैवावधानादिति भावः। गुरुभिर्गुर्वीभिः। वोतो गुणवचनादिति विकल्पादनीकारः। श्रोणिभिः सहैतना अतूर्णं मन्दमुत्पतन्त्यस्तोयेषु द्रुततरं निपेतुः। गुरुत्वस्य पतनहेतुत्वादुत्पतनविरोधित्वाच्च शीघ्रपातो मन्दोत्पतनश्चेति भावः। अत्र प्रियचेतःपाताङ्गनापातयोः ... भानिनोः सह-

मुग्धत्वादविदितकैतवप्रयोगा
गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करेरिताम्बु-
व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥ २२ ॥
योग्यस्य त्रिनयनलोचनानलार्चि-
र्निर्दग्धस्मरपृतनाधिराजलक्ष्म्याः ।

भावोक्तिः कार्यकारणयोः पौर्वापर्यविध्वंसनरूपातिशयोक्त्युपजीविता सहोक्तिरलङ्कारः । सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यत इति लक्षणात् । चेतोवत् पेतुरित्यौपम्यकल्पनया कार्यगताग्रभावप्रतीतेश्चमत्कार इति रहस्यम् । तात्कालिकांशुकचलनादिसूक्ष्मस्वभावविशेषप्रकाशनात् स्वभावोक्तिश्चेति सङ्करः ॥ २१ ॥

मुग्धत्वादिति । मुग्धत्वान्मूढत्वादविदिताः कैतवप्रयोगा छलसेचनादिकपटाचरणानि याभिस्ताः अतएव सपदि पराजयङ्गच्छन्त्यस्तास्तरुण्यः कान्तैः सहाभिसरणं स्वयमभिगमनं ग्लहो द्यूतं पणो यस्यास्तास् । पणोऽक्षेषु ग्लह इत्यमरः । अक्षेषु ग्लह इति ग्रहेरेवाक्षपणे लत्वनिपातः । अप्रत्ययस्तु ग्रहवृदृनिश्चिगमश्चेत्येव सिद्ध इति केचित् । अन्ये तु ग्लहिप्रकृत्यन्तरमङ्गीकृत्य प्रत्ययस्यैव निपातो घञपवादीत्याहुः । करपुष्करैः करकमलैरीरितैरम्बुभिर्यां व्यात्युक्षीं व्यतिहारेणोक्षणं परस्पराभ्युक्षणमित्यर्थः । कर्मव्यतिहारे णच् स्त्रियामिति णच्प्रत्ययः, णचः स्त्रियामञित्यञ्, टिड्ढाणञित्यादिना ङीप् । तां व्यात्युक्षीमदीव्यन् तया अक्रीडन्नित्यर्थः । दिवः कर्म चेति विकल्पात् कर्मत्वम् । अत्राविदितकैतवप्रयोगत्वस्य विशेषणगत्या पराजयहेतुत्वादर्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २२ ॥

योग्यस्येति । त्रिनयनस्त्र्यम्बकः । क्षुभ्नादिषु चेति निषेधात् पूर्वपदात् संज्ञायामिति णत्वाभावः । तस्य लोचनानलार्चिषा निर्द-

कान्तायाः करकलशोद्यतैः पयोभि-
र्वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ ३३ ॥
सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य
प्रेयांसं मनसिजदुःखदुर्बलायाः ।
सौवर्णं वलयमवागलत्कराग्रा-
ल्लावण्यश्रिय इव शेषमङ्गनायाः ॥ ३४ ॥
स्निह्यन्ती दृशमपरा निधाय पूर्ण-
म्मूर्त्तेन प्रणयरसेन वारिणेव ।

गस्य स्वरस्य याः सुतनास्तासामधिराज्यमाधिपत्यन्तदेव लक्ष्मीस्तस्याः योग्यस्याहस्य तैलं क्यविर्जयिनः स्थाने तादृगस्यैव स्थाप्यत्वादिति भावः । कान्तायाः वक्त्रेन्दोः स्मरसखत्वादस्येति भावः । करावञ्जलिरेव कलशस्तेनोद्यतैरतुच्छिमैः पयोभिर्महाभिषेकमेकः कश्चित् कामी धकृत कृतवान् । करोतेर्लुङि तङ्, तनादिभ्यस्तथासोरिति सिचो लुक् । अत्र जलक्रीडासेके महाभिषेकत्वोत्प्रेक्षा प्रतीयमानकरकलशेति रूपकानुप्राणितेति सङ्करः ॥ ३३ ॥

सिञ्चन्त्या इति । मनसिजदुःखेन स्मरपीड़या दुर्बलाया अतएव कथमपि बाहुमुन्नमय्योद्यम्य प्रेयांसं प्रियतमम् । प्रियस्थिरेत्यादिना प्रादेशः । सिञ्चन्त्याः स्नपयन्त्याः अङ्गनायाः कराग्रात् सौवर्णं हिरण्मयं वलयं कङ्कणम् । कङ्कणं वलयोऽस्त्रियामित्यमरः । लवणैव लावण्यं कान्तिविशेषः । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । लवणो रसरक्षोऽब्धिभेदेषु लवणा त्विषीति विश्वः । यद्वा मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति च यदङ्गे तल्लावण्यमिहोच्यते । तस्य श्रीः सम्पत् तस्याः शेषमतिरिक्तशरीरसम्पद्वशिष्टमिति यावत् । शेषः सङ्कर्षणेऽनन्ते उपयुक्तेतरेऽन्यवदिति विश्वः । तदिवावागलदपतत् । शेषमिति गुणनिमित्तजातिस्वरूपोत्प्रेक्षा ॥ ३४ ॥


स्निह्यन्तीति । कन्दर्पपरवशमनाः स्मरपरवशचित्ता अतएव दृशं

कन्दर्पप्रवणमनाः सखीसिसिक्षा-
लक्ष्येण प्रतियुवमञ्जलिश्चकार ॥ ३५ ॥

आनन्दं दधति मुखे करोदकेन
श्यामाया दयिततमेन सिच्यमाने ।
ईर्ष्यन्त्या वदनमसिक्तमप्यनल्प-
स्वेदाम्बुस्नपितमजायतेतरस्याः ॥ ३६ ॥

उद्वीक्ष्य प्रियकरकुड्मलापविद्धै-
र्वक्षोजद्वयमभिषिक्तमन्यनार्य्याः ।

निधाय पुंस्येव दृष्टिं कृत्वा सिञ्चन्ती दृष्टिविशेषेण स्नेहं प्रकाशयन्तीत्यर्थः । अपरा स्त्री सख्याः सिसिक्षा सेक्तुमिच्छा तस्याः लक्ष्येण व्याजेन बद्धाञ्जलिरेव तिष्ठन्ती न तु सिञ्चन्तीति द्योतनाय सिसिक्षेतीच्छायां सनः प्रयोगः । प्रतियुवं युवानं प्रति । अनस्येत्यव्ययीभावसमासान्तः । मूर्त्तेन मूर्त्तिमता प्रणयरसेनेवेत्युत्प्रेक्षा । पाठादर्थस्य बलीयस्त्वादिवशब्दस्य व्यवहितेनान्वयः वारिणा पूर्णमञ्जलिञ्चकार प्रार्थयामासेत्यर्थः ॥ ३५ ॥

आनन्दमिति । आनन्दं दधति प्रियसम्भावनया हर्षन्दधाने श्यामाया मध्यमयौवनायाः स्त्रियः । श्यामा यौवनमध्यस्थेत्युत्पलः । मुखे वदने दयिततमेन अतिशयेन दयितः प्रियः । अतिशये तमप्प्रत्ययः । तेन कर्त्रा करोदकेनाञ्जलिजलेन सिच्यमाने सति ईर्ष्यन्त्याः असहमानायाः । परोत्कर्षाक्षमेर्ष्या स्यादिति लक्षणात् । इतरस्याः सपत्न्या वदनमसिक्तमपि प्रियेणेति शेषः । अनल्पेन स्वेदाम्बुना स्नपितं सिक्तमजायताभवत् ईर्ष्याकृतकोपकार्य्यत्वात् स्वेदादीनामिति भावः । असिक्तमपि सिक्तमिति विरोधः । तस्य स्वेदाम्बुकारणोक्तेराभासत्वम् ॥ ३६ ॥

उद्वीक्ष्येति । प्रियस्य करकुड्मलाभ्यां पाणिपुटाभ्यामपविद्धैः सिक्तै-

रम्भोभिरभिसिक्तम् अन्यनार्य्याः सपत्न्याः वक्षोजद्वयमुद्वीक्ष्य वधूनां-

अम्भोभिर्मुहुरसिचद् वधूरमर्षा-
दात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥ ३७ ॥

कुर्वद्भिर्मुखरुचिमुज्ज्वलामजस्रं
यैस्तोयैरसिचत वल्लभां विलासी ।
तैरेव प्रतियुवतेरकारि दूरात्
कालुष्यं शशधरदीधितिच्छटाच्छैः ॥ ३८ ॥

रागान्धीकृतनयनेन नामधेय-
व्यत्यासादभिमुखमीरितः प्रियेण ।
मानिन्या वपुषि पतन्निसर्गमन्दो
भिन्दानो हृदयमसह्यि नोदवज्रः ॥ ३९ ॥

यिका असर्यादीर्ष्याकृतकोपादात्मीयं वक्षोजद्वयं पृथुतरेण नेत्रयुग्मेन मुक्तै रम्भोभिर्वाष्पैर्मुहुरसिचत् अभिषिक्तवती । तन्मत्सरादिवेति भावः । अतो वस्तुनालङ्कारध्वनिः । लिपिसिचिह्वश्चेति सिञ्चतेर्लुङि च्लेरङा- देशः ॥ ३७ ॥

कुर्वद्भिरिति । मुखरुचिं मुखकान्तिम् उज्ज्वलां कुर्वद्भिर्यैस्तोयै- र्विलासी विलसनशीलः कामी । वौ कषलसेत्यादिना घिनुण्प्रत्ययः । वल्लभामजस्रमसिचत सिक्तवान् । स्वरितेत्त्वादात्मनेपदम् आत्मनेपदे- ष्वन्यतरस्यामिति सिञ्चतेर्लुङि च्लेरङादेशः । शशधरदीधितिच्छटाच्छैः शशिकरनिकरस्वच्छैः तैरेव तोयैर्दूरात् प्रतियुवतेः सपत्न्याः कालुष्यम् आविलत्वं वैवर्ण्यञ्चाकारि स्वच्छतोयैः कालुष्यं कृतमिति विरुद्ध- कार्योत्पत्तिरूपो विषमभेदः । तच्चान्यत्रेत्यसङ्गतिः वैवर्ण्यकालुष्ययो- रभेदाध्यवसायादतिशयोक्तिस्तदुत्थापितेति सङ्करः ॥ ३८ ॥

रागेति । रागेण विपक्षानुरागेणान्धीकृतनयनेन प्रियेण नामधेय- व्यत्यासाद् विपक्षनामपूर्वकमभिमुखमीरितः क्षिप्तो वपुषि पतन् निसर्ग- मन्दः स्वभावजड़ः तथापि हृदयम्भिन्दानो विदारयन्नुदकमेव वज्रो- ऽयमित्युदवज्रः । मन्थौदनेत्यादिना विभाषयोदादेशः । मानिन्या

प्रेम्णोरः प्रणयिनि सिञ्चति प्रियायाः
सन्तापं नवजलविप्रुषो गृहीत्वा ।
उद्भूताः कठिनकुचस्थलाभिघाता-
दासन्नां भृशमपराङ्गनामधाक्षुः ॥ ४० ॥

संक्रान्तं प्रियतमवक्षसोऽङ्गरागं
साध्वस्याः सरसि हरिष्यतेऽधुनाऽम्भः ।
तुष्टैवं सपदि हृतेऽपि तत्र तेपे
कस्याश्चित् स्फुटनखलक्ष्मणः सपत्न्या ॥ ४१ ॥

विपक्षनामग्रहणजनितकोपवत्या नायिकया नासाहि न सोढः । तीक्ष्णयोगादतीक्ष्णमपि तीक्ष्णं भवतीति भावः । उदवज्र इति केवल-निरवयवरूपकम् ॥ ३९ ॥

प्रेम्णेति । प्रणयिनि प्रेम्णा प्रियाया उरः सिञ्चति सति कठिनकुचस्थलाभिघातादुद्भूता उत्पतिताः नवजलस्य विप्रुषो बिन्दवः । पृषन्ति बिन्दु पृषताः पुमांसो विप्रुषः स्त्रियामित्यमरः । तस्याः स्निग्धायाः सन्तापं गृहीत्वा आदायासन्नां समीपस्थामपराङ्गनां सपत्नीं भृशमधाक्षुः सन्तापयन्ति स्म । दहतेर्लुङि वदव्रजेत्यादिना सिचि वृद्धिः षत्वादिकार्य्यम् । तत्सेकादेवापरस्याः तापोदयात्तत्ताप-स्यैवात्राधानमुत्प्रेक्ष्यते सा च व्यञ्जकाप्रयोगाद्गम्या ॥ ४० ॥

संक्रान्तमिति । प्रियतमवक्षसः सकाशात् संक्रान्तं गाढालिङ्गनात् कुचतटलग्नम् अस्याः स्निग्धायाः अङ्गरागमधुनैव सरसि अम्भः कर्तृ । साधु निःशेषं हरिष्यते प्रमार्क्ष्यतीति एवन्तुष्टा इति बुद्ध्वा सपदि तत्र तस्मिन्नङ्गरागे हृतेऽपि स्फुटनखलक्ष्मणो व्यक्तनखचिह्नायाः कस्याश्चि-न्नायिकायाः सम्बन्धिनि सपत्न्या तेपे तप्तम् । भावे लिट् । तदिद-मातपार्त्तस्य छायामन्विष्यतो दारुणदवदहनवेष्टनं यदङ्गरागमेव द्रष्टुमक्षमाया न[illegible] सन्तापशान्त्यर्थेन

हूतायाः प्रतिसखि कामिनान्यनाम्ना
ह्रीमत्याः सरसि गलन्मुखेन्दुकान्तेः।
अन्तर्द्धिं द्रुतमिव कर्त्तुमश्रुवर्षै-
र्भूमानं गमयितुमीषिरे पयांसि॥ ४२॥

सिक्तायाः क्षणमभिषिच्य पूर्वमन्या-
मन्यस्याः प्रणयवता वताबलायाः।
कालिम्ना समधित मन्युरेव वक्त्रं
प्रापात्त्वग्गलदपमब्दमञ्जनाम्भः॥ ४३॥

विपर्याङ्गनाङ्गरागक्षालनेन तद्विरुद्धसन्तापोत्पादनाद्विरुद्धकार्य्योत्पत्ति-रूपो विषमालङ्कारः॥ ४१॥

हूताया इति। प्रतिसखि सख्याः समीपे सखीसमक्षमित्यर्थः। समीपार्थेऽव्ययीभावे नपुंसकत्वह्रस्वत्वे। कामिना प्रियेणान्यस्याः सपत्न्याः नाम्ना अन्यनाम्ना। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। हूतायाः अतएव गलन्मुखेन्दुकान्तेः ह्रीमत्याः लज्जितायाश्च कस्या-श्चिदिति शेषः। सरसि द्रुतं शीघ्रमन्तर्द्धिं अन्तर्द्धानम्। अदन्तरो-रुपसर्गवद्वृत्तिवचनादुपसर्गे घोः किरिति किप्रत्ययः। कर्त्तुमश्रुवर्षैः कर्त्तृभिः पयांसि सरोजलानि भूमानं गमयितुं वृद्धिमापयितुम्। गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वं प्राधान्यादभिधानञ्च। ईषिरे इव दृष्टानि किन्तु इत्युत्प्रेक्षेयमश्रुपातनिमित्ता तया मरणदुःखादपि दुःसहं सपत्न्याः दुःखमिति वस्तुध्वनिः॥ ४२॥

सिक्ताया इति। प्रणयवता प्रियेण क्षणं पूर्वमन्यां सपत्नीमभि-षिच्य पश्चात् सिक्ताया अन्यस्या अबलायाः स्त्रिया वक्त्रं कर्म मन्युः कोप एव कर्त्ता कालिम्ना काष्ण्र्येन वैवर्ण्येन सहेति यावत् समधित सन्दधे वतेति खेदे। सम्पूर्वाद्धधातेः कर्त्तरि लुङि तङ्, स्थाघ्वोरि-तीकारः, सिचः कित्त्वाच्च गुणः, ह्रस्वादङ्गादिति सकारलोपः। गलत् स्रवदञ्जनाम्भः सम्बन्धि अञ्जनाम्भः कज्जलोदकमपगल्दं वर्णस्यापवादस्माप

उद्वोढुं कनकविभूषणान्यशक्तः
सध्रीचा वलयितपद्मनालसूत्रः ।
आरूढप्रतिवनिताकटाक्षभारः
साधीयो गुरुरभवद् भुजस्तरुण्याः ॥ ४४ ॥
आबद्धप्रचुरपरार्ध्यकिङ्किणीको
रामाणामनवरतोदगाहभाजाम् ।
नारावं व्यतनुत मेखलाकलापः
कस्मिन् वा सजलगुणे गिरां पटुत्वम् ॥ ४५ ॥

लोपकालिमतिरोधानेन स्वकालिम्न एव प्रकाशनादिति भावः । पूर्वेण वाक्यार्थेनोत्तरवाक्यार्थसमर्थनाद्वाक्यार्थहेतुकमकाव्यलिङ्गम् ॥४३॥

उद्वोढुमिति । कनकविभूषणान्युद्वोढुमशक्तः सौकुमार्यादिति भावः । अतएव सहाञ्चतीति सध्र्यङ् तेन सहचरेण कर्त्रा । ऋत्विगादिना क्विप्रत्ययः, सहस्य सध्रिरिति सहशब्दस्य सध्र्यादेशः, अनिदितामिति नकारलोपः, अच इत्यकारलोपे चाविति दीर्घः । वलयितानि वलयीकृतानि पद्मनालसूत्राणि मृणालतन्तवो यस्य सः मृणालकृतकङ्कण इत्यर्थः । तथापि आरूढः आरूढवान् प्रतिवनितायाः सपत्न्याः कटाक्ष एव भारो यस्य सः तया साभ्यसूयं दृष्ट इत्यर्थः । अतएव तरुण्या भुजो बाहुः साधीयो वाढतरमिति क्रियाविशेषणम् । अन्तिकबाढयोर्नेदसाधाविति वाढशब्दस्य साधादेशः । गुरुर्भारवान् श्लाघ्यश्चाभवत् । अत्र कनकभूषणाभावेऽपि तत्कार्यगुरुत्ववर्णनाद्विभावना सा च गुरुरिति श्लेषप्रतिभोत्थापितातिशयोक्त्यानुप्राणितेति सङ्करः ॥ ४४ ॥

आबद्धेति । उदकस्य गाहोऽवगाहनम् उदगाहः । मन्थौदने- त्यादिना उदादेशः । तमनवरतं भजन्ति यास्तासामनवरतोदगाहभाजां रामाणां स्त्रीणां सम्बन्धी आबद्धाः प्रोताः प्रचुरा भूयिष्ठाः परार्ध्याः श्रेष्ठाश्च किङ्किण्यो यस्मिन् सः तथोक्तः । नद्यृतश्चेति कप् ।

पर्य्यङ्के सरसि हृतेऽंशुके पयोभि-
र्लोलाक्षे सुरतगुरावपत्रपिष्णोः।
सुश्रोण्या दलवसनेन वीचिहस्त-
न्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥ ४६ ॥

नारीभिर्गुरुजघनस्थलाहतानां
आस्यश्रीविजितविकाशिवारिजानाम्।
लोलत्वादपहरतां तदङ्गरागं
संजज्ञे न कलुष आशयो जलानाम् ॥ ४७ ॥

मेखलाकलापः आरावं ध्वनिं न व्यतनुत। तथाहि, जलेन सह सजलो जलार्द्रो गुणः सूत्रं यस्य सः तथा डलयोरभेदाज्जड़गुणो जड़-धर्मो जाड्यत्वेन सहेति च जड़गुणो जड़श्च तस्मिन् कस्मिन् वा मेखलाकलापे पुंसि वा गिरां वाचां ध्वनीनाञ्च पटुत्वं सामर्थ्यञ्च कुतापीत्यर्थः। श्लेषमूलाभेदातिशयोक्तप्राणिताऽयमर्थान्तर-न्यासः ॥ ४५ ॥

पर्य्यङ्क इति। परि परितोऽङ्कं स्वच्छम् अन्तर्गतवस्तुतिरो-धायकमित्यर्थः। तस्मिन् सरसि पयोभिरंशुके स्त्रीपरिधाने हृते स्थानादपसारिते सति सुरतगुरौ रमणे च लोलाक्षे औत्सुक्यासक्तदृष्टौ सतीत्यर्थः। लोलश्चलत्वणयोरित्यमरः। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्। अपत्रपिष्णोरपत्रपशालायाः। लज्जा सापत्रपान्यत इत्यमरः। अलङ्कृञित्यादिना इष्णुच्प्रत्ययः। सुश्रोण्याः प्रियायाः प्रस्तुतोचितनिर्देशोऽयम् अब्जिनी नलिनी द्रुतं वीचिरेव हस्तस्तेन न्यस्तेन दलं पर्णमेव वसनन्तेन तद्दानेनेत्यर्थः। सखीत्वम् अकृत सखी-त्वम् सत्यश्चकारेत्यर्थः। अत्राब्जिन्यादिषु सखीत्वाद्यारोपात्समस्तवस्तु-वृत्ति सावयवरूपकम् ॥ ४६ ॥

नारीभिरिति। नारीभिः कर्त्रीभिः गुरुजघनस्थलैराहतानाम् आस्यश्रीभिर्मुखशोभाभिर्विजितानि विकाशीनि वारिजानि पद्मानि

सौगन्ध्यं दधदपि काममङ्गनानां
दूरत्वाद्गतमहमाननोपमानम् ।
नेदीयो जितमिति लज्जयेव तास्मा-
मालोले पयसि महोत्पलं ममज्ज ॥ ४८ ॥

प्रभ्रष्टैः सरभसमम्भसोऽवगाह-
क्रीडाभिर्विदलितयूथिकापिशङ्गैः ।
आकल्पैः सरसि हिरण्मयैर्वधूना-
मौर्वाग्निद्युतिशकलैरिव व्यराजि ॥ ४९ ॥

येषान्तेषां लोलत्वाज्जलत्वात् सतृष्णत्वाच्च । लोलश्चलसतृष्णयोरित्यमरः । तासामङ्गरागमपहरतां क्षालयताञ्च जलानां तोयानां जडानाञ्च स आशयो ह्रदो हृदयञ्च कलुषोऽप्रसन्नः क्षुभितश्च सञ्जज्ञे सञ्जातः स्वप-हर्त्तुस्ताडनस्वहरणादिभिराशयः कलुषो भवतीति ध्वनिः । अभिधायाः प्रकृतार्थे नियन्त्रणाच्च श्लेषः ॥ ४७ ॥

सौगन्ध्यमिति । कामं पर्य्याप्तं सौगन्ध्यं सुरभिगन्धित्वं सम्बन्धित्वं च । गन्धो गन्धक आमोदे लेशे सम्बन्धिगर्वयोरिति विश्वः । दधदपि अहं दूरत्वात् पूर्वं दूरस्थत्वादङ्गनानामाननोपमानं मुखसादृश्यं गतम् । दूरस्थाः पर्वता रम्या इतिवदिति भावः । सम्प्रति पुनस्तासां नेदीयो नेदिष्ठमन्तिकतमं सत् । अन्तिकबाढयोर्नेदसाधावित्यन्तिकशब्दस्य नेदादेशः । जितं परिभूतमभूवमिति लज्जयेव महोत्पलमरविन्दम् आलोले चले पयसि ममज्ज यथा दूरे साम्येन दृश्यमानः सम्बन्धी सन्निधाववमानितः क्वचिल्लज्जया निलीयते तद्वदिति । अत्र पयस्युत्पलकर्तृकेऽवमज्जने लज्जाहेतूत्प्रेक्षयोः संसृष्टिः ॥ ४८ ॥

प्रभ्रष्टैरिति । सरभसं ससत्वरम् अम्भसोऽवगाहा एव क्रीडास्ताभिः प्रभ्रष्टैर्जलावगाहक्षोभादम्भसि च्युतैर्विदलिता विकसिता यूथिकाः पीतयूथिका हेमपुष्पिकापरपर्य्याया विवक्षिताः अन्यथा पिशङ्गत्वायोगात् । गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिकेत्य-

आस्माकी युवतिदृशामसौ तनोति
छायैव श्रियमनपायिनीं किमेभिः।
मत्वैवं स्वगुणपिधानसाभ्यसूयैः
पानीयैरिति विदधाविरेऽञ्जनानि ॥ ५० ॥

निर्धौते सति हरिचन्दने जलौघै-
रापाण्डोर्गतपरभागयाङ्गनायाः।

मरः। तद्वल्लिपङ्कैर्हरिद्रमयैः सौवर्णैः। हारिद्रनायनेत्यादिना निपातः। वधूनामाकल्पैर्भूषणैः सरसि क्षौमाग्निद्युतिशकलैर्जला-शयत्वात्तत्रापि सन्निहितैर्वडवानलज्वालाखण्डैरिवेत्युत्प्रेक्षा। व्यराजि विराजितम्। भावे लुङ् ॥ ४९ ॥

आस्माकीति। अस्माकमियमास्माकी अस्मदीया अस्मत्कारिते-त्यर्थः। युष्मदस्मदोरन्यतरस्यां खञ्चेति चकारादण्प्रत्ययः, तस्मिन्नपि च युष्माकास्माकाविति प्रकृतेरस्माकादेशः, टिड्ढाणञित्यादिना ङीप्। असौ छाया कान्तिः विमलेति यावत् सैव युवतिदृशामनपायिनीं स्थायिनीं श्रियन्तनोति एभिरञ्जनैः किम् एतत् साध्यन्न किञ्चिदस्ती-त्यर्थः। गम्यमानसाधनापेक्षया करणत्वात् तृतीया इत्युक्तं प्राक्। एवं मत्वा भङ्गप्रकारेणाञ्जनवैफल्यं निश्चित्येत्यर्थः। अतएव गम्योत्-प्रेक्षेयम्। स्वगुणस्य स्वाविष्कृतदृग्वैमल्यगुणस्य पिधानं तिरोधा-नम्। अपिधानतिरोधानपिधानाच्छादनानि चेत्यमरः। वष्टि भागु-रिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः। तेन साभ्यसूयैः सेर्ष्यैः पातव्यैः पानीयैः। अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरमित्य-मरः। तव्यत्तव्यानीयर इति पिबतेरनीयर्प्रत्ययः। अञ्जनानि कज्ज-लानि इति अनेन स्वगुणप्रकाशनयोग्यतया विवक्षितेन प्रकारेण निःशेषत्वरूपेणेत्यर्थः। विदधाविरे विधौतानि क्षालितानीत्यर्थः। धावु गतिशुद्ध्योरिति धातोः कर्मणि लिट् ॥ ५० ॥

निर्धौत इति। हरिचन्दने रक्तचन्दने जलौघैर्निर्धौते क्षालिते सति। धावेः कर्मणि क्तः, च्छ्वोः शूडनुनासिके चेति वकारस्योठादेशः

अङ्गाय स्तनकलशद्वयादुपेये
विच्छेदः सहृदययेव हारयष्ट्या ॥ ५१ ॥
अन्यूनं गुणममृतस्य धारयन्ती
संफुल्लस्फुरितसरोरुहावतंसा ।
प्रेयोभिः सह सरसी निषेव्यमाणा
रक्तत्वं व्यधित वधूदृशां सुरेव ॥ ५२ ॥

एत्येत्यादि । इह्निरीकारः । आपाण्डोः पाण्डुवर्णादङ्गनायाः स्तनकलशद्वयात् गतपरभागया सावर्ण्याद्विगतवर्णोत्कर्षया । अतएव सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । हारयष्ट्या कर्त्र्या सहृदयया सचित्तयेवेत्युत्प्रेक्षा । निजपरभागहानिपरज्ञानवत्येवेत्यर्थः । अङ्गाय सपदि । द्राक् झटित्यञ्जसाङ्गाय स्राङ् मङ्क्षु सपदि द्रुत इत्यमरः । विच्छेदस्त्रुटनमुपेये प्राप्तः । हीनजीवनादजीवनमेव वरमिति भावः । उपपूर्वादिणः कर्मणि लिट् । विक्षोभहेतुकस्य हारविच्छेदस्य सहृदयहेतुकत्वोत्प्रेक्षा सा चोक्तसामान्योत्थापितेति सङ्करः ॥ ५१ ॥

अन्यूनमिति । अन्यूनं समग्रममृतस्य पीयूषस्य गुणं माधुर्यादिकं धारयन्ती । अगन्धमव्यक्तरसं शीतलं च तृषापहम् । अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते इति । उक्तोदकगुणाञ्च धारयन्ती, सरसीपक्षे । अमृतं यज्ञशेषे स्यात् पीयूषे सलिले ध्रुवमिति विश्वः । संफुल्लानि विकचानि । उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानान्निष्ठातस्य लत्वम् । स्फुरितानि उज्ज्वलानि च यानि सरोरुहाण्येकत्र सहजानि अन्यत्र संस्कारार्थं चिह्नानि तान्यवतंसो भूषणं यस्याः सा तथोक्ता । प्रेयोभिः सह निषेव्यमाणा स्नानपानाभ्यामिति भावः । सरसी पुष्करिणी वधूदृशां रक्तत्वमारुण्यं व्यधित विधत्ते स्म । तथा सुरा च । व्यधितेति धाञः कर्त्तरि लुङि तङ् । दृशोऽस्याहवर्जनाय मुहुः सेव्यत्वाच्छृङ्गारणीति स्नोके सलिलक्रीडासम्भारेषु माद्वीकमिति परिगणनाच्च सरसीवत् सुराया अपि प्रकृतत्वाविवक्षायां तुल्ययोगिता

स्नातीनां बृहदमलोदबिन्दुचित्रौ
रेजाते रुचिरदृशामुरोजकुम्भौ।
हाराणां मणिभिरुपाश्रितौ समन्ता-
दुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ५३ ॥

आरूढः पतित इति स्वसम्भवोऽपि
स्वच्छानां परिहरणीयतामुपैति।
कर्णेभ्यश्च्युतमसितोत्पलं वधूनां
वीचीभिस्तटमनु यन्निरासुरापः ॥ ५४ ॥

तदविवक्षायान्तु दीपकं सुरेवेति पाठे त्वप्रकृतत्वविवक्षैव कार्य्या अन्यथा उपमानुपमा स्यात्। न च तुल्ययोगितावकाशः इवशब्देन गम्यौपम्यबाधप्रसङ्गादिति ॥ ५२ ॥

स्नातीनामिति। स्नातीनां जलमवगाहमानानां रुचिरदृशां सुदृशां सम्बन्धिनौ बृहद्भिरमलैश्चोदबिन्दुभिश्चित्रौ। मन्थौदनेत्यादिना उदकशब्दस्योदादेशः। उरोजकुम्भौ उत्सूत्रैः हाराणां मुक्ताहाराणां मणिभिर्गुटिकाभिरुपहन्यते उपगम्यते पीड्यते वा उपघ्न आश्रय इति। हन्तेरप्रत्ययान्त उपधालोपोति निपातः। गुणवतः औदार्य्यादिगुणवतः सूत्रवतश्च उपघ्नस्य काम्या आत्मन इच्छा गुणवदुपघ्नकाम्या तया गुणवदुपघ्नकाम्यया आत्मनो गुणवदाश्रयाकाङ्क्षयेत्यर्थः। काम्यच्चेति काम्यच्प्रत्ययान्तधातुत्वादप्रत्ययादिति स्त्रियामप्रत्यये टाप्। समन्तादुपाश्रितौ संश्रिताविव रेजाते राजते स्म। फणाञ्च सप्तानामिति विकल्पादेकाराभ्यासलोपौ। गुणशब्देन सूत्रशब्देन च सूत्रभेदे सूत्रान्तरमभिश्रयत् इति प्रतीतेः श्लेषानुप्राणितयातिशयोक्त्यानुप्राणितेयमुत्प्रेक्षा ॥ ५३ ॥

आरूढ इति। स्वसम्भवोऽप्यात्मसम्भवोऽपि आरूढ उच्चस्थानगत उत्तमाश्रयस्य पतितस्तथा भ्रष्ट इति हेतोः आरूढपतितत्वादित्यर्थः। स्वच्छानां निर्मलानां परिहरणीयतां त्याज्यतामुपैति। प्रकृत्यावसिते

दन्तानामधरमयावकं पदानि
प्रत्यग्रास्तनुमविलेपनां नखाङ्काः ।
आनिन्युः श्रियमधितोयमङ्गनानां
शोभायै विपदि सदाश्रिता भवन्ति ॥ ५५ ॥

कस्याश्चिन्मुखमनु धौतपत्रलेखं
व्यातेने सलिलभराऽवलम्बिनीभिः ।
किञ्जल्कव्यतिकरपिञ्जरान्तराभि-
श्चित्रश्रीरलमकाग्रवल्लरीभिः ॥ ५६ ॥

राज्ञो दाश आभरणान्तिक इति स्मरणादिति भावः । वीचीभिस्तटमनु तटं प्रति निराशुश्चिक्षिपुः । कुतः यस्मादापः वधूनां कर्णेभ्यः च्युतमसितोत्पलं स्वसम्भवमपीति भावः । विशेषेण सामान्यसमर्थन-रूपोऽर्थान्तरन्यासः समर्थनवाक्यगतश्लेषमूलातिशयोक्त्या सङ्कीर्णः ॥५४॥

दन्तानामिति । तोयेष्वधि अधितोयम् । विभक्त्यर्थेऽव्ययीभावः । अङ्गनानामयावकं प्रक्षालितलाक्षारागम् अधरन्दन्तानां पदानि दन्तक्षतानि तथा अविलेपनां धौताङ्गरागां तनुं शरीरं प्रत्यग्राः नवा नखाङ्काश्च श्रियमानिन्युः प्रापयामासुः । नीवह्योर्हरतेश्चेति वचनात् द्विकर्मकत्वम् । तथाहि, सतः सज्जनान् सुन्दरांश्चाश्रिताः सदाश्रिताः ये केचिदिति शेषः । विपदि विभवाभावकालेऽपि शोभायै वैभवाय भवन्ति । क्लृपेः सम्पद्यमाने चतुर्थी वक्तव्येति क्लृपेरर्थनिर्देशाच्चतुर्थी । अर्थान्तरन्यासः ॥ ५५ ॥

कस्याश्चिदिति । धौतपत्रलेखं क्षालितपत्रावलीकं कस्याश्चिन्मुखमनु मुखेन सम्बद्धं यथा तथा मुखे इति यावत् । तृतीयार्थ इत्यनोः कर्मप्रवचनीयत्वात् द्वितीया । सलिलभरेणावलम्बिनीभिर्लम्बमानाभिः आर्जवङ्गताभिरित्यर्थः । किञ्जल्कव्यतिकरेण केशरमिश्रणेन पिञ्जराण्यन्तराणि मध्यभागा यासान्ताभिः अलकाग्राणि वल्लर्यो मञ्जर्य्य इवेत्युपमितसमासः । वल्लरी मञ्जरी स्त्रियामित्यमरः । ताभिरल-

वक्षोभ्यो घनमनुलेपनं यदूना-
मुत्तंसानहरत वारि मूर्द्धजेभ्यः ।
नेत्राणाम्मदरुचिरक्ततैव तस्थौ
चक्षुष्यः खलु महताम्परैरलङ्घ्यः ॥ ५७ ॥

यो बाह्यः न खलु जलैर्निरासि रागो
यश्चित्ते स तु तदवस्थ एव तेषाम् ।
क्षीराणां व्रजति हि सर्व एव नान्तः-
पातित्वादभिभवनीयताम्परस्य ॥ ५८ ॥

काचनस्त्रीभिश्चित्रश्रीर्मकरिकापत्रशोभा चक्रे व्यातेने सम्पादिता ।
तनोतेः कर्मणि लिट् । अत्र चित्रस्य श्रीरिव श्रीरिति निदर्शना-
भेदः ॥ ५६ ॥

अथ श्लोकद्वयेन पुंसामप्यवस्थाभेदं वर्णयति । वक्षोभ्य इत्यादि ।
वारि सर-उदकं कर्तृ यदूनां यादवानां वक्षोभ्यो घनं सान्द्रमनुलेपन-
मङ्गरागमहरत । भित्त्वात्तङ् । अत्र वधूनामिति क्वाचित्कः
पाठः वक्षोजानुपेक्ष्य वक्षोमात्रनिर्देशादुत्तरश्लोके तेषामिति पुंलिङ्ग-
परामर्षाच्च न ग्राह्यः । मूर्द्धजेभ्यः शिरोरुहेभ्यः उत्तंसान् शेखरान-
हरत नेत्राणां मदरुचिर्मदरागोऽक्ततैव तथैव तस्थौ वारिविहारस्यापि
रागजनकत्वादिति भावः । अतएव रागद्वयस्याप्यभेदाध्यवसायेन
तदवस्थानिर्देशादतिशयोक्तिः । तथाहि, महताश्चक्षुषि भवश्चक्षुष्यः
प्रियोऽभिजश्च । प्रियेऽभिजे च चक्षुष्य इति विश्वः । शरीरावय-
वाच्चेति यत् । परैरलङ्घ्यो दुर्द्धर्षः खलु । चक्षुष्य इति श्लेषमूला-
तिशयोक्तिः तया पूर्वोक्तया च सङ्कीर्णोऽयमर्थान्तरन्यासः ॥ ५७ ॥

य इति । तेषां यदूनां बहिर्भवो बाह्यः । बहिषष्टिलोपो
यञ् चेति वचनात् यञ्प्रत्ययः । यो रागोऽङ्गरागः स रागो जलै-
स्तोयैर्जडैश्च निरासि निरस्तः खलु । अस्यतेः कर्मणि लुङ् । चित्ते
यो रागः स तु तेऽवस्था यस्य स तदवस्थ एव न निरस्त इत्यर्थः ।

फेनानामुरसिरुहेषु हारलीला
चेलश्रीर्जघनतलेषु शैवलानाम् ।
गण्डेषु स्फुटरचनाऽब्जपत्त्रवल्ली
पर्य्यासं पयसि विभूषणं वधूनाम् ॥ ५९ ॥

अश्यद्भिर्जलमभि भूषणैर्वधूना-
मङ्गेभ्यो गुरुभिरसञ्जि लज्जयेव ।
निर्माल्यैरथ ननृतेऽवधीरितानामप्युच्चैर्भवति
लघीयसां हि धार्ष्ट्यम् ॥ ६० ॥

अत्र रागयोरभेदाध्यवसायादतिशयोक्तिः । तथाहि, सर्वोऽपि धीराणां संहतासन्तःपातित्वादन्तर्गतत्वाद्वेति यावत् परस्थाभिभवनीयतां न व्रजति अन्यथा व्रजत्येवेत्यर्थः । पूर्ववदलङ्कारः ॥ ५८ ॥

फेनानामिति । वधूनां भ्रष्टभूषणानामपीति भावः पयसि विभूषणं पर्य्याप्तं समग्रमासीदित्यर्थः । कुतः फेनानां डिण्डीराणाम् उरसि रुहन्तीत्युरसिरुहाः स्तनाः । सुपीति योगविभागात् कप्रत्ययः हलदन्तादित्यलुक् । तेषु हारलीला मुक्तावलिशोभा जातेति शेषः । शैवलानां जघनतलेषु चेलश्रीर्वसनशोभा जाता । गण्डेषु कपोलेषु शैवला इति विभक्तिविपरिणामादनुषङ्गः । स्फुटरचना व्यक्तविन्यासाऽब्जपत्त्रवल्ली पद्मपत्त्रलता जातेति शेषः । अत्र फेनानां हारलीलेव लीला शैवलानां चेलश्रीरिव श्रीरिति निदर्शनाभ्यां शैवलाः पत्त्रवल्लीति रूपकेण च वाक्यार्थैः समर्थवाक्यार्थसमर्थनात्तैरेवाङ्गाङ्गिभावेन सङ्कीर्णं वाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ ५९ ॥

अश्यद्भिरिति । वधूनामङ्गेभ्यो भ्रश्यद्भिः पतद्भिर्गुरुभिः सौवर्ण्याद्गुरुत्वयुक्तैर्भूषणैर्लज्जया स्वंशप्रयुक्तया ह्रियेवेत्युत्प्रेक्षा जलमभि असञ्जि जले मग्नम् । भावे लुङ् । अथानन्तरमेव न तु विलम्बेनेति भावः निर्माल्यैर्भुक्तोज्झितमाल्यैर्ननृते जले ननर्ति स्वंशेऽपि निर्लज्जैरिति भावः । तथाहि, अवधीरितानां तिरस्कृतानामपि लघीय-

आश्लिष्टास्तिलकरुचः स्रजो निरस्ता
नीरक्तं वसनमपाकृतोऽङ्गरागः ।
कामः स्त्रीरनुशयवानिव स्वपक्ष-
व्याघातादिति सुतराञ्चकार चारूः ॥ ६१ ॥

शीतार्त्तिं बलवदुपेयुषेव नीरै-
रासेकाच्छिशिरसमीरकम्पितेन ।
रामाणामभिनवयौवनोष्मभाजो-
राश्लेषि स्तनतटयोर्नवांशुकेन ॥ ६२ ॥

स्रोतोभिः समधिकमात्तमङ्गसङ्गा-

सान्तुच्छानामुच्चैर्धार्ष्ट्यं निर्लज्जत्वमेवाधिकं भवतीति अर्थान्तरन्यासः । महान्तः पदभ्रंशे लज्जिताः क्वचिन्निलीयन्ते तुच्छास्तु निर्लज्जा विजृम्भन्त इति भावः । अप्सु गुरूणि मज्जन्ति लघूनि प्लवन्त इति परमार्थः ॥ ६० ॥

आश्लिष्टा इति । तिलकरुचः पत्रशोभाः आश्लिष्टाः स्रजो माला निरस्ताः वसनं कौसुम्भं वासो नीरक्तमरक्तं निरस्तरागमित्यर्थः । कृतमिति शेषः । अङ्गरागोऽपाकृतः सर्वत्र जलैरित्यर्थः । इतीत्थं स्वपक्षव्याघातात् स्ववर्गक्षयादनुशयवाननुतापवानित्युत्प्रेक्षा । कामः स्त्रीः स्त्रियः । वाम्शसोरितीयङादेशविकल्पात्पक्षे सवर्णदीर्घः । सुतरां चारूः पूर्वतोऽपि रमणीयाश्चकार स्त्रीणां काम एव भूषणमन्यद्वैरूप्यमेवेति भावः ॥ ६१ ॥

शीतेति । नीरैस्तोयैरासेकादासेचनात् शीतार्त्तिं शीतव्यथां बलवत् सुष्ठु उपेयुषेव प्राप्तवतेवेत्युत्प्रेक्षा । अतएव शिशिरसमीरकम्पितेन शीतवातवेपितेन नवांशुकेन कर्त्रा अभिनवो यो यौवनोष्मा उष्णत्वं तद्भाजोः रामाणां स्तनतटयोराश्लेषि आश्लिष्टं संसक्तम् । भावे लुङ् । सेकहेतुकस्यांशुकश्लेषस्य शीतार्त्तिहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा ॥ ६२ ॥

लावण्यत्नसुमदिवाम्बु वाससोऽन्तैः ।
उत्तेरे तरलतरङ्गरङ्गलीला-
निष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ ६४ ॥

श्लक्ष्णं यत्परिहितमेतयोः किलान्त-
र्यानार्थं तदुदकसेकसक्तमूर्वोः ।

इत्थमासां जलक्रीड़ामुक्त्वा जलादुत्तरणं वर्णयति । स्रोतस्निरिति । अथ जलक्रीड़ानन्तरमङ्गसङ्गात् गात्रसम्पर्कात् आत्तमुपात्तं संसक्तमिति यावत् । समधिकमतिरिक्तम्लुसवत् मूर्तिमत् लावण्यमिव कान्तिसारमिवेत्युत्प्रेक्षा अम्बु स्रोतस्निः स्रोतस्निः । भौवादिकत्वाल्लघूपधगुणः । तरलाश्चपलास्तरङ्गा एव रङ्गा नृत्यस्थानानि तेषु लीलानर्त्तितानि तासु निष्णातैः कुशलैः । निनदीभ्यां स्नातेः कौशले इति षत्वम् । वाससोऽन्तैः वस्त्राञ्चलैरुपलक्षितैः प्रियासमूहैः स्त्रीसङ्घैः सरसो ह्रदादुत्तेरे उत्तीर्णं निर्गतमित्यर्थः । तरतेर्भावे लिट् ॥ ६३ ॥

दिव्यानामिति । दिवि भवा दिव्यास्तेषामपि कृतविस्मयां सौन्दर्यातिरेकेण जनिताद्भुतरसां स्फुरदरविन्दाभ्याञ्चारू हस्तौ यस्यास्तां पद्महस्तामित्यर्थः पुरस्तादग्रतः अम्भस्तो जलात् । पञ्चम्यास्तसिल् । उत्तरन्तीन्निष्क्रामन्तीं काञ्चित् स्त्रियं मथ्यमानात् समुद्रात् सद्यः प्रादुर्भवन्तीं श्रियमिव लक्ष्मीमिवोद्वीक्ष्य जलनिधिमन्थनस्य समुद्रमन्थनमित्यर्थः । मन्थेर्भौवादिकस्येदित्वान्नुमागमः, अधीगर्थेत्यादिना कर्मणि षष्ठी । अस्मार्षीत् स्मृतवान् । अत्र समुद्रमन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्यात् श्रीः स्मृतेति स्मरणालङ्कारप्रतीतेरलङ्कारध्वनिः ॥ ६४ ॥

नारीणां विमलतरौ समुल्लसन्त्या
भासान्तर्दधतुरुरू दुकूलमेव ॥ ६५॥
वासांसि न्यवसत यानि योषितस्ताः
शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव।
अत्याक्षुः स्नपनगलज्जलानि यानि
स्थूलाश्रुस्रुतिभिररोदि तैः शुचेव ॥ ६६ ॥
आर्द्रत्वादतिशयिनीमुपेयिवद्भिः
संसक्तिं भृशमपि भूरिशोऽवधूतैः।

स्वच्छमिति। एतयोरूर्वोरन्तर्धानार्थं किल छादनार्थं स्वच्छं स्निग्धं यत् दुकूलं परिहितमाच्छादितमुदकसेकेन संसक्तं संश्लिष्टं तत् दुकूलं कर्म विमलतरौ नारीणामुरू पीवरौ ऊरू एव कर्त्तारौ समुल्लसन्त्या स्फुरन्त्या भासा निजकान्त्या अन्तर्दधतुः छादितवन्तौ तदेतद्भूषणमिति भावः। अत्र दुकूलस्योरुच्छादकत्वेऽपि तदभावोक्तेरसम्बन्धेऽपि सम्बन्धरूपातिशयोक्तिः। तदपेक्षया चोर्वोर्दुकूलानां छादकयोराच्छादकत्वोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्त्यानुप्राणितेति सजातीयसङ्करः तदनुप्राणितश्च विषमालङ्कारः इति विजातीयसङ्करः। तेन चोर्वोर्लोकोत्तरं लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ६५ ॥

वासांसीति। ताः योषितो यानि वासांसि न्यवसत निवसितवत्यः। वस आच्छादन इति धातोः कर्त्तरि लुङ्। शुभ्राभ्राणां द्युतिरिव द्युतिर्येषान्तैः वासोभिर्मुदा नारीनिवसनानन्देनाहासीव हसितमिव। भावे लुङ्। स्नपनेन गलज्जलानि स्रवत्तोयानि यानि वासांसि अत्याक्षुः त्यक्तवत्यः तैः शुचा स्थूला अश्रुस्रुतिर्येषान्तैः अरोदीव रोदनं कृतमिव। भावे लुङ्। अत्र धावल्यगुणजलगलनक्रियानिमित्तयोर्हासरोदनक्रिययोः सजातीयोत्प्रेक्षयोः सङ्करः॥ ६६ ॥

आर्द्रत्वादिति। आर्द्रत्वाज्जलेन प्रेम्णा च सरसत्वादतिशयिनीमतिशयवतीं संसक्तिं संश्लेषं परिचयं चोपेयिवद्भिः प्राप्तवद्भिः

अङ्गेभ्यः कथमपि वामलोचनानां
विश्लेषो बत नवरक्तकैः प्रपेदे ॥ ६७ ॥

प्रत्यंसं विलुलितमूर्द्धजा चिराय
स्नानार्द्रं वपुरुदवापयत् किलैका ।
नाजानादभिमतसन्निकेऽभिवीक्ष्य
स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ॥ ६८ ॥

अतएव भृशं भूरिशो बहुशोऽवधूतैर्निरस्तैरपि अन्यत्र निष्कासितैरपि नवरक्तैरेव नवरक्तकैः नूतनरक्तवस्त्रैर्नवानुरागिभिश्च वामलोचनानां स्त्रीणामङ्गेभ्यो विश्लेषः बत खेदे कथमपि प्रपेदे प्राप्तः । एकत्रातिश्लेषादन्यत्रातिपरिचयाच्चेति भावः । अत्राप्यत्र्काः कामिनो धनपरायणाभिर्वेश्याभिरवधूताः कथञ्चिन्मुञ्चन्तीत्यर्थान्तरप्रतीतिः । इह विशेष्यस्यापि श्लिष्टत्वाच्छब्दशक्तिमूलो ध्वनिरेव ॥ ६७ ॥

प्रत्यंसमिति । एका स्त्री प्रत्यंसमंसयोः । विभक्त्यर्थेऽव्ययीभावः । विलुलितमूर्द्धजा विकीर्णकेशा सती स्नानार्द्रं वपुः चिराय चिरमुदवापयच्चिरयापयत् अशोषयदिति यावत् । वयतेर्ण्यन्ताल्लङ् । अर्त्तिह्रीत्यादिना पुगागमः । किल खलु पुनस्तद्वपुः अभिमतं प्रियं सन्निकेऽभिवीक्ष्य स्वेदाम्बुनो द्रवन्द्रवशब्दः शुक्लादिवत् गुणे पुंसि गुणिनि भेद्यलिङ्गः । आपो द्रवाः सर्वाणि द्रवाणि तदङ्गुलेन जुहोतीत्यादिप्रयोगात् । अभवत्तरामतिशयेनाभवदित्यर्थः । तिङश्चेति तरप्, किमेत्तिङव्ययादिना तिङन्तादामुप्रत्ययः । तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम् । नाजानात् वाक्यार्थः कर्म तद्द्रवभवनं नाज्ञासीदित्यर्थः अविरतस्नेहार्द्रतामजानती स्नेहार्द्रमेवेति मन्यमाना पुनः पुनः वपुरुद्वापयन्त्येवास्त इति तात्पर्यार्थः । अत्र वपुष्यत्कर्तृकस्य वीक्षणस्य वपुष्युपचारात् द्रवणक्रियायाः समानकर्तृकत्वात् पूर्वकालतानिर्वाहः एषा च गर्वौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्त्विकसम्पन्ना स्मितादानुभाववती चैत्यनुसन्धेयम् । अनौद्धित्यहेतुकारणे सति द्रवत्व-

सीमन्तं निजमनुबध्नती कराभ्या-
मालक्ष्यस्तनतटबाहुमूलभागा ।
भर्तान्या मुहुरभिलष्यता निदध्ये
नैवाहो विरमति कौतुकं प्रियेभ्यः ॥ ६९ ॥

स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥ ७० ॥

निवृत्तिरूपकार्यानुत्पत्तेरुद्दिश्यद्रवत्वप्रतिपादनमुखेनाभिधानाद्विशेषो-क्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥ ६८ ॥

सीमन्तमिति । निजमात्मीयं सीमन्तं मूर्द्धजमध्यपद्धतिम् । सीमन्तमस्त्रियां स्त्रीणां केशमध्ये तु पद्धतिरिति वैजयन्ती । कराभ्यामनुबध्नती रचयन्ती विभजन्तीत्यर्थः । अतएव आ समन्तात् लक्ष्या विभाव्याः स्तनतटे बाहुमूले च तेषां भागाः प्रदेशा यस्याः सा अन्या स्त्री अभिलष्यताभिलषता । वा भ्राशेत्यादिना वैकल्पिकः श्यन्प्रत्ययः । भर्त्रा मुहुर्निदध्ये ध्याता तां निरीक्ष्येत्यर्थः । निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणमित्यमरः । अहो आश्चर्यं कौतुकमभिलाषः प्रीणन्तीति प्रियाः विषयाः । इगुपधज्ञाप्रीकिर इति कः । तेभ्यो न विरमति उपभोगेऽपि न निवर्त्तते इति आश्चर्यम् । न जातु कामः कामानामुपभोगेन शाम्यतीति भावः । जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानमिति पञ्चमी, व्याङ्परिभ्यो रम इति परस्मैपदम् । अर्थान्तरन्यासः ॥ ६९ ॥

स्वच्छेति । स्वच्छेनाम्भसा स्नपनेनाभिषेकेण विधौतं विमलितमङ्गं वपुस्ताम्बूलद्युत्या ताम्बूलरागेण विशद उज्ज्वल ओष्ठोऽधरः प्रतनु सूक्ष्मं विविक्तं विमलं वासश्च अथवा विविक्तमेकान्तस्थानञ्च ।

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन ।
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपान्ततिषु मङ्क्तुमीषे ॥ ७१ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये जलविहारवर्णनं नामाष्टमः सर्गः ॥ ८ ॥

विविक्तौ पूतविजनाविव्यमरः । इत्येवंरूप इयानेतावानेव विलासिनीनामाकल्पो नेपथ्यमस्तु किमन्यैरित्यर्थः । कुसुमेषुणा कामेन शून्यो यदि न स्यात् । अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः । एतेन विच्छित्त्याख्य आलम्बनचेष्टारूप उद्दीपनविभाव उक्तः । स्तोकभूषणयोगेऽपि विच्छित्तिरिति गद्यत इति लक्षणात् । अत्र स्नानताम्बूलादिपदार्थान्वितविशेषणगत्या अङ्गौष्ठादीनामाकल्पत्वप्रतिपादनार्थहेतुकाव्यलिङ्गमलङ्कारः ॥ ७० ॥

अथोत्तरसर्गे सूर्यास्तमयादिवर्णनं प्रस्तौति । इतीति । इतीत्थं सरसि मज्जनेन स्नानेन धौतपुरन्ध्रिमत्सरान् क्षालितमानिनीमानान् अभीक्ष्णमतिशेते अतिशायिनीम् । आभीक्ष्ण्ये णिनिः । श्रियमाप्तवतः अपमलाङ्गभासो विमलाङ्गकान्तीन् यादवानवलोक्य तदैव शिशिरेतररोचिषा उष्णांशुनाप्यपरवारिराशेः पश्चिमाब्धेरपान्ततिषु पूरेषु मङ्क्तुं प्रवेष्टुमीषे इष्टम् । भावे लिट् । परचेष्टासाक्षात्कारो विषयिणां तादृग्विषयाभिलाषमन्तराधत्त इति भावः । अत्र भानोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते । अतिशायिनी वृत्तम् । ससजाभजतोऽतिशायिनी भवति गौ दिगश्वैरिति छन्दोलक्षणात् ॥ ७१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्येऽष्टमः सर्गः ॥ ८ ॥

# नवमः सर्गः ।

——००——

अभितापसम्पदमथोष्णरुचि-
र्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपराम्बुनिधे-
रधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥

गतया पुरः प्रतिगवाक्षमुखं
दधती रतेन भृशमुत्सुकताम् ।
मुहुरन्तरालभुवमस्तगिरेः
सवितुश्च योषिदमिमीत दृशा ॥ २ ॥

अथ सूर्यास्तमयं वर्णयति । अभितापेति । अथ मिमङ्क्षानन्तरमुष्णरुचिः सूर्यो निजतेजसामभितापसम्पदं सन्तापातिरेकमसहमान इवापराम्बुनिधेः पश्चिमाब्धेः पयसि प्रपित्सुः पतितुमिच्छुः । पततेः सन्नन्तादुप्रत्ययः, सनि मीमेत्यादिना इसादेशः, लोपोऽभ्यासस्येत्यभ्यासलोपः । अस्तगिरिमस्ताद्रिम् । अस्तस्तु चरमक्ष्माभृदित्यमरः । अधिरोढुमभ्यपतत् अभ्यधावत् । अत्रासहमान इवेति कालप्राप्तस्य पयसि प्रपातस्य निजतेजोऽसहनहेतुकत्वमुत्प्रेक्ष्यते । अस्मिन् सर्गे प्रमिताक्षरा वृत्तम् । प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥ १ ॥

गतयेति । रतेन रत्यर्थे । प्रसितोत्सुकाभ्यां तृतीया चेति सप्तम्यर्थे तृतीया । भृशमुत्सुकतां कालाक्षमत्वलक्षणमौत्सुक्यन्दधती योषित् पुरोऽग्रे गवाक्षमुखं गवाक्षद्वारम्प्रति गतया अपसृतया दृशा अस्तगिरेः सवितुश्चान्तरालभुवं मध्यावकाशदेशं मुहुरमिमीत माति स्म

विरलातपच्छविरनुष्णवपुः
परितोविपाण्डु दधदभ्रशिरः।
अभवद्गतः परिणतिं शिथिलः
परिमन्दसूर्य्यनयनो दिवसः ॥ ३ ॥
अपराह्णशीतलतरेण शनै-
रनिलेन लोलितलताङ्गुलये।
निलयाय शाखिन इवाह्वयते
ददुराकुलाः खगकुलानि गिरः ॥ ४ ॥

ऽस्तसमतसमवशिष्टमरात्रिमात्समवशिष्टमित्यादिमानकरणेनास्तमयं प्रतीक्षितवतीत्यर्थः। माङो लुङि स्नाविति द्विर्भावः, भ्रजासिदित्याभ्यासस्येत्वम्। एतच्चास्तमयप्रतीक्षणभ्रमादौत्सुक्यानुभवान्तरोपलक्षणम् अतौत्सुक्यभावयचनात् प्रेयोऽलङ्कारः ॥ २ ॥

विरलेति। परिणतिं परिवृत्तिम् अन्यत्र जरावस्थाञ्च गतः अतएव विरला अल्पा आतपस्य छविर्यस्य सः अन्यत्र क्षीणप्रभः अनुष्णवपुः अन्यत्र स्नेहोदयादीपदुष्णदेहः। अलवणा यवागूरितिवत् अल्पार्थे नञ्प्रयोगः। परितोविपाण्डु, एकत्र शुभ्राभ्रपटलच्छन्नत्वादपरत्र पलितैश्च पाण्डुरमभ्रमाकाशमेव शिरो दधदुद्वहत् परिमन्दं प्रशान्त। अर्थग्रहणासमर्थञ्च सूर्य्य एव नयनं यस्य स दिवसः शिथिलः शिथिलवृत्तिः शिथिलाङ्गश्चाभवत्। अत्राभ्रशिर इत्याद्यवयवरूपणाद्दिवस एव स्थविर इत्यवयविरूपकसिद्धेस्तद्रूपणादेकदेशवृत्तिरूपकं स्नेपानुप्राणितम् ॥ ३ ॥

अपराह्णेति। अपरोऽपरभागोऽह्नोऽपराह्णो दिनान्तः। पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे इत्येकदेशिसमासः, राजाहःसखिभ्यष्टच् अह्नोऽह्न एतेभ्य इत्यह्नादेशः, अह्नोऽदन्तादिति णत्वम्। तस्मिन्नपराह्णे शीतलतरेणानिलेन शनैर्लोलिताश्चालिता लता एवाङ्गुलयो यस्य तस्मै अतएव निलयाय निवासायेत्यर्थः अङ्गुलिसंज्ञया आह्वानं

उपसन्ध्यमास्त तनु सानुमतः
शिखरेषु तत्क्षणमशीतरुचः।
करजालमस्तसमयेऽपि सता-
मुचितं खलूच्चतरमेव पदम्॥ ५॥

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभू-
न्न पतिष्यतः करसहस्रमपि॥ ६॥

नवकुङ्कुमारुणपयोधरया
स्वकरावसक्तरुचिराम्बरया।

कुर्वाणाय इव स्थितायेत्युत्प्रेक्षा। शाखिने इत्याय खगकुलानि पक्षिसङ्घा आकुलास्तुमुलाः गिर इदसागस्यत इति प्रत्युत्तराणि ददुरित्यनुषङ्गादुत्प्रेक्षा॥ ४॥

उपसन्ध्यमिति। उपसन्ध्यं सन्ध्यायाः समीपे। समीपार्थेऽव्ययीभावे नपुंसकत्वाद्ध्रस्वत्वम्। अशीतरुच उष्णांशोः तनु करजालन्तत्क्षणन्तस्मिन् क्षणे तत्कालेऽपीत्यर्थः। अत्यन्तसंयोगे द्वितीया। सानुमतोऽद्रेः शिखरेष्वास्तातिष्ठत्। आसेः कर्त्तरि लङ्। सतामस्तसमये नाशसमयेऽप्युच्चतरमेव पदमुन्नतस्थानमेवोचितं खलु। अर्थान्तरन्यासः॥ ५॥

प्रतिकूलतामिति। विधौ दैवे प्रतिकूलतामुपगते सति बहुसाधनता अनेकसाधनवत्ता विफलत्वमेति सत्यपि साधनसम्पत्तिर्निष्फलैवेत्यर्थः। तथाहि, पतिष्यत आसन्नपातस्य दिनभर्तुः करा अंशवो हस्ताश्च। बलिहस्तांशवः करा इत्यमरः। तेषां सहस्रमपि अवलम्बनायावष्टम्भनाय नाभूत् अतो दैवमेव प्रबलमिति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ६॥

नवेति। अत्रप्रारम्भ उष्णांशुः नवकुङ्कुमवदरुणपयोधरया

अतिसक्तिमेत्य वरुणस्य दिशा
भृशमन्वरज्यदतुषारकरः ॥ ७ ॥

गतवत्यराजत जपाकुसुम-
स्तवकद्युतौ दिनकरेऽवनतिम् ।
बहलानुरागकुरुविन्ददल-
प्रतिबद्धमध्यमिव दिग्वलयम् ॥ ८ ॥

द्रुतशातकुम्भनिभमंशुमतो
वपुरर्द्धमग्नवपुषः पयसि ।
रुरुचे विरिञ्चिनखभिन्नबृह-
ज्जगदण्डकैकतरखण्डमिव ॥ ९ ॥

नवसन्ध्यारुणमेघया अन्यत्र नवकुङ्कुमारुणकुचया स्फुरावसक्तरुचिराम्बरया स्वकिरणाक्रान्तरुचिराकाशया अन्यत्र स्फुरत्तलग्नचारुवस्त्रया वरुणस्य दिशा पश्चिमदिशा सहेत्यर्थः । वरुणसम्बन्धात्पराङ्गनात्वं च गम्यते । वृद्धो यूनेति सूत्रादौ सहार्थप्रयोगात्सहार्थानामप्रयोगेऽपि सहयुक्तेऽप्रधाने इति सहार्थे तृतीया । अतिसक्तिमतिसक्तिकर्षंनत्यासक्तिञ्च एत्य प्राप्य भृशमन्वरज्यत् लोहितरक्तवांश्चाभवत् । रञ्जेर्दैवादिकात् कर्त्तरि लङ् । कुषिरजोः प्राचां श्यन् परस्मैपदञ्चेति कर्मकर्त्तरि वा । अत्र वारुणीदिनकरादिविशेषणसहिम्नैव तयोर्जारभावप्रतीतेः समासोक्तिरलङ्कारः ॥ ७ ॥

गतवतीति । जपाकुसुमस्तवकद्युतौ लोहितवर्णे दिनकरेऽवनतिमस्ताङ्गतवति सति लम्बमाने सतीत्यर्थः । दिग्वलयं दिङ्मण्डलं कङ्कणञ्च ध्वन्यते । बहलानुरागैः सान्द्ररागैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तदिवाराजत इत्युत्प्रेक्षा । कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः । इङ्गुदे पद्मरागे च सुकुलेऽपि समीरित इति विश्वः ॥ ८ ॥

द्रुतेति । द्रुतमुग्रं यत् शातकुम्भन्तपनीयम् । तपनीयं शात-

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम्।
निरकाशयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका॥ १०॥
अभितिग्मरश्मि चिरमाविरसा-
दवधानखिन्नमनिमेषतया।

कुम्भमिति सुवर्णपर्य्यायेष्वमरः। तेन सदृशन्तन्निभमिति नित्यसमासः। पयसि समुद्रोदके अर्द्धं यथा तथा मग्नं वपुर्यस्य तस्यांशुमतोऽर्कस्य सखण्डं विरिञ्चेर्ब्रह्मणो नखेन विभिन्नस्य द्वेधा विदलितस्य बृहतो महतो जगदण्डकस्य जगदाश्रयकोशस्य ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव रुरुचे रराज। अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमालङ्कारः॥ ९॥

अनुरागवन्तमिति। अपरदिक् पश्चिमा सैव गणिका वेश्या अनुरागो लौहित्यमभिलाषश्च तद्वन्तमपि लोचनयोः सुखयतीति सुखं सुखकरं शान्तत्वादाभिरूप्याच्च दर्शनीयं वपुर्दधतमपीति अतापकरमनौष्ण्यादशठत्वाच्चासन्तापकारित्वं सुखस्पर्शं वा तथाप्यपेतवसुं नीरश्मिं निर्धनञ्च। देवभेदे नले रश्मौ वसू रत्ने धने वसुरित्यमरः। रविः सूर्यो विटश्च गम्यते तं वियदाकाशमेवालयो गृहं तस्मान्निरकाशयत् निष्कासितवती। धनपरा हि वेश्या निर्गुणमपि धनिकमासर्वस्वहरणादत्यनुरञ्जयन्त्योऽन्ते गुणवन्तमपि हृतसर्वस्वं निर्वासयन्ति सद्य एवेति भावः। अस्तङ्गतोऽर्क इति श्लोकार्थः। अत्र वियदालयादपरदिग्गणिकेत्येकदेशरूपणाद्रवेर्विटत्वरूपणावगमादेकदेशविवर्त्तिरूपकं श्लेषोऽपि तदुत्थापितत्वादनुराग एवानुरागो वसव एव च वसूनीति रूपकपर्य्यवसित एवेत्यङ्गम्॥ १०॥

अभीति। नलिनी अभितिग्मरश्मि सूर्याभिमुखं चिरमाविरसादस्तमयादनिमेषतया अपक्ष्मपाततया दलसङ्कोच एवात्र निमेषः।

विगलन्मधुव्रतकुलाश्रुजलं
न्यमिमीलदब्जनयनं नलिनी ॥ ११ ॥

अविभाव्यतारकमदृष्टहिम-
द्युतिबिम्बमस्तमितभानु नभः ।
अवसन्नतापमतमिस्रमभा-
दपदोषतैव विगुणस्य गुणः ॥ १२ ॥

रुचिधाम्नि भर्त्तरि भृशं विमलाः
परलोकमभ्युपगते विविशुः ।

अवधानेनाभिमुखावस्थानविरंभेण खिन्नमलसम् अतएव विगलद्भिः स्रवन्मधुव्रतकुलमेवाश्रुजलं यस्य तदब्जमेव नयनं न्यमिमीलत् मीलयति स्म । भ्राजभासेत्यादिना विकल्पादुपधाह्रस्वः अतएव नाभ्यासदीर्घः । अनुरक्ता हि कान्ता कान्तमनिमेषं पश्यन्ती तदपाये सति निमीलिताक्षी स्यादिति भावः । अलाब्जनयनमित्याद्यवयवरूपणादवयविनोर्नलिनीतिग्मरश्म्योर्नायिकानायकत्वरूपकासिद्धेरेकदेशविवर्त्ति रूपकम् ॥ ११ ॥

अविभाव्येति । अविभाव्यतारकमलक्ष्यनक्षत्रम् अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिन् तत् अद्याप्यनुदितचन्द्रतारकमित्यर्थः । अस्तमित्यदर्शनेऽव्ययम् । अस्तमितोऽस्तङ्गतो भानुर्यस्मिन् तत् एतावता निर्गुणत्वमुक्तम् । अथ निर्दोषत्वमाह । अवसन्नतापम् अर्कास्तमयात् प्रशान्तसन्तापम् अतमिस्रमनुदितान्धकारम् नभोऽन्तरीक्षमभात् भाति स्म । भातेर्लङ् । ननु निर्गुणस्य का शोभेति न वाच्यं निर्दोषताया अपि गुणत्वादित्यर्थान्तरन्यासेनाह । विगुणस्य गुणहीनस्यापदोषता निर्दोषत्वमेव गुणः अतो गुणवत्त्वाच्छोभा युक्तेति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

रुचीति । रुचिधाम्नि तेजोनिधौ सूर्य्ये भर्त्तरि पत्यौ परलोकं देशान्तरमभ्युपगते गते च सति । विमलाः शुद्धाभिजनाः ज्वलनं

ज्वलनं त्विषः कथमिवेतरथा
सुलभोऽन्यजन्मनि स एव पतिः ॥ १३ ॥
विहिताञ्जलिर्जनतया दधती
विकसत्कुसुम्भकुसुमारुणताम् ।
चिरमुज्झतापि तनुरौज्झदसौ
न पितृप्रसूः प्रकृतिमात्मभुवः ॥ १४ ॥

यिविशुः । अग्निं वावादित्यः सायम्प्रविशतीति श्रुतेरिति भावः ॥ अन्यत्र मृते या म्रियते पत्यौ सा स्त्री ज्ञेया पतिव्रतेति स्मरणादिति भावः । अग्निप्रवेशफलमाह । इतरथा ज्वलनाप्रवेशे अन्यजन्मनि जन्मान्तरे स एव स सूर्य एव पतिः अन्यत्र तु योऽस्मिन् जन्मनि पतिः स एव कथं सुलभो न कथञ्चिदित्यर्थः । उद्यन्तं वावादित्य° मग्निरनुसमारोहतीति श्रुतेः । तेनैव सह मोदत इति स्मरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थनाद्वाक्यार्थहेतुकङ्काव्यलिङ्ग-मलङ्कारः ॥ १३ ॥

अथ सन्ध्याप्रादुर्भावमाह । विहितेति । जनतया जनसमूहेन । ग्रामजनेत्यादिना समूहार्थे तल्प्रत्ययः । विहिताञ्जलिः कृतप्रणामे-त्यर्थः विकसत्कुसुम्भकुसुमवदरुणतान्दधती राजसत्वादिति भावः । तदुक्तं, सर्गाय रक्तं रजसोपबृंहितमिति । प्रसूत इति प्रसूर्माता । जनयित्री प्रसूर्मातेत्यमरः । पितॄणां प्रसूः पितृप्रसूः असावियं सन्ध्या-रूपिणी आत्मभुवो ब्रह्मणस्तनुर्मूर्त्तिश्चिरमुज्झिता त्यक्तापि प्रकृतिं स्वभावञ्जगद्वन्द्यत्वादि निजधर्ममित्यर्थः नौज्झत् न विससर्ज । उज्झ विसर्गे लङ्, आडजादीनामित्याडागमः, आटश्चेति वृद्धिः । भूत-पूर्वोऽपि महाजनपरिग्रहः फलतीति भावः । पितामहः पितॄन् सृष्ट्वा मूर्त्तिन्तामुत्ससर्जह । सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यत इत्यादि भविष्यपुराणमत्र प्रमाणम् । अत्र तनुत्यागरूपकारणसद्भावे-ऽपि प्रकृतित्यागरूपकार्यानुदयाद्विशेषोक्तिरलङ्कारः । तत्सामग्रा-मनुत्पत्तिर्विशेषोक्तिर्निगद्यत इति लक्षणात् ॥ १४ ॥

अथ सान्द्रसान्ध्यकिरणारुणितं
हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्त्तिदल-
हृदयस्रुतास्रगनुलिप्तमिव ॥ १५ ॥

निलयः श्रियः सततमेतदिति
प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो
चपलाजनं प्रति न चोद्यमदः ॥ १६ ॥

अथेति । अथ सन्ध्योदयानन्तरं सान्द्रा ये सान्ध्याः संध्यायां-भवाः । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणित्यण्प्रत्ययः । तैः किरणैररुणितमरुणीकृतमतएव विरहार्त्त्या विरहवेदनया दलतो दीर्यमाणात् हृदयात् स्रुतेन चरितेनास्रजा रुधिरेणानुलिप्तमिव स्थितमित्युत्प्रेक्षा । हरेर्विष्णोर्हेतिरायुधश्चक्रमित्यर्थः । हेतिः शस्त्रे च ज्वालयोरिति केशवः । हरिहेतेर्हूतिरिव हूतिराह्वा यस्य तद्धरिहेतिहूति चक्राह्वमित्यर्थः । पततोः पक्षिणोः । पतत्रिपत्रिपतगपतत्पत्ररथाण्डजा इत्यमरः । मिथुनं चक्रवाकद्वन्द्वमित्यर्थः । पृथक् भेदेनोत्पपात उदडीयत ॥ १५ ॥

निलय इति । यदेव जले जन्म यस्य तज्जलजन्म जलजमेतदेव सततं श्रियो निलय आलय इति प्रथितं प्रसिद्धम् । निकाय्यनिलयालया इत्यमरः । तदपि नित्यवासभूतमपीत्यर्थः । तया श्रिया दिवसात्यये सायंकाले मुक्तम् अहो ! देवानामपि कृतघ्नत्वं यदापदि महोपकारिणस्त्याग इत्याश्चर्य्यम् । अथवा चपला चापलवती स्त्री कमला च । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु चेति विश्वः । सैव जनश्चपलाजनः । जातेश्चेति संज्ञापूरण्योश्चेति चोभयत्रापि पुंवद्भावप्रतिषेधः । तस्मिन् प्रति तस्मिन्नित्यर्थः । अदः इदं कृतघ्नत्वं चोद्यं चोद-

दिवसोऽनुमित्रमगमद्विलयं
किमिहास्यते बत मयाऽबलया।
रुचिभर्त्तुरस्य विरहाधिगमा-
दिति सन्ध्ययापि सपदि व्यगमि॥ १७॥
पतिते पतङ्गमृगराजि निज-
प्रतिबिम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जग-
त्परितस्तमांसि परितस्तरिरे॥ १८॥

ञीयं कथमित्याद्येष्यं न चपलत्वान्नाश्चर्य्यमेतदिति भावः। स्नेहमूलाति-
शयकृत्यनुप्राणितोऽयमर्थान्तरन्यासः॥ १६॥

दिवस इति। दिवसो वासरः पुमानिति भावः। मित्रं सूर्य्यं सुहृदश्चानु मित्रेण सहेत्यर्थः। तृतीयार्थे इत्यनोः कर्मप्रवचनीयत्वाद् द्वितीया। मित्रं सुहृदि मित्रोऽर्के इति विश्वः। विलयं नाशमगमद्गतः। गमेर्लुङि पुषादित्वाद् च्लेरङादेशः। अबलया स्त्रिया मया रुचिभर्तुस्तेजोनिधेः प्रेमास्पदपतेश्चास्य सूर्य्यस्य विरहाधिगमात्। ल्यब्लोपे पञ्चमी। विरहप्राप्तिं प्राप्येत्यर्थः। इहास्मिल्लोके किमास्यते किमर्थं स्थीयते। भावेऽर्थे लिट्, बतेति खेदे इतीत्यमालोच्येवेत्यर्थः। अतएव उत्प्रेक्षा। सन्ध्ययापि सपदि व्यगमि व्यपागामीत्यर्थः। गमेः स्वार्थण्यन्ताद्भावे लुङ्, मित्त्वाद्ध्रस्वः। अण्यन्तादुपधावृद्धिर्नायं स्याद्वैतमणिचि। तस्मात् स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यतो भवेत्। विगमशब्दात्तत्करोतीति ण्यन्ताल्लुङिति केचित्॥ १७॥

अथान्धकारं वर्णयति। पतित इति। पतङ्गोऽर्क एव मृगराट् सिंह इति रूपकसमासः। तस्मिन्निजेन प्रतिबिम्बेन रोषिते कोपित इवेत्युत्प्रेक्षा। स्वप्रतिबिम्बे प्रतिसिंहभ्रमादिति भावः। अतएवाम्बुनिधौ पतिते सति तज्जिघांसयेति भावः। भावलक्षण-

व्यसरन्नु भूधरगुहान्तरतः
पटलं वहिर्बहलपङ्करुचि ।
दिवसावसानपटुनस्तमसो
वहिरेत्य चाधिकमभक्त गुहाः ॥ १९ ॥

किमलम्बताम्बरविलग्नमधः
किमवर्द्धतोर्ध्वमवनीतलतः ।
विससार तिर्य्यगथ दिग्भ्य इति
प्रचुरीभवन्न निरधारि तमः ॥ २० ॥

युग्मम् ।

सप्तमी । अथाप्सु पतनानन्तरं नागयूथानि करिकुलानीव सलिलानि श्यामानि । उपमानानि सामान्यवचनैरिति समासः । तमांसि जगल्लोकस्य्यरितः परितस्तरिरे आच्छादयामासुः । स्तृणातेः कर्त्तरि लिट् । ऋतश्च संयोगादेर्गुणः । अत्र यद्यपि नागयूथसलिलानी-त्युक्तत्रानुशासनसिद्धोपमानुसारात् पतङ्गस्तगराजीत्यत्राप्युपमितसमासा-श्रयणेनोपमैवोचिता तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम् । तथाच रूपकानुप्राणितोत्प्रेक्षेय-मुपमेति च सङ्करः । तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकञ्च व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥ १८ ॥

व्यसरदिति । बहलपङ्करुचि सान्द्रकर्दमच्छवि दिवसावसाने दिनान्ते पटुनः समर्थस्य तमसः पटलम्भूधरगुहानामन्तरतोऽभ्यन्तरा-देत्यागत्य वहिर्गवाक्षप्रदेशे व्यसरन्नु विस्तृतं वा वहिर्बाह्यदेशादेत्य गुहा अधिकम्भृशमभक्त च भजते स्म किमविष्टं वेत्यर्थः भजते-र्लुङि तङ्, झलो झलीति सकारलोपः । अत्र व्यापकत्वसादृश्यात्त-मसोऽन्तर्वहिरपादानकत्वसन्देहात् सन्देहालङ्कारः ॥ १९ ॥

किमिति । प्रचुरीभवद्वहुलीभवत्तमः कर्त्तृ किमम्वरविलग्न-माकाशस्थं सत् अधोभूतलस्थिति अलम्बताथवा किमिव अवनीतलतो

स्थगिताम्बरक्षितितले परित-
स्तिमिरे जनस्य दृशमन्धयति ।
दधिरे रसाञ्जनमपूर्वमतः
प्रियवेश्मवर्त्म सुदृशो दृदृशुः ॥ २१ ॥

अवधार्य्य कार्य्यगुरुतामभव-
न्न भयाय सान्द्रतमसन्तमसम् ।
सुतनोः स्तनौ च दयितोपगमे
तनुरोमराजिपथवेपथवे ॥ २२ ॥

भूतलादूर्ध्वमुपरिष्टादवर्द्धत किम् अथ दिग्भ्यस्तिर्य्यग्विससार विस्तृत-मिति न निरधारि अधोलम्बनादीनामन्यतमत्त्रावधारितमित्यर्थः । धारयतेः कर्मणि लुङ् । अत्रापि पूर्ववत् सन्देहालङ्कारः ॥ २० ॥

स्थगितेति । स्थगिते तिरोहिते अम्बरक्षितितले येन तस्मिन् तिमिरे परितोजनस्य दृशमन्धयति अन्धां कुर्वति सति सुदृशः स्त्रियोऽपूर्वं नूतनं रसाञ्जनं रसं रागमेवाञ्जनं सिद्धाञ्जनञ्च दधिरे दधुः अतो हेतोः प्रियवेश्मवर्त्म दृदृशुः । अत्र रसाञ्जनवाक्यार्थेन प्रियवेश्मदर्शन-समर्थनाद्वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः । तेन रसः सिद्धाञ्जनमिवे-त्युपमाध्वननादलङ्कारेणालङ्कारध्वनिः ॥ २१ ॥

अवधार्य्येति । सान्द्रतमं यत् सन्तमसं व्यापकन्तमः । विष्वक् सन्तमसमित्यमरः । अवसमन्धेभ्यस्तमस इति समासान्तोऽच्प्रत्ययः । तत् कर्तृ सुतनोः शुभाङ्ग्या दयितोपगमे प्रियाभिसरणे कार्य्यगुरुतां सम्भोगकार्य्यस्यावश्यकत्वमवधार्य्य निश्चित्य भयाय नाभवत् । स्तनौ कुचौ च तनुः क्षणो यो रोमराजेः पन्थाः रोमराजिपथो मध्यभाग-स्तस्य वेपथवे कम्पाय । द्वितोऽथुजित्यथुच्प्रत्ययः । नाभवतामिति विपरिणामेनानुषङ्गः कार्य्यासक्तस्य तत्रापि कामुकस्य कुतो भयं क्लेश-गणना चेति भावः । अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पानु-दये कार्य्यगौरवावधारणहेतुकत्वोक्तेः [illegible] अज्यते ॥ २२ ॥

दृदृशेऽपि भास्कररुचाऽह्नि न यः
न तमीन्तमोभिरभिगम्य तताम् ।
द्युतिमग्रहीद्‌ ग्रहगणो लघवः
प्रकटीभवन्ति मलिनाश्रयतः ॥ २३ ॥

अनुलेपनानि कुसुमान्यबलाः
कृतमन्यवः पतिषु दीपशिखाः ।
समयेन तेन चिरसुप्तमनो-
भवबोधनं सममबोधिषत ॥ २४ ॥

दृदृश इति । यो ग्रहगणोऽह्नि सवितुस्त्विषा न दृदृशे नेक्षितः, स ग्रहगणस्तमोभिस्ततां व्याप्तान्ताम्यन्त्यस्यामिति तमीं रात्रिम् । रजनी यामिनी तमीत्यमरः । अधिगम्य प्राप्य द्युतिमग्रहीत् । ग्रहे-र्लुङि ग्रहोऽलिटीति दीर्घः । इयाहि, लघवोऽल्पाः । लिघ्विष्टे-ऽल्पे लघुरित्यमरः । मलिनाश्रयतो निकृष्टाश्रयणात्प्रकटीभवन्ति । अर्थान्तरन्यासः ॥ २३ ॥

अनुलेपनानीति । तेन समयेन प्रदोषकालेन कर्त्रा अनुलेपनानि कुङ्कुमचन्दनादीनि कुसुमानि माल्यादीनि । तथा पतिषु कृतमन्यवः कृतकोपाः अबलाः स्त्रियः तथा दीपशिखा दीपज्वालाश्चेत्येतानि सर्वाणि चिरं सुप्तस्य पूर्वं स्तब्धस्य मनोभवस्य कामस्य बोधनमुद्दीपनं यस्मिन् कर्मणि तद्यथा तथा तत्पूर्वकमित्यर्थः । इतरथा अनुलेपनादिबोधकस्य वैफल्यासम्भवाच्चेति भावः । समं सहैवावबोधिषत बोधितानि । बुध्यतेर्ण्यन्तात् कर्मणि लुङ् । अत्र गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानामबोधिषतेत्येकेन श्लिष्टशब्देनाभिधानात् श्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरेका । तथा सुप्तमनोभवबोधनमिति क्रियाविशेषणसामर्थ्यात् सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्यकारणभूतयो[illegible]ऽपरा तदुभया-

वसुधान्तनिःसृतमिवाहिपतेः
पटलं फणामणिसहस्ररुचाम्।
स्फुरदंशुजालमथ शीतरुचः
ककुभं समस्कुरुत माघवनीम् ॥ २५ ॥

विशदप्रभापरिगतं विबभा-
वुदयाचलव्यवहितेन्दुवपुः।
मुखमप्रकाशदशनं शनकैः
सविलासहासमिव शक्रदिशः ॥ २६ ॥

कलया तुषारकिरणस्य पुरः
परिमन्दभिन्नतिमिरौघजटम्।

पेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात्तुल्य-
योगिताभेदश्चेति सङ्करः ॥ २४ ॥

अथ चन्द्रोदयवर्णनं प्रारभते। वसुधेति। अथ मनःप्रसादानन्तरं वसुधान्तेन भूप्रान्तेन निःसृतं बहिर्निर्गतमहिपतेः शेषस्य फणामणिसहस्राणां रुचाम्भासाम्पटलं स्तोम इवेत्युत्प्रेक्षा। शीतरुचश्चन्द्रस्य सम्बन्धि स्फुरदुल्लसदंशुजालं मघोन इमां माघवनीं माहेन्द्रीम्। मघवा बहुलमिति विकल्पान्न त्रादेशः। ककुभन्दिशं समस्कुरुत अभूषयत प्राच्यान्दिशि चन्द्रकिरणजालमलक्ष्यतेत्यर्थः सम्पर्युपेभ्यः करोतौ भूषण इति सम्पूर्वस्य सुडागमः अडभ्यासव्यवायेऽपीति नियमात् ॥२५॥

विशदेति। विशदप्रभापरिगतं शुभ्रकान्तिव्याप्तम्। उदय इति अचलः। उदयः पूर्वपर्वत इत्यमरः। तेन व्यवहितमिन्दुवपुरिन्दुमण्डलं यस्मिन् तच्छक्रदिशः प्राच्याः मुखमग्रभागः वक्त्रञ्च प्रतीयते तदभेदेनोत्प्रेक्ष्यते अप्रकाशदशनमलक्ष्यदन्तं सविलासहासं सविलासस्मितमिव शनकैर्मन्दं विबभौ ॥ २६ ॥

कलयेति। पुरः अग्रेऽथमभागे च तुषारकिरणस्येन्दोः कलया

चणमभ्यपद्यत जनैर्न मृषा
गगनं गणाधिपतिमूर्त्तिरिति ॥ २७ ॥
नवचन्द्रिकाकुसुमकीर्णतमः-
कबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरे-
र्हरितो मुखे तुहिनरश्मिदलम् ॥ २८ ॥
प्रथमं कलाऽभवदथार्द्धमथो
हिमदीधितिर्महदभूदुदितः ।

किरणेन चन्द्रेणोपलक्षितं परिमन्दमल्पस्निग्धा विरलिता तिमिरौघा एव जटा यस्य तत् गगनं न मृषा सत्यङ्गणाधिपतेः प्रथमपतेरीश्वरस्य । गणाः प्रथमसङ्घौघा इति वैजयन्ती । मूर्त्तिरिति जनैः चणमभ्यपद्यत गगनमष्टानां शिवमूर्त्तीनामन्यतममिति यत् तत् सत्यमभिपन्नमित्यर्थः । कलामात्रोदितश्चन्द्र इति फलितार्थः । रूपकालङ्कारः ॥ २७ ॥

नवेति । नवचन्द्रिकाभिरेव कुसुमैः कीर्णं तम एव कबरी केशपाशः । जानपदेत्यादिना ङीप् । तां बिभर्त्तीति तद्भृतः हरेः शक्रस्य हरितो दिशो मुखेऽग्रभाग एव मुखं वक्त्रमिति श्लिष्टरूपकन्तस्यैव ललाटतटवद्धारि मनोहरं हिमरश्मिदलमिन्दुखण्डं मलयजेन चन्दनेनार्द्रमिव ददृशे धावल्यादिति भावः । अत्र नवचन्द्रिकाकुसुमेत्याद्येकदेशविवर्त्तिरूपकमहिम्ना हरिवधूत्वप्रतीतौ तत्सङ्गतस्तस्याः प्रागवगतवक्त्राभेदाध्यवसितमुखसम्बन्धप्रसादासादितललाटतटोपमोज्जीवनेनेन्दुदलस्यानुपात्तनिजधावल्यगुणनिमित्तमलयजार्द्रत्वगुणस्वरूपोत्प्रेक्षा चेति सङ्करः ॥ २८ ॥

प्रथममिति । हिमदीधितिश्चन्द्रः प्रथमङ्कला कलामात्रमभवत् । कला तु षोड़शो भाग इत्यमरः । अथार्द्धमात्रमभवत् अथो अनन्तरम् । अथो अथेत्यमरः । उदितः साकल्यादुत्थितः सन् अमहा-

दधति ध्रुवं क्रमश एव न तु
द्युतिशालिनोऽपि सहसोपचयम् ॥ २९ ॥

उदमज्जि कैटभजितः शयना-
दपनिद्रपाण्डुरसरोजरुचा।
प्रथमप्रबुद्धनदराजसुता-
वदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥

अथ लक्ष्मणाऽनुगतकान्तवपु-
र्जलधिं विलङ्घ्य शशिदाशरथिः।
परिवारितः परित ऋक्षगणै-
स्तिमिरौघराक्षसकुलं बिभिदे ॥ ३१ ॥

न्महान् सम्पद्यमानोऽभून्महदभूत्। अभूततद्भावे च्विः हचन्तत्वान्न कार्य्यान्तरप्राप्तिः। तथाहि, द्युतिशालिनः तेजस्विनः अपि क्रमशः क्रमेणैव उपचयं वृद्धिन्दधति सहसा झटिति तु न दधति ध्रुवम्। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २९ ॥

उदमज्जीति। अपनिद्रपाण्डुरसरोजरुचा विकसितसितपुण्डरीकश्रिया तुहिनद्युतिना चन्द्रेण प्रथमं हरेः पूर्वमेव प्रबुद्धायाः अन्यथा तन्मुखं न दृश्येतेति भावः। नदराजसुतायाः सिन्धुकन्यायाः श्रियो वदनेन्दुनेवेत्युत्प्रेक्षा। कैटभजितो हरेः शयनात्समुद्रादित्यर्थः। उत्प्रेक्षासम्भावनार्थमित्यं निर्देशः। उदमज्जि उन्मग्नम् उदितमित्यर्थः ॥ ३० ॥

अथेति। अथोदयानन्तरं लक्ष्मणा लाञ्छनेन लक्ष्मणेन सौमित्रिणा चानुगतमनुसृतं कान्तं वपुर्यस्य सः लक्ष्मणानुगतकान्तवपुरिति शब्दश्लेषः वस्तुतः शब्दभेदेनार्थद्वयाभावेऽपि जतुकाष्ठवदेकशब्दप्रतीतेः। परितः समन्तात् ऋक्षगणैः नक्षत्रगणैः जाम्बवदादिभल्लूकसमूहैश्च इत्यर्थश्लेषः एकनालावलम्बिफलद्वयवदखण्डैकशब्दादर्थद्वयप्रतीतेः। नक्षत्रमृक्षं भन्तारा इति। ऋक्षाच्छभल्लभल्लूका इति चामरः। परिवारितः

उपजीवति स्म सततं दधतः
परिमुग्धतां वणिगिवोडुपतेः ।
घनवीथिवीथिमवतीर्णवतो
निधिरम्भसामुपचयाय कलाः ॥ ३२ ॥

रजनीमवाप्य रुचमाप शशी
सपदि व्यभूषयदसावपि ताम् ।
अविलम्बितक्रममहो महता-
मितरेतरोपकृतिमच्चरितम् ॥ ३३ ॥

शश्वेव दाशरथिर्दशरथपुत्रो रामः । अत इञ् । तमधिं विलङ्घ्य तिमिरौघ एव राक्षसकुलन्तत् विभिदे विभेदयामास । भिदेः कर्त्तरि लिट् । श्लेषसङ्कीर्णसमस्तवस्तुविवर्त्तिसावयवरूपकालङ्कारः ॥ २१ ॥

उपजीवतीति । अम्भसां निधिः समुद्रो वणिगिव सततं परिमुग्धतां सौन्दर्य्यम् अन्यत्र मौढ्यं व्यवहारानभिज्ञतामिति यावत् । मुग्धः सुन्दरमूढयोरिति विश्वः । दधतो दधानस्य घनानां वीथिर्घन-वीथिरन्तरिक्षं सा वीथिः पण्यवीथिरिवेत्युपमितसमासः । तामवतीर्ण-वतः प्रविष्टवतः उडुपतेर्नक्षत्रनाथस्य कस्यचिद्वणिकश्रेष्ठिनस्य कलाः षोड़शांशान् मूलधनवृद्धीश्च । कला स्यान्मूलरैवृद्धौ शिल्पादावंशमा-त्रके । षोड़शांशेऽपि चन्द्रस्येति विश्वः । उपचयाय स्वात्मवृद्धये स्ववृद्धये चोपजीवति स्म सेवते स्म अन्यत्र लभते स्मेत्यर्थः । यथा क्रियादिकुशलो ह्यकुशलान्महान्तं लाभमाप्नोति तद्वदिति भावः । श्लेषसङ्कीर्णेयमुपमा, उपमासङ्कीर्णः श्लेष इत्यन्ये ॥ २२ ॥

रजनीमिति । शशी रजनीमवाप्य रुचिं शोभामाप असौ शश्यपि तां रजनीं सपदि व्यभूषयत् महतां सतां चरितमवलम्बितक्रमं यथा तथा इतरेतरोपकृतिमत् अन्योऽन्योपकारवत् अहो इत्यविलम्बादा-श्चर्य्यम् । अत्र [illegible]न्योऽन्यालङ्कारः ।

दिवसं भृशोष्णरुचिपादहतां
रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरै-
रुदशिश्वसत् कुमुदिनीवनिताम् ॥ २४ ॥

प्रतिकामिनीति ददृशुश्चकिताः
स्मरजन्मघर्मपयसोपचिताम् ।
सुदृशोऽभिभर्तृ शशिरश्मिगल-
ज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ २५ ॥

तदन्योऽन्यं मिथो यत्रोत्पाद्योत्पादकता भवेदिति लक्षणात् । तत्समर्थकस्यार्थान्तरन्यास इत्यङ्गाङ्गिभावेन सङ्करः ॥ २२ ॥

दिवसमिति । मृगधरश्चन्द्रो दिवसन्दिवस इत्यर्थः । कालाध्वनोरत्यन्तसंयोगे द्वितीया । भृशम् उष्णरुचेः उष्णांशोः पादेन करेणांघ्रिणा च । पादा रश्म्यङ्घ्रितुर्यांशा इत्यमरः । हतान्ताडिताम् अतएवानवरतैरविच्छिन्नैरलिरुतैः रुदतीं क्रन्दतीमिव स्थितां कुमुदिन्येव वनिता ताम् । अग्राणि च ते कराश्च इत्यभेदेन समास इति वामनः । तैरग्रकरैरग्रांशुभिरग्रहस्तैर्मुहुरामृशन् स्पृशन् उदशिश्वसत् उच्छ्वासयति स्म । परावष्टब्धानां पतिभिराश्वासनीयत्वादिति भावः । श्वसधातोर्णौ चङ्युपधाया ह्रस्वः । अत्र पाद एव पादस्तेन हतामिति हननसाधितश्लिष्टरूपकोत्थापितेयमलिरुतैरिति व्यधिकरणपरिणामगर्भा रोदनोत्प्रेक्षेति विजातीयसङ्करः । तथा करैरेव करैः कुमुदिनीवनितेति श्लिष्टाश्लिष्टरूपणान्मृगधरे वल्लभत्वप्रतीतेरेकदेशवर्त्ति रूपकं तत्सापेक्षेयमुदशिश्वसदिति गम्योत्प्रेक्षेत्यपरो विजातीयसङ्करः । रोदनोत्प्रेक्षासापेक्षेयमुच्छ्वासनोत्प्रेक्षेति सजातीयसङ्करोऽपि ॥ २४ ॥

प्रतीति । सुदृशोऽङ्गनाः अभिभर्तृ भर्तारमभि । लक्षणेन अभिप्रती आभिमुख्ये इत्यव्ययीभावः । शशिरश्मिभिर्गलन्तः स्रवन्तो जल-

अमृतद्रवैर्विदधदब्जदृशा-
मपमार्गमोषधिपतिः स्म करैः ।
परितोविसर्पि परितापि भृशं
वपुषोऽवतारयति मानविषम् ॥ ३६ ॥
अमलात्मसु प्रतिफलन्नभित-
स्तरुणीकपोलफलकेषु मुहुः ।
विससार सान्द्रतरमिन्दुरुचा-
मधिकाऽवभासितदिशां निकरः ॥ ३७ ॥
उपगूढवेलमलघूर्मिभुजैः

विन्दवो यस्यास्तामिन्दुमणिश्चन्द्रकान्तशिला सैव दारुवधूस्तन्मयीवधूः स्त्रीप्रतिमा तां स्मराब्जन्म यस्य तेन स्मरजन्मना वर्मप्रयसा स्वेदाम्बुना उपचितां व्याप्तां स्विन्नगात्रामित्यर्थः प्रति प्रतिकूला कामिनी सपत्नीति भ्रान्त्येति शेषः चकिता भीता ददृशुः । अत्र चन्द्रशिलापुत्तिकायां सादृश्यनिबन्धनया प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ ३५ ॥

अमृतेति । ओषधिपतिश्चन्द्र एवौषधिपतिर्वैद्य इति श्लिष्टरूपकं अमृतमेवामृतमौषधविशेषः । तेन द्रवैरार्द्रैः करैः किरणैरेव करैः हस्तैरब्जदृशामपमार्गमङ्गपरिमार्जनं विदधत् कुर्वन् परितो विसर्पि सर्वव्यापि भृशं परितापि सन्तापकारि मानः कोप एव विषमत्त् वपुषः शरीरादवतारयति स्म अवारोपितवान् । अत्र सावयवरूपकेणौषधविज्ञ-जाङ्गलिकहस्तसंस्पर्शाद्विषमिव निशाकरकरस्पर्शादेवाङ्गनानां वपुषि रोषो न स्पृष्ट इत्युपमा व्यज्यते ॥ ३६ ॥

अमलेति । अधिकमवभासिताः प्रकाशिताः दिशो याभिस्तासामिन्दुरुचान्निकरोऽमलात्मसु निर्मलमूर्त्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितो मुहुः प्रतिफलन् संक्रामन् सान्द्रतरं प्रचुरतरं विससार दर्पणसंक्रमणादिवेति भावः । अत्रेन्दुरुचां कपोलासंक्रमेऽपि संक्रमोक्तेरसम्बन्धे सम्बन्धातिशयोक्तिः ॥ ३७ ॥

सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमहो
यदुरागिणाङ्गणमनङ्गलघुम् ॥ २८ ॥
भवनोदरेषु परिमन्दतया
शयितोऽलसः स्फटिकयष्टिरुचः ।
अवलम्ब्य जालकमुखोपगता-
नुदतिष्ठदिन्दुकिरणान् मदनः ॥ २९ ॥
अविभावितेषुविषयः प्रथमं
मदनोऽपि नूनमभवत्तमसा ।

उपगूढेति । रजनीकरः चन्द्रः करैरंशुभिरूर्मिभिरेव भुजैरुपगूढा वेला येन तं सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि स्वभावादक्षुभ्यमपीति भावः । अचुक्षुभत् क्षोभयति स्म । क्षुभ्यतेर्ण्यन्ताल्लुङ्यां चङ्युपधाह्रस्वः । अनङ्गेन लघुङ्कृतसारं यद्व एव रागिणस्तेषाङ्गणमचुक्षुभत् इत्यदः किमिव चित्रं न किञ्चिदित्यर्थः । अत्राक्षोभ्यमर्क्षि क्षोभयतश्चन्द्रस्य दण्डापूपिकन्यायादन्यक्षोभकत्वोक्तेरर्थापत्तिरलङ्कारः ॥ २८ ॥

भवनेति । परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्यन्तरेषु शयितः सुप्तोऽतएवालसो मदनो जालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अतएव स्फटिकयष्टीनां रुगिव रुक् शोभा येषान्तान् स्फटिकदण्डसन्निभान् इन्दुकिरणानवलम्ब्यावष्टभ्योदतिष्ठत् उत्थितः । अत्रोद्बोधोत्थानयोरभेदविवक्षया उदोऽनूर्ध्वकर्मणीति परस्मैपदसिद्धिः । एतत्पदे चाभेदाध्यवसायमूलातिशयोक्त्या स्फटिकयष्टिरुच इत्युपमया च अवलम्ब्येत्यत्रावलम्ब्येत्युत्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यत इत्येतासां सङ्करः ॥ २९ ॥

अविभावितेष्विति । मदनोऽपि प्रथमश्चन्द्रोदयात्प्राक् तमसा अविभावितोऽलक्षित इषुविषयो बाणलक्ष्यं येन सोऽभवत् नूनमित्युत्-

उदिते दिशः प्रकटयत्यमुना
यदघर्मधाम्नि धनुराचकृषे ॥ ४० ॥

युगपद्विकाशमुदयाद्गमिते
शशिनः शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः
कुमुदेऽङ्गनामनसि चावसरम् ॥ ४१ ॥

ककुभां मुखानि सहसोज्ज्वलयन्
दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः
कुसुमेषुमत्रिनयनप्रभवः ॥ ४२ ॥

प्रेति । यद्यस्मादघर्मधाम्नि शीतकरे उदिते दिशः प्रकटयति सति अमुना मदनेन धनुराचकृषे आकृष्टं चन्द्र एव महानुद्दीपको मदनस्याभूदिति भावः ॥ ४० ॥

युगपदिति । पुष्पधनुः पुष्पधन्वा । वा संज्ञायामिति विकल्पादानङादेशः । तस्य धनुः पुष्पचापं पुष्पाम्बरं च तस्माच्चलितो निःसृतः शिली शल्यं मुखं येषान्ते शिलीमुखाः बाणा अलयश्च । अलिबाणौ शिलीमुखावित्यमरः । तेषाङ्गणः शशिन उदयाद्विकाशमौत्सुक्यमुन्मीलनञ्च युगपदेकदा गमिते प्रापिते अङ्गनानां सुदृशां मनसि हृदये कुमुदे चावसरमवकाशमास्पदमलभत उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुदकामिनीहृदययोर्द्वयोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्मयोगाद्दीपस्यात्तुल्ययोगिता एकधर्मत्वं चात्र शिलीमुखेति श्लिष्टपदोपात्तयोरलिबाणयोरेकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥ ४१ ॥

ककुभामिति । ककुभां दिशां मुखानि सहसा झटित्युज्ज्वलयन् उद्भासयन् रतये सुरताय अधिकमाकुलत्वमौत्सुक्यं दधत् यूनामिति शेषः । अन्यत्र रतये कामदेव्यै आकुलत्वं भयविह्वलत्वं दधत् ।

इति निश्चितप्रियतमागतयः
सितदीधितावुदयवत्यबलाः ।
प्रतिकर्म कर्त्तुमुपचक्रमिरे
समये हि सर्वमुपकारि कृतम् ॥ ४२ ॥

सममेकमेव दधतुः सुतनो-
रुरु हारभूषणमुरोजतटौ ।
घटते हि संहततया जनिता-
मिदमेव निर्विवरतां दधतोः ॥ ४४ ॥

अत्र रतिसुखैर्नयनप्रभवः स्फुलिङ्गैरिवसमुद्भव इति पुराणात् त्रिनयनप्रभवो न भवतीत्यत्रिनयनप्रभवः अपरात्त्रिनयनप्रभवादन्यो दहनोऽग्निरिन्दुः कुसुमेषुङ्कामसदिदीपत् दीपयति स्म । दीप्यतेर्णौ चङि भ्राजेत्यादिना विकल्पाच्चोपधाह्रस्वः । अत्र प्रकृते कुसुमेषोर्दीपनं नाम प्रवर्द्धनन्तस्य तत्र प्रतीयमानेन प्रज्वलनेनाभेदाध्यवसायात्तन्निमित्तमिन्दोर्दिङ्मुखोल्लासनादिधर्मसम्बन्धादपरोऽयन्दहन इत्यपरशब्दप्रयोगसामर्थ्याद्दहनत्वोत्प्रेक्षा न रूपकमिति रहस्यम् । चन्द्रोदयात् कामो ववृधे इति तात्पर्य्यम् ॥ ४२ ॥

एवञ्चन्द्रोदयार्थम् उद्दीपनविभावनमुक्त्वा तत्फलमाह । इतीति । इत्येवं सितदीधितावुदयवति अबलाः स्त्रियो निश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः प्रतिकर्म प्रसाधनं कर्तुं उपचक्रमिरे । प्रतिकर्म प्रसाधनमित्यमरः । चन्द्रोदयात्प्रियागमनं निश्चित्य अलङ्कर्तुं प्रक्रान्ता इत्यर्थः । तथाहि, समये कार्य्यकाले कृतमनुष्ठितं सर्वङ्कर्म उपकार्य्युपकारकम्भवति अन्यथा विफलमेवेति भावः । अतो निश्चित्य प्रवृत्तिरासां युक्तेत्यर्थान्तरन्यासः ॥ ४२ ॥

अथ प्रसाधनमेव प्रपञ्चयति । सममिति । सुतनोः स्त्रियाः उरोजतटौ उरु स्लाघ्यमेकमेव हारमेव भूषणं सममवैषम्येण दधतुः संहततया संश्लिष्टतया ऐकमत्येन च जनितां निर्विवरतां निरन्तरा-

कदलीप्रकाण्डरुचिरोरुतरौ
जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन वधू-
र्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥

अधरेष्वलक्तकरसः सुदृशां
विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयो-
र्विभिदे न शङ्कनिहितात्पयसः ॥ ४६ ॥

सतां नीरक्षीरत्वञ्च दधतोरिदं समभागित्वमेव घटते । अन्तर्भेदान्तराया हि विषयिणां विषयोपभोगास्तदभावात्समशोभार्थं हारधारणं युक्तमिति भावः ॥ ४४ ॥

कदलीति । वधूः कदलीप्रकाण्डरुचिरः रम्भास्तम्भसुन्दर ऊरुरेव तरुर्बन्धनयष्टिर्यस्मिन् । अत्र कदलीकाण्डस्य सौन्दर्यमात्रोपमानत्वाद्बन्धनयोग्ययष्टिवाचिना तरुशब्देन पुनरुक्तिः । महति जघनस्थल्या एव परिसरः प्रदेशस्तस्मिन् रशनाकलापक एव गुणस्तेन मकरध्वजो मदनः स एव द्विरदस्तमाकलयदबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्त्ति सावयवरूपकम् ॥ ४५ ॥

अधरेष्विति । सुदृशामधरेष्वोष्ठेषु अलक्तकरसो लाक्षाद्रवः तथा कपोलभुवि गण्डस्थले विशदं शुभ्रं लोध्ररजः तथा नयनपङ्कजयोर्नवमञ्जनञ्च शङ्कनिहितात्पयसः क्षीरात् न विभिदे भिन्नं नाभूत् । कर्मकर्त्तरि लिट् । अधरादिनिहितं लाक्षारागादिकं शङ्कनिहितक्षीरवत्सावर्ण्यादाश्रयतोऽभेदेन दुर्ग्रहमभूदित्यर्थः । अत्र यदधरालक्तकरसादिकं तच्छङ्कनिहितं क्षीरमित्येकवाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिष्ठो निदर्शनालङ्कारः तेनाधरालक्तकादीनां गुणतः एकत्वरूपः सामान्यालङ्कारो गम्यते, सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् ॥ ४६ ॥

स्फुरदुज्ज्वलाधरदलैर्विलस-
द्दशनांशुकेशरभरैः परितः।
धृतमुग्धगण्डफलकैर्विबभु-
र्विकसद्भिरास्यकमलैः प्रमदाः ॥ ४७ ॥

भजते विदेशमधिकेन जित-
स्तदनुप्रवेशमथवा कुशलः।
मुखमिन्दुरुज्ज्वलकपोलमतः
प्रतिमाच्छलेन सुदृशामविशत् ॥ ४८ ॥

ध्रुवमागताः प्रतिहतिं कठिने
मदनेषवः कुचतटे महति।

स्फुरदिति। प्रमदाः स्त्रियः स्फुरन्तश्चलन्तः उज्ज्वलाश्चामला अधरा ओष्ठा एव दलानि पत्राणि येषास्तैः परितो विलसन्तो दशनांशवो दन्तकान्तय एव केशरभराः किञ्जल्कपुञ्जा येषां तैः। धृतानि मुग्धानि गण्डा एव फलकानि कर्णिका येषान्तैर्विकसद्भिरास्यकमलै-र्विबभुः। अत्रास्यकमलैरिति रूपणात्प्रमदा एव सरस्य इति सिद्धेरेक-देशविवर्त्ति सावयवरूपकम्। आस्यकुमुदैरिति पाठे कुमुदस्य मुखो-पमानकत्वं कविसमयविरुद्धं ज्ञेयम् ॥ ४७ ॥

भजत इति। अधिकेन प्रबलेन जितो विदेशन्देशान्तरम्भजते अथवा कुशलः कार्य्यचतुरः तदनुप्रवेशं भजते तमेव शरणतया प्रविश्य जीवतीत्यर्थः। अतो हेतोरिन्दुरुज्ज्वलौ कपोलौ यस्य तदिति सुखस्य विम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकं काव्यलिङ्गम्। सुदृशां सुखं प्रति-माच्छलेन प्रतिविम्बव्याजेन अविशत् प्रविष्टः। साक्षाच्चन्द्र एवायं न प्रतिमाचन्द्र इति छलशब्दात्प्रतीतेः छलशब्देनासत्यत्वप्रतिपादनरूपो-ऽपह्नवालङ्कारः। पूर्वोक्तकाव्यलिङ्गसापेक्ष इति सङ्करः तेन कपो-लयोर्लोकोत्तरलावण्यं दर्पणौपम्यञ्च व्यज्यते इत्यलङ्कारेणालङ्कार-ध्वनिः ॥ ४८ ॥

इतराङ्गवन्न यदिदं गरिम-
ण्यपितावलग्नमगमत्तनुताम् ॥ ४९ ॥
न मनोरमास्वपि विशेषविदो
निरचेष्ट योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे सुदृशां
वसनाङ्गरागसुमनःसु मनः ॥ ५० ॥
वपुरन्वलिम्पत परिरम्भसुख-
व्यवधानभीरुकतया न वधूः ।

भुवमिति । मदजेमदः कामशराः महति कठिने कुचतटे प्रवि-हृतिं प्रतिघातमागताः प्राप्ता भुवम् । यद्यस्माद्गरिम्णा निजभारेण ग्लपितङ्कर्शितम् अवलग्नं मध्यं येन तदिदं कुचतटम् । इतराङ्गेन तुल्यमितराङ्गवत् । तेन तुल्यमिति वतिप्रत्ययः । तनुतां कार्श्यन्नाग-मत् नाभजत । पुषादिद्युतेत्यङ् लृदित्त्वादित्यङः । तदा मदनेषुपातात् कुचातिरिक्तमङ्गनानामङ्गं क्षतमासीदित्यर्थः ॥ ४९ ॥

न मनोरमास्विति । प्रियतमे गृहमेष्यति आगमिष्यति सति विशेषविदामपि सुदृशां सम्यक्दर्शनीयानां स्त्रीणां मनः कर्तृ मनो-रमास्वपि वसनाङ्गरागसुमनःसु वस्त्रगन्धमाल्येषु इदमेतदिति इदं पुरोवर्त्ति वस्त्वेतदिति वसनमिति अनुलेपनमिति सुमनश्च इति विशेषाकारेण तथा योग्यमस्माकं धारणार्हमिति च न निरचेष्ट न निरधारयत् प्रियागमनहर्षातिरेकादिति कर्त्तव्यता मूढमभूदित्यर्थः । चिनोतेर्लुङि तङि च्लेः सिच् सार्वधातुकार्धधातुकयोरिति गुणः । हर्षोऽत्र सञ्चारिभावः निश्चयसन्देहेऽप्यसम्बन्धोक्तेरतिशयोक्तिः सुम-नःसुमन इति यमकविशेषस्येति संसृष्टिः ॥ ५० ॥

वपुरिति । वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गन-सुखविच्छेदभीरुत्वेन । भीरुकमपि वक्तव्य इति भीरुकन्प्रत्ययः । वपुर्नान्व-लिम्प नानुलिम्पती अङ्गरागमात्रव्यवधानमपि न सहत इत्यर्थः ।

क्षममस्य वाढमिदमेव हि यत्
प्रियसङ्गमेष्वनवलेपमदः ॥ ५१ ॥
निजपाणिपल्लवतलस्खलना
दभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे
मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥
विधृते दिवा स वयसा च पुरः
परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः
स्वमुखश्रियं मृगदृशो ददृशुः ॥ ५३ ॥

क्षिप्यतिः कर्तरि लुङि तङ् । तथाहि, अदो वपुः प्रियसङ्गमेषु अनव-लेपमचन्दनमगर्वञ्चेति यत् । अवलेपस्तु गर्वे स्यात्लेपने भूषणेऽपि चेति विश्वः । इदमनवलेपनत्वमेवास्य वपुषो वाढं भृशं क्षमं युक्तम् । श्लेषानुप्राणितोऽयमर्थान्तरन्यासः ॥ ५१ ॥

निजेति । अपरा स्त्री निजपाणिपल्लवतलस्य स्खलनादभिघाता-दभिनासिकाविवरं नासारन्ध्रं प्रति उत्पतितैरास्यकमलस्य श्वसनै-र्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष्य मुमुदे । इयं वासक-सज्जिका नायिका ॥ ५२ ॥

विधृत इति । दिवा आकाशेन सवयसा वयस्यया च पुरोऽग्रे विधृते विधारिते परिपूर्णमण्डलविकाशं विम्बशोभां विभर्तीति तद्भृति तस्मिन् हिमधाम्नि चन्द्रे दर्पणतले च मृगदृशः स्त्रियः स्वमुख-श्रियं पूर्वोपमानभूतामुत्तरत्रोपमेयभूताञ्चेत्यर्थः । मुहुर्ददृशुः औपम्यपरीक्षार्थमिति भावः । अतान्यश्रियोऽन्यत्रासम्भवाच्चन्द्रे तत्स-दृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना । तथा चन्द्रदर्प-णयोर्द्युसवयसोश्च यथासंख्यमन्वयाद्यथासंख्यालङ्कारश्च । तदुभया-

अधिजानु बाहुमुपधाय नम-
त्करपल्लवार्ऽर्पितकपोलतलम् ।
उदकण्ठि कण्ठपरिवर्त्ति कल-
स्वरशून्यगानपरयापरया ॥ ५४ ॥
प्रणयप्रकाशनविदो मधुराः
सुतरामभीष्टजनचित्तहृतः ।
प्रणिघाय कान्तमनु मुग्धतर-
स्तरुणीजनो दृश इवाथ सखीः ॥ ५५ ॥

प्रेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्य-त्वात्तुल्ययोगितेति सङ्करः ॥ ५३ ॥

अधिजान्विति । नमति कपोलार्पणाय प्रह्वीभवति करपल्लवे अर्पितं निहितं कपोलं गण्डस्थलं यस्य तं बाहुम् अधिजानु जानुनि । विभक्त्यर्थेऽव्ययीभावः । उपधाय निधाय कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्त्तत इति कण्ठपरिवर्त्ति न तु मुखोच्चारित इत्यर्थः । कलमव्यक्तमधुरं स्वरशून्यन्तारध्वनिहीनं षड्जादिस्वराभिव्यक्तिहीनं वा यद्गानन्तत्परया तदासक्तया मन्दकण्ठेनैव गायन्त्येत्यर्थः । काल-क्षपार्थमिति भावः अयञ्चोत्कण्ठानुभावः । अपरया स्त्रिया उदकण्ठि उत्कण्ठितं प्रियसङ्गमायोत्सुकया स्थितमित्यर्थः । भावे लुङि चिणो लुक् । अत्र कालक्षेपासहिष्णुत्वलक्षणमौत्सुक्यं सञ्चारि तन्निबन्ध-नात्प्रेयोऽलङ्कारः । परयापरयेति यमकविशेषसंसृष्टिः । नायिका विरहोत्कण्ठिता । चिरं पत्युरनालोके विरहोत्कण्ठितोन्मना इति लक्षणात् ॥ ५४ ॥

प्रणयेति । अथ प्रसाधनानन्तरं मुग्धतरोऽत्यन्तकाममोहितस्तरु-णीजनः प्रणयप्रकाशनविदोऽनुरागव्यञ्जनचतुरा इत्यर्थः । मधुराः मधुरभाषिणीः अन्यत्र रम्याकृतिः सुतरामभीष्टजनस्य चित्तहृतो मनो-हारिणीः सखीः दृश एव कान्तमनु प्रियजनं प्रति प्रणिधाय प्रेषित-

न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि।
निपुणन्तथैनमुपगम्य वदे-
रभिदूति काचिदिति सन्दिदिशे॥ ५६॥

दयिताय मानपरयापरया
त्वरितं ययावगदितापि सखी।
किमु चोदिताः प्रियहितार्थकृतः
कृतिनोभवन्ति सुहृदः सुहृदाम्॥ ५७॥

वान्। ह्निनोतेर्लिट्। इवेन सह समासवचनात् इव इवेति उपमा-समासः। तया सखीनामास्यन्तरङ्गत्वकार्य्यदर्शित्वादिव्यञ्जनादलङ्का-रेण वस्तुध्वनिः॥ ५५॥

तथा काचिन्नायिका दूतीं वाचिकमनुशास्ति। न चेति। स मे दयितो यथा मयि करुणां कुरुते यथा लघुतामल्पताञ्च नावगच्छति न मन्यते। एनन्दयितमुपगम्य प्राप्य तथा तेन प्रकारेण निपुणं वदेः। विध्यर्थे प्रार्थने वा लिङ्। इतीत्थं काचिन्नायिका अभिदूति। अभि-लक्षणेऽव्ययीभावे नपुंसकह्रस्वत्वम्। सन्दिदिशे सन्दिष्टवती। कर्त्तरि लिट् स्वरितेत्त्वादात्मनेपदम्। नायिका तु कलहान्तरिता। कोपात् कान्तं पराणुद्य पश्चात्तापसमन्वितेति लक्षणात्॥ ५६॥

दयितायेति। मानपरया अभिमानवत्या। अतएवापरया नायि-कया अगदिता दयितमानयेत्यनुक्ता सखी दयिताय दयितमानेतुम्। क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी। त्वरितं शीघ्रं ययौ अन्यथा मरणशङ्केति भावः। तथाहि, सुष्ठु शोभनं हृदयं येषान्ते सुहृदो मित्राणि। सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः। चोदिताः प्रेरिताः सन्तः सुहृदामिमयो हृद्यः हितः श्रेयस्करश्च यो-ऽर्थस्तं कुर्वन्तीति प्रियहितार्थकृतः कृतमपामस्तीति कृतिनः कृतकृत्या

प्रतिभिद्य कान्तमपराधकृतं
यदि तावदस्य पुनरेव मया ।
क्रियतेऽनुवर्त्तनमचितेव ततः
कलयेदमानमनसं सखि ! माम् ॥ ५८ ॥

अवधीर्य्य धैर्य्यकलिता दयितं
विदधे विरोधमथ तेन सह ।
तव गोप्यते किमिव कर्त्तुमिदं
न सहास्मि साहसमसाहसिकी ॥ ५९ ॥

अयन्ति किम्तु किन्तु चोदनां विनैवेति भावः । अर्थान्तरन्यासः । नायिका च पूर्ववत् ॥ ५७ ॥

अथ काचित् कलहान्तरिता कान्तं प्रति विभिद्य तीं वन्दिषयति । प्रतिभिद्येत्यादि । अपराधकृतमागस्कारिणं कान्तमतिभिद्य निराकृत्य पुनर्मयैवास्यानुवर्त्तनमनुसरणं क्रियते यदि तावदुचितेव पतिव्रतानां प्राणेश्वरचित्तानुवृत्तेर्धर्मत्वादिति भावः । किन्तु हे सखि ! ततोऽनुवृत्तेर्मानमनसमभिमानहीनचित्तां कलयेत् मन्येत ॥ ५८ ॥

तथ्यं वाचवाय विदद्यैव स्वीयतान्तमाह । अवधीर्य्येति । धैर्य्यकलिता कलितधैर्या सती । वाहिताग्न्यादिष्विति निष्ठायाः परनिपातः । दयितमवधीर्य्य तिरस्कृत्य तेन सह विरोधं विदधे करोमीति चेत् । दधातेः कर्त्तरि लट् । हे सखि ! तव किमिव गोप्यते निगूह्यते न किञ्चिदित्यर्थः किन्तु कथ्यत एवेति कथयति सहसा बलेन वर्त्तत इति साहसिकी । ओजः सहोम्भसा वर्त्तत इति ठक् । सा न भवतीत्यसाहसिकी अहमिति शेषः । इदं साहसं विरोधं विरोधाचरणरूपं साहसकृत्यं कर्त्तुम् । शकधृषेत्यादिना तुमुन् । सहत इति सहा समर्था । पचाद्यच् । नास्मि । अत्रासाहसिकत्वस्य विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५९ ॥

तदुपेत्य मा स्म तमुपालभथाः
किल दोषमस्य न हि विद्म वयम् ।
इति सम्प्रधार्य रमणाय वधू-
र्विहितागसेऽपि विससर्ज सखीम् ॥ ६० ॥

ननु सन्दिशेति सुदृशोदितया
त्रपया न किञ्चन किलाभिदधे ।
निजमैच्छि मन्दमनिशं निश्वसितैः
कृशितं शरीरमशरीरशरैः ॥ ६१ ॥

तर्हि किमत्र कार्यमत आह । तदिति । तत्तस्मात् प्रियमुपेत्य मा स्मोपालभथाः नोपालभस्व तद्दोषं न गणयेरित्यर्थः । स्मोत्तरे लङ् चेति उपाङ्पूर्वाल्लुङ् न माङ्योगे इत्यट्प्रतिषेधः । ननु सापराधः कथं नोपालभ्यस्तत्राह । वयमस्य दोषमपराधं न विद्म किल अजानाना इव तिष्ठाम इत्यर्थः । कार्यार्थिनः कुतो गर्व इति भावः । विदो लटो वेति मसादेशः । इति सम्प्रधार्य निश्चित्य वधूर्नायिका विहितागसे कृतापराधायापि रमणाय प्रेयसे । क्रियाग्रहणाच्चतुर्थी । सखीं विससर्ज प्रजिघाय विरहासहिष्णुतयेति भावः । एषा कलहान्तरिता प्रौढा च ॥ ६० ॥

नन्विति । ननु सन्दिश सन्देशं ब्रूहि इत्युदितया दूत्या कयाचित्सुदृशा नायिकया कर्त्र्या त्रपया हेतुना किञ्चन नाभिदधे किल नाभिहितं खलु । किन्तु निश्वसितैरशरीरशरैरनङ्गबाणैरनिशं कृशितं कृशीकृतम् । कृशशब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः, णाविष्ठवद्भावे रऋतो हलादेर्लघोरित्यृकारस्य रेफादेशः । निजं शरीरं मन्दमैच्छि ईक्षितम् । एषापि कलहान्तरिता मध्यमा च । त्रपया निजहृदयानभिधानेन निजशरीरनिरीक्षणेन स्वावस्थानिवेदनाच्च लज्जा… कामावस्था ।

ब्रुवते स्म दूत्य उपसृत्य नरान्
नरवत्प्रगल्भमतिगर्भगिरः ।
सुहृदर्थमीहितमजिह्मधियां
प्रकृतेर्विराजति विरुद्धमपि ॥ ६२ ॥

मम रूपकीर्त्तिमहरद्भुवि य-
स्तदनुप्रसक्तहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः
सुतरां क्षिणोति खलु तां मदनः ॥ ६३ ॥

दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥ ६१ ॥

इत्थन्नायिकाभिरुपदिष्टा दूत्यः किमकुर्वन्नित्यत आह । ब्रुवत इति । प्रगल्भाः धृष्टाः मतिगर्भाः प्रतिभासाराश्च गिरो यासां ता दूत्यः नरान् पुरुषानुपसृत्य नरवत् नरैः पुम्भिस्तुल्यम् । तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः । ब्रुवते स्म । न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह । सुहृदर्थमिति । तथाहि, अजिह्म-धियामकुटिलबुद्धीनां सम्बन्धि सुहृदे सुहृदर्थम् । अर्थेन सह नित्य-समासः सर्वलिङ्गता चेति वक्तव्या । ईहितं चेष्टितं प्रकृतेर्विरुद्धमपि स्वभावविपरीतमपि विराजति शोभते । तस्मान्न धार्ष्ट्यं दोष इत्यर्थः ॥ ६२ ॥

अथ काचिद्दूती कञ्चित्प्रियस्मृति सप्तभिः प्रार्थयते । ममेत्यादि । यो भुवि मम रूपकीर्त्तिं सौन्दर्यख्यातिमहरत् इयं त्वत्प्रिया तदनु-प्रविष्टहृदया तस्मिन्नासक्तचित्तेति अतो हेतोस्त्वयि मत्सरादिव मदनो निरस्तदयो निष्कृपः सन् तां त्वत्प्रियां सुतरां क्षिणोति क्षपयति खलु । एतेन कार्श्यावस्थोक्ता । अथ साक्षात्प्रतिपक्षभूतनायक-पीडासमर्थस्य मदनस्य तदीयनायिकापीडनोक्त्या प्रत्यनीकालङ्कारः । स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित इति सङ्करः । बलिनः

तव सा कथासु परिघट्टयति
श्रवणं यदङ्गुलिमुखेन मुहुः।
घनतां ध्रुवं नयति तेन भव-
द्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥

उपताप्यमानमलघूष्णिमभिः
श्वसितैः सितेतरसरोजदृशः।
द्रवतां न नेतुमधरं क्षमते
नवनागवल्लिदलरागरसः ॥ ६५ ॥

दधति स्फुटं रतिपतेरिषवः
शितता यदुत्पलपलाशदृशः।

प्रतिपक्षस्य प्रतीकारे सुदुष्करे। यस्तदीयतिरस्कारः प्रत्यनीकन्तदुच्यते इति लक्षणात् ॥ ६३ ॥

तवेति। सा त्वत्प्रिया तव कथासु गुणकीर्त्तनेषु मुहुरङ्गुलिमुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयति स्फालयतीति यत् यदृच्छयेति शेषः तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणम् अतृप्ततया तावद्गुणश्रवणेनासन्तुष्टतया घनतां नयति, बहुतरगुणमानार्थं प्रस्थादिवद्भूयो गुणप्रवेशाय सङ्घयतीत्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्। अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते ॥ ६४ ॥

उपेति। अलघुरन्तःसन्तापोपाधिकः उष्णिमा उष्णत्वं येषान्तैः श्वसितैर्निःश्वासैरुपताप्यमानं सितेतरसरोजदृशो नीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानान्ताम्बूलदलानां रागरसो रञ्जनद्रवो द्रवतामार्द्रतां नेतुं न क्षमते न शक्नोति। एतेन ज्वरावस्थोक्ता। अत्र द्रवत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

दधतीति। रतिपतेरिषवः शितता नैशित्यन्दधति स्फुटमित्युत्प्रेक्षायाम्। यद्यस्मान्निरन्तरं नीरन्ध्रं दृढवत् कठिनञ्च यत् स्तनमण्डलं

हृदयं निरन्तरबृहत्कठिन-
स्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥
कुसुमादपि स्मितदृशः सुतरां
सुकुमारमङ्गमिति नापरथा ।
अनिशं निजैरकरुणः करुणं
कुसुमेषुरुत्तपति यद्विशिखैः ॥ ६७ ॥
विषतां निषेवितमपक्रियया
समुपैति सर्वमिति सत्यमदः ।
अमृतस्रुतोऽपि विरहाद्भवतो
यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥

यद्देवावरणं वर्म यस्य तत्तदपि उत्पलपलाशदृश उत्पलदलाक्ष्याः हृदयं अभिदन् भिन्दन्ति स्म । भिदेर्लुङि इरितो वेति च्लेरङादेशः । आवरणमपि भिन्नमिति विरोधोत्थापितेयं स्मरशरनैशित्योत्प्रेक्षा । तथा च त्वदन्वेषिणा कामेन निपीड्यमानायास्तस्यास्त्वद्विरहो जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६ ॥

कुसुमादिति । स्मितदृशः स्मेराक्ष्याः अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमितीदमपरथा अन्यथा न किन्तु सत्यमेवेत्यर्थः । यद्यस्मात् कुसुमेषुरकरुणो निष्कृपः सन् निजैर्विशिखैर्बाणैः । पृषत्कबाणविशिखा इत्यमरः । कुसुमैरेवेत्यर्थः । करुणं दीनं यथा तथा अनिशं नित्यमुत्तपति तापयतीत्यर्थः । तपतिरयमौवादिकः सकर्मकः । कुसुमाधिकसौकुमार्याभावे कुसुमैः पीड्यत इति कुसुमाधिकसौकुमार्यगुणोत्प्रेक्षा नापरथेति व्यञ्जकप्रयोगाद्वाच्या ॥ ६७ ॥

विषतामिति । अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वम् अमृतमपीति भावः । विषतां विषवद्दाहितत्वं समुपैति इत्यद इदं विषत्वं सत्यं ध्रुवं यद्यस्मात् अमृतस्रुतोऽपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतो विरहाद्धेतोस्त्वया विना सेवनाद्धे-

उदितं प्रियां प्रति सहार्दमिति
न्यदधीयत प्रियतमेन वचः ।
विदितेङ्गिते हि पुर एव जने
समुदीरिताः खलु लगन्ति गिरः ॥ ६९ ॥

कुलकम् ।

दयिताहृतस्य युवभिर्मनसः
परिमूढतामिव गतैः प्रथमम् ।
उदिते ततः सपदि लब्धपदैः
क्षणदाकरेऽनुपदिभिः प्रयये ॥ ७० ॥

अर्थः । अमूं त्वत्प्रियान्द्रुहन्ति याः पूर्वं त्वया सह सेवनादाह्लादय-न्तीति भावः । एतेन विषयद्वेषरूपा अरत्यवस्थोक्ता । अत्र विशेषस्य सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

उदितमिति । प्रियां प्रति प्रियासुहृदिस्थ हृदयस्येदं हार्दमस्य ॥ प्रेमा ना प्रियता हार्दमनेन स्नेह इत्यमरः । तस्येदमित्यण्प्रत्ययः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदयस्य हृदादेशः । सहार्दं सस्नेहम् उत्युदितम् । वदेः कर्मणि क्तः, वचिस्वपीत्यादिना सम्प्रसारणम् । वचो दूतीवाक्यं प्रियतमेन न्यदधीयत विश्वसितम् । दधातेः कर्मणि लङ्, अडन्तरोपसर्गवचनाच्छब्दस्य प्राक् प्रयोगः । हि यस्मात् पुरः पूर्व-मेव विदितेङ्गिते विदितपराभिप्राये जने । इङ्गितं हृद्गतो भावः । तस्मिन् समुदीरिताः गिरः सपदि लगन्ति सज्जन्ति खलु स्वयं प्रिया हृदयवेदित्वात् । स्वबुद्धेः संवादेन दूतीकथितं प्रियाविरहदुःखं विश्व-स्तासेत्यर्थः । अर्थान्तरन्यासः । एषा कलहान्तरिता अतएव मानाख्यो विप्रलम्भः शृङ्गारः, पूर्वानुरागमानाख्याय प्रवासकरुणात्मना विप्रलम्भ-चतुर्थोऽयमित्युक्तम् ॥ ६९ ॥

दयितेति । प्रथमं चन्द्रोदयात् प्राक् परिमूढतां निजमनोऽपहर्तृ-मार्गानभिज्ञतां गतैः ततः पश्चात् क्षणदाकरे चन्द्रे उदिते सति

निपपात सम्भ्रमभृतः श्रवणा-
द्दसितभ्रुवः प्रणदितालिकुलम् ।
दयितावलोकविकसन्नयन-
प्रसरप्रणुन्नमिव वारिरुहम् ॥ ७१ ॥

उपनेतुमुन्नतिमतेव दिवं
कुचयोर्युगेन तरसा कलिताम् ।
रभसोत्थितामुपगतः सहसा
परिरभ्य कश्चन बधूमरुधत् ॥ ७२ ॥

सपदि लब्धपदैः दृष्टचोरपदचिह्नैः दयिताभिर्हृतस्याकृष्टस्यापहृतस्य च मनसोऽनुपदिभिरन्वेष्टृभिरन्विष्यद्भिरिवेत्यर्थः । अतएव गम्योत्प्रेक्षा प्राग-वलम्बितधैर्यत्यागनिमित्ता । अनुपद्यन्वेष्टेति निपातः । अन्वेष्टानुपदी प्रोक्त इति वैजयन्ती । युवभिः प्रयये प्रयातम् । यातेर्भावे लिट् । अतोक्तपदान्वेषणोत्प्रेक्षया यूनां चौर्याद्दिरूपकं गम्यत इत्यलङ्का॰ रेणालङ्कारध्वनिः ॥ ७० ॥

अथ यूनां गृहप्राप्त्यनन्तरं वृत्तान्तं वर्णयति । निपपातेति । संभ्रमभृतः प्रत्युत्थानसंभ्रमिण्याः असितभ्रुवोऽङ्गनायाः प्रणदितालि-कुलङ्कुञ्जदलिपुञ्जम् । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । वारिरुहं श्रवणोत्पलं दयितावलोकेन विकसतो विस्तारङ्गच्छतो नय-नस्य प्रसरेण प्रसारेण प्रणुन्नमिव । पूर्ववर्णत्वम् । निपपात तथा संभ्रान्तमित्यर्थः । अत्र संभ्रमहेतुकस्य कर्णोत्पलपातस्य नयनप्रसार॰ हेतुकत्वमुत्प्रेक्ष्यते । एषा च हृष्टा ॥ ७१ ॥

उपनेतुमिति । सहसोपगतः हठादागतः कश्चन युवा अतएव रभसेनोत्थिताम् अतएवोन्नतिमता कुचयोर्युगेन करणेन दिवमाकाश-मुपनेतुमिवोर्ध्वमुच्चैर्नेतुमिवेति फलोत्प्रेक्षा उत्थाननिमित्तौन्नत्यगुण-निमित्ता । तरसा बलेनाकलितां व्याप्तिमाम्बधूम्प्रियाम्परिरभ्याश्लिष्या॰



रुधत् रुद्धवान् उपवेशितवान् ऊर्ध्वोत्पपातान्निवारितवान् इति

अनुदेहमागतवतः प्रतिमां
परिणायकस्य गुरुमुद्वहता ।
मुकुरेण वेपथुमतोऽतिभरात्
कथमप्यपाति न वधूकरतः ॥ ७३ ॥

श्रवणस्य वक्षसि निमग्नकुच-
द्वितयेन गाढमुपगूढवता ।
दयितेन तत्क्षणचलद्रशना-
कलकिङ्किणीरवमुदासि वधूः ॥ ७४ ॥

चार्थः । रुधेर्लङि द्वारितो वेति विकल्पात् च्लेरङादेशः । एषा
हृष्टा ॥ ७२ ॥

अनुदेहमिति । अनुदेहं देहस्य पश्चात् । अव्ययं विभक्तीत्यादिना पश्चादर्थेऽव्ययीभावः । आगतवतः परिणायकस्य परिणेतुः वोढुरित्यर्थः । नयतेर्ण्वुल्प्रत्ययः । उपसर्गादसमासेऽपीति णत्वम् । गुरुं पुज्याभ्यारवतीञ्च प्रतिमामतिविम्बमुद्वहता पश्चात् स्थितस्यापि तदासिमुख्यादिति भावः । मुकुरेण दर्पणेन कर्त्रा । दर्पणे मुकुरादर्शावित्यमरः । वेपथुमतो नवोढतया भयशृङ्गाराभ्यां कम्पमानात् अति अतिमात्रो भरो यस्य तस्मादतिभारात् प्रतिविम्बगुरुमुकुरवत्त्वादिति भावः । वध्वा नवोढायाः करतः पाणितलात् । पञ्चम्यास्तसिल् । कथमपि नापाति न पतितं महता प्रयत्नेन धारित इत्यर्थः । भावे लुङ् । एषा च मुग्धा । अत्र वधूकरस्य भारासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः गुरुमिति श्लेषोत्थापितेति सङ्करः ॥ ७३ ॥

श्रवणस्येति । श्रवणस्य गाढमुपगूढवता आश्लिष्टवता अतएव वक्षसि निमग्नकुचद्वितयेन दयितेन तत्क्षणे चलन् उच्छलन् रशनायाः कलकिङ्किणीरवो यस्मिन् कर्मणि तद्यथा तथा वधूरङ्गना उदासि उत्क्षिप्ता । अस्यतेः कर्मणि लुङ् । एषा च हृष्टा रोमाञ्चाद्यनुभाववती च । स्वभावालङ्कारः ॥ ७४ ॥

करतुद्धनीवि दयितोपगतौ
गलितं त्वराविरहितासनया ।
क्षणदृष्टहाटकशिलासदृश-
स्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥

पिदधानमन्वगुपगम्य दृशौ
ब्रुवते जनाय वद कोऽयमिति ।
अभिधातुमध्यवससौ न गिरा
पुलकैः प्रियं नववधूर्न्यगदत् ॥ ७६ ॥

उदितोरुसादमतिवेपथुमत्
सुदृशोऽभिभर्तृ विधुरं त्रपया ।

करुद्धेति । दयितोपगतौ प्रियागमने सति अतएव त्वरया विरहितन्त्यक्तमासनं यया तया उत्थितयेत्यर्थः कयाचिदिति शेषः अतएव गलितं स्रस्तम् अतएव करुद्धनीवि करगृहीतबन्धं वसनं क्षणं दृष्टा हाटकशिलासदृशी हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन् कर्मणि यद्यथा तथा । हिरण्यं हेम हाटकमित्यमरः । ववसे आच्छादितम् । वस्तेराच्छादनार्थात् कर्मणि लिट् । ऊरुभित्ति रिवेत्युपमितसमासः । अतोपमयोः संसृष्टिः ॥ ७५ ॥

पिदधानमिति । नववधूर्नवोढा अन्वक् पश्चादुपगम्य दृशौ पिदधानं छादयन्तं प्रियं दृष्टिच्छादकः कः वद इति ब्रुवते पृच्छते जनाय गिरा वाचा अभिधातुन्नाध्यवससौ नोत्सेहे लज्जयेति भावः । अध्यव पूर्वात् स्यतेः कर्त्तरि लिट् । किन्तु पुलकैर्न्यगदत् । अत्र प्रियवाच्यार्थस्य लज्जया असंलक्षितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः, असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यत इति लक्षणात् ॥ ७६ ॥

उदितेति । अभिभर्त्तृ भर्त्तृसमक्षम् । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । उदित उत्पन्न ऊरुसादः ऊर्वोर्निस्पन्दता यस्य तत् अतिवेपथुमत् अतिकम्पवत् । एतेन विशेषणद्वयेन प्रत्युत्थानाविष्ट-

वपुरादरातिशयशंसि पुनः
प्रतिपत्तिमूढमपि बाढमभूत् ॥ ७७ ॥

परिमन्थराभिरलघूरुभरा-
दधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः
प्रणयातिभूमिमगमन् गतिभिः ॥ ७८ ॥

मधुरोन्नतभ्रु ललितञ्च दृशोः
सकरप्रयोगचतुरञ्च वचः ।
प्रकृतिस्थमेव निपुणागमितं
स्फुटनृत्यलीलमभवत् सुतनोः ॥ ७९ ॥

दर्शितौ स्तम्भवेपथू सात्त्विकावुक्तौ । त्रपया विधुरं विक्लवम् । एतेन लज्जासञ्चारिता प्रियवाक्कुण्ठत्वञ्चोक्तम् । एवं प्रतिपत्तिमूढमपि इतिकर्त्तव्यतामूढमपि सुदृशो वपुर्बाढं भृशम् आदरातिशयशंसि सुखरागादिलिङ्गैरादरविशेषव्यञ्जकमभूत् सत्यादरे किमुपचारैरिति भावः ॥ ७७ ॥

परीति । प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्मणि अलघोर्महत ऊरुभरात् परिमन्थराभिरलसाभिः अनुपदं पदे पदे स्खलिताभिरपि गतिभिः प्रणयातिभूमिं प्रेमप्रकर्षमगमन् परं प्रेमास्पदीभूता इत्यर्थः । प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः ॥ ७८ ॥

मधुरेति । मधुरं मनोहरं यथा तथोन्नते उत्क्षिप्ते भ्रुवौ यस्मिन् तन्मधुरोन्नतभ्रु । गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम् । दृशोर्ललितं नयनचेष्टा च सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरञ्च तद्वचश्च सुतनोः स्त्रियाः प्रकृतिस्थमेव स्वभावसिद्धमेव सदपि निपुणेन निपुणाचार्य्येणागमितमभ्यासितम् । अत एव स्फुटं प्रकटितं यन्नृत्यन्तस्य लीलेव

तदयुक्तमङ्ग ! तव विश्वसृजा
न कृतं यदीक्षणसहस्रतयम् ।
प्रकटीकृता जगति येन खलु
स्फुटमिन्द्रताद्य मयि गोत्रभिदा ॥ ८० ॥

न विभावयत्यनिशमक्षिगता-
मपि मां भवानतिसमीपतया ।
हृदयस्थितामपि पुनः परितः
कथमीक्षते बहिरभीष्टतमाम् ॥ ८१ ॥

लीला यस्य तत्तथोक्तमभवदिति निदर्शनालङ्कारः। तया नर्तक्युपमा गम्यते ॥ ७९ ॥

अथ कस्याश्चित्सपत्नीनामग्रहणाङ्कतायाः कान्तोपालम्भं विशेषकेणाह। तदित्यादि। अङ्गेत्यामन्त्रणे। विश्वसृजा विधात्रा तव ईक्षणसहस्रतयं नेत्रसहस्रसमूहः। सङ्ख्याया अवयवे तयप्। न कृतं न सृष्टमिति यत् तदयुक्तं कुतः येन कारणेन मयि विषये स्फुटं प्रत्यक्षमेव गोत्रभिदा नामभेदिना च। गोत्रं नाम्नि कुलेऽप्यद्राविति यादवः। त्वयेति शेषः। अद्य इन्द्रता जगति प्रकटीकृता खलु। अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वमुत्प्रेक्ष्यते ॥ ८० ॥

नेति। अनिशमक्षिगताश्चक्षुःसन्निकृष्टामपि द्वेष्यामिति च गम्यते। द्वेष्ये त्वक्षिगत इत्यमरः। मामतिसमीपतया भवान्न विभावयति। शेषे प्रथम इति प्रथमपुरुषः। इन्द्रियसन्निकृष्टमपि न गृह्यत इति विरोधाभासनाऽर्थोऽपिशब्दः। परमार्थस्तु द्वेष्यत्वादतिसामीप्याच्च अविभावनं न चित्रमिति भावः। अभीष्टतमां पुनर्हृदयस्थितां हृदयानपेताम् अन्तर्हितामिति च गम्यते। अतएव विरोधाभासकोऽपिशब्दः। बहिः पुरतः कथम्भवान् ईक्षते इदन्तु चित्रम् अतिसामीप्यव्यवधानस्यापि दर्शनप्रतिबन्धकत्वादिति भावः। प्रेमास्पदं वस्तु परो-

इति गन्तुमिच्छुमभिधाय पुरः
स्वदृष्टिपातविकसद्वदनाम् ।
स्वकरावलम्बनविमुक्तगल-
त्कलकाञ्चि काञ्चिदरुपात्तरुणः ॥ ८२ ॥

अपयाति सरोषया निरस्ते
कृतकङ्कामिनि चुचुवे मृगाक्ष्या ।
कलयन्नपि सव्यथोऽवतस्थे-
ऽशकुनेन स्खलितः किलेतरोऽपि ॥ ८३ ॥

आलोक्य प्रियतममंशुके विनीवी
मत्तस्थे नमितमुखेन्दु मानवत्या ।

चक्षुष्परोक्षमोन्नते इतरदपरोक्षमपि परोक्षमेवेति तात्पर्यार्थः । विरोधाभासयोः सङ्करः ॥ ८१ ॥

इतीति । इत्यभिधाय पुरो गन्तुमिच्छुं स्वयं दृष्ट्योः पातेन विकसद्वदनां परस्परदृष्टिपातमात्रगतकोपामित्यर्थः । काञ्चिन्नायिकां तरुणो युवा स्वकरावलम्बनं प्रियकरेण ग्रहणं तेन विमुक्ता मुक्तबन्धना अतएव गलन्ती भ्रंशमाना कला मधुरा काञ्ची यस्मिन् कर्मणि तद्यथा तथा अरुपत् रुद्धवान् । रुधादिभ्यः श्नम् । एषा च कलहान्तरिता ॥ ८२ ॥

अपयातीति । सरोषया मृगाक्ष्या निरस्ते कामिनि भर्त्तरि अपयाति निर्याते सति कृतकं कृत्रिमं यथा तथा चुचुवे तन्निर्गमनप्रतिबन्धार्थं च्युतं कृतमित्यर्थः । च्युङ् शब्दे भावे लिट् । इतरोऽपि नायकोऽपि कलयन्नपि कृतकोपमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्ध इव सव्यथः सनिर्वेदं इवावतस्थे स्थितः न गत इत्यर्थः, उभावपि समानानुरागाविति भावः । एषा च कलहान्तरिता ॥ ८३ ॥

आलोक्येति । मानवत्या कोपवत्या स्त्रिया । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये । प्रियतममालोक्य । स्थित्या समान-

तन्नूनं पदमवलोकयाम्बभूवे
मानस्य द्रुतमपयानमास्थितस्य ॥ ८४ ॥
सुदृशः सरसव्यलीकतप्त-
स्तरसा श्लिष्टवतः सयौवनोष्मा ।
कथमप्यभवत् स्मरानलोष्णः
स्तनभारो न नखम्पचः प्रियस्य ॥ ८५ ॥
दधत्युरोजद्वयमुर्वशीतलं
भुवो गतेव स्वयमुर्वशी तलम् ।

कर्ट्कत्वात् क्तानिर्देशः । अंशुके विनीवौ प्रियावलोकनाद्विगलितवस्त्रे सति भाषितपुंस्कत्वात् पुंवद्भावः । स्त्रीकटीवस्त्रबन्धेऽपि नीविः । परिपणेऽपि चेत्यमरः । नमितमुखेन्दु यथा तथा तस्थे स्थितमिति यत् तत्त्वात्मन्मुखावस्थानाद् द्रुतं शीघ्रं प्रियावलोकनक्षण एवेत्यर्थः । अपयानमास्थितस्य प्रयाणकृतस्य मानस्य कोपस्य पदस्पदं चिह्नमवलोकयाम्बभूवे अन्वेषितमित्यर्थः । लज्जानिमित्ताया मुखनतेः अन्वेषणार्थत्वमुत्प्रेक्ष्यते नूनमिति मानगम्योऽप्यस्तमित इति भावः ॥ ८४ ॥

सुदृश इति । सरसमार्द्रं नूतनमिति यावत् । तेन व्यलीकेन प्रियकृतेनापराधेन तप्तः तया यौवनोष्मणा सह वर्तत इति सयौवनोष्मा । किञ्च स्मरानलोष्णः कामाग्निसन्तप्तः एवं त्रिविधाग्नितप्तोऽपि सुदृशः स्तनभारस्तरसा वेगेनातिदाहदशायामेवेत्यर्थः । आश्लिष्टवतः आलिङ्गितवतः प्रियस्य कथमपि कथं वा कुतो हेतोरित्यर्थः । नखं पचति क्लापयतीति नखम्पचः । पचिरत्र तापवाची । मितनखे चेति खश्प्रत्ययः, अरुर्द्विषदजन्तस्य मुमिति मुमागमः । नाभवत् तथोष्मा दीपद्युष्योऽपि नाभूदित्यर्थः । प्रियासङ्गप्रतीकाराः खलु कामिनी सन्तापा इति भावः । तादृगौष्ण्यासम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ८५ ॥

दधतीति । ...

बभौ मुखेनाप्रतिमेन काचन
श्रियाधिका ताम्प्रति मेनका च न ॥ ८६ ॥

इत्यन्नारीर्घटयितुमलङ्कामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ।
आचार्य्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥ ८७ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
प्रदोषवर्णनन्नाम नवमः सर्गः ॥ ९ ॥

---

कुचद्वयं दधती भुवस्तलङ्कृता स्वयं साक्षाद्वंशीव स्थितेत्युत्प्रेक्षा । काचन स्त्री अप्रतिमेन मुखेन बभौ तां प्रति मेनका मेनकाख्याप्सरसश्च श्रिया सौन्दर्य्येणाधिका नेत्यतिशयोक्तिः । तयोर्यमकेन संसृष्टिः । वंशस्थं वृत्तम् ॥ ८६ ॥

इत्यमिति । इत्थमनेन प्रकारेण । इदमस्थमुरिति थमुप्रत्ययः । सपदि शान्तः शमितो मानः कोप एवान्तरायो याभिस्ताः । वा दान्तेत्यादिना शमेर्ण्यन्तात् शान्तेति निपातः । प्रालेयांशोश्चन्द्रस्य रुचयो नारीः कामिभिर्घटयितुम् । मितां ह्रस्वः, पर्य्याप्तिवचनेष्वल-मर्थेष्विति तुमुन्प्रत्ययः । कामं प्रकामं समर्थाः आसन् दूत्य इवेति भावः विलसन्तो मन्मथश्रीविलासा मणितशीत्कारादिमदनातिरेक-विकारा याभिस्ताः ह्रीरेव प्रत्यूहो विघ्नस्तस्य प्रशमे निवारणे कुशलाः शेरते आभिरिति शीधवो मदिराः । शीङो धुगन्त्यौ इत्यादिको धुक्-प्रत्ययः । आसां रतिषु आचार्य्यत्वमुपदेशश्चक्रुः । नर्मसख्य इवेति भावः । अत्र प्रथमार्द्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशे-षणसाम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिर्द्वितीयार्द्धे तु शीधुष्वारो-पितस्याचार्य्यत्वस्य प्रकृतोपयोगात्परिणामः तयोः सापेक्षत्वात्सङ्करः तेन च दूतीनर्मसख्युपमाध्वनिः । उक्तरीत्या मधुपानरतोत्सववर्णनायाम्

# दशमः सर्गः।

सज्जितानि सुरभीण्यथ यूना-
मुल्लसन्नयनवारिरुहाणि।
आययुः सुघटितानि सुरायाः
पात्रतां प्रियतमावदनानि ॥ १ ॥

स्वायमेव प्रस्तावः। मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेदिति लक्षणात् ॥ ८७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये नवमः सर्गः ॥९॥

---

आचार्य्यं त्वं रतिषु शोधयत्वक्तुरित्युक्तं तत्प्रपञ्चनायास्मिन् सर्गे मधुपानलीलावर्णयति। सज्जितानीति। अथ पानगोष्ठीप्रस्तावानन्तरं सज्जितानि यावकाञ्जनादिना संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयनानि वारिरुहाणीव अन्यत्र नयनानीव वारिरुहाणि वासनार्थं क्षिप्तानि नान्युल्लसन्ति येषु तानि तथोक्तानि सुघटितानि सुष्ठु सुखेर्योजितानि शोभनसंस्थानवत्तया निर्मितानि वा प्रियतमावदनानि यूनां कामिनां सुरायाः पात्रतां पानभाजनतां ययुः प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां मुखसुरामेव पपुरिति भावः। अत्र वदनेष्वारोप्यमाणायाः पात्रताया स्तादात्म्येन तेषां पानसाधनतापादनेन क्रतवदनोपयोगात्परिणामालङ्कारः। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात्। तेन स्व भावसङ्कीर्णेनोपमा व्यज्यते। अस्मिन् सर्गे [illegible] वृत्तम्। [illegible] गुरुयुग्मम् ॥१॥

सोपचारमुपशान्तविचारं
सानुतर्षमनुतर्षपदेन ।
तं मुहूर्त्तमथ मूर्त्तमपीप्यन्
प्रेम मानमवधूय वधूः स्वाः ॥ २ ॥

क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥ ३ ॥

सोपचारमिति । अथ पानीकरणानन्तरं ते युवानः सोपचारं सप्रार्थनम् उपशान्तविचारं निवृत्तशङ्कं विवादेति पाठे मानमवधूयेति पुनरुक्तिः चारश्चारमित्यनुप्रासक्रमभङ्गश्च स्यात् । सानुतर्षं सतृष्णञ्च यथा तथा अनुतर्ष्यत्यनेनेत्यनुतर्षो मद्यम् । मद्येऽनुतर्षन्तृष्णाने पात्रे तृष्णाभिलाषयोरित्युभयत्रापि विश्वः । तस्य पदेन छलेन मूर्त्तं मूर्त्तिमत् स्वाः स्वीया वधूर्मुहूर्त्तं अपमानं कोपमवधूयापीप्यन् पाययन्ति स्म । पिबतेर्णौ चङि लोपः पिबतेरीच्चाभ्यासस्येति धात्वाकारलोपः ईकारोऽभ्यासस्य । न पादमीत्यादिना निगरणार्थत्वमिति परस्मैपद-निषेधेऽपि णिचश्चेत्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् । गति-बुद्धीत्यादिना वधूरित्यणिकर्त्तुः कर्मत्वम् । अनुतर्षपदेनेत्यनुतर्षापह्नवेन मूर्त्तप्रेमत्वोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापह्नवोत्प्रेक्षा ॥२॥

क्रान्तेति । क्रान्तं संक्रान्तं कान्तवदनप्रतिबिम्बं यस्मिन्तस्मिन्ने-त्रनिर्वृतिकर इत्यर्थः । भग्नाः क्षिप्ताः बालसहकाराश्चूतविशेषप-ल्लवाः । आम्रश्चूतो रसालस्य सहकारोऽतिसौरभ इत्यमरः । तैः सुगन्धौ सुरभिणि घ्राणतर्पण इत्यर्थः । तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावः । स्वादुनि मधुरे रसनाकर्षिणीत्यर्थः । प्रणदितालिनि गुञ्जन्मधुकरे श्रुतिसुख इत्यर्थः । शीते स्पर्शसुखे इत्यर्थः । एवम्पञ्चविषयसमृद्धौ मधुनि मद्ये इन्द्रियवर्गश्चक्षुरादि-

कापिशायनसुगन्धि विघूर्ण-
न्नुन्मदोऽधिशयितुं समशेत ।
फुल्लदृष्टि वदनं प्रमदाना-
मन्यचारु चषकञ्च षडङ्घ्रिः ॥ ४ ॥

बिम्बितं सुतपरिस्रुति जानन्
भाजने जलजमित्यबलायाः ।
घ्रातुमप्यपतदिति भ्रमरः स्म
भ्रान्तिभाजि भवति क्व विवेकः ॥ ५ ॥

दत्तमिष्टतमया मधु पत्यु-

बहुकं निर्विचार निर्वृतमभूत् । अत्र रूपरसादिपदार्थानां मधुवि-
शेषणमावेव निर्वृतिहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

कापिशायनेति । उन्मद उद्रिक्तमदः अत एव विघूर्णन् भ्रमन्
षडङ्घ्रिः षट्पदः कापिशायनेन सुगन्धि सुरभि । कपिशं कल्याणदथा
मद्यं मैरेयं कापिशायनमिति वैजयन्ती । फुल्लदृष्टि विकसितनेत्रं
प्रमदानां वनितानां वदनम् अधिवासनार्थेन अन्येनपचारु चषकमपान-
पात्रञ्च । चषकोऽस्त्री पानपात्रमित्यमरः । अधिशयितुमधिष्ठातुं
समशेत ददंशुजानीदन्वजानामि वेत्युभयत्रोभायें दोलायमानवृत्तिश्च
आसीदित्यर्थः । अत्र प्रकृतयोरेव वदनचषकयोः षट्पदाभिलाषास्पद-
त्वरूपैकधर्मयोगादौपम्यस्य गम्यतायान्तुल्ययोगितामेदः ॥ ४ ॥

बिम्बितमिति । सुता परिस्रुद्वारुणी यस्मिंस्तस्मिन् । परि-
स्रुद्वारुण्यामजेत्यमरः । भाजने पानपात्रे बिम्बितम्प्रतिबिम्बितम् ।
अबलायाः अपि जलजमिति जानन् साहृश्यात्तथा भ्राम्यन्नित्यर्थः ।
भ्रमरः घ्रातुं पतति स्म । तथाहि, भ्रान्तिभ्रंमश्च विपरीतज्ञानञ्च
तद्भाजि विवेको विचारः क्व भवति न कापीत्यर्थः । अत्र भ्रमरस्याब-
चिजलजभ्रान्त्वेर्भ्रान्तिमदलङ्कारः तत्समर्थकत्वात् सामान्यातिशयो-
क्त्यापितोऽर्थान्तरन्यासः । तेन मुखाम्बुजसाम्येन सङ्करः ॥ ५ ॥

बाढमाप पिबतो रसवत्ताम्
पत्युः सुवर्णमुकुटांशुभिरासी-
च्चेतनाविरहितैरपि पीतम् ॥ ६ ॥

स्वादनेन सुतनोरविचारा-
दोष्ठतः समचरिष्ट रसोऽत्र ।
अन्यमन्यदिव यन्मधु यूनः
स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥

बिभ्रतौ मधुरतामतिमात्रं
रागिभिर्युगपदेव पपाते ।

बाढमिति । इष्टतमया दत्तं मधु मद्यं कर्म पिबतः पत्युः रसवत्तां प्रेयसीकरस्पर्शादतिस्वादुतामाप । अतिशायने मतुप् । बाढं ध्रुवमित्युत्प्रेक्षा । कुतः यद्यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपि मधुनि प्रसृतैरिति भावः । पीतं पीतवर्णमीतञ्चासीत् । अत्र पीतमिति श्लेषमूलातिशयोक्त्या पीतिम्नः क्रियाभेदाध्यवसाये-नाचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्त्वो-त्प्रेक्षा । तथा च यदचेतनानामपि पेयन्तच्चेतनानां किं वक्तव्यमित्य-र्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥ ६ ॥

स्वादनेनेति । सुतनोः कन्याः स्वादनेनास्वादनेन ओष्ठतः ओष्ठात् रसः स्वादोऽत्र मधुनि अविचारादसंशयात् समचरिष्ट सङ्क्रान्तः । सम्पूर्वाच्चरतेर्लुङ् । समस्तृतीयायुक्तादित्यात्मनेपदम् । कुतः यद्य-स्मात्तदेव पूर्वभुक्तमेव मधु अन्यदिवापूर्वमिष्टं प्रियं स्वादं रसं यूनोऽत-निष्ट । तनोतेर्लुङि तङ् । ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावा-दनन्तरन्यायात्तद्रससंक्रमणोत्प्रेक्षा सा चाविचारादिति व्यञ्जकप्रयोगा-द्वाच्या ॥ ७ ॥

बिभ्रताविति । रागिभिः कामिभिरतिमात्रं मधुरतां स्वादुतां प्रियत्वं वा बिभ्रतौ । मधुरं रसवत् स्वादु प्रियेषु मधुरोऽन्यवदिति

आननैर्मधुरसो विकसद्भि-
र्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥
पीतवत्यभिमते मधुतुल्य-
स्वादमोष्ठरुचकं विदद्भौ ।
लभ्यते स्म परिरक्ततयात्मा
यावकेन वियतापि युवत्याः ॥ ९ ॥

विश्वः । तस्य भावस्तां विकसद्भिर्विकसन्तीभिश्च विकसद्भिः तृष्णया विजृम्भमाणैः । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकैकशेषः । आननैः मधुरसो मद्यरसः नासिकाभिर्घ्राणैरसितोत्पलगन्धस्य युगपदेव पपाते पीतौ । भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत् स्वेन्द्रियसम्बन्धात् युगपद्गृह्येतावित्यर्थः । अत्र मनस आशुसञ्चाराद्यौगपद्याभिमानः । शतपत्रशरव्यतिभेदवदित्यणुपरिमाणवादिनः । वास्तवमेवं यौगपद्यमिति मध्यमपरिमाणवादिनः । सार्वपर्यीनास्तु कवय इत्यलमतिपल्लवेन । अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात्तुल्ययोगिताभेदः ॥ ८ ॥

पीतवतीति । विदद्भौ विदंष्टुमिच्छौ उपदंशेच्छावतीत्यर्थः । दंशेः सन्नन्तादुप्रत्ययः । अभिमते वल्लभे मधुना तुल्यस्वादं तुल्यरसत्वात्तुल्यत्वञ्च हृद्यतामात्रेण नान्यथा विलक्षणरसस्य अनुपदंशत्वात् ओष्ठो रुचकमाभरणमिवेत्युपमितसमासः । रचनायायान्तु रुचकमश्वाभरणमाल्ययोरिति विश्वः । तमोष्ठरुचकम् ओष्ठमोष्ठं पीतवति सति वियता अपगच्छतापि । इणो लटः शत्रादेशे इणो यणिति यणादेशः । युवत्याः युवतेः । ङितीति ह्रस्वश्चेति वा नदीत्वादडागमः । यावकेनालक्तकेन परिरक्ततया दन्तनिष्पीडनक्षतेन रागेण हेतुना आत्मा स्वरूपं लभ्यते स्म लब्धः पुनरुद्भूतमित्यर्थः । अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भावनिमित्ता विरोधगर्भा पुनरुद्भवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या च ॥ ९ ॥

कस्यचित्समदनम्मदनीय-
प्रेयसीवदनपानपरस्य ।
स्वादितः सकृदिवासव एव
प्रत्युत व्रणविदंशपदेऽभूत् ॥ १० ॥

पीतशीधुमधुरैर्मिथुनाना-
माननैः परिहृतं चषकान्तः ।
व्रीडया रुददिवालिविरावै-
र्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥

प्रातिभं त्रिसरकेण गतानां

कस्यचिदिति । समदनं यथा तथा मदयतीति मदनीयं मद-कारि । कृत्यल्युटो बहुलमिति कर्त्तर्यनीयर्प्रत्ययः । तस्य प्रेयसी-वदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात् प्रियामुखपानासक्तस्य कस्यचित् कामिनः सकृदिव स्वादितः अवाङ्कल्येन पीतः । इवशब्दो वाक्यालङ्कारे । आसव एव प्रत्युत वैपरीत्ये इति गणव्याख्याने । व्रणं विदंशपदे उपदंशस्थानेऽभूत् । अन्योऽपि मधुपानलोलुपाना-मधरस्वाद उपदंशः अस्य त्वधरपानैकपरस्य मद्येनोपदंश इत्यर्थः । अधरपानस्योपदंशत्वसम्बन्धेऽप्यसम्बन्धः आसवस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात् संसृष्टिः ॥ १० ॥

पीतेति । पीतशीधूनि पीतमद्यानि । अतएव मधुराणि मनो-ज्ञानि तैर्मिथुनानां स्त्रीपुंसानामाननैः चषकान्तः पानपात्राभ्यन्तरे । चषकोऽस्त्री पानपात्रमित्यमरः । परिहृतं त्यक्तं नीलनीरजं वासनार्थं निःक्षिप्तं नीलोत्पलं व्रीडया परिहारलज्जया अलिविरावैः रुददि-वाधस्तादगच्छत् । अत्र मद्यापगमनिमित्तस्य नीलनीरजाधोगमनस्य रोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा । सा चालिविरावैरिति व्यधि-करणकारिपरिणामोज्जीवितेति सङ्करः ॥ ११ ॥

अथ मदानुभावान्वर्णयति । प्रातिभमित्यादि । तयायां सर-

वक्रवाक्यरचनारमणीयः ।
गूढ़सूचितरहस्यसहासः
सुभ्रुवां प्रववृते परिहासः ॥ १२ ॥
हावहारि हसितं वचनाना-
कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः
कामिनेव तरुणेन मदेन ॥ १३ ॥

काणां समाहारस्त्रिसरकं त्रिवारमधुपानम् । सरकं शीधुपात्रे स्या-
च्छीधुपाने च शीधुनीति विश्वः । तद्धितार्थेत्यादिना समाहारे द्विगुः,
पात्रादित्वान्नपुंसकत्वम् । तेन त्रिसरकेण त्रिपानं मदातिभूमिरिति
पानप्रसिद्धिः प्रतिभेव प्रातिभम्प्रतिभाविशेषः । प्रज्ञादित्वात् स्वार्थे-
ऽण् प्रत्ययः । यद्वा ज्ञानवीजभूतः संस्कारविशेषः प्रतिभा इति काव्य-
प्रकाशकारः । तत्र भवं प्रातिभं ज्ञानप्रभावविशेष एव । भवार्थेऽण्-
प्रत्ययः । तत्प्रातिभङ्गतानां त्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कार-
प्रभावितप्रगल्भमतीनामित्यर्थः । सुभ्रुवां स्त्रीणां वक्रवाक्यरचना-
रमणीयः प्रतिकूलवाक्यप्रयोगरम्यः । गूढ़ानि पूर्वं लज्जया संवृतानि
सूचितानि सम्प्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टा-
प्रजल्पितानि यस्मिन् स गूढ़सूचितरहस्यः स चासौ सहासश्चेति
विशेषणसमासः वैवक्षिकविशेषणविशेष्यभावात् । हासो हास्यमित्य-
मरः । परिहासो नर्मकेलिरूपहासक्रीड़ेति यावत् । द्रवकेलिपरी-
हासा इत्यमरः । प्रववृते प्रवृत्तः इतः परस्मादसञ्चारी ॥ १२ ॥

हावेति । तरुणेनोत्कटेन यूना च मदेन कामिनेव ऋजो-
र्मुग्धाया अपि वध्वाः किमुत प्रौढ़ानामिति भावः । हावहारि
विलासमनोहरं हसितं हासः वचनानां कौशलं प्रागल्भ्यं दृशि
विकारविशेषाः विलासविशेषाश्चक्रिरे कृतानि । पुंसेव मौग्ध्यन्त्याज-
यित्वा मौग्ध्यं वीतेत्यर्थः । अत्र हसितकौशलविकाराणां यौगपद्योक्त्या

अप्रसन्नमपराद्धरि पत्यौ
कोपदीप्तमुररीकृतधैर्य्यम् ।
क्षालितन्नु शमितन्नु वधूना-
न्द्रावितन्नु हृदयम्मधुवारैः ॥ १४ ॥
सन्तमेव चिरमप्रकृतत्वा-
दप्रकाशितमदिद्युतदङ्गे ।
विभ्रमम्मधुमदः प्रमदाना-
न्धातुलीनमुपसर्ग इवार्थम् ॥ १५ ॥

समुच्चयः । गुणक्रियायौगपद्यं समुच्चय इति लक्षणम् । तस्यौपम्य-योगेन सङ्करः तेन ऋजोरपि इत्यत्र किमुत प्रौढानामित्यर्थापत्ति-र्व्यज्यते ॥ १३ ॥

अप्रसन्नमिति । अपराद्धरि आगस्कारिणि । राधेस्तृच्प्रत्ययः । पत्यौ विषये अप्रसन्नं कलुषं क्षुभितमित्यर्थः । कोपदीप्तं कोपेन ज्वलि-तम् उररीकृतधैर्य्यम् अङ्गीकृतकाठिन्यम् । उरीकृतमुररीकृतमित्यमरः । ऊर्यादिच्विडाचश्चेति गतित्वात् कुगतिप्रादय इति समासः । वधूनां हृदयं मधुवारैः मद्यपर्य्यायैः । मधुवारा मधुक्रमा इत्यमरः । क्षालितं धौतं नु । शमितं निर्वापितं नु । द्रावितं द्रवीकृतं नु । अन्यथा कथमस्मादप्रसन्नतादीप्तताकठिनतानां हठान्निवृत्तिरिति भावः । अत्र क्षालितत्वादीनामेकत्वाविरोधात् सादृश्याच्च न संशयालङ्कारः । सति सादृश्ये विरुद्धानेककोटिगोचरत्वात्तस्य किन्त्वप्रसन्नत्वादिनिरासनिमि-त्तकं क्षालितत्वाद्युत्प्रेक्षात्रयं नुशब्दात्तदुक्तेः तच्चाप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनुद्देशिभिर्यथासङ्ख्येनान्वयमपेक्षत इति यथासङ्ख्या-लङ्कारेण सङ्कीर्य्यते ॥ १४ ॥

सन्तमिति । मधुमदः प्रमदानामङ्गे वपुषि अन्यत्र यस्मात् प्रत्य-यविधिरित्युक्तलक्षणे प्रकृत्याख्ये शब्दरूपे चिरं सर्वदा सन्तमेव एकत्र स्वभावात् अन्यत्र अनेकार्थत्वात्...मिति भावः । किन्त्वप्रकृतत्वा-

सावशेषपदमुक्तमुपेक्षा
स्रस्तमाल्यवसनाभरणेषु।
गन्तुमुत्थितमकारणतः स्म
द्योतयन्ति मदविभ्रममासाम्॥ १६॥

मद्यमन्दविगलत्त्रपमौष-
च्चक्षुरुन्मिषितपक्ष्म दधत्या।
वीक्ष्यते स्म शनकैर्नववध्वा
कामिनो मुखमधोमुखयैव॥ १७॥

इप्रस्तुतत्वात् अप्रसक्तत्वादिति भावः। अप्रकाशितमव्यञ्जितं विभ्रमं विलासमध्यातौ भूवादिके लीनं गूढम् अर्थमभिधेयम् उपसर्गः प्रादिरिवादिद्युतत् द्योतयति स्म। द्युतेर्णौ चङ्युपधाह्रस्वः। द्युतिस्वाप्योः सम्प्रसारणमिति अभ्यासस्य सम्प्रसारणमिकारः। उपसर्गस्य धातुलीनार्थद्योतकत्वमादानसन्दानादावनुसन्धेयम् उपमालङ्कारः॥ १५॥

सावशेषमिति। सावशेषाण्यर्द्धोक्तानि पदानि यस्मिन् तदुक्तमुक्तिर्वाक्यं स्रस्तेषु माल्यवसनाभरणेषु उपेक्षा अनादरः अकारणतोऽकस्मादेव गन्तुमुत्थितमुत्थानञ्च आसां स्त्रीणां मदविभ्रमं मदविकारं द्योतयति स्म। एतैरनुभावैरासां मदसञ्चारो ज्ञात इत्यर्थः। अत्रार्द्धोक्तादीनां खलेकपोतिकया मदद्योतने प्रवृत्तत्वात् पराख्यो द्वितीयसमुच्चयः। खलेकपोतन्यायेन बहूनां कार्य्यसाधने। कारणानां समुद्योगः स द्वितीयः समुच्चय इति लक्षणात्॥ १६॥

मद्येति। मद्येन मद्यपानेन मन्दमल्पं विगलन्ती त्रपा यस्य तत्। अतएवेषदुन्मिषितानि पक्ष्माणि लोमानि यस्य तच्चक्षुर्दधत्या नयवध्वा नवोढया कामिनः प्रियस्य मुखमधोमुखयैव नमितवदनयैव। स्वाङ्गाच्चोपसर्जनादिति विकल्पादनीकारः। शनकैरसंभ्रमेण वीक्ष्यते स्म तिर्य्यगीक्षितमित्यर्थः। अत्रापि मदमानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः। समुद्यद्यौवना मुग्धा लज्जाविजितमन्मथा॥१७

या कथञ्चन सखीवचनेन
प्रागभिप्रियतमम्प्रजगल्भे ।
व्रीड़जाड्यमभजन्मधुपा सा
स्वाम्मदात् प्रकृतिमेति हि सर्वः ॥ १८ ॥

छादितः कथमपि त्रपयान्त-
र्यः प्रियम्प्रति चिराय रमण्याः ।
वारुणीमदविशङ्कमथावि-
श्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥

आगतानगणितप्रतियातान्
वल्लभानभिसिसारयिषूणाम् ।

येति । या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राङ्मदात् पूर्वम् अभिप्रियतमं प्रियतमसमक्षम् । आभिमुख्येऽव्ययीभावः । प्रजगल्भे प्रगल्भते स्म । सा स्त्री मधु पिबतीति मधुपा । आतोऽनुपसर्गे कः । व्रीड़ं जाड्यं मौग्ध्यमभजत् विहायागन्तुकं धर्मं स्वभावमभजन्मदेनेत्यर्थः । तथाहि, सर्वो जनो मदाद्धेतोः स्वां स्वकीयां प्रकृतिमेति स्वभावं गच्छति स्वाभाविकधर्मप्रकाशनं मदधर्मः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

छादित इति । रमण्या यः प्रियम्प्रति रागो विषयाभिलाषः चिराय त्रपया व्रीड़यान्तश्छादितः संवृतः असावयमेव रागोऽथास्मिन्नवसरे वारुणीमदविशङ्कं मद्यमदेन निःशङ्कञ्चक्षुषो नेत्रादाविरभवदिवाविर्भूतः किम् । अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतो रागः स एव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाटश्चक्षुर्द्वारा वहिरुद्भिन्न इत्युत्प्रेक्ष्यते । आविर्भुवोर्व्यवधानं कविख्यातत्वात् ॥ १९ ॥

आगतानिति । आगतान् स्वयमागतान् तथाप्यगणितांश्च ते

प्रापि चेतसि स विप्रतिसारे
सुभ्रुवामवसरः सरकेण ॥ २० ॥
मा पुनस्तमभिसीसरमाग-
स्कारिणं मदविमोहितचित्ता।
योषिदित्यभिललाष न हाला-
न्दुस्त्यजः खलु सुखादपि मानः ॥ २१ ॥
स्त्रीविमोहमहरद्दयिताना-

प्रतियातास्वेति। स्नातानुलिप्त इतिवत् पूर्वकाले समासः। तान्-
स्तथाभानभिसिसारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभि-
सर्त्तुमिच्छूनाम्। अभिसारयतेः स्वार्थण्यन्तात् सन्नन्तादुप्रत्ययः।
सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्य्यं कृतमिति
पश्चात्तापयुक्ते सति। पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपीत्यमरः।
सरकेण मधुना मधुपानेन वा। सरकं शीधुपाने स्याच्छीधुपाने च
शीधुनीति विश्वः। अवसरः प्रापि प्राप्तः स्वयङ्गमनसौकर्याय शीधु-
पानञ्चक्रुरित्यर्थः। अत्राभिसारणस्य पश्चात्तापकरणकस्य मदयोगात्
सौकर्य्योक्तेः समाध्यलङ्कारः। समाधिः सुकरं कार्य्यं कारणान्तर-
योगत इति काव्यप्रकाशे ॥ २० ॥

मा पुनरिति। मदेन विमोहितचित्ता भ्रमितचित्ता सती अह-
मिति शेषः। आगस्कारिणमपराधकृतम्। अतः कस्कादित्वादिना
विसर्जनीयस्य सत्वम्। तं पुनर्भूयो माभिसीसरं नाभिसारयामि।
सरतेः स्वार्थे णौ चङ्युपधाया ह्रस्वः, दीर्घो लघोरित्यभ्यासस्य दीर्घः।
इति इत्यालोच्येत्यर्थः। गम्यमानार्थत्वादप्रयोगः। अन्यथा पौन-
रुक्त्यमित्यालङ्कारिकाः। योषित्काचित् स्त्री हालां सुराम्। सुरा
हलिप्रिया हालेत्यमरः। नाभिललाष। तथाहि, सुखादपि मानो
दुस्त्यजः खलु अतोऽल्पकारणादधिकार्थहानिरिति नाशङ्कनीयमित्य-
र्थान्तरन्यासः ॥ २१ ॥

मन्तिकं रतिसुखाय निनाय।
सप्रसादमिव सेवितमासीत्
सद्य एव फलदम्मधु तासाम्॥ २२॥
दत्तमात्तमदनन्दयितेन
व्याप्तमातिशयिकेन रसेन।
सस्वदे मुखसुरम्प्रमदाभ्यो
नाम रूढमपि च व्युदपादि॥ २३॥

ह्रीति। सप्रसादं मनःप्रसादपूर्वकं ममेदं श्रेयस्करमिति भावनापूर्वकमित्यर्थः। अन्यथा फलोदय एव न स्यात्। दैवज्ञे भेषजे गुराविति वचनादिति भावः। सेवितमुपभुक्तमिति हेतोर्मधु तासां सद्य एव फलदमासीत्। कुतः ह्रीविमोहं व्रीड़ाजाड्यम् अहरत् रतिसुखाय सुरतसुखाय दयितानामन्तिकं निनाय। अत्र ह्रीहरणान्तिकनयनवाक्याभ्यां फलदानवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकञ्चाव्यलिङ्गमलङ्कारः॥ २२॥

दत्तमिति। आत्तमदनमाहितमदनं यथा तथा दयितेन दत्तम् अतएवातिशयिकेनातिशयप्रचुरेण। विनयादिभ्यष्ठक्। रसेन स्वादेन व्याप्तं स्वादुतरमित्यर्थः। मुखस्य सुरा मुखसुरं गण्डूषमद्यम्। विभाषा सेनासुराच्छायाशालानिशानामिति नपुंसकत्वम्। प्रकृष्टो मदो यासां ताभ्यः प्रमदाभ्यः स्त्रीभ्यः। रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञा। सस्वदे रुरुचे प्रीतिकरमभूदित्यर्थः। कर्त्तरि लिट्। अतएव तदेव तासां मदकरञ्चासीदित्याह। नामेति। रूढं प्रागश्वकर्णादिवदव्युत्पन्नं नामापि प्रमदेति नामधेयञ्च व्युदपादि व्युत्पन्नं जातम्। यथा प्रकृष्टमदयोगात् प्रमदेत्यन्वर्थनामत्वं भवेत् तथा तास्तेनामाद्यन्नित्यर्थः। पद्यतेरण्यन्तात् कर्त्तरि लुङ्, चिण् ते पद इति चिण्प्रत्यये चिणो लुक्। प्रमदाभिरिति पाठे सस्वदे स्वदयाञ्चक्रे इत्यर्थः। स्वादनमथनं भक्षणमाहारो भोजनं स्वदनमिति हलायुधे। स्वदि-

लब्धसौरभगुणो मदिराणा-
मङ्गनास्यचषकस्य च गन्धः ।
मोदितालिरितरेतरयोगा-
दन्यतामभजतातिशयं नु ॥ २४ ॥

मानभङ्गपटुना सुरतेच्छां
तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयतान्त-
र्योषितः प्रणयिनेव मदेन ॥ २५ ॥

पानधौतनवयावकरागं
सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन
स्वङ्किलाधरमुपालि ररञ्जुः ॥ २६ ॥

स्याद्योरेकार्थत्वाभिधानात् कर्मणि लिट् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात् काव्यलिङ्गम् ॥ २२ ॥

लब्धेति । लब्धसौरभगुणो मेलनात् प्राप्तसौरभोत्कर्षः अतएव मोदितालिः आनन्दितभृङ्गः मदिराणां मद्यानाम् अङ्गनास्येनेव चषकस्य च गन्धो गन्धगुणः इतरेतरस्य योगान्मिश्रणादन्यतामपूर्वतामतिशयं नु ततैवोत्कर्षं वा अभजत । यक्षकर्दमादौ हृतात्तकुङ्कुमादौ चोभयथा दर्शनादयं संशय इति भावः । अतएव संशयालङ्कारः ॥ २४ ॥

मानेति । मानभङ्गपटुना कोपप्रशमनसमर्थेन सुरतेच्छां तन्वता मदनोद्दीपकेन दृशि रागमारुण्यं प्रीतिञ्च प्रथयता प्रकाशयता अन्तरन्तःकरणम्भावयता रञ्जयता मदेन प्रणयिनेव योषितः स्त्रियो लेभिरे प्राप्ताः । रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥ २५ ॥

पानेति । उपालि आल्याः समीपे । समीपार्थेऽव्ययीभावः । आली सखी वयस्या चेत्यमरः । अतएव निभृतचुम्बनदक्षाः गूढचुम्बन-

अर्पितं रसितवत्यपि नाम-
ग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती
वीक्ष्य मद्यमितरा तु ममाद ॥ २७ ॥

अन्ययान्यवनितागतचित्तं
चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे
निर्वृतिर्हि मनसो मदहेतुः ॥ २८ ॥

चतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरेषु यो रागरक्तस्ताम्बूलरागद्रवस्तेन ररञ्जुः किल । अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः । किलेत्यपरमार्थे तेन पान-धौतरागेषु स्वाधरेषु प्रेयोऽधररागसंक्रमणनाटितकेन सखीसमक्षमेव प्रियांश्चुम्बनङ्कारयामासुरित्यर्थः । अत्रागन्तुना रञ्जनेन सहजचुम्बन-निगूहनान्मीलनालङ्कारभेदः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् । २६ ॥

अर्पितमिति । दयितेनान्ययुवतेः सपत्न्याः नामग्राहं नाम गृहीत्वा । नाम्न्यादिशिग्रहोरिति णमुल्प्रत्ययः । अर्पितन्दत्तं मद्यं रसितवती आस्वादितवत्यपि । रसतेरास्वादनार्थात् क्तवतु उगितश्चेति ङीप् । काचिदिति शेषः । मदमुज्झति स्म न ममा-देत्यर्थः । इतरा तु सपत्नी तु मद्यमपिबन्त्यपि वीक्ष्य दृष्ट्वैव ममाद मत्ता । मनोनिर्वृतिरेव मदहेतुरिति भावः । अत्र पूर्वार्द्धे रसित-वत्यपि न ममादेति विशेषोक्तिः, उत्तरार्द्धे त्वपिबन्त्यपि ममादेति विभावना । कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावना । तत्-सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते ॥ तयोः सङ्करः ॥ २७ ॥

अन्ययेति । चित्तनाथम्भर्त्तारमन्यवनितागतचित्तं सपत्नीसंक्रा-न्तचेतसमभिशङ्कितवत्या तर्कितवत्या अन्यया कयाचित् स्त्रिया

कोपवत्यनुनयानगृहीत्वा
प्रागथो मधुमदाहितमोहा ।
कोपितं विरहखेदितचित्ता
कान्तमेव कलयन्त्यनुनिन्ये ॥ २९ ॥

कुर्वता मुकुलिताक्षियुगाना-
मङ्गसादमवसादितवाचाम् ।
ईर्ष्ययेव हरता ह्रियमासां
तद्गुणः स्वयमकारि मदेन ॥ ३० ॥

गण्डभित्तिषु पुरा सदृशीषु
व्याञ्जि नाञ्चितदृशाम्प्रतिमेन्दुः ।

पीतभूरिसुरयापि न मेदे न मत्तम् । माद्यतेर्भावे लिट् । तथाहि, मनसो निर्वृतिर्मदहेतुर्हि । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । एषा नवोढा भीरुश्च । अन्यथा साशङ्कायाः पानाघटनादिति ॥२८॥

कोपवतीति । प्राक् प्रथमं कोपवती सरोषा अतएवानुनयान् प्रियप्रार्थनान्यगृहीत्वा अनादृत्य । अथो सम्प्रति विरहखेदितचित्ता पश्चात्तापतप्ता काचिन्मधुमदेनाहितमोहा कृतचित्तविभ्रमा सती कान्तमेव कोपितमात्मना रोषितं कलयन्ती जानती अनुनिन्ये । सापराधाहं क्षमस्वेति प्रार्थितवती मत्तेषु किन्न सम्भावितमिति भावः । एषा कलहान्तरिता ॥ २९ ॥

कुर्वतेति । मुकुलिताक्षियुगानाम् अवसादितवाचाङ्कुण्ठितगिरामासां स्त्रीणामङ्गसादमङ्गसादरूपशरीरनिश्चेष्टतां कुर्वता ह्रियं हरता मदेन ईर्ष्ययेवेत्युत्प्रेक्षा । तस्याः ह्रियो गुणस्तद्गुणः अक्षिनिमीलनवाक्सादाङ्गसादरूपः स्वयमकारि कृतः ह्रीमदयोस्तुल्यानुभावकत्वादिति भावः ॥ ३० ॥

गण्डेति । प्रतिमेन्दुः प्रतिबिम्बचन्द्रः सदृशीषु स्वसमानवर्णासु अञ्चितदृशां सुदृशां गण्डभित्तिषु पुरा सुरापानात् पूर्वं न व्याञ्जि

पानपाटलितकान्तिषु पश्चा-
ल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ २१ ॥

उद्धतैरिव परस्परसङ्गा-
दीरितान्युभयतः कुचकुम्भैः।
योषितामतिमदेन जुघूर्णु-
र्विभ्रमातिशयपूंषि वपूंषि ॥ २२ ॥

चारुता वपुरभूषयदासा-
मासनूननवयौवनयोगः।

नाभेदि। तदेकतापत्त्या तद्विविक्ततया न गृह्यते इत्यर्थः। अत एव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्। विपूर्वाद्भिदेः कर्मणि लुङ्, आडजादीनामित्याडागमः। पश्चात्पानानन्तरम् पानेन पानमदेन पाटलिता पाटलीकृता कान्तिर्यासां तासु गण्डभित्तिषु लोध्रचूर्णस्य लोध्रपरागस्य तिलकश्चित्रकम्। तमालपत्रतिलकचित्रकाणि विशेषकाः। द्वितीयञ्च तुरीयञ्च न स्त्रियामित्यमरः। तस्याकृतिरिवाकृतिर्यस्य स आसीत्। वैवर्ण्याद्विविक्त एवासीदित्यर्थः। तिलकाकृतिरिति निदर्शना पूर्वोक्तसामान्यसंसृष्टा ॥ २१ ॥

उद्धतैरिति। उद्धतैः दृप्तैरिव कुचकुम्भैः परस्परसङ्गादन्योऽन्यसङ्घर्षादुभयत ईरितान्याकृष्टानि तथा विभ्रमातिशयं विलासविशेषं पुष्णन्ति तानि। नपुंसकस्य झलच इति नुमागमः। योषितां वपूंषि। पूर्ववन्नुमागमः, सान्तमहतः संयोगस्येति दीर्घः। अतिमदेन जुघूर्णुः भ्रेमुः दृप्तसङ्घर्षस्तटस्थपीडाकरः यथा वृषभकलहाद्वृक्षपादभङ्ग इति भावः ॥ २२ ॥

चारुतेति। आसां योषितां वपुश्चारुता सौन्दर्यमभूषयत्। तां चारुताम् अनूननवयौवनयोगः सम्पूर्णयौवनसम्पत्तिरभूषयत्। तं पुनर्नवयौवनयोगम् मकरकेतनलक्ष्मीर्मदनसम्पत्तिरभूषयत्। तां

तस्य नमकरकेतनलक्ष्मी-
स्तां मदो दयितसङ्गमभूषः ॥ २३ ॥
क्षीवतामुपगतास्वनुवेलं
तासु रोषपरितोषवतीषु ।
अग्रहीन्नु सशरं धनुरुज्झा-
मास नूज्झितनिषङ्गमनङ्गः ॥ २४ ॥
शङ्कयाऽन्ययुवती वनिताभिः
प्रत्यभेदि दयितः स्फुटमेव ।

मकरकेतनलक्ष्मीर्दयितसङ्गम एव भूषा यस्य स मदोऽभूषयत् । तां मदः तस्य दयितसङ्गमः इत्यर्थः प्रक्रमानुसारात्तां मदस्तनपि वल्लभसङ्ग इति प्रयोक्तव्ये विशेषणत्वेन प्रयोगो महाकवीनामनुद्वेगात् । यथा भारवेः प्रयोगः, शुचि भूषयतीत्यादौ श्लोके स नयाङ्कः स च विद्भूषण इदि वक्तव्ये स नयापादितविद्भूषण इति । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वादेकावली । यत्रोत्तरोत्तरेषां स्यात् पूर्वपूर्वस्य विक्रमात् । विशेषकत्वकथनमसावेकावली मतेति लक्षणात् ॥ २३ ॥

क्षीवतामिति । क्षीवतां मत्तताम् । मत्ते शौण्डोत्कटक्षीवा इत्यमरः । क्षीव मदे इत्यस्माद्धातोरनुपसर्गात् फुल्लक्षीवकृशोल्लाघा इति निष्ठान्तो निपातितः । उपगतासु प्राप्तासु अत एवानुवेलम्प्रतिक्षणं रोषपरितोषवतीषु तासु स्त्रीषु विषये अनङ्गः सशरन्धनुरग्रहीन्नु उज्झितनिषङ्गन्त्यक्ततूणीरं यथा तथा उज्झामास नु तत्याज किम् । उज्झतेर्लिट्, इजादेश्च गुरुमतोऽनृच्छ इत्याम्प्रत्ययः । रुष्टासु धनुर्ग्रहणं परितुष्टासु त्यागश्च रोषपरितोषाभ्यामुत्प्रेक्ष्यते । अन्यथा रोषानन्तरं परितोषः परितोषानन्तरं रोषश्च न स्यादिति भावः । रोषपरितोषयोर्धनुर्ग्रहणाभ्यां यथासङ्ख्येनान्वयाद्यथासङ्ख्यालङ्कारभेदः तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

शङ्कयेति । वनिताभिरन्ययुवतौ सपत्न्यां शङ्कया तत्सङ्गशङ्का-

न क्षमश्चवति तत्त्वविचारे
मत्सरेण हृतसंवृति चेतः ॥ २५ ॥
आननैर्विचकसे हृषिताभि-
र्वल्लभानभि तनूभिरभावि ।
आर्द्रतां हृदयमाप च रोषो
लोलति स्म वचनेषु वधूनाम् ॥ २६ ॥
रूपमप्रतिविधानमनोज्ञं
प्रेम कार्य्यमनपेक्ष्य विकासि ।
चाटु चाकृतकसंभ्रममासां
कार्मणत्वमगमन्रमणेषु ॥ २७ ॥

सान्त्वेष दयितः स्फुटमेव निश्चितवदेव प्रत्यभेदि सिद्धवत्कृत्वोद्घाटित इत्यर्थः अनुचितोऽयमभियोग मिथ्याभियोग इति शङ्कां परिहरति ॥ नेति । मत्सरेण वैरेण हृता संवृतिर्गोप्यगोपनं यस्य तच्चेतस्तत्त्वविचारे भूतार्थचिन्तायां क्षमं सहिष्णु न भवति मत्सरग्रस्तचेतसामेव स्वभाव इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥२५॥

आननैरिति । वल्लभानभि वल्लभसमक्षमित्यर्थः । अभिरभाग इति लक्षणार्थकर्मप्रवचनीयत्वात् द्वितीया। बधूनामाननैर्विचकसे विकसितम् । भावे लिट् । तनूभिरङ्गैः हृषिताभिः पुलकिताभिः । हृषेर्लोमस्विती‍‌ड़ागमः । अभाविभूतम् । भावे लुङ् । हृदयञ्चार्द्रतामाप काठिन्यं जहावित्यर्थः । वचनेषु रोषो लोलति चलति स्म वचनगतो रोषो वक्रतापि निवृत्तेत्यर्थः। अत्र बधूव्याननविकासाद्यनेकक्रियायौगपद्यात् समुच्चयालङ्कारः। गुणक्रियायौगपद्यं समुच्चय इति लक्षणात् ॥ २६ ॥

रूपमिति । अप्रतिविधानमप्रतियत्नमेव मनोज्ञं स्वभावसुन्दरमित्यर्थः रूपमाकृतिः कार्य्यं प्रयोजनमनपेक्ष्य विकासि वर्द्धमानम् अनौपाधिकमित्यर्थः । प्रेम अकृतकसंभ्रममकृत्रिमसंरम्भञ्चाटु प्रिय-

लीलयैव सुतनोस्तुलयित्वा
गौरवाढ्यमपि लावणिकेन ।
मानवञ्चनविदा वदनेन
क्रीतमेव हृदयन्दयितस्य ॥ ३८ ॥

स्पर्शभाजि विशदङ्कविचारी
कल्पिते मृगदृशां सुरताय ।
सन्ततिन्दधति पेतुरजस्रं
दृष्टयः प्रियतमे शयने च ॥ ३९ ॥

वचनञ्चासां स्त्रीणां रमणेषु विषये कार्मणत्वं वशीकरणकर्मत्वम् । वशक्रिया संवदनं मूलकर्म तु कार्मणमित्यमरः । तद्युक्तात् कर्मणो-ऽण् । अगमन् प्राप्तानि । गमेर्लुङ् च्लेरङादेशः । अत्र रूपादिष्वा-रोप्यमाणस्य कार्मणत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ३७ ॥

लीलयेति । लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकं लाव-ण्यवत् । अत इनठनाविति ठन्प्रत्यये ठस्येकः यस्येति चेत्यल्लोपे हलस्तद्धितस्येति यकारलोपः । अन्यत्र तु लवणं पण्यमस्यास्तीति लावणिको लवणव्यवहारी । लवणाट्ठञ्प्रत्ययः । तेन लावणिकेन मानवञ्चनविदा अहङ्कारहरणदक्षेण । अन्यत्र परिमाणप्रतारण-पटुना । सुतनोः स्त्रियाः वदनेन कर्त्रा गौरवाढ्यं गाम्भीर्यसम्पन्न-मपि । अन्यत्र गुरुत्वयुक्तमपि दयितस्य हृदयं लीलया विलासेनैव तुलयित्वा । अन्यत्रानायासेनैव उन्माय गुर्वपि लघुतया मीत्वेत्यर्थः । क्रीतं वशीकृतमेव । अन्यत्र दानेन स्वीकृतमेव । अत्र विशेषणमहि-म्नैव वदने लावणिकत्वस्य हृदये पण्यत्वस्य च प्रतीतेः समासोक्तिरल-ङ्कारः । हृदयस्य प्रतीयमानपण्याभेदेन क्रीतत्वोक्तेरलौकिकहृदया-वर्जने लौकिकक्रयव्यवहारसमारोपः ॥ ३८ ॥

एवं मदानुभवं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति । तत्र सुरतं द्विविधं बाह्यमाभ्यन्तरञ्चेति । बाह्यं च प्रेक्षणभाषणा-

यूनि रागतरलैरपि तिर्यक्-
पातिभिः श्रुतिगुणेन युतस्य।
दीर्घदर्शिभिरकारि वधूनां
लङ्घनन्न नयनैः श्रवणस्य॥ ४०॥

सङ्कथेच्छुरभिधातुमनीशा
सम्मुखी न च बभूव दिदृक्षुः।

श्लेषणचुम्बनाद्यनेकभेदभिन्नम्। तत्र दृष्टिविशेषन्तावदाह। स्पर्शेति।
स्पर्शभाजि सुखस्पर्शे विशदा विमला शुभ्रा च या छविः कान्तिस्तया
चारौ रम्ये सुरताय कल्पिते रतिसुखदानाय स्पष्टे विहारयोग्यतया
स्वीकृते च सन्नतिमानुकूल्यं सर्वतः साम्यञ्च दधति दधाने प्रियतमे
शयने च स्त्रगदृशां दृष्टयोऽजस्त्रमविच्छिन्नं पेतुः पतिताः युगपदुभया-
वलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः। अत्र प्रियतमशयनयोः प्रकृ-
तयोरेव धर्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता॥३९॥

यूनीति। रागेण तरलैश्चपलैरपि दर्शनोत्सुकैरपीत्यर्थः। यूनि
प्रिये तिर्यक्पातिभिस्त्रपया साचि विप्रसारिभिः दीर्घदर्शिभिराय-
तान्तैः आलोकनव्यापारपरैरित्यर्थः। अन्यत्र रागद्वेषचपलैः अतएव
तिर्यक्पातिभिः कुटिलवृत्तिभिरपि दीर्घदर्शिभिरागामि कार्यज्ञै-
रित्यर्थः वधूनां नयनैः श्रुतिगुणेन शब्दग्रहणपाटवेन युतस्य। श्रूयते-
ऽनेनेति श्रवणं श्रोत्रन्तस्य लङ्घनमतिक्रमो नाकारि न चक्रे। कर्णान्ते
विश्रान्तमित्यर्थः अन्यत्र तु श्रुतिः श्रवणम् अभ्यास इति यावत्।
सैव गुणस्तेन युतस्य श्रूयत इति श्रवणं शास्त्रं तस्य लङ्घनं नाकारि
रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्रातिक्रमात् बिभेतीति
भावः। अयञ्च व्यवहारो नयनेषु रागतरलैरित्यादिश्लिष्टविशेषण-
महिम्ना गम्यत इति समासोक्तिभेदः इयञ्च रामदृष्टेरौत्सुक्यानु-
भावः॥ ४०॥

सङ्कथेति। नतभ्रूः सा सङ्कथायां सम्भाषणे इच्छुरिच्छाव-

स्पर्शनेन दयितस्य नतभ्रू-
रङ्गसङ्गचपलापि चकम्पे ॥ ४१ ॥

उत्तरीयविनयात्त्रपमाणा
रुन्धती किल तदीक्षणमार्गम् ।
आवरिष्ट विकटेन विवोढु-
र्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥

अंशुकं हृतवता तनुबाहु-
स्वस्तिकापिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयं परिणेत्रा
पर्यरम्भि रभसादचिरोढा ॥ ४३ ॥

त्यपि । विन्दुरिच्छुरित्युप्रत्ययान्तो निपातः । अभिभाष्टुं सम्भाषयितुमनीषा अक्षमा बभूव । अप्यर्थस्य शब्दः दिदृक्षुर्द्रष्टुमिच्छुरपि । दृशेः सन्नन्तादुप्रत्ययः । सम्मुखी अभिमुखी न बभूव । अङ्गसङ्गचपला गात्रस्पर्शचपलापि दयितस्य स्पर्शनेन चकम्पे कम्पितवती । एते कम्पादयो लज्जासाध्वसानुभावाः । लज्जाविजितमन्मथेयं मुग्धा ॥ ४१ ॥

अथालिङ्गनं वर्णयति । उत्तरीयेति । अन्या स्त्री उत्तरीयविनयात् कुचांशुकाकर्षणात् । त्रपमाणा तदीक्षणमार्गन्तस्य वोढुः दृष्टिपथं रुन्धती किल आवृण्वतीव न तु वस्तुत इति किलार्थः । विकटेन विशालेन । विशङ्कटं विशालं स्यात् करालं विकटन्तथेति वैजयन्ती । सम्प्रोदश्च कटनिति चकारादेः कटच्प्रत्ययः । विवोढुः परिणेतुः वक्षसैव कुचमण्डलम् आवरिष्ट आवृतवती कुचावरणव्याजेनालिङ्गितवती । वृञो लुङि तङ् इडागमः । अत्र कुचसंवरणेनालिङ्गनेच्छानिगूहनान्मीलनभेदः । एषा लज्जामन्मथमध्यस्था मध्यमा ॥ ४२ ॥

अंशुकमिति । अंशुकमुत्तरीयं हृतवता परिणेत्रा भर्त्रा तन्वोः कृशयोः बाह्वोः स्वस्तिको बन्धविशेषः तेनापिहिते आच्छादिते मुग्धे सुन्दरे कुचाग्रे यस्याः सा तथोक्ता अचिरोढा नवोढा भिन्नानि

सञ्जहार सहसा परिरब्ध-
प्रेयसीषु विरहय्य विरोधम्।
संहितं रतिपतिः स्मितभिन्न-
क्रोधमाशु तरुणेषु महेषुम्॥ ४४॥

स्रंसमानमुपयन्तरि बध्वाः
श्लिष्टवत्युपसपत्नि रसेन।
आत्मनैव रुरुधे कृतिनेव
स्वेदसङ्गि वसनं जघनेन॥ ४५॥

यस्य वलयानि यस्मिन् कर्मणि तद्यथा तथा रभसाद्वेगात्पर्य्यरप्सि गाढ़माश्लिष्टेत्यर्थः। रभेश्च्यन्तात् कर्मणि लुङ्। रभेरशब्लिटोरिति नुमागमः। एषा तिरोहितमुग्धा॥ ४२॥

सञ्जहारेति। तरुणेषु युवसु विरोधं प्रणयकलहं विरहय्य विहाय। रहयतेः स्वार्थण्यन्तात् क्त्वा तस्य ल्यप् ल्यपि लघुपूर्वादिति अयादेशः। सहसा परिरब्धाः प्रेयस्यो यैस्तेषु परिरब्धप्रेयसीषु आश्लिष्टवधूकेषु सत्सु। ईयसश्चेति कपोऽभावः, ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्य इत्युपसर्जनस्य ह्रस्वनिषेधः। रतिपतिः कामः संहितमारोपितं महेषुं महास्त्रं शरं स्मितभिन्नक्रोधं स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्वरोषं च यथा तथा आशु सञ्जहार। सिद्धेऽर्थे साधनानवकाशादित्यर्थः परिरम्भान्तो यूनां विरह इति भावः॥ ४४॥

स्रंसमानमिति। उपयन्तरि भर्त्तरि रसेन रागातिशयेनेत्यर्थः। उपसपत्नि सपत्नीसमीपे। समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम्। श्लिष्टवति आश्लिष्टवति सति स्रंसमानं स्वर्शसुखपारवश्यात् भ्रश्यमानं तथापि स्वेदसङ्गि स्वेदेन सात्त्विकेन सक्तं बध्वा वसनं कृतिना कुशलेन स्वयं स्वेदं संवरितं जानतेत्यर्थः। जघनेन कर्त्रा आत्मनैव

पीड़िते पुर उरःप्रतिपेषं
भर्त्तरि स्तनयुगेन युवत्याः ।
स्पष्टमेव दलतः प्रतिनार्य्या-
स्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥

दीपितस्मरमुरस्युपपीड़ं
वल्लभे घनमभिष्वजमाने ।
वक्रतां न ययतुः कुचकुम्भौ
सुभ्रुवः कठिनतातिशयेन ॥ ४७ ॥

सम्प्रवेष्टुमिव योषित ईषुः
श्लिष्यतां हृदयमिष्टतमानाम् ।

स्वयमेव रुरुधे रहस् । सा तु न वेत्तीति भावः । स्वेदहेतुकस्य वसनरोधस्य स्वाभावत्वानहेतुकत्वमुत्प्रेक्ष्यते ॥ ४५ ॥

पीड़ित इति । युवत्याः युवतेः स्तनयुगेन भर्त्तरि प्रतिनार्याः पुरोऽग्रे समक्षमेव उरः प्रतिपिष्य । उरःप्रतिपेषम् । परिक्लिश्यमाने चेति णमुल् कन्ठोजन्त इत्यव्ययसंज्ञा । वक्षः प्रतिपीड्येत्यर्थः पीड़िते सति दलत ईर्ष्यया दीर्य्यमाणस्य प्रतिनार्याः सपत्न्याः हृदयस्य तन्मयत्वं भर्त्तृतादात्म्यं स्पष्टमभवदेव । अन्यथा कथमन्यपीड़नादन्यदलनमिति भावः । अतएवेयमसङ्गत्यलङ्कारोपजीविनी तन्मयत्वोत्प्रेक्षेति सङ्करः, कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः ॥ ४६ ॥

दीपितेति । वल्लभे दीपितस्मरम् उद्दीपितकामं यथा तथा उरस्युपपीड़म् । उरस्युपपीड्य सप्तम्यां चोपपीड़रुधकर्ष इति णमुल् । तत्पुरुषे कृति बहुलमित्यलुक् । घनङ्गाढ़मभिष्वजमाने परिरभमाणे सति । परिरम्भः परिष्वङ्गः संश्लेषः उपगूहनमित्यमरः । सुभ्रुवः कुचकुम्भौ कठिनतातिशयेन वक्रताम्परिभग्नतां न ययतुर्न प्राप्तौ । अत्र गाढ़ालिङ्गनात् कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४७ ॥

आत्मनः सततमेव तदन्त-
र्वर्त्तिनी न खलु नूनमजानन् ॥ ४८ ॥
स्नेहनिर्भरमधत्त वधूना-
मार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढपरिरब्धिनि वस्त्र-
क्नोपमम्बु वव्रषे यदनेन ॥ ४९ ॥
न स्म माति वपुषः प्रमदाना-
मन्तरिष्टतमसङ्गमजन्मा ।

सम्प्रवेष्टुमिति । योषितः स्त्रियस्तासामिष्टतमानां हृदयं संप्रवेष्टुमीषुरिच्छन्ति स्मेव इति गाढालिङ्गननिमित्ता क्रियास्वरूपोत्प्रेक्षा गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात् । अतएवात्मनः स्वान् सततमेव तदन्तर्वर्त्तिनस्तेषामिष्टतमानाम् अन्तर्हृदयेष्वेव स्थितानजानन्नजूनम् अन्यथा कथं पुनःप्रवेशेच्छेति भावः । इयमज्ञानोत्प्रेक्षा पूर्वोत्प्रेक्षा सापेक्षेति सजातीयसङ्करः ॥ ४८ ॥

स्नेहेति । स्नेहनिर्भरम्प्रेमरसपूर्णत्वैवादिकद्रवद्रव्यपूर्णञ्च । स्नेहोऽस्त्री द्रवहार्द्दयोरिति वैजयन्ती । अतएव वधूनां वपुरन्तरार्द्रतान्द्रवत्वमधत्त स्नेहद्रव्यसम्पूर्णमन्तरार्द्रं स्रवतीति भावः । असंशयं संशयस्याभावः । अर्थाभावेऽव्ययीभावः । कुतो यद्यस्माद्यूनि पुंसि गाढम्परिरब्धत इति परिरब्धिनि गाढाश्लेषिणि सति अनेन वपुषा कर्त्रा वस्त्रं क्नोपयित्वा परिषिच्य वस्त्रक्नोपम् । क्नु धातोर्ण्यन्तादर्त्तिह्रीत्यादिना पुगागमे चेले क्नोपेरिति णमुल् । अम्बु ववृषे । वृषेः कर्म्मणि लिट् । अन्तरार्द्रस्य निष्पीड़नाद्बहिरम्बुस्रावसम्भवात् तन्निमित्तेयमन्तरार्द्रत्वोत्प्रेक्षा प्रियाङ्गसङ्गात्ताः स्विन्ना इति सात्त्विकोदयोक्तिः ॥ ४९ ॥

न स्मेति । प्रमदानामिष्टतमसङ्गमेन जन्म यस्य सः । जन्माद्युत्तरपदत्वाद्व्यधिकरणबहुव्रीहिरिति वामनः । बहुर्विपुलः । विपुला-

यद् बहुर्वहिरवाप्य विकाशं
व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥
यत् प्रियव्यतिकराद्वनिताना-
मङ्गजेन पुलकेन बभूवे ।
प्रापि तेन भृशमुच्छ्वसिताभि-
र्नीविभिः सपदि बन्धनमोक्षः ॥ ५१ ॥
ह्रीभरादवनतम्परिरम्भे
रागवानवटुजेष्ववकृष्य ।

नेकयोर्वङ्करिति वैजयन्ती । हर्षो वपुषोऽन्तर्न माति स्म अत्युद्रेका-दन्तःस्थित इत्युत्प्रेक्षा । कुतः यद्यस्माद्बहिर्वपुषो बहिर्विकाशं वृद्धिमवाप्य तनुरुहाणि रोमाण्यपि व्यानशे व्याप । कर्त्तरि लिट् । अश्नोतेश्चेति नुडागमः । अत्र बहिर्विकाशननिमित्तकान्तरमानो-त्प्रेक्षा आनन्दरोमाञ्चयोः श्लेषमूलाभेदाध्यवसायातिशयोक्त्यनुप्राणि-तेति सङ्करः ॥ ५० ॥

यदिति । वनितानां स्त्रीणां प्रियस्य भर्त्तुर्व्यतिकरात्सम्पर्कात्सङ्गा-त् अङ्गजेनाङ्गव्यापिना पुत्रेण च पुलकेन बभूवे भूतमिति यत् । भावे लिट् । तेन पुलकोदयेन पुत्रोदयेन च भृशमुच्छ्वसिताभिरुच्छिन्ना-भिर्मोक्षाशया आश्वसिताभिश्च नीविभिः लक्षणया कटिवस्त्रैः अन्यथा बन्धनशब्देन पौनरुक्त्यात् । सपदि बन्धनमोक्षो ग्रन्थिभेदो निगड-मोचनं च प्रापि प्राप्तः । कर्मणि लुङ् । अभ्युदयेषु राजानो बद्धान् मोचयन्तीति भावः । अत्र प्रकृतपुलकनीविगताङ्गजत्वोच्छ्वसि-तत्वादिविशेषणसाम्याद् बन्धनमोक्षणसम्बन्धाच्च अप्रकृतपुत्रकारागति-प्रतीतेः समासोक्तिरलङ्कारः ॥ ५१ ॥

अथ चुम्बनक्रीडां वर्णयति । ह्रीति । परिरम्भे आलिङ्गने ह्रीरेव भरस्तस्मादवनतं भाराक्रान्तं नमतीति भावः । अर्पितं स्वमुखे निहितमोष्ठ एव दलं पत्रं यस्य तदर्पितमाननमेव पद्मं रागवान्

अर्पितोष्ठदलमाननपद्मं
योषितो मुकुलिताक्षमधासीत् ॥ ५२ ॥
पल्लवोपमितिसाम्यसपक्षं
दृष्टवत्यधरबिम्बमभीष्टे ।
पर्यकूजि सरुजेव तरुण्या-
स्तारलोलवलयेन करेण ॥ ५३ ॥
केनचिन्मधुरमुल्बणरागं
बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं
सुभ्रुवः सरसमक्षि चुचुम्बे ॥ ५४ ॥

रामौ अवटुजेषु चरमशिरोरुहेषु। अवटुर्घाटा कृकाटिकेत्यमरः। अवकृष्य अवटुजाकर्षणेनोन्नमय्येत्यर्थः। मुकुलिताक्षं निमीलितनेत्रं यथा तथा। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच्प्रत्ययः। अधासीत् पपौ। धेटो लुङ् आदेच इत्यात्त्वम् अस्तिसिचोऽपृक्त इतीडागमः। अत्राननोष्ठस्य पद्मदलत्वरूपणात्तत्वानुरागिणो मधुपत्वं च गम्यते इत्येकदेशविवर्त्ति रूपकम् ॥ ५२ ॥

पल्लवेति। पल्लवेन उपमित्या सादृश्येन तत्साम्यत्वेन सपक्षम् उभयोरपि पल्लवैकोपमानत्वसाधर्म्यात् सुहृद्भूतम् अधरो बिम्बमिव तदधरबिम्बम् अभीष्टे प्रियतमे दृष्टवति सति। सह रुजा सरुक्। तेन सहेति बहुव्रीहिः, सहस्य सः। तेन सरुजेव सव्यथेनेव। स्त्रीरुग्रुजा चोपताप इत्यमरः। तारादच्चैः क्षणन्ति कुतः लोलानि चलानि वलयानि कङ्कणानि यस्य तेन तरुण्याः करेण पर्य्यकूजि परिकूजितम्। भावे लुङ्। सुहृद्दुःखाद् दुःखायन्ते सुहृद इति भावः। अत्र कङ्कणद्वारकस्य करकूजनस्य विधूननहेतुकस्य सरुजेवेति रुग्घेतुकत्वमुत्प्रेक्ष्यते ॥ ५३ ॥

केनचिदिति। केनचिद्रागिणा मधुरं रसवन्तमुल्बणरागमति-

रेचितम्परिजनेन महीयः
केवलाभिरतदम्पति धाम।
साम्यमाप कमलासखविष्वक्-
सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥

आवृतान्यपि निरन्तरमुच्चै-
र्योषितामुरसिजद्वितयेन।
रागिणामिव इतो विटषड्गिः
पाणिभिर्जगृहिरे हृदयानि ॥ ५६ ॥

रक्तं तथापि विरहेष्वधिकं वाष्पेण विरहोष्मणा तप्तं सुभ्रुव ओष्ठ-पल्लवमपास्य सरसं सान्द्रशीतम् अच्छि चुचुम्बे चुम्बितम्। अत्र सप्तत्वरसवत्त्वयोर्विशेषणगत्याधरत्यागाच्चिचुम्बनहेतुकङ्काव्यलिङ्गद्वयं सापेक्षत्वात् सङ्कीर्य्यते ॥ ५४ ॥

एवं वाह्यसुरतमुक्त्वाभ्यन्तरसुरतवर्णनमस्तौति। रेचितमित्यादि। परिजनेन रेचितं रिक्तीकृतम्। अतएव केवलावेकाकिनावभिरतौ दम्पती जायापती यस्मिन् तत्। दम्पतौ जम्पती जायापती भार्य्या-पती समावित्यमरः। राजदन्तादिषु जायाशब्दस्य जम्भावो दम्भावस्य विकल्पान्निपातितः। महीयो महत्तरं धाम केलिगृहं कमलासखेन लक्ष्मीभर्त्रा विष्वक्सेनेन जनार्दनेन विष्णुना सेवितस्याधिष्ठितस्य युगान्तपयोधेः साम्यमापेत्युपमालङ्कारः। युगान्तविशेषणं विविक्त-ताद्योतनार्थम् एतेनेच्छाविहारतोक्ता ॥ ५५ ॥

अथ विस्रम्भविहाराण्येवाह। आवृतानीति। उच्चैरुन्नते-नोरसिजद्वितयेन निरन्तरं नीरन्ध्रमावृतानि संवृतान्यपि योषितां हृदयानि वक्षांसि चेतांसि च इत इतो विटषड्गिरितस्ततः पराहृषड्गिः रागिणाम्पाणिभिर्जगृहिरे गृहीतानि। निगूढं वस्तु हस्तपरा-मर्शाल्लभ्यत इति एकत्र भावः, अन्यत्र कच्छ्रलब्धः प्रियकरस्पर्शस्तासां हृदयग्राह्योऽभूदिति भावः। नैरन्तर्य्यौन्नत्यविशेषणवतोरपि कुचयोः

कामिनामसकलानि विभुग्नैः
स्वेदवारिमृदुभिः करजाग्रैः।
अक्रियन्त कठिनेषु कथञ्चित्
कामिनीकुचतटेषु पदानि॥ ५७॥

सोष्मणस्तनशिलाशिखराग्रा-
दात्तघर्मसलिलैस्तरुणानाम्।
उच्छ्रसत्कमलचारुषु हस्तै-
र्निम्ननाभिसरसीषु निपेते॥ ५८॥

आश्रयद्भिरभितो वलिवीची-

कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति वाक्यार्थः। अत्र स्थितयानामपि हृदयानां प्रकृतत्वात् केवलप्रकृतश्लेषः॥ ५६॥

कामिनामिति। स्वेदवारिणा सात्त्विकेनाङ्गुलीस्वेदेन मृदुभिः कोमलताङ्गतैरतएव विभुग्नैर्विनम्रैः कामिनां करजाग्रैः नखाग्रैः कठिनेषु कामिनीकुचतटेषु असकलान्यसमग्राणि पदानि क्षतानि कथञ्चिदक्रियन्त कृतानि। कठिनेषु मृदूनां चपलाभो दुःसम्पाद इति भावः। नखक्रिया प्रवृत्तेत्यर्थः। अत्र कुचानामीदृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः॥ ५७॥

सोष्मण इति। सोष्मणो यौवनोष्मयुक्तात् स्तनावेव शिला शिखरे तयोरग्रादुपरिभागादात्तघर्मसलिलैरुपात्तस्वेदविन्दुभिः प्राप्तस्वेदैस्तरु-णानां हस्तैरुच्छ्रसत्कमलवद्विकचकमलैश्च चारुषु निम्ननाभिष्वेव सर-सीषु निपेते निपतितम्। उष्णक्लिन्नानां शीतस्विन्नत्वात् पयसि पातो युक्त इति भावः। प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमस्पृश-न्नित्यर्थः। अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसीत्वेन च रूप-णाङ्गत्वानाम् आपातितपुरुषत्वरूपणङ्गम्यत इति एकदेशविवर्त्ति रूप-कम्॥ ५८॥

आश्रयद्भिरिति। वलयो वीचय इव वलिवीचीरभित आश्रयद्भिः

लोलमानविततांगुलिहस्तैः ।
सुभ्रुवामनुभवात् प्रतिपेदे
मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥

प्राप्य नाभिनदमज्जनमाशु
प्रस्थितं निवसनग्रहणाय ।
औपनीविकमरुन्ध किल स्त्री
वल्लभस्य करमात्मकराभ्याम् ॥ ६० ॥

कामिनः कृतरतोत्सवकाल-
क्षेपमाकुलवधूकरसङ्गि ।
मेखलागुणविलग्नमसूया-
न्दीर्घसूत्रमकरोत्परिधानम् ॥ ६१ ॥

लोलमानाश्चलनशीलाः । ताच्छील्यवयोवचनशक्तिषु चानशिति चानश्प्रत्ययः न तु शानच् लोलतेः परस्मैपदित्वात् । अत एव लोलमानादयश्चानश इति वामनः । लोलमाना विततः प्रसारिताश्चाङ्गुलयो येषान्ते तथाविधा हस्ता येषान्तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं मुष्टिमेयमिति मुष्ट्या मातुं शक्यमिति अनुभवात् प्रत्यक्षेण मुष्ट्या मानं कृत्वैव प्रतिपेदे प्रतिबुद्धं न तु प्रासङ्गिकमात्रादिति भावः । अमुष्टिमेयस्य मुष्टिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥

प्राप्येति । नाभिरेव नदो ह्रद इति रूपकन्तत्र मज्जनं प्राप्याशु निवसनग्रहणाय वस्त्राकर्षणायेत्यर्थः । स्नातस्य वस्त्रग्रहणं युक्तमिति भावः । प्रस्थितमुद्युक्तम् । उपनीवि नीविसमीपे प्रायेण तत्र सक्तमौपनीविकन्तत्र व्यापृतमित्यर्थः । उपजानूपकर्णोपनीवेष्ठक् । वल्लभस्य करं स्त्री आत्मकराभ्याम् अरुन्ध किल रोधं नाटितवतीत्यर्थः ॥ ६० ॥

कामिन इति । आकुले प्रियकरनिवारणव्यग्रे वधूकरे सङ्गि सक्तं मेखलैव गुणस्तत्र विलग्नं दीर्घसूत्रम् आतततन्तुकम् अत्यायत-

अम्बरं विनयतः प्रियपाणे-
र्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं
कक्ष्यया च वलयैश्च शिशिञ्जे ॥ ६२ ॥

ग्रन्थिमुद्ग्रथयितुं हृदयेशे
वाससः स्पृशति मानधनायाः ।
भ्रूयुगेण सपदि प्रतिपेदे
रोमभिश्च सममेव विभेदः ॥ ६३ ॥

त्वात् बहुधा वेष्टितमित्यर्थः। चिरक्रियश्च। दीर्घसूत्रश्चिरक्रिय इत्यमरः। एवं सतो रतस्यैवोत्तरस्य कालक्षेपः कालविलम्बो येन तत् परिधानमधोंऽशुकं कामिनोऽसूयामकरोत्। इच्छाविघातादीर्ष्यां जनयामासेत्यर्थः। अत्र करणाङ्गादिपदार्थानां विशेषणगत्या असूयाहेतुत्वादनेकपदार्थहेतुककाव्यलिङ्गमलङ्कारः ॥ ६१ ॥

अम्बरमिति। अम्बरं विनयतोऽपसारयतः प्रियपाणेर्योषितः करयोश्च तस्मिन् रोधकयोरिति भावः। कलहस्य वारणां विधातुं निवारणं कर्तुमिवेत्युत्प्रेक्षा। कक्ष्यया काञ्च्या। कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोरिति विश्वः। कक्ष्येति चान्यपाठे तु कक्षौ पट्टिकाकाञ्चीप्रकोष्ठगजरज्जुष्विति चान्येषु विश्वः। वलयैः कङ्कणैश्च अभीक्ष्णं शिशिञ्जे चुकुजे। भावे लिट्। भूषणानां तु शिञ्जितमित्यमरः। द्वयोः कलहायमानयोः पार्श्वस्थाः सान्त्वोक्त्या निवारयन्तीति भावः। शिञ्जतिरयन्तालव्यादिर्न दन्त्यादिः शोपेद शिञ्जे इति श्रुतेः ॥ ६२ ॥

ग्रन्थिमिति। हृदयेशे प्रिये वाससो ग्रन्थिमुद्ग्रथयितुं विस्रंसयितुम्। ग्रथयतेश्चौरादिकात्तुमुन्। स्पृशति सति मानधनाया मानवत्याः कामिन्या इति शेषः। भ्रूयुगेण रोमभिश्च। कर्तरि तृतीयेति तृतीया। सपदि सद्यः युगपदेव विभेदो भङ्गो हर्षश्च प्रति-

आशु लङ्घितवतीष्टकराग्रे
नीविमर्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिकहताधरतन्त्री-
मण्डलक्वणितचारु चुकूजे ॥ ६४ ॥

आयताङ्गुलिरभूदतिरिक्तः
सुभ्रुवां कृशिमशालिनि मध्ये ।
श्रोणिषु प्रियकरः पृथुलासु
स्पर्शमाप सकलेन तलेन ॥ ६५ ॥

मेदे प्राप्तः अत्र मानवत्त्वात् कामिनीविसर्गेषु युगपदमर्षहर्षयोरुदया-त्तदनुभावयोरपि युगपदाविर्भाव इति भावः । अत्र भ्रूभङ्गरोमाञ्च-क्रिययोः समुच्चयात् समुच्चयभेदः स च विभेद इति श्लेषप्रतिभोत्था-पिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति सङ्करः ॥ ६२ ॥

आश्विति । इष्टस्य प्रियस्य कराग्रे नीविं वस्त्रग्रन्थिम् आशु हठात् लङ्घितवति अतिक्रान्तवति अरुमूलं गते सतीत्यर्थः । अर्ध-मुकुलीकृतदृष्ट्या सुखपारवश्यादर्धनिमीलिताक्ष्या स्त्रिया रक्तो रक्त-कण्ठः स्वयङ्गानकुशलः विना शिल्पमस्य वैणिको वीणावाद्यनिपुणः । शिल्पमिति ठक् । रक्तेन वैणिकेन यन्त्रगानकुशलेन हतं वादितं यदधरं तन्त्रीणां मण्डलं समूहः बहुतन्त्रीकस्वरमण्डलादिभेदः तस्य क्वणितमिव चारु यथा तथा चुकूजे कूजितम् । भावे लिट् । अधर-ग्रहणं तन्त्रमाधुर्यातिशयात् । स्पर्शसुखातिरेकार्थं तन्त्रीकण्ठस्वर-व्यतिकरमनोहरः कोऽपि रससर्वस्वभूतः कण्ठकूजितविशेषः कृत इत्यर्थः । अतएव रक्तवैणिकहतेति विशेषणं क्वणितचार्विति उपमा-लङ्कारः ॥ ६४ ॥

आयतेति । आयताः अङ्गुलयो यस्य स प्रियकरः कृशस्य भावः कृशिमा कार्श्यम् । पृथ्वादिभ्य इमनिच्, रऋतो हलादेर्लघोरिति रेफादेशः । तेन शालते शोभते तस्मिन् सुभ्रुवां मध्येऽतिरिक्तोऽधि-

चक्रुरेव ललनोरुषु राजीः
स्पर्शलोभवशलोलकराणाम्।
कामिनामनिभृतान्यपि रम्भा-
स्तम्भकोमलतलेषु नखानि ॥ ६६ ॥

ऊरुमूलचपलेक्षणमघ्नन्
यैर्वतंसकुसुमैः प्रियमेताः।
चक्रिरे सपदि तानि यथार्थं
मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥

कोऽभूत् मध्यस्यातिकार्श्यादस्यैकदेशोऽभूदित्यर्थः। पृथुलासु श्रोणिषु कटिषु। वहिश्रिश्रुयुद्रुग्लेति सूत्रेण श्रुधातोः निप्रत्ययः। सकलेन कृत्स्नेन तलेन स्पर्शमाप अन्तर्भागेन क्रमेण श्रोणिमस्पर्शदित्यर्थः अतएव मध्यातिरेकोक्तेरतिशयोक्तिः ॥ ६५ ॥

चक्रुरेवेति। स्पर्शलोभवशेनोरुस्पर्शतृष्णापारतन्त्र्येण लोलकराणां चपलपाणीनां कामिनामनिभृतान्यनर्पितान्यपि नखानि कररुहाः। पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः। रम्भास्तम्भकोमलतलेषु कदलीप्रकाण्डपेलवस्वरूपेषु ललनानामूरुषु राजीः रेखाश्चक्रुरेव ऊरुपरामर्शान्तरीयनखस्पर्शमात्रादेव रेखा जाता इत्यर्थः। अत्र कोमलतायाः विशेषणगत्या राजीकरणहेतुत्वात् काव्यलिङ्गभेदः ॥ ६६ ॥

ऊर्विति। एताः स्त्रियः ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः। अघ्नन् अताडयन्। हन्तेर्लङ्। गमहनेत्यादिना उपधालोपः, होहन्तेरिति कुत्वम्। तानि वतंसकुसुमानि। मनो मथ्नातीति मन्मथः। पृषोदरादित्वात्साधुः। तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुध इति यन्नाम तद्यथार्थं चक्रिरे चक्रुः तदा तेषामायुधकार्यकारित्वादिति भावः। अत्र वतं-

धैर्यमुल्बणमनोभववभावा
वामताञ्च वपुरर्पितवत्यः ।
व्रीडितं ललितसौरतधार्ष्ट्या-
स्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८ ॥
पाणिरोधमविरोधितवाञ्छं
भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरू-
र्हारि शुष्करुदितञ्च सुखेऽपि ॥ ६९ ॥

शिवारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ६७ ॥

धैर्यमिति । तरुण्यः रमण्यः उल्बण उद्रिक्तो मनोभवभावो रतिरागो यासान्ता अपि अभिरुचितेषु प्रियेषु धैर्य्यमौदासीन्यन्तेनिरे । वपुः स्वाङ्गमर्पितवत्यो यथेष्टकरणाय दत्तवत्योऽपि वामतां वक्रताञ्च तेनिरे । ललितं मनोहरं सुरतं सुरतसम्बन्धि धार्ष्ट्यमप्रगल्भ्यं यासान्तास्तथापि व्रीडितं व्रीडान्तेनिरे इह स्त्रीणां रहसि रागाङ्गार्पणधार्ष्ट्यादिगुणा अप्यागन्तुकतया सहजधैर्य्यवक्रताव्रीडितैः पुनः पुनः प्रतिबध्यन्त एवेति भावः । अत्र रागादीनां धैर्य्यादिभिः सह समावेशविरोधस्य सहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासोऽलङ्कारः धैर्य्यादिगुणसमुच्चयात्समुच्चयालङ्कारश्चेति सङ्करः ॥ ६८ ॥

पाणीति । मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः । करभ इव ऊरू यस्याः सा करभोरूः स्त्री । ऊरूत्तरपदादौपम्ये इत्यूङ्प्रत्ययः । अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा कामिनः पाणिरोधं नीविमोचने व्यापृतस्य प्रियपाणेर्निवारणं कुरुते स्म । तथा मधुरं मनोहरं स्मितङ्गर्भे अन्तर्वर्त्ति यासु ता मन्दहासमिश्राः भर्त्सनास्तर्जनाश्च कुरुते स्म । तथा सुखेऽपि अधरपीडनादौ सुखातिरेके सत्यपि हारि मनोहारि शुष्करुदितमनश्रुका-

वारणार्थपदगद्गदवाचा-
मीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म सुदृशामनुकूल-
प्रातिकूलिकतयैव युवानः ॥ ७० ॥

अन्यकालपरिहार्यमजस्र-
स्तद् द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभि-
र्निर्दयत्वमितरैरबलासु ॥ ७१ ॥

दनादेः कलितरोदनञ्च कुरुते स्म । स्त्रीणामेष स्वभावो यदिष्टमप्य-निष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इत्यर्थः । अत सुखेऽपि दुःखवदुपचारात् कुट्टमिताख्योऽनुभावो द्रष्टव्यः । केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुप्येद्यत्र कुट्टमितं हि तदिति लक्षणात् ॥ ६९ ॥

वारणार्थेति । ईर्ष्यया अतिपीडनासहिष्णुतया अपत्रपया च रहस्यप्रकाशनवैलक्ष्येण च मुहुर्वारणार्थपदेषु मामेत्यादिनिषेधवाच-कशब्दप्रयोगेषु गद्गदवाचां स्खलद्गिरां सुदृशामतिकूलं वर्त्तन्त इति प्रातिकूलिकाः प्रातिकूलचारिणः । तत् प्रत्यनुपूर्वमीपलोमकूलमिति ठक् । तत्तया प्रातिकूलिकतयैव प्रतिकूलाचरणेनैव युवानोऽनुकूल-मिष्टं कुर्वते स्म कलितनिर्वाणाद्यत् प्रतिकूलमिवाचरतमधरपी-डनादिकन्तासामिष्टत्वादनुकूलमेवेति प्रतिकूलाचरणेनानुकूलम्म-वतीत्यर्थः । अतएव प्रतिकूलमप्यनुकूलमिति विरोधाभासोऽल-ङ्कारः ॥ ७० ॥

अन्येति । अजस्रान्नित्यम् अन्यकालपरिहार्य्यं । सुरतेतरकाले त्याज्यन्तद् द्वयं कर्म्म द्वयेन कर्त्रा विदधे विहितमेव । धाञः कर्म्मणि लिट् । एतदेव व्यनक्ति, रहसि ताभिरबलाभिर्भर्तृषु विषये धृष्टता विदधे इतरैर्भर्तृभिरबलासु स्त्रीषु निर्दयत्वञ्च विदधे । अन्यदा यया

बाहुपीडनकचग्रहणाभ्या-
माहतेन नखदन्तनिपातैः ।
बोधितस्तनुशयस्तरुणीना-
मुन्मिमील विशदं विषमेषुः ॥ ७२ ॥

कान्तया सपदि कोऽप्युपगूढः
प्रौढपाणिरपनेतुमिवैव ।
संहतस्तनतिरस्कृतदृष्टि-
र्भ्रष्टमेव न दुकूलमपश्यत् ॥ ७३ ॥

पुंसां स्त्रीषु दया तासान्त्वप्रागल्भ्यमलङ्कारस्तद्वत् सुरतेषु तद्विपर्यय-मेवालङ्कार इति भावः । अत्र स्त्रीपुंसयोर्निर्दयत्वयोः प्रकृतयो-र्विधानक्रियायौगपद्यं गम्यत इति तुल्ययोगिताभेदः ॥ ७१ ॥

बाह्विति । तरुणीनान्तनौ शेते इति तनुशयः तनुषु शयः । अधिकरणे शेतेरित्यच्प्रत्ययः । विषमेषुः कामः बाहुपीडनं निर्दया-श्लेषः । कचग्रहणं केशकर्षणन्ताभ्यामाहतेन मुष्टिघातेन । नपुंसके भावे क्तः । नखानान्दन्तानाञ्च निपातैः क्षतैश्च बोधितः सन् विशदं निर्व्याजं यथा तथा उन्मिमील उद्बुद्धः सर्वमेतत् कामस्योद्दीपक-मासीदित्यर्थः । अत्र प्रकृतविषमेषुविशेषणसामर्थ्यादप्रस्तुतसुप्तप्रबुद्ध-पुरुषप्रतीतेः समासोक्तिरलङ्कारः । एवमेव प्रबोध्यते खलु निद्रालु-रित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः ॥ ७२ ॥

कान्तयेति । कान्तया सपदि वस्त्राकर्षणक्षण एवोपगूढ आश्लिष्टः कोऽपि युवा कामी प्रौढपाणिर्व्यग्रहस्तः सन् अपनेतुन्दुकूलमाक्रष्टु-मिवैव संहताभ्यां निरन्तराश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टिस्तिरो-हिताक्षः सन् भ्रष्टमेव प्रागेव स्खलन्दुकूलं नापश्यत् । अत्र दृष्टितिर-स्कारस्य विशेषणगत्या अदर्शनहेतुकत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् । तच्च दृष्टेः स्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति

आहतं कुचतटेन तरुण्याः
साधु सोढमसुनेति पपात।
त्रुट्यतः प्रियतमोरसि हारात्
पुष्पवृष्टिरिव मौक्तिकवृष्टिः॥ ७४॥

सीत्कृतानि मणितं करुणोक्तिः
स्निग्धमुक्तमलमर्थवचांसि।
हासभूषणरवाश्च रमण्याः
कामसूत्रपदतामुपजग्मुः॥ ७५॥

उद्धतैर्निभृतमेकमनेकै-
श्छेदवन्मृदुगतागतमविरामः।

बन्धुरः। तेन च कुचयोर्लोकोत्तरसौन्दर्यं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः॥ ७३॥

आहतमिति। तरुण्याः सम्बन्धिना कुचतटेनाहतमाहतिरसुना भरसा साधु सोढमिति हेतोस्त्रुट्यतः शौर्यं लाघवाद्धारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपात इत्युत्प्रेक्षा। विक्रान्तः पूज्यते पुष्पवृष्ट्येति प्रसिद्धिः॥ ७४॥

सीत्कृतानीति। तरुण्याः सीत्कृतानि सीत्काराः। दन्तनिष्पीडनायां सीरिति शब्दप्रयोगः। मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः। मणितं रतिकूजितमित्यभिधानात्। करुणोक्तिः नायकेत्यादिदीनोक्तिः। स्निग्धं स्नेहार्द्रमुक्तमुक्तिः त्वं मे प्राणा इति प्रियवाद इत्यर्थः। अलमर्थानि निषेधार्थानि वचांसि मा मेत्यादिनिवारणवचनानि। हासानां भूषणानां च रवाः स्वनाश्च कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदताम्व्यत इति पदमर्थः प्रमेयलक्षणमिति यावत्तत्तामुपजग्मुः इति गम्योत्प्रेक्षा। यद्वा कामेनैव कृतं सूत्रं तस्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव॥ ७५॥

श्रूयते स्म मणितङ्कलकाञ्ची-
नूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥
ईदृशस्य भवतः कथमेत-
ल्लाघवम्मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्वीं
काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७ ॥
प्राप्यते स्म गतचित्रकचित्रै-
श्चित्रमार्द्रनखलक्ष्म कपोलैः ।
दध्रिरेऽथ रभसच्युतपुष्पाः
स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ ७८ ॥

उच्चैरिति । निभृतमनुच्चं सूक्ष्ममित्यर्थः । एकमेकाकि छेदवत् विच्छेदयुक्तम् । सगद्गदं मणितं रतिकूजितम् उच्चैः स्थुलैरनेकैर्वल्गुभिरविरामैरविच्छेदैः कलैरव्यक्तमधुरैः काञ्चीनां नूपुराणाञ्च ध्वनिभिरक्षतमतिरस्कृतमेव श्रूयते स्म श्रुतम् । मणितस्य तिरोधायकयत्नान्तरसद्भावेऽपि तद्रूपानापत्तेरतद्गुणालङ्कारः । सङ्गते चेदतद्रूपस्वीकारः स्यादतद्गुण इति लक्षणात् ॥ ७६ ॥

ईदृशस्येति । रतेषु उर्व्यां क्षिप्तं रतिसम्भ्रमात्पतितम् आयतन्दीर्घीभूतङ्काञ्चिदाम रसनागुणः कर्तृ ईदृशस्येति काञ्चिदाम्नः स्वायामदृष्टान्तेन जघनपरिमाणप्रदर्शनेन इत्थं महत्तरस्यातिमहतस्तव जघनस्य रतेषूपरिसुरतेषु मुहुः कथमेतल्लाघवं मुहुरुत्पतनपाटवं यस्येत्थमायतमहत्स्वैकवेष्टनपर्याप्तमिति भावः । इति जघनस्य महत्त्वदर्शनादिव इत्थं विस्मितस्येति शेषः । गम्यमानार्थत्वादप्रयोगः । अतोऽत्युर्व्यामायतत्वनिमित्तकाञ्चीदामकर्तृकं विस्मयपूर्वकजघनमहत्त्वदर्शनमुत्प्रेक्ष्यते ॥७७॥

प्राप्यत इति । गतानि विमर्दात् प्रमृष्टानि चित्रकचित्राणि तमालपत्ररचनानि येषान्तैः कपोलैः आर्द्रं यन्नखलक्ष्म तदेव चित्रमिति रूपकम्प्राप्यते स्म प्राप्तम् । किञ्च रभसेन रतिसम्भ्रमेण च्युतपुष्पाः

यद्यदेव रुरुचे रुचिरेभ्यः
सुभ्रुवो रहसि तत्तदकुर्वन् ।
आनुकूलिकतया हि नराणा-
माक्षिपन्ति हृदयानि तरुण्यः ॥ ७९ ॥
प्राप्य मन्मथरसादतिभूमि-
न्दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाट-
श्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥
सङ्गताभिरुचितैश्चलितापि

अलकान्तापघूर्णकुन्तलान्यपि स्वेदबिन्दुनेव कुसुमानीति रूपकं दध्रिरे दधुः । धरतेर्भौवादिकाल्लिटि जित्वादात्मनेपदम् । स्वेदोऽत्र श्रमानुभवः । श्रमः स्वेदोऽध्वरत्यादेः श्वासखेदातिभूमिकृत् ॥ ७८ ॥

यद्यदेवेति । रुचिरेभ्यो रमणेभ्यो यद्यदेव चेष्टितं रुरुचे रोचते स्म प्रियमभूदित्यर्थः । रुच दीप्तावभिप्रीतौ चेति धातोर्लिट् । रुच्यर्थानां प्रीयमाण इति सम्प्रदानत्वम् । सुभ्रुवो रहसि तत्तदकुर्वन् । तथाहि, तरुण्यः अनुकूलं वर्त्तन्त इत्यानुकूलिकाः । तदस्यत्यनुपूर्वसीपपलोमकूलमिति ठक् । तासाम्भावस्तत्ता तया आनुकूलिकतया अनुकूलवर्त्तितयैव नराणां पुंसां हृदयान्याक्षिपन्त्या वर्जयन्तीत्यर्थान्तरन्यासः ॥ ७९ ॥

प्राप्येति । दुर्वहः स्तनभरो यासान्ता एतेनोपरिसुरतं व्यज्यते । अन्यथा विशेषणवैयर्थ्यात् । असिता आयताश्च केशा यासान्ता असितायतकेश्यः स्त्रियः । स्वाङ्गाच्चेत्यादिना ङीप् । मन्मथरसात् स्मररागात् सुरतस्यातिभूमिम्परां काष्ठाम्प्राप्येत्यर्थः । श्रमजलेन स्वेदाम्बुना आर्द्रे ललाटे श्लिष्टाः केशा यस्मिन् कर्मणि तद्यथा तथा शश्रमुः इति सानुभावस्य श्रमभावोक्तिः भावनिबन्धनात् प्रेयोऽलङ्कारः ॥ ८० ॥

प्रागमुच्यत चिरेण सखीव ।
भूय एव समगंस्त रतान्ते
ह्री बधूभिरसहा विरहस्य ॥ ८१ ॥
प्रेक्षणीयकमिव क्षणमासन्
ह्रीविभङ्गुरविलोचनपाताः ।
संभ्रमद्रुतगृहीतदुकूल-
च्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥
अप्रभूतमतनीयसि तन्वी
काञ्चिधाम्नि पिहितैकतरोरु ।

अथ सुरतावसानं वर्णयति । सङ्गताभिरिति । उचितैः परि-चितैः प्रियतमैः सह सङ्गताभिर्वधूभिः प्राक् सुरतादौ चलिता गन्तुं प्रचलितापि ह्री सखीव चिरेणामुच्यत मुक्ता । न सहत इत्यसहा । पचाद्यजन्तेन नञ्समासः । विरहस्यासहा विरहमसहमाना सखी-त्यर्थः । कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । रतान्ते भूय एव वधूभिः समगंस्त सङ्गता सखीवेत्येव । सम्पूर्वाद्गमेर्लुङ् समोगम्यृच्छिभ्यामित्या-त्मनेपदं वा गमः इति सिचः परत्वे कित्त्वाभावादनुदात्तोपदेशेत्यादिना-नुनासिकलोपो न । सुरतेतरकाले स्त्रीणां लज्जैव भूषणमिति भावः । उपमालङ्कारः ॥ ८१ ॥

प्रेक्षणीयकमिति । ह्रिया विभङ्गुराः स्खलिता विलोचनपाता दृष्टिपाता येषु ते संभ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते सुरतान्ताः सुरतावसानानि क्षणं प्रेक्ष-णीयकं दृश्यमिवासन् इत्युपमा । नाटकादिरूपकेष्वाहार्यकं वस्तु तद्दृश्यं प्रेक्षणीयकमिति चोच्यते इच्छाविर्भावतिरोधानादिना वस्तु-त्वतम् ॥ ८२ ॥

अप्रभूतमिति । तन्वी कृशाङ्गी अभीष्टतमेन प्रेयसा क्रान्तपल्लवं गृहीताञ्चलम् अतएवातनीयसि काञ्चिधाम्नि जघने अप्रभूतच्छाद-

क्षौममाकुलकरा विचकर्ष
क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥

स्पष्टचन्दनविशेषकभक्ति-
भ्रंष्टभूषणकदर्थितमाल्यः।
सापराध इव मण्डनमासी-
दात्मनैव सुदृशामुपभोगः ॥ ८४ ॥

योषितः पतितकाञ्चनकाञ्ची
मोहनातिरभसेन नितम्बे।
मेखलेव परितः स्म विचित्रा
राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥

यितम् अपर्याप्तम् अतएव पिहितम्छादित एकतर एकोरुर्येन तत् क्षौमन्दुकूलम् आकुलकरा व्यग्रपाणिः सती विचकर्ष छतृत्नापिधानार्थ-दाचकर्ष। लज्जानुभावोऽयम्। अत्र क्षौमविशेषणानामाकर्षण-हेतुत्वात् पदार्थहेतुकञ्च व्यञ्जिन्नलङ्कारः॥ ८३ ॥

स्पष्टेति। स्पष्टा प्रकृष्टा चन्दनानां विशेषकाणान्तमालपत्रा-णाञ्च भक्तीरचना येन सः। तमालपत्रतिलकचित्रकाणि विशेषक-इत्यमरः। भ्रष्टानि भूषणानि यस्मिन् स भ्रष्टभूषणः कुत्सितोऽर्थः कदर्थः। लोकतो विशेष्यलिङ्गत्वम्। कोः कत्तत्पुरुषेऽचीति कुश-ब्दस्य कदादेशः। कदर्थानि कृतानि कदर्थितानि दूषितानि माल्यानि येन सः। ततस्त्रयोर्वैयधिकरविशेष्यविशेषणभावाद्विशेषणसमासः। एवम्भूत उपभोगः सापराध इव पूर्वमण्डनापहारात् कृतापराध इव सुदृशामात्मनैव स्वयमेव। प्रकृत्यादित्वात् तृतीया। मण्डन-मासीत्। प्रतिनिधिकारणेन सापराधनिरासार्थमिवेत्युत्प्रेक्षा। स्त्रीणां सम्भोग एव मण्डनन्तदभावे मण्डनान्तरस्याप्यमण्डनत्वादिति भावः॥ ८४ ॥

योषित इति। मोहनातिरभसेन सुरतसम्भ्रमेण पतिता

भातु नाम सुदृशां दशनाङ्कः
पाटलो धवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः
सम्मुखोऽपि परभागमवाप ॥ ८६ ॥

सुभ्रुवामधिपयोधरपीठं
पीडनैस्त्रुटितवत्यपि पत्युः ।
मुक्तमौक्तिकलघुर्गुणशेषा
हारयष्टिरभवद् गुरुरेव ॥ ८७ ॥

विश्रमार्थमुपगूढमजस्रं
यत्प्रियैः प्रथमरत्यवसाने ।

काञ्चनी काञ्चनस्य विकारा काञ्चिर्यासाचासिन्निर्मेखले योषितो नितम्बे परितः सर्वतो विचित्रा विविधरचना नवनखक्षतलक्ष्मीर्मेखलेव राजते स्म । उत्प्रेक्षालङ्कारः ॥ ८५ ॥

भात्विति । सुदृशां सम्बन्धी पाटलोऽरुणो दशनाङ्को दन्तक्षतं धवलगण्डतलेषु कपोलेषु भातु नाम वैवर्ण्यादिभेदेन प्रकाशतां नामेत्यङ्गीकारे । दन्तवाससि अधरे तु समानगुणश्रीस्तुल्यवर्णोऽपि तथा सम्मुखोऽपि सन् परभागं गुणोत्कर्षं तथा पश्चाद्भागञ्चावाप इति सावर्ण्यवैवर्ण्ययोः सम्मुखपराङ्मुखत्वयोश्च विरोधः उपरिभागमला-भेत्युभयत्र परिहाराद्विरोधाभासद्वयसंसृष्टिः तत्राद्यः श्लेषभित्तिका-भेदाध्यवसायमूलत्वाद्गुणोत्थापित इति सङ्करः ॥ ८६ ॥

सुभ्रुवामिति । सुभ्रुवां पयोधरपीठके कुचतटे अधिपयोधर-पीठम् । विभक्त्यर्थेऽव्ययीभावः । पत्युः पीडनैः परिरम्भादिवि-मर्दैस्त्रुटितवती छेदं गतापि । अतएव मुक्तमौक्तिका सा च सा लघुश्च अतएव गुणशेषा सूत्रमात्रशेषापि हारयष्टिर्गुरुः श्लाघ्यैवा-भवत् । लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥ ८७ ॥

विश्रमेति । योषितां प्रथमरत्यवसाने विश्रमार्थं श्रमापनोदार्थम् ।

योषितामुदितमन्मथमादौ
तद् द्वितीयसुरतस्य बभूव ॥ ८८ ॥
आस्तृतेऽभिनवपल्लवपुष्पै-
रप्यनारतरताभिरताभ्यः ।
दीयते स्म शयितुं शयनीये
न क्षणः क्षणदयापि वधूभ्यः ॥ ८९ ॥
योषितामतितरान्नखलून-
ङ्गात्रमुज्ज्वलतया न खलूनम् ।

आस्यतेर्घञ्प्रत्ययः, नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्ध्यभावः। अजस्रश्लिष्यैरुपगूढम् उपगूहनम्। नपुंसके भावे क्तः, न लोकेत्यादिना षष्ठीप्रतिषेधः। उदितमन्मथमुत्पादितकामम् अतएव तदुपगूहनं द्वितीयसुरतस्यादौ बभूव। श्रमापनोदनन्मथोद्बोधाभ्याम् उभयोपयोगादुभयार्थमभूत् संयोगपृथक्त्वन्यायादित्यर्थः। अत्र सत्यपि न उपगूढस्यैकस्य पूर्वोत्तरसुरतशेषत्वेन विशेषणगत्या विश्रमार्थोदित-मन्मथपदार्थयोर्हेतुत्वात् काव्यलिङ्गद्वयन्तदङ्गाभावेन सङ्कीर्यते ॥ ८८॥

आस्तृत इति। अनारतमश्रान्तं रते सुरते अभिरताभ्य आसक्ताभ्यो वधूभ्यः क्षणमुत्सवसुखन्ददातीति क्षणदा रात्रिस्तयापि अभिनवैः पल्लवैः पुष्पैश्चास्तृते आच्छादितेऽपि सुखशयनार्हेऽपीत्यर्थः। शेतेऽस्मिन्निति शयनीये तल्पे। कृत्यल्युटो बहुलमित्यधिकरणेऽनीयर्। शयितुं शयनं कर्तुं क्षणोऽल्पकालोऽपि न दीयते स्म न दत्तः किन्त्वा-प्रभातमरमयत् क्षणदात्वादेवेति भावः। क्षणदयापि क्षणो न दत्त इति विरोधस्योत्सवार्थत्वेन परिहाराद्विरोधाभासोऽलङ्कारः। निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः॥ ८९ ॥

योषितामिति। नखलूनं न खलु ऊनं नयत् ऊनां न यदूनाम् इति पदच्छेदः। अतितरामतिमात्रम्। अव्ययादाम्प्रत्ययः। नखैर्लूनं

क्षोभमाशु हृदयन्नयदूनां
रागवृद्धिमकरोन्न यदूनाम् ॥ ९० ॥

इति मदमदनाभ्यां रागिणः स्पष्टरागा-
ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ।
अभजत परिवृत्तिं साथ पर्यस्तहस्ता
रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥ ९१ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सुरतवर्णनो
नाम दशमः सर्गः समाप्तः ॥ १० ॥

क्षतं नखलूनम् । ल्वादिभ्यश्चेति निष्ठानत्वम् । तथाप्युज्ज्वलतया औज्ज्व-ल्येन न ऊनं न न्यूनं किन्तु समग्रमेवेत्यर्थः । नखक्षतानां कामिनी-गात्रमण्डनत्वादिति भावः । अतएवाशु हृदयं प्रियचित्तं क्षोभं वि-कारं नयत् प्रापयत् । नयतेर्लटः शत्रादेशः । योषिताङ्गानां यदूनां यादवानां रागवृद्धिम् ऊनां न्यूनां नाकरोत् खलु किन्तु भूयोऽपि समग्रमेवाकरोदित्यर्थः । अत्र यमकशब्दालङ्कारः औज्ज्वल्यस्य विशे-षणगत्या रागवृद्धिहेतुत्वात् काव्यलिङ्गमर्थालङ्कारः ॥ ९० ॥

इतीति । इतीत्थं मदमदनाभ्यां स्पष्टरागान् सर्वदा रागित्वेऽपि तदा ताभ्यामपि व्यञ्जितरागानित्यर्थः अनवरतरतश्रीसङ्गिनः अवि-च्छिन्नसुरतसम्पत्सम्पटान् तान् रागिणो रागवन्तः रागिण्यश्च तान् रागिणः । पुमान् स्त्रियेत्येकशेषः । अवेक्ष्य अयानेक्षणानन्तरं पर्यस्तः परिवृत्तो हस्तो नक्षत्रविशेषः करश्च यस्याः सा । हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपीत्युभयत्रापि विश्वः । अवनतेन्दुः अस्तचन्द्रा अतएव सा रजनिर्लज्जया पारस्यचेष्टादर्शनजनितयेति भावः अधोमुखी नम्रमुखीवेत्युत्प्रेक्षा । परिवृत्तिं निवृत्त्युन्मुखतामभजत प्रभातप्राया-भूदित्यर्थः । स्त्रियो हि परकीयपारस्यचेष्टादर्शने त्रपावनतमुख्यो हस्तेन दृष्टिमन्तर्धाय द्रागपसरन्तीति भावः अतएवानन्तरसर्गे प्रभात-

# एकादशः सर्गः ।

श्रुतिसमधिकमुच्चैः पञ्चमम्पीडयन्तः
सततमृषभहीनम्भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय ॥ १ ॥

वर्णनाय प्रस्तावः । मालिनीवृत्तमेतत्, लक्षणं तूक्तं वक्ष्यते चोत्तर-सर्गादौ ॥ ९१ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
दशमः सर्गः समाप्तः ॥१०॥

---

अथ प्रस्तुतप्रभातवर्णनं प्रारभते । श्रुतीति । नास्ति काकुर्ये-षान्तेऽत्यकाकुरविकृतध्वनिः । काकुः स्त्रियां विकारो यः शोकभीत्यादि-भिर्ध्वनेरित्यमरः । श्रावयतीति श्रावको दूरध्वनिः । स्निग्धो मधुरः कण्ठः स्वरो येषान्ते अकाकुश्रावकस्निग्धकण्ठाः रक्तकण्ठा इत्यर्थः । मागधा वैतालिकाः श्रुतयो नाम षड्जादिस्वरारम्भकावयवाः शब्दविशेषाः । तदुक्तं, प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रिकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति । ताभिः श्रुतिभिः समधिकं-त्वञ्चलं षड्जविशेषणं पञ्चमविशेषणं वा उभयोरपि तथात्वात् । तदुक्तं, चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रींस्त्रीन्ऋषभधैवताविति । षड्जो मयूरस्य कूजितानुकारी स्वरवि-शेषः । षड्जं मयूरो वदतीति लक्षणात् । तं षड्जं भिन्न एव भिन्नकस्तं कृत्वा भिन्नकीकृत्य तत्कालनिषिद्धस्वरासङ्कीर्णं कृत्वेत्यर्थः । पञ्चमो नाम कोकिलकूजितानुकारी स्वरविशेषः । पिकः कूजति

रतिरभसविलासाभ्यासतान्तन्न याव-
न्नयनयुगममीलत्तावदेवाहतोऽसौ ।
रजनिविरतिशंसी कामिनीनाम्भविष्य-
द्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥

पञ्चममिति लक्षणात् । तम्पञ्चमम्मोड़यन्तः तत्कालनिषेधात्परित्यजन्त इत्यर्थः । सततं वीणादिवाद्ययुक्तम् । ततं वीणादिकं वाद्यमित्यमरः । ऋषभोऽपि वृषभनर्दितानुकारी स्वरभेद एव । गावस्त्वृषभभाषिण इति लक्षणात् । तेन हीनं तस्यापि तत्कालनिषिद्धत्वादित्यर्थः सततम् ऋषभहीनञ्च यथा तथा रात्रेः परिणतिं परिवृत्तिमित्यर्थः इति वक्ष्यमाणप्रकारेणोच्चैर्यथा तथा माधवाय कृष्णाय । क्रियाग्रहणात् सम्प्रदानत्वम् । प्रणिजगदुर्गानेनाचख्युरित्यर्थः । नेर्गदनदेत्यादिना णत्वम् । पञ्चमादिनिषेधे भरतः । प्रभाते सुरते निन्द्य ऋषभः पञ्चमोऽपि च । जनयेत्प्रधनं ज्ञात्वा पञ्चमं पञ्चमोऽपि च । पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः । प्रगे प्रगीतो जनयेद्धनस्य विपर्ययमिति । वृत्त्यनुप्रासोऽलङ्कारः । अस्मिन्सर्गे मालिनी वृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ १ ॥

अथ पूर्वश्लोके इतिशब्दपरामृष्टानपररात्रप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्तानासर्गसमाप्ति वर्णयन्नाह । रतीति । रतिरभसविलासानां सुरतसम्भ्रमलीलानाम् अभ्यासेनावर्त्तनेन तान्तं क्लान्तं नयनयुगं कर्तृ कामिनामिति शेषः । यावन्नामीलन्न मुकुलीभवति तावदेवासौ रजनिविरतिशंसी निशावसानसूचक उच्चैर्मृदङ्गः कामिनीनां भविष्यता उत्तरक्षणभाविना विरहेण विहितः कृतो निद्राभङ्गो यस्मिन् कर्मणि तद्यथा तथा आहतस्ताड़ितः । अत्र विरहशब्देन सामर्थ्यात्तच्चिन्ता लक्ष्यते अन्यथा असतः साम्प्रतिकनिद्राभङ्गहेतुत्वायोगादिति । अत्र रतितान्तत्वरजनिविरतिशंसनयोर्विशेषणगत्या नेत्रनिमीलननिद्राभङ्गहेतुत्वात्पदार्थहेतुके काव्यलिङ्गे ॥२॥

स्फुटतरमुपरिष्टादल्पमूर्त्तेर्ध्रुवस्य
स्फुरति सुरमुनीनाम्मण्डलं व्यस्तमेतत् ।
शकटमिव महीयः शैशवे शार्ङ्गपाणे-
श्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥
प्रहरकमपनीय स्वन्निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥ ४ ॥

स्फुटेति । अल्पमूर्त्तेर्दूरत्वात् सूक्ष्मबिम्बस्य ध्रुवस्यौत्तानपादेः । ध्रुव औत्तानपादिः स्यादित्यमरः । उपरिष्टात् स्फुटतरम् उज्ज्वलतरं व्यस्तमपर्यस्तमेतत् सुरमुनीनां सप्तर्षीणां मण्डलं शार्ङ्गपाणेः केशवस्य कृष्णस्य तवेत्यर्थः शैशवे अचलितस्य चपलस्य चरणकाब्जस्याल्पचरणारविन्दस्य । अल्पे इत्यल्पार्थे कन्प्रत्ययः । प्रेरणया नोदनेनोत्तुङ्गितमुत्तुङ्गीकृतमग्रं यस्य तत् विपर्यासिताग्रमित्यर्थः । महीयो महत्तरं शकटमिव शकटाकारं शकटासुरशरीरमिव स्फुरति दीप्यते । उपमालङ्कारः । पुरा किल बाल्ये कृष्णः शकटरूपधारिणं शकटासुरम्पाद-घातेन पातयामासेति पौराणिकी कथात्रानुसन्धेया ॥ ३ ॥

प्रहरकमिति । स्वं स्वकीयं स्वपाल्यमित्यर्थः प्रहर एव प्रहरको यामः । द्वौ यामप्रहरौ समावित्यमरः । तमपनीय नीत्वा निदिद्रासता निद्रातुमिच्छता । निद्रातेः सन्नन्ताल्लटः शत्रादेशः । केनचिदतीतप्रहरपालेनेत्यर्थः । जागृहि प्रबुध्यस्वेति प्रतिपदम्पदेपदे उच्चैरुपहूतो मनुष्योऽनन्तरयामिको मुहुर्निद्रया अविशदवर्णाम् अस्पष्टाक्षराम् अतएव शून्यशून्यां शून्यप्रकारामनर्थप्रायामित्यर्थः । प्रकारे गुणवचनस्येति द्विर्भावः कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावादवयवसुपो लुक् । गिरमयमहञ्जागर्मीति प्रतिवाचन्ददपि प्रयच्छन्नपि । नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः । अन्तरन्तःकरणे नो बुध्यते

विपुलतरनितम्बाभोगरुद्धे रमण्याः
शयितुमनधिगच्छन् जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चि-
द्गमयति शयनीये शर्वरीं किङ्करोतु ॥ ५ ॥

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-
नुदधिमहति राज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥

न जागर्त्ति । बुध्यतेर्दैवादिकात् कर्त्तरि लट् । अत्राप्रबोधप्रति-वचनदानयोर्विरोधे अपिशब्दः निद्राह्वानाभ्यान्तत्समाधानाद्विरोधा-भासोऽलङ्कारः ॥ ४ ॥

विपुलेति । रमण्या विपुलतरस्य नितम्बस्याभोगेन विस्तारेण रुद्धे आक्रान्ते शयनीये शयितुमवकाशमनधिगच्छन् अलभमानो जीवितेशः प्रेयान् रतिपरिचयेन पुनः पुनः सुरतावृत्त्या नश्यन्ती निवर्त्तमाना निद्राया इयं नैद्री निद्राप्रयुक्ता तन्द्रा आलस्यं यस्य स तथा-भूतः सन् शर्वरीङ्कथञ्चिद्गमयति कृच्छ्रेण नयति किङ्करोतु किमन्यत् कुर्य्यात् । शयनानवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्य दृष्टोधासम्बन्धेऽपि तत्सम्बन्धो-क्तेरतिशयोक्तिरलङ्कारः । तादृशोधस्य विशेषणगत्या शयनावकाशा-नधिगमहेतुत्वात् काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥

क्षणेति । क्षणं शयिताः सुरतश्रमापनोदाय विशुप्ताः विबुद्धाः तदैव प्रबुद्धाः यथाकालं प्रबुद्धत्वादिति भावः क्षणशयितविबुद्धाः । स्नातानुलिप्तवत् पूर्वकालेति समासः । महीपाः कवय इव अपररात्रे रात्रेः पश्चिमयाम इत्यर्थः । पूर्वापरेत्यादिना एकदेशिसमासे समा-सान्तः अच् । रात्राह्नाहाः पुंसीति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादा लब्धबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे एकत्र रागादि-

क्षितितटशयनान्तादुत्थितन्दानपङ्क-
प्लुतबहुलशरीरं शाययत्येष भूयः ।
मृदुचलदपरान्तोदीरितान्दूनिनाद-
कुञ्जपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥
द्रुततरकरदक्षाः क्षिप्रवैशाखशैले
दधति दधनि धीरानारवान्वारिणीव ।

मिरपरत्व रसभावादिभिश्चेति भावः । अतएव दुर्विगाह्ये दुष्प्रवेशे राज्ये काव्ये इव काव्यवत् । तत्र तस्येवेति वतिप्रत्ययः । प्रयोगान् सामाद्युपायानुष्ठानानि । अन्यत्रार्थगुणसाधुशब्दगुम्फान् कल्पयन्तस्तर्कयन्तः । ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितमिति स्मरणादिति भावः । गहनं दुष्प्रापमन्यत्र दुर्दर्शमर्थजातं पुरुषार्थजातं त्रिवर्गमित्यर्थः अन्यत्र वाच्यलक्ष्यव्यङ्ग्यरूपमभिधेयजातं चिन्तयन्ति विचारयन्ति । इवशब्दस्योपलक्षणत्वात् काव्यवदिति वतिप्रत्ययेऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा काव्यवदिति तद्धितगता कव्य इति समासगता चेति सङ्कीर्णा ॥ ६ ॥

क्षितीति । क्षितितटं भूतलमेव शयनान्तः शयनस्थानं तस्मादुत्थितं सुप्तोत्थितमित्यर्थः । अतएव दानपङ्कप्लुतबहुलशरीरं मदकर्दमोक्षितमहाकायकुञ्जरपतिमेषः अधिरोहतीत्यधिरोहः आरोहणः । पचाद्यच् । मृदु मन्दं चलता अपरान्तेन पश्चिमपादेनोदीरित उत्पादितोऽन्दूनिनादः शृङ्खलारवो यस्मिन् कर्मणि तद्यथा तथा पक्ष एव पक्षकः पार्श्वः । पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती । तस्य व्यत्ययेन पार्श्वान्तरेणेत्यर्थः । भूयः शाययति शयनङ्कारयति । गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वम् । स्वभावोक्तिरलङ्कारः ॥ ७ ॥

द्रुतेति । द्रुततरकरा अतिलघुहस्तास्ते च ते दक्षाश्च वल्लवा गोपालाः । आभीरः स्यान्महाशूद्रो गोपालो वल्लवस्तथेति वैजयन्ती । विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्डः । वैशाखमन्थ-

अभिनवमिव सुरौघाः सारमुद्धर्तुमेते
कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ ८ ॥

अनुनयमगृहीत्वा व्याजसुप्ता पराची
श्रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री
मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ ९ ॥

गतमनुगतवीणैरेकतां वेणुनादैः
कलमविकलतालं गायकैर्बोधहेतोः ।

मन्थानमन्थानौ मन्थदण्डके इत्यमरः । विशाखाषाढादण् मन्थदण्डयोरित्यण्प्रत्ययः । वैशाखः शैल इवेत्युपमितसमासः साहचर्यात् चिह्नो वैशाखशैलो यस्मिन् धीरान् गम्भीरानारवान्दधति दधनि दध्नि । विभाषा ङिश्योरिति विकल्पादल्लोपाभावः । वारिधौव सुरौघाः अभिनवमिव सारं नवनीतमुद्धर्तुम् उत्कटमुदधिरिव गुर्वीम् । उपमानानि सामान्यवचनैरिति समासः । तां कलशिं कुम्भीमेते लोडयन्ति मथ्नन्ति । एषापि पूर्ववदपूर्णा वाक्यार्थोपमा वाक्यसमाससङ्कीर्णा च ॥ ८ ॥

अनुनयमिति । अनुनयं प्रियप्रार्थनामगृहीत्वा नाङ्गीकृत्य पराची पराङ्मुखी व्याजेन कपटेन सुप्ता स्त्री । अथ कल्ये प्रभाते । प्रत्यूषोऽहर्मुखं कल्यमित्यमरः । कृकवाकोः कुक्कुटस्य । कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुध इत्यमरः । कृके वचः कश्च इत्यण्प्रत्ययः । तारमुच्चैः श्रुतं कूजितमाकर्ण्य कथमपि गात्रजृम्भणादिव्याजेन परिवृत्ता अभिमुखीभूता निद्रयान्धा किल अजानतीव मुकुलितनयनैव मीलिताक्षी सत्येव प्राणनाथमाश्लिष्यति । एषा कलहान्तरिता ॥ ९ ॥

गतमिति । अनुगतवीणैरनुसृततन्त्रीकैर्वीणासंवादिभिर्वेणुनादैर्वंशस्वरैः एकतामेकरूपताङ्गतं कलमव्यक्तमधुरम् अविकलोऽविसंवादी तालः कांस्यादितालो यस्य तत् बोध एव हेतुस्तस्य बोधहेतोः बोध-

असकृदनवगीतङ्गीतमाकर्णयन्तः
सुखमुकुलितनेत्रा यान्ति निद्रान्नरेन्द्राः ॥ १० ॥
परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्द्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥ ११ ॥
उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा ।

कारणेन बोधनार्थमित्यर्थः । फलस्यापि कारणत्वमिच्छाद्वारा स्वर्गादिवत् फलरागस्य तत्साधनप्रवृत्तिहेतुत्वात् षष्ठी । गायकैर्वैतालिकैरनवगीतमगर्हितम् । अवगीतं तु निर्वादे मुहुर्दृष्टेऽपि गर्हिते इति विश्वः । गीतङ्गीयमानं वस्तु आवृत्तिर्वा गीतशब्दस्य गीतङ्गानं समाकर्णयन्तो नरेन्द्राः सुखेन गानसुखेन मुकुलितनेत्रा निमीलिताक्षाः सन्तः निद्रां यान्ति भजन्ति । इत्यनुप्रासोऽलङ्कारः ॥ १० ॥

परीति । अयमश्वः परिशिथिलितं प्रस्तब्धं कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन् कर्मणि तद्यथा तथा आमीलिताक्षः ऊर्द्ध्वं जानुनी यस्य स ऊर्द्ध्वज्ञुः ऊर्द्ध्वं जानुस्तिष्ठन्नित्यर्थः । ऊर्द्ध्वज्ञुरूर्द्ध्वजानुः स्यादित्यमरः । ऊर्द्ध्वाद्विभाषेति जानुशब्दस्य ज्ञुरादेशः । क्षणं स्वप्नं निद्रामनुभूय उत्तमाश्वलक्षणमेतत् । भूयः पुनरपि पटुतरौ ग्रासग्रहणसमर्थौ चपलौ चञ्चलौ चोष्ठौ यस्य स सन् प्रस्फुरत् प्रोथमस्फुरमाणघोणं यथा तथा । घोणा तु प्रोथमस्त्रियामित्यमरः । अग्रे विकीर्णं क्षिप्तं शष्पं घासम् । शष्पं बालतृणं घास इत्यमरः । रिरसयिषति रचयितुमास्वादयितुमिच्छति । रसयतेः सन्नन्ताल्लट् । स्वभावोक्तिरलङ्कारः । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ॥ ११ ॥

उदयमिति । य इन्दुः मे मम सङ्गतावुदितदीप्तिः प्रवृद्धद्युतिः सन् उदयमुदयगिरिम् ... उदयञ्च याति स इन्दुरेषोऽपरामाशामा-

स्मितरुचिरिव सद्यः साभ्यसूयम्प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ १२ ॥

चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदन्तरुण्यः ॥ १३ ॥

कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चि-
न्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम् ।

शाम्पराङ्गनाश्च गत्वा पतति अस्तमेति पातित्यञ्च गच्छति न वरमनर्ह-मित्यर्थः । इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राची सैवा-ङ्गना पूर्वनायिका च गम्यते तस्याः स्मितरुचिर्मन्दहासकान्तिरिवैषा प्रभा विशदं निर्मलं स्फुरति प्रकाशते प्राच्यामीषद्विशदा प्रभा प्रादुर-भूदित्यर्थः । अत्र प्राचीगतप्राभातिकप्रभायामिन्दोः वराङ्गनासङ्गपा-तित्वनिमित्ता चेतनधर्मस्मितरुचित्वोत्प्रेक्षा पूर्वकाष्ठाङ्गनाया इति रूढ़ि-व्यूढेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

चिरेति । चरममपि शयित्वा पश्चात् सुप्तापि पूर्वमेव प्रबुद्धाः । सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते । नान्यद्बाधयते चित्ते सा स्त्री ज्ञेया पतिव्रतेति स्मरणादिति भावः । तथापि तरुण्यः अपरि-चलितगात्राः अस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रा-सुखानाम्प्रियाणाम् अशिथिलो गाढ़ो यो भुजचक्रेण परस्परभुज-वलयेनाश्लेषः तस्य भेदं विश्लेषं विस्रंसनं न कुर्वते विन्यस्ता इव स्थिताः अन्यथा तन्निद्राभङ्गः स्यात् । शयानं न प्रबोधयेदिति निषेधाक्रन्दनभयादिति भावः । रतिश्रमोऽत्र सञ्चारो तदनुभावो निद्रा ॥ १३ ॥

कृतेति । हिमरुचिश्चन्द्रः अरुणिम्ना अस्तमयरागेण हेतुना रज्यमानैर्लोहितायमानैः । रञ्जेर्दैवादिकात् कर्तरि शानच् अनिदिता-

हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ १४ ॥

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥ १५ ॥

मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्थायिनीमाशु लज्जाम् ।

मिति नखोपः । लोहि रज्यति राजति लोहितायति चात्मन इति सद्वर्णः । जरठस्य परिणतस्य कमलकन्दस्य छेदा इव गौराः शुभ्राः । छेदग्रहणम्भावल्यार्थम् । गौरः पीते सितेऽरुणे इति विश्वः । तैर्मयूखैः कुङ्कुमेन किञ्चित्कृतो धवलिमभेदो धावल्यभङ्गो येषान्तैरीषद्रक्तस्वधावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशां प्रेयसीमिवेति भावः । भूषयन् राजते । उपमालङ्कारः ॥ १४ ॥

दधदिति । एकं कुमुदषण्डमानमद्भिर्मुकुलीभवद्भिः पलाशैर्दलैरसकलमङ्गं खण्डितां क्षीयमाणामित्यर्थः श्रियन्दधत् अपरं कमलषण्डमुच्छ्वसद्भिः विकसद्भिः पलाशैरपूर्णां वर्द्धमानां श्रियन्दधत् षट्पदौघेन कलरवं यथा तथा उपगीते उभे अपीत्यर्थः । कुमुदकमलषण्डे कुमुदानां कमलानां च षण्डे कदम्बे । कदम्बे षण्डमस्त्रियामित्यमरः । तुल्यरूपामवस्थान्तः दधाते । अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्यकस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः । अत्रोभयविशेषणानान्तुल्यावस्थाधारणहेतुकत्वात् काव्यलिङ्गम् । तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ॥ १५ ॥

मदेति । सम्प्रति सितकरस्येन्दोः रूपं करजालं कर्तृ उद्गच्छता उद्यता अरुणेन अनूरुणा मदरुचिन्तत्तुल्यां रुचिम् अरुणिमानमित्यर्थः अतएव निदर्शनालङ्कारः । लम्भितस्य प्रापितस्य । अभेदर्थ-

वसनमिव मुखस्य स्रंसते सम्प्रतीदं
सितकरकरजालं वासवाशायुवत्याः ॥ १६ ॥
अविरतरतलीलायासजातश्रमाणा-
मुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम् ।
पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य
ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥ १७ ॥
अनिमिषमविरामा रागिणां सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य ।

स्रात् कर्मणि क्तः, लभेरगवञ्चिटोरिति नुमागमः । अतएव चिराय स्थायिनीं लज्जामाशु त्यजत इव मुखप्रकाशनादियमुत्प्रेक्षा । वासवाशा प्राची तस्या एव युवत्या मुखस्य प्राग्भागस्य नक्तं च वसनमिवाव-गुण्ठनपट इव स्रंसते गलति रक्ताः स्त्रियः पाटलमुखा निर्लज्जा अलवस्त्राश्च भवन्तीति भावः । अत्र मुखस्येति प्राग्भागवदनयोरभेदा-ध्यवसायात् श्लेषमूलातिशयोक्तिः तया पूर्वोक्तनिदर्शनोत्प्रेक्षाभ्यां वासु-रुद्दीता वसनमिवेत्युत्प्रेक्षेति सङ्करः ॥ १६ ॥

अविरतेति । अविरततरलीलायासेनाविच्छिन्नसुरतक्रीडाभयासेन जातश्रमाणामङ्गनानां सम्बन्धिनि निःसहत इति निःसहे अलसे । पचाद्यच् । अङ्गे उपशममुपयान्तं शाम्यन्तं मदन एवाग्निस्तं पुनरुषसि मातरि अन्तरीक्षे श्वयति वर्द्धते इति मातरिश्वा । श्वन्नुक्षन्नित्यादिना औणादिको निपातः । विविक्तैः स्वच्छैरनार्द्रैश्च मालतीनां जातीकुसुमानाम् । सुमना मालती जातिरित्यमरः । रजोभिः परागैः करीषैरिवेति भावः । अवचूर्ण्य अवध्वस्य संयुज्येति भावः । ज्वलयत्युद्दीपयति प्राभातिकमालतीवातस्पर्शात् पुनरुद्बुद्धो मदन इत्यर्थः ॥ १७ ॥

अनिमिषमिति । इदं पुरोवर्त्ति अस्फुटा सूर्यतेजोऽभिभवान्मन्दायमाना आलोकसम्पत् प्रकाशसम्पत्तिर्यस्य तत् अन्यत्र निद्राभिभवाद-सुद्बुद्धविषयावधानशक्तिकं दीपखेदन्दैन्यचिन्तालम् । ज्वालाभासो-

गृहमुदवसितानामस्फुटालोकसम्प-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥
विकचकमलगन्धैरन्धयन्भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥ १९ ॥
लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा

र्नपुंस्यर्चिरित्यमरः । सर्वस्यां रात्राविति सर्वरात्रम् । पूर्वकालेत्यादिना समासः, अहः सर्वैत्यादिना समासान्तः, रात्राह्नाहाः पुंसीति पुंलिङ्गता, अत्यन्तसंयोगे द्वितीया । अविरामाः अविच्छिन्नाः रागिणां कामिनां कलिनीनां च । पुमान् स्त्रियेत्येकशेषः । नवा निधुवनलीलाः सुरतविलासान् । व्यवायो ग्राम्यधर्मश्च रतं निधुवनञ्च स इत्यमरः । कौतुकेन न निक्षिपतीत्यनिमिषं यथा तथा । पचाद्यच्, कुटादित्वाच्च गुणः । अतिवीक्ष्य अतएव सनिद्रम् उदवसितानां गृहाणां सम्बन्धि । गृहगेहोदवसितं वेश्म सद्म निकेतनमित्यमरः । नयनमिवेत्युत्प्रेक्षा । घूर्णते भ्रमति ॥ १८ ॥

विकचेति । प्रमदमदनाभ्यां हर्षमन्मथाभ्यां माद्यन्तीनां यौवनेनोद्दामानां च रामाणां स्त्रीणां रमणरभसखेदेन सुरतसंरम्भश्रमेण यः स्वेदः तस्य छेदे हरणे दक्षो वातः प्रभातमारुतः विकचकमलगन्धैर्भृङ्गमालाः अन्धयन्नन्धाः कुर्वन्मोहयन् । अन्धयतेस्तत् करोतीति ण्यन्ताल्लटः शत्रादेशः । सुरभितः सुरभीकृतो मकरन्दो यस्मिन् कर्मणि तद्यथा तथा मन्दमावाति प्रचलति । अत्र वृत्त्यनुप्रासोऽलङ्कारः । श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधय इति आचार्य्योक्ता दश गुणाः प्रायेणात्र सम्भवन्तीति निपुणैरूह्नेयाः ॥ १९ ॥

लुलितेति । लुलितनयनताराः निद्राकलुषिताक्षिकनीनिकाः

रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः ।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ २० ॥

शिशिरकिरणकान्तं वासरान्तेऽभिसार्य
श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव ।
व्रजति रजनिरेषा तन्मयूखाङ्गरागैः
परिमिलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २१ ॥

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषां जागरित्वा ।

अन्यत्राप्रसन्नताराः । ऋक्षाक्षिमध्ययोस्तारेति विश्वः । वक्त्राणीन्दुबिम्बानीवेत्युपमितसमासः । तिमिरमिवेत्यादिलिङ्गात् अन्यत्र वक्त्राणीवेन्दुबिम्बानि तानि आननानि सुरतप्रभाताभ्यां म्लानानि यासां ताः निद्रया स्वप्नेन मुकुलीभावेन क्लान्तानि नीलोत्पलानि अक्षीणीव नीलोत्पलानीव अक्षीणि यासान्ताः स्रंसिनः केशपाशान् तिमिरमिवान्यत्र तु तानिव तिमिरं दधानाः अतएव रजनय इव स्थिताः । अमूर्वारवध्वो वेश्याः । वारस्त्री गणिका वेश्येत्यमरः । अवनिपतिगृहेभ्यो यान्ति निर्यान्ति । श्लिष्टविशेषणोपमेत्येके श्लेष एवायमुभयविषयः उपमा तु प्रतिभामात्रसारा इत्यन्ये ॥ २० ॥

शिशिरेति । एषा रजनिर्वासरान्ते रात्रौ शिशिरकिरणश्चन्द्रस्तमेव कान्तमभिसार्याभिसृत्य । स्वार्थे णिच् । साम्प्रतं श्वसनैः वतुकालवातैः निःश्वासैश्च सुरभिगन्धिः सुगन्धिः अनिन्द्यैः मनोहरैर्मयूखैरेवाङ्गरागैः परिमिलितं व्याप्तं वासितञ्चाम्बरान्तं नभःप्रान्तं वस्त्रान्तञ्च वहन्ती भजन्ती सत्वरेव व्रजति । अत्रेन्दुतन्मयूखादीनां कान्तत्वाङ्गरागत्वादिरूपणावगमादेकदेशविवर्त्ति रूपकम् ॥ २१ ॥

नवेति । अधिकरुचिरयमिन्दुर्नवकुमुदवनश्रियो विकाशः परिहासश्च स एव केलिस्तस्यां प्रसङ्गादासङ्गादशेषामप्युषां सकलामपि

अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥ २२ ॥

सरभसपरिरम्भारम्भसंरम्भभाजा
यदधिनिशमपास्तं वल्लभेनाङ्गनायाः।
वसनमपि निशान्ते नेष्यते तत्प्रदातुं
रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥

सपदि कुमुदिनीभिर्मीलितं हा क्षपापि
क्षयमगमदपेतास्तारकास्ताः समस्ताः।

रात्रिम्। विभावरी नक्तमुपा शर्वरीति विश्वः। अत्यन्तसंयोगे द्वितीया। जागरित्वा जागरणं कृत्वा शिशयिषुः शयितुमिच्छुरिव। शेतेः सन्नन्तादुप्रत्ययः। हस्तो हस्तो नक्षत्रविशेषः करश्च यस्य स सन् अपरदिशः पश्चिमदिशोऽङ्के समीपे उत्सङ्गे च पाण्डुं पाण्डुवर्णं म्लानं क्लान्तमात्मानं स्वशरीरं मुञ्चति दक्षिणनायकः कयाचित्सह विहृत्य श्रान्तः कस्याश्चिदङ्के शेते तद्वदिति भावः। अत्र प्रहासकेल्यङ्कुरस्रंसनादिव्यवहारादिन्दुकुमुदवनश्रीपश्चिमानां नायकत्वप्रतीतेः समासोक्तिरलङ्कारः। विशेषणसाम्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः सा चोत्प्रेक्षासङ्कीर्णा ॥ २२ ॥

सेति। अधिनिशं निशायाम्। विभक्त्यर्थेऽव्ययीभावः। सरभसः सत्वरः परिरम्भ एवारम्भो व्यापारस्तत्र संरम्भस्तद्भाजा वल्लभेनाङ्गनायाः सर्वाङ्ग यद्वसनम् अपास्तन्तद्वसनं निशान्ते प्रभातेऽपि रथचरणचक्रन्तद्वद्विशालायां श्रोणौ लोलं सतृष्णमीक्षणं यस्य तेन वल्लभेन प्रदातुं नेष्यते। अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात् काव्यलिङ्गम् ॥ २३ ॥

सपदीति। सपदि सद्यः कुमुदिनीभिर्मीलितम्। भावे क्तः। हा हन्त क्षपा रात्रिरपि क्षयमगमत् ताः समस्तास्तारकाः अपेता इति शुचा शोकेन चिन्तयन्निव दयितकलत्रः प्रियभार्यः इन्दुः क्षयमशेषं

इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥

व्रजति विषयमक्ष्णामंशुमाली न यावत्
तिमिरमखिलमस्तन्तावदेवारुणेन ।
परपरिभवि तेजस्तन्वतामाशु कर्त्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २५ ॥

विगततिमिरपङ्कम्पश्यति व्योम यावत्
ध्रुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागता चक्रवाकी ॥ २६ ॥

निःशेषं यथा तथा भ्रष्टशोभं नष्टप्रभमङ्गं वहति कलत्रप्रियस्य युग-पत्सकलकलत्रनाशे महान् शोको भवतीति भावः । अत्रेन्दोः प्रभाव-प्रयुक्ताङ्गकार्श्य शोभाभ्रंशयोर्युगपत्कुमुदिन्यादिसकलकलत्रनाशनिमित्त-हेतुकत्वमुत्प्रेक्ष्यते ॥ २४ ॥

व्रजतीति । अंशुमाली सूर्यः । व्रीह्यादित्वादिनिप्रत्ययः । याव-दक्ष्णां विषयं भूमिं न व्रजति न दृश्यत इत्यर्थः तावदेवारुणेनानूरुणा अखिलन्तिमिरमस्तमपास्तं परेषाम्परिभवि तिरस्कारकम् । निष्टक्षो-त्यादिना इनिप्रत्ययः । तेजः प्रतापन्तन्वतां प्रथयताम् अग्रे सरती-त्यग्रेसरः पुरःसरोऽपि । पुरोऽग्रतोऽग्रेषु सर्त्तेरिति टप्रत्ययः । विप-क्षस्य शत्रोरुच्छेदं कर्त्तुमाशु प्रभवति शक्नोति हि । सामान्येन विशे-षसमर्थनरूपोऽर्थान्तरन्यासः ॥ २५ ॥

विगतेति । विरहेण खिन्नः रथचरणेन चक्रेण समाह्वस्तु-ल्याख्यः तस्यैव समाह्वा समाख्या यस्येति वा रथचरणसमाह्वश्चक्र-वाक इत्यर्थः । कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामक इत्यमरः । तिमिरं पङ्कमिवेत्युपमितसमासः । तद्विगतं यस्मात्तद्व्योम यावत्पश्यति याव-देव पक्षती पक्षमूले । स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षाच्चिरिति

मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्व्यक्तृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ २७ ॥
विलुलितकमलौघः कीर्णवल्लीवितानः
प्रतिवनमवधूताशेषशाखिप्रसूनः ।

तिप्रत्ययः। धुवति उत्पतितुं धुनोति। धू विधूनन इति धातोस्तौ-दादिकत्वादुवङादेशः। तावदेवोत्पतनात् प्रागेव चक्रवाकी चक्रवाकस्य स्त्री। जातेरतः स्त्रीविषयादयोपधादिति ङीप्। औत्सुक्येनोत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात्परभूमेः सकाशादागता एतेनानयोरुन्मनस्कता समस्त्वानुराग इत्युक्तम्। अत्र रागौत्सुक्ययोरसभावयोस्तिर्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वी नामालङ्कारः। रसभावतदाभासप्रशमानां निबन्धने। रसवत्प्रेय ऊर्जस्विसमाहितानीति लक्षणात् ॥ २६ ॥

मुदितेति। प्रदोषे रात्रौ मुदितानि यूनां मनांसि याभिस्ताः मुदितयुवमनस्काः। उरःप्रभृतिभ्यः कप्। कल्पिताः उपभोगाय सम्पादिताः भूषिता वलयवसनादिभिरुपस्कृताश्च उभय्यः उभयविधाः युवतयः पुष्पमालाश्च। उभादुदात्तो नित्यमिति उभस्या अयजादेशः, टिड्ढाणञित्यादिना ङीप्। तुल्यमेवाविशेषं यथा तथा रुचं शोभामदधुर्दधतवत्यः। धाञो लिट्। प्रभाते तूपभोगान्नीरुचो निष्प्रभाः पुष्पमालाः परिमलेन विमर्दगन्धेन रुचिराभिरुपभोगादधिसुरभिभिर्युवतिभिर्व्यक्तृतास्त्यक्ताः अवधीरिताश्च। अत्र पुष्पमालाभ्यो युवतीनां साम्योक्तिपूर्वकविमर्दसहत्वेनाधिक्योक्तेर्व्यतिरेकः ॥ २७ ॥

विलुलितेति। वने वने प्रतिवनम्। यथार्थ्येऽव्ययीभावः। विलुलिताः व्यालोलिताः कमलौघा येन सः कीर्णा विच्छिन्ना वल्लीनां मालत्यादीनां वितानाः विस्ताराः येन सः अवधूतान्यशेषशाखिनां वकुल-

क्वचिदयमनवस्थः स्थास्नुतामेति वायु-
र्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः ।
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ २९ ॥

चम्पकादीनामस्थानानि येन वः तथापि क्वचित् पूर्वोक्तकमलवनादौ कुत्रापि नास्त्यवस्था स्थितिरस्येत्यनवस्थः स्थितिमप्राप्तोऽयं वायुर्वधूनां कुसुमानाञ्च विमर्देन सङ्घर्षेण उद्गन्धिषु उद्गतगन्धेषु । गन्धस्येत्त्वम् । वेश्मान्तरेषु गृहान्तरेषु स्थास्नुतां स्थायित्वमेति पूर्वोक्तसमीतृकह-सौरभलोभादिति भावः । ग्लाजिस्थश्चेति ग्स्नुच्प्रत्ययः, वधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा मधुकुसुमेति पाठः । मधुयुक्तानि कुसु-मानि तेषां विमर्देनेत्यर्थः । अत्र वायोरस्थायित्वेऽपि स्थायित्वस-म्बन्धोक्तेरतिशयोक्तिः । तथा विमर्दगन्धस्य कमलादिगन्धादाधिक्य-रूपव्यतिरेकप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ २८ ॥

नखपदेति । नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु ताभ्यां सन्धिभागेषु कूर्परादिदेहसन्धिस्थानेषु तथा दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावशेषः किञ्चिद्विद्यमानः अतएव लक्ष्यो दृश्यः अङ्गनायाः सम्बन्धी असौ वर्णयति वर्णङ्करोति रञ्जयतीति वर्णकोऽङ्गरागो वाग्वि-हीनो वागिन्द्रियरहितोऽपि सन् रहसि कृतानामपि सुरतविलसि-तानां सुरतचेष्टितानां वर्णयति वक्तीति वर्णको वक्ता व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल्प्रत्ययः । वर्णक्रियायां विस्तारे गुणोक्तौ वर्णनेऽप्यद इति भट्टमल्लः । जातनखक्षतादिष्वेव लग्नत्वेनाङ्गरागोऽन्यत्र स्खलि-तोपाश्चेष्टाविशेषानुमापको जात इत्यर्थः । अत्र वाग्विहीनोऽपि रह-स्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहारा-द्विरोधाभासोऽलङ्कारः ॥ २९ ॥

प्रकटमलिनलक्ष्मा मृष्टपत्त्रावलीकै-
रधिगतरतिशोभैः प्रत्युषः प्रोषितश्रीः ।
उपहसित इवासौ चन्द्रमाः कामिनीना-
म्परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ २० ॥

सकलमपि निकामङ्कामलीलान्यनारी-
रतिरभसविमर्दैर्भिन्नवत्यङ्गरागे ।
इदमतिमहदेवाश्चर्यमाश्चर्यधाम्न-
स्तव खलु मुखरागो यन्न भेदम्प्रयातः ॥ २१ ॥

प्रकटेति । उषसि प्रत्युषः । विभक्त्यर्थेऽव्ययीभावः । यद्वा प्रत्युषः प्रभातम् । उषःप्रत्युषसी अपीत्यमरः । तत्र प्रोषितश्रीर्नष्टशोभः अतएव प्रकटमलिनलक्ष्मा स्पष्टदृष्टकलङ्कोऽसौ चन्द्रमाः मृष्टाः प्रमृष्टाः पत्त्रावल्यः पत्त्रभङ्गा येषान्तैः । नद्यृतश्चेति कप् । तथाप्यधिगता रतिशोभा सम्भोगश्रीर्यैस्तैः परिणताः परिपक्वाः शरकाण्डा बाणाख्यतृणकाण्डिकाः । शरो बाणे बाणतृण इति शब्दार्णवे । तद्वदापाण्डुभिः कामिनीनाङ्गण्डभागैर्गण्डस्थलैरुपहसित इवेत्युत्प्रेक्षा । पाण्डिमगुणनिमित्ता निष्कलङ्काः सकलङ्कं समानमानिनमुपहसन्तीति भावः ॥ २० ॥

अथ काचित् खण्डिता नायिका सागसम्प्रेयांसमात्मरागतत्त्वज्ञमभिरुपालभते । सकलमित्यादि । कामेन लीलाया अन्यनार्याः सपत्न्याः रतिरभसेषु सुरतसम्भ्रमेषु विमर्दैः पीडनैः रज्यतेऽनेनेति रागः अङ्गस्य रागोऽङ्गरागः विलेपनम् अङ्गविकाशस्य तस्मिन्नङ्गरागे सकलमपि निःशेषं यथा तथा निकामम्भिन्नवति विश्लिष्टवति सति आश्चर्यधाम्नः सर्वाद्भुतनिधानस्य तव मुखरागो मुखविकाशो भेदं विश्लेषं न प्रयातः इति यत् इदमेवातिमहदाश्चर्यं खलु सुखसाध्यङ्गत्वेन तद्रागस्याप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकाशाख्ययोरङ्गराग-

प्रकटतरमिमम्मा द्राक्षुरन्या रमण्य:
स्फुटमिति सविशङ्कङ्कान्तया तुल्यवर्णः।
चरणतलसरोजाक्रा न्तसंक्रान्तयासौ
वपुषि नखविलेखो लाक्षया रक्षितस्ते॥ २२॥

तदवितथमवादीर्यन्मम त्वम्प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलन्दधानः।
मदधिवसतिमागाः कामिनाम्मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन॥ २३॥

योरेयात्ताध्यवसायेन विरोधः भेदानन्वसम्बानत्वेनाविरोध इति श्लेष-मूलातिशयोक्त्युत्थापितो विरोधाभासोऽलङ्कारः॥ २१॥

प्रकटेति। किञ्च प्रकटतरमतिस्फुटमिममेनं नखविलेखम् अन्याः रमण्यो निजसपत्न्यः स्फुटम्मा द्राक्षुः न पश्यन्तु। दृशेर्लुङ् न दृश-इति क्सभावपक्षे लिचि वृद्धिः। इति बुद्धा कान्तया सविशङ्कं यथा तथा तुल्यवर्णो लाक्षासमानवर्णः विवर्णस्य दुरपह्नवत्वादिति भावः। असौ ते तव वपुषि नखविलेखो नखव्रणः चरणतलं सरोज-मिवेत्युपमितसमासः आक्रान्तिलिङ्गात्तस्याक्रान्त्या आघातेन संक्रा-न्तया लाक्षया रक्षितो गुप्तः आच्छादित इत्यर्थः हन्त सा तु पापीयसी लाक्षा स्वयमेव सर्वदुष्टत्वपिशुनेति भावः। अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालङ्कारः। सामान्यं गुण-साम्येन यत्र वस्त्वन्तरैकतेति लक्षणात्॥ २२॥

तदिति। किञ्च मम त्वमेव प्रियेति यदवादीरवोचः। वदेर्लुङि वदव्रजेत्यादिना वृद्धिः। तदवितथं सत्यं कुतः यद्यस्मात् प्रियजनेन परिभुक्तं दुकूलन्तदीयमित्यर्थः दधानः धारयन्नित्यर्थः। दधान इत्यत्र वसान इति पाठे वसान आच्छादयन्। वस आच्छादनार्थाल्लटः शानजादेशः। स त्वं मदधिवसतिं मम निवासमागाः प्राप्तः। इणो गा लुङि। युक्तञ्चैतदित्याह। कामिनां मण्डनश्रीर्वल्लभानाम्प्रेयसीना-

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठम्पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम्॥ २४॥
इति कृतवचनायाः कश्चिदभ्येत्य बिभ्य-
द्गलितनयनवारेर्याति पादावनामम्।
करुणमपि समर्थम्मानिनाम्मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु॥ २५॥
कुलकम्।

आलोकनेन सफलत्वं व्रजति हि यदप्रिया चेत् कथमीदृशी मे सम्भावनेति भावः। अर्थान्तरन्यासः॥ २३॥

नवेति। किञ्च नवानि नखपदानि यस्मिन् तदङ्गं वपुरंशुकेन गोपयसि छादयसि। गुपेश्चौरादिकात् स्वार्थे णिच्। दन्तेन दष्टमोष्ठं पुनरोष्ठन्तु पाणिना स्थगयसि छादयसि। स्थगिरपि चौरादिकः। दिशि दिशि प्रतिदिशम्। विभक्त्यर्थेऽव्ययीभावः, अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तः टच्प्रत्ययः। विसर्पन् प्रसर्पन् अपरस्त्रीसङ्गशंसी स्त्र्यन्तरसङ्गसूचकः अन्याप्रभवत्वात्तस्येति भावः। नवः परिमलाख्यो गन्धः परिमलगन्धः। विमर्दोत्थे परिमल इत्यमरः। केन केनोपायेन वरीतुमाच्छादयितुम्। इतो वेति इटो दीर्घः। शक्यः न केनापि शक्य इत्यर्थः। अत्र नखदन्तक्षतयोरङ्गौष्ठच्छादने विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात् काव्यलिङ्गद्वये सजातीयसङ्करः॥ २४॥

इतीति। इति पूर्वोक्तश्लोकचतुष्टयरीत्या कृतवचनायाः कृतोपालम्भायाः गलितनयनवारेरधैर्यान्मुक्ताश्रोः प्रेयस्या इति शेषः कश्चिन्नायको बिभ्यत् त्रस्यन्। नाभ्यस्ताच्छतुरिति नुमभावः। अभ्येत्यागत्य पादयोरवनामनतिं याति प्रणामेन प्रसादयतीत्यर्थः। ननु

मदमदनविकारस्पष्टधार्ष्ट्योदयानां
रतिकलहविकीर्णैर्भूषणैरर्चितेषु ।
विदधति न गृहेषूत्फुल्लपुष्पोपहारं
विफलविनययत्नाः कामिनीनां वयस्याः ॥ २६ ॥
करजदशनचिह्नं नैशमङ्गेऽन्यनारी-
जनितमिति सखीषामीर्ष्यया शङ्कमानाम् ।

कथमीदृक्प्रार्दवन्तयाऽहङ्कारिणस्तस्य रोदनमात्रेण तत्राह । करुण-मिति । तथाहि, विग्रहेषु प्रणयकलहेषु योषिताङ्करुणं दीनमपि रुदितमश्रुमोचनं मानिनामहङ्कारिणां पुंसां मानभेदे अहङ्कारनिरासे समर्थं शक्तमस्त्रं साधनमुदितमुक्तम् । वदेः कर्मणि क्तः, वचिस्वपी-त्यादिना सम्प्रसारणम् । दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः । अर्थान्तरन्यासः । एषा च खण्डिता नायिका । नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे । अन्यासम्भोगचिह्नैस्तु खण्डितेर्ष्या-कषायितेति लक्षणात् । नायकस्तु धृष्टः । व्यक्तागा निर्भयो धृष्ट इति लक्षणात् । नचेह विश्यद्विशेषणविरोधः आगमनकालेऽतिनिर्भीकतया एव लक्षणोपयोगात् अन्यथा वैरं स्यादिति भावः अयञ्च सहृदयः अन्यथा रसाभास इत्याहुः ॥ २५ ॥

मदेति । मदमदनयोर्विकारेण विजृम्भणेन स्पष्टो धार्ष्ट्यस्योदय आविर्भावो यासां तासां कामिनीनां रतिरेव कलहस्तस्मिन् विकीर्णै-रितस्ततो विक्षिप्तैर्भूषणैरर्चितेषु गृहेषु वयस्याः स्निग्धपरिचारिकाः विनीयन्तेऽस्मिन्निति विनयोऽधिकारः तत्र यत्नो विफलो यासान्ताः विफलविनययत्नाः निष्फलस्वाधिकारोद्योगाः सत्यः उत्फुल्लैः पुष्पै-रुपहारं पूजां न विदधति न कुर्वन्ति । अत्र सम्बद्धवस्तुवर्णनादुदा-त्तालङ्कारः । तदुदात्तमवेद्यत्र समृद्धं वस्तु वर्ण्यत इति लक्षणात् । तेन तासामन्येषु आभरणेषु मुक्तवस्त्रमाल्यादिवद्विलासोत्थ-बुद्धिर्ध्वन्यते ॥ २६ ॥

करजेति । विलसनशीलो विलासी । वौ कषलसेत्यादिना घिनुण्-

स्मरसि न खलु दत्तं मत्तयैतत् त्वयैव
स्वियमनुनयतीत्थं व्रीड़मानां विलासी ॥ २७ ॥
कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ २८ ॥
अह्नि जगद पुरस्तात्तस्य मत्ता किलाह-
ञ्चकर च किल चाटु प्रौढयोषिद्वदस्य ।

आश्रयः । अङ्के निजाङ्के निशायामर्थं नैशम् । निशाप्रदोषाभ्यां चेत्यण्प्रत्ययः । करजदशनचिह्नं नखदन्तक्षतम् अन्यनारीजनितं सपत्नीकृतमिति शङ्कमानां विश्वसतीमत एवेर्ष्यया अक्षमया सरोषां स्वियं निजवधूमाह्नया मदमूढ़या त्वयैवैतद्वृत्तमेवं कृतं खलु न स्मरसि नाभिजानासि किमिति काकुः इत्यमनेन प्रकारेण व्रीड़मानां स्वकृत्यप्रत्यभिज्ञानाल्लज्जितां सतीमनुनयति अङ्गीकारयति स्वसौभाग्यख्या-घातो निर्वेदस्य लज्जया व्यज्यते ॥ २७ ॥

कृतेति । कृतो गुरुतरस्य हारस्य छेदो यस्मिन् तत्तथा आलिङ्ग्य परिशिथिलितगात्रे शिथिलीकृताङ्गे पत्यौ भर्त्तरि गन्तुमापृच्छमाने आमन्त्र्यमाणे सति । आङि नुप्रच्छ्योरुपसङ्ख्यानादात्मनेपदं कर्त्तरि लटः शानजादेशः । तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । अबलायाः स्तनयुगं कर्त्तृ विगलिता निःसृता नवमुक्ता नूतनमौक्तिकान्येव स्थूलबाष्पाम्बुबिन्दवो यस्मिन् कर्मणि तत्तथा रोदितीव विरहासहिष्णुतया रोदनं करोतीवेत्युत्प्रेक्षारूपकसङ्कीर्णा । रुदादिभ्यः सार्वधातुके इतीडागमः ॥ २८ ॥

अह्नीति । अह्नि दिवसे अपगतमदया मुग्धवध्वा सखीभ्यो विदितं रात्रौ त्वयेत्थं कृतमिति सखीभिराख्यातमित्यर्थः । रात्रिवृत्तं रात्रौ कृतं स्वचेष्टितमित्यर्थः । मत्ता मदमुग्धा अहं तस्य प्रियस्य पुरस्ता-

विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितम्मुग्धवध्वा ॥ ३९ ॥

अरुणजलजराजीमुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराची ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥ ४० ॥

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्य्युवर्य्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ ४१ ॥

इयं वक्ष्य अनेकाक्षगद किल गदामि स्म किलेति ऐतिह्ये । अतएव परोक्षे लिट्, णलुत्तमो वेति पक्षे णित्वाभावादृव्द्यभावः । च पुनः प्रौढ़योषिता तुल्यम्प्रौढ़योषिद्वदित्युपमा तेन तुल्यमिति वतिप्रत्ययः । अस्य प्रियस्य चाटु प्रियवचनं चकर किल व्यकार्षमहमिव । लिडादि॰ पूर्ववत् गुणो विशेषः । इति विचिन्त्य विमृश्य व्रीडितं लज्जितम् । भावे क्तः । निजकार्य्यप्रकाशेन लज्जात्र सञ्चारी भावः । भावनिब-न्धनात् प्रेयोऽलङ्कारः ॥ ३९ ॥

अरुणेति । अरुणजलजराज्येव रक्तकमलश्रेण्येव मुग्धं सुन्दरं हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा बहुलं मधुपमालाः कज्जलङ्कज्जलमिव मधुपमाला ययोस्ते अक्षिणी इन्दीवरे इव यस्याः सा बहुलमधुपमालाकज्जलेन्दीवराची पत्रिणां पक्षिणां विरावैर्व्याहरन्ती आलपन्ती । व्याहार उक्तिर्लपितमित्यमरः । अचिरजाता सद्योभवा बाला च पूर्वसन्ध्या प्रातःसन्ध्या सुतेव पुत्रीव रजनी मनु॰ पतति अनुधावति जननीमिवेत्यर्थः । इह विरावैर्व्याहरन्तीति व्यधि-करणपरिणामः । तत्सङ्कीर्णेयमुपमा ॥ ४० ॥

प्रतीति । अग्निराहितो यैस्तेषामग्न्याहितानाम् । आहि॰

वाम्न्यादिष्विति निष्ठायाः परनिपातः । प्रतिशरणमतिष्टङ्कम् । शरणं रक्षरक्षित्रोरित्यमरः । अशीर्णज्योतिरवतार्चिरयमग्निराहव-नीयः विधिना यज्ञकर्मण्यजपन् यजुः सामभिरित्यादिशास्त्रोक्तरीत्या विहिता यथायोगमुच्चारिता भिन्नाः स्वरा एकश्रुत्यादयश्चत्वारो येस्तैः । क्षुब्धस्वान्तेत्यादिना रेभ्यशब्दे इति धातोः स्वरे विरिब्ध-शब्दो निष्ठान्तोऽनिट्त्वेन निपातितः । अध्वर्युवर्यैः ऋत्विक्श्रेष्ठैः ऋत्विग्विशेषवाचिना अध्वर्युशब्देन ऋत्विङ्मात्रलक्षणात् । यद्वा अध्वर्युर्वर्यो मुख्यो येषां तैः अध्वर्युप्रमुखैश्चतुर्भिऋत्विग्भिरित्यर्थः । तथाहुः दर्शपौर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विज इति श्रवणात् । दर्श-सायं सत्रत्वेव सान्नाय्यविधानादिति सामधेनीः प्रयोवाजा इत्यादिका अग्निसमिन्धनीर्ऋचोऽधीत्य पठित्वा । ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने इत्यमरः । सामधेनीग्रहणं याज्या पुरोऽनुवाक्या-दिमन्त्रान्तराणामप्युपलक्षणम् । अतो गुरुतरदुरितानामोघस्य ध्वंसो यस्मिन् कर्मणि तद्यथा तथा साधु सम्यक् कृतं देवतोद्देशेन त्यक्तं सन्नीयत इति सान्नाय्यं हविर्विशेषम् ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहिते दधिपयसी इत्यर्थः । पाय्यसान्नाय्य-निकाय्येत्यादिना हविर्विशेषे सम्पूर्वान्नयतेर्ण्यन्तादायादेशोपसर्गदीर्घ-निपातः । उपलीढे आस्वादयति । लिह आस्वादन इति धातोः स्वरितेत्त्वान्नटि तङि टेरेत्वं ढत्वष्टुत्वढलोपदीर्घाः । अत्राग्नेः साक्षा-दोपलेहनस्योत्तरकालभावित्वेऽपि तदुपलक्षितस्य कर्मण उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रयुक्तम् प्रतिप्रागुदयादमानावास्या इति शास्त्रात् तत्कालप्रक्रान्तस्य वर्त्तमानत्वात्तस्यापि वर्त्तमानत व्यपदेशः एतच्चाहिता-ग्नित्वमात्रेण कालविशेषानादरेणोक्तमिति पूर्वोक्तचन्द्रोदयाद्यविरोधः अथवा उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्रं तत्काल-त्वात् सामिधेनीसान्नाय्यशब्दयोर्मन्त्रहविर्मात्रपरत्वमाश्रित्याग्निहोत्र-परत्वेन व्याख्येयम् । तस्याग्निहोत्रस्य यज्ञक्रतोः एक ऋत्विगित्येका-ध्वर्युकत्वे वर्यैरिति बहुवचनं यजमानबहुत्वादुपपद्यत इत्याहुरित्यलं शान्दसगोष्ठीव्यसनेन । वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव ॥ ४१ ॥

प्रकृतजपविधीनामास्यमुद्रश्मिदन्तं
मुहुरपिहितमोष्ठैरक्षरैर्लक्ष्यमन्यैः ।
अनुकृतिमनुवेलङ्घट्टितोद्घट्टितस्य
व्रजति नियमभाजाम्मुग्धमुक्तापुटस्य ॥ ४२ ॥

नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम् ।
जनितभुवनदाहारम्भमम्भांसि दग्ध्वा
ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ ४३ ॥

प्रकृतेति । प्रकृतजपविधीनां प्रक्रान्तजपकर्मणां नियमभाजां तपस्विनां सम्बन्धि ओष्ठे भवैरोष्ठ्यैः । शरीरावयवाद्यदिति यत्प्रत्ययः । अक्षरैर्वर्णैः उपूपध्मानीयैरित्यर्थः । उपूपध्मानीयानामोष्ठाविति शासनात् । मुहुरपिहितमाच्छादितमन्यैरनोष्ठ्यैरक्षरैर्लक्ष्यं दर्शनीयम् अतएवोद्रश्मय उद्गतांशवो दन्ता यस्य तदास्यं मुखम् अनुवेलं प्रतिक्षणं घट्टितोद्घट्टितस्य प्राणित्वान्मुद्रितविघटितस्य । विशेषणसमासः । मुग्धं सुन्दरं यन्मुक्तानां मुक्ताफलानां पुटं कोटिः शुक्तिरिति यावत् तस्यानुकृतिं सास्यं व्रजति । उपमालङ्कारः । एतेन श्लोकद्वयेन बहवः कर्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भगवन्तमनुयन्तीति कथितम् ॥ ४२ ॥

नवेति । कुलिशं पाणौ यस्य स कुलिशपाणिरिन्द्रः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति पाणेः परनिपातः । एतदेवात्र व्यधिकरणबहुव्रीहेश्च ज्ञापकम् । तस्य ककुभि प्राच्यां दिशि नवकनकवत् पिशङ्गं वासराणां विधातुर्दिनकरस्य भासां वितानं करजालं महाब्धेरम्भांसि दग्ध्वा जनितभुवनदाहारम्भं कृतजगद्दाहोद्योगं सदूर्ध्वमब्धेरुपरि ज्वलितमौर्वानलार्चिर्वडवानलज्योतिरिव भातीत्युत्प्रेक्षा ॥ ४२ ॥

विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ ४४ ॥

पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया वाडवाग्नेः ।
यदयमिदमिदानीमङ्गमुद्यन्दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ४५ ॥

अतुहिनरुचिनासौ केवलं नोदयाद्रिः
क्षणमुपरिगतेन क्ष्माभृतः सर्व एव ।

विततेति । विततामिः प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिस्तुल्यरूपैस्तुल्याकारैर्मयूखैः किरणैर्गरीयान् कलश इवाकृष्यमाणः एषोऽर्कः कृतश्चपलः सत्वरो विहङ्गालाप एव कोलाहलः कलकलो याभिस्ताभिः दिग्भिर्जलनिधेः जलमध्यादुत्तार्यते उद्ध्रियते । तरतेर्ण्यन्तात् कर्मणि लट् । यथा कुतश्चित् कूपात् कुम्भः पाशैराकृष्य सकलकलं बहुभिः स्त्रीभिरुद्ध्रियते तद्वदिति भावः । अत्र वरत्रातुल्यरूपैः कलश इवेति चोपमाभ्यां विहङ्गालापकोलाहलेति रूपकेण चोत्थापितार्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा व्यञ्जकाप्रयोगात् प्रतीयमानेति सङ्करः ॥ ४४ ॥

पयसीति । अयञ्च विवस्वान् नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्वाडवाग्नेर्ज्वालया अनिशमतापि तप्तः स्फुटमित्युत्प्रेक्षा । कुतः यदिदानीमुद्यन् इदं ज्वलितः प्रज्वलन् यः खदिरकाष्ठस्याङ्गारस्तद्वद्गौरमरुणमङ्गं दधाति । गौरोऽरुणे सिते पीते इति विश्वः ॥४५॥

अतुहिनेति । क्षणमुपरिगतेन स्थितेनातुहिनरुचिनार्केण केवलमसावुदयाद्रिः पूर्वाद्रिः । उदयः पूर्वपर्वत इत्यमरः । किन्त्वेते सर्वे

नवकरनिकरेण स्पष्टबन्धूकसून-
स्तबकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥
उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ ४७ ॥
क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः
प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम्।

एते क्ष्माभृतः सर्वेऽपि शैलाः क्षणमुपरिगतेनावस्थितेन नवकरनिकरेण स्पष्टैर्विकसितैर्बन्धूकसूनस्तबकैर्बन्धुजीवककुसुमगुच्छैर्विरचितम्। बन्धूको बन्धुजीवक इत्यमरः। शेखरं शिखामाल्यम्। शिखास्वापीड़शेखरा इत्यमरः। बिभ्रतीवेत्युत्प्रेक्षा न केवलमर्कणोदयाद्रिरेव बन्धूकशेखरम्बिभर्त्ति किन्तु तत्करजालेन सर्वेऽपि पर्वतास्तथेत्यर्थः ॥४६॥

उदयेति। एष बाल उदितमात्रः बालश्चासौ सूर्य्यश्च बालसूर्य्यः उदयशिखरिशृङ्गस्य उदयाद्रिशिखरस्य प्राङ्गणेषु रिङ्गन् सञ्चरन् पद्मिनीभिर्नलिनीभिः स्त्रीविशेषैश्च। पद्मिनी स्त्रीविशेषेऽपीति विश्वः। कमलान्येव मुखानि तेषां हासेन विकाशेन हास्येन च सह यस्मिन् कर्म्मणि तद्यथा तथा वीक्षितः सन् वयोभिः पक्षिभिः। वयः पक्षिणि बाल्यादाविति विश्वः। शब्दयन्त्याः शब्दं कुर्वत्याः आगच्छ आगच्छ वत्सेति व्याहरन्त्या इत्यर्थः। शब्दशब्दात्तत्करोतीति ण्यन्ताल्लटः शतरि ङीप्। दिवोऽन्तरिक्षस्य मातुश्चाङ्के समीपे उत्सङ्गे च विततानि प्रसृतानि मृदूनि कराग्राणि किरणाग्राणि हस्ताग्रे च यस्य स सन् हेलया लीलया परिपतति। श्लेषमूलातिशयोक्त्यनुगृहीतरूपकम् ॥४७॥

क्षणमिति। अयं सप्तसप्तिरर्कः क्षणमुपविष्टः क्षितिधरपीठमध्यासीनः क्ष्मातलन्यस्तपादः प्रणामस्वीकाराय भूतलप्रसारिताङ्घ्रिरित्यर्थः। प्रणतिपरं नमस्कारं कुर्वाणं लोकं प्रणामस्वीकारात्सन्तुष्टं

भुवनतलमशेषम्प्रत्यवेक्षिष्यमाणः
क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ४८ ॥
परिणतमदिराभम्भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः ।
रुधिरमिव वहन्त्यो भान्ति बालातपेन
छुरितमुभयरोधोवारितं वारि नद्यः ॥ ४९ ॥
दधति परिपतन्त्यो जालवातायनेभ्य-
स्तरुणतपनभासो मन्दिराभ्यन्तरेषु ।
प्रणयिषु वनितानाम्प्रातरिच्छत्सु गन्तुं
कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ५० ॥

लोकं जनसङ्घाय झटिति प्रवेक्ष्य । झटित्यञ्जसाह्नायेत्यमरः । कृपावलोकेन सम्भाव्याशेषं भुवनतलं लोकस्वरूपं प्रत्यवेक्षिष्यमाणः अनुसन्धास्यमानः क्षितिधरस्य तटं पीठमिव सिंहासनमिव अन्यत्र तटमिव पीठं तस्मादुत्थितः उदयाद्रिमतिक्रान्त इत्यर्थः । यथा कश्चिन्महाराजः सिंहासनोपविष्टः क्षणं प्रणतजनमाहृत्य अथ सकलस्वराष्ट्रप्रत्यवेक्षणाय सहसोत्थाय गच्छति तद्वदित्यर्थः । अत्र प्रकृतार्कविशेषणसाम्यादप्रकृतमहाराजप्रतीतेः समासोक्तिः ॥ ४८ ॥

परिणतेति । नद्यः बालातपेन छुरितं रूषितम् । अतएव परिणतमदिराभं सुपक्वसुरासन्निभम् उभाभ्यां रोधोभ्यां वारितमवरुद्धम् उभयरोधोवारितम् । उभादुदात्तो नित्यमित्यत्र नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्य स्थाने उभयशब्दप्रयोग इत्युक्तं प्राक् । वारि जलं भास्करेण । कस्कादित्वात्सत्वम् । अंशुभिरेव बाणैः सर्वदिक्षु क्षतायाः प्रहृतायाः तिमिरमेव करिघटा गजसङ्घः तस्या रुधिरमिवेत्युत्प्रेक्षा । वहन्त्यो भान्ति ॥ ४९ ॥

दधतीति । जालवातायनेभ्यः गवाक्षविवरेभ्यः मन्दिराणामभ्यन्त-

अधिरजनि वधूभिः पीतमैरेयरिक्तं
कनकचषकमेतद्रोचनालोहितेन ।
उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्त-
र्मधुन इव तथैवापूर्णमद्यापि भाति ॥ ५१ ॥

सितरुचि शयनीये नक्तमेकान्तमुक्तं
दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति ।
निजमिति रतिबन्धोर्जानतीमुत्तरीयं
परिहसति सखी स्त्रीमाददानां दिनादौ ॥ ५२ ॥

येषु परिपतन्त्यरुणतपनभासो बालार्ककिरणाः वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु कुपितेन मदनेन मुक्तानामुत्सृष्टानामग्निज्वलिता-ग्राणां नाराचानां बाणविशेषाणां लीलां शोभां दधति । अत्र लीलेव लीलेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना ॥ ५० ॥

अधीति । अधिरजनि रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । वधूभिः पीतं मैरेयं मद्यं यस्य तत् अतएव रिक्तं पीतमैरेयरिक्तम् एतत् कनकचषकं सुवर्णस्य पानपात्रम् । अवयवषष्ठ्या विकारार्थता । चषकोऽस्त्री पानपात्रमित्यमरः । रोचनालोहितेन गोरोचनारुणेन उदयत उदीयमानस्याहिमरोचिषोऽर्कस्य ज्योतिषा तेजसा अन्तरभ्यन्तरे आक्रान्तं व्याप्तं सत् अद्यापि इदानीमपि तथैव पूर्ववदेव मधुन आपूर्णमिव । सामान्यषष्ठ्या योग्यविशेषपर्यवसाननियमात् षष्ठी शेष इति सम्बन्धसामान्ये षष्ठीकरणस्यापि कारणत्वादिति । भाति शोभते । अनातपाक्रान्ते मधुपूर्णत्वोत्प्रेक्षया आतपे मधुभ्रमात् भ्रान्तिमान् व्यज्यते ॥ ५१ ॥

सितेति । नक्तं रात्रौ शयनीये तल्पे । एकान्तमुक्तमत्यन्तत्यक्तं सितरुचि शुभ्रवर्णम् । किन्तु दिनादौ प्रभाते दिनकरकरसङ्गेनार्कांशु-व्यतिकरेण व्यक्ता कौसुम्भी कुसुम्भस्य रागद्रव्यस्य सम्बन्धिनी कान्तिर्यस्य तत्तथा भासमानं रतिबन्धोः प्रियस्योत्तरीयं निजमात्मीयमिति जान-

स्रुतमिव शिशिरांशोरंशुभिर्यन्निशासु
स्फटिकमयमराजद्राजताद्रिस्थलाभम् ।
अरुणितमकठोरैर्वेश्म काश्मीरजाभः-
स्नपितमिव तदेतद्भानुभिर्भाति भानोः ॥ ५३ ॥

सरसनखपदान्तर्दष्टकेशप्रमोक-
प्रणयिनि विदधाने योषितामुल्लसन्त्यः ।
विदधति दशनानां सीत्कृताविष्कृताना-
मभिनवरविभासः पद्मरागानुकारम् ॥ ५४ ॥

अविरतदयिताङ्गासङ्गसञ्चारितेन
छुरितमभिनवाल्हकान्तिना कुङ्कुमेन ।

वीसु अत एवाददानां स्त्रीं नायिकाम् । यामुनयोरितीयङ्भावपक्षे ध्वनिपूर्वं इति पूर्वरूपम् । सखी परिहसति । अत्र कौतुके कौसुम्भसाम्यादुत्प्रेक्षानिबन्धनाद् भ्रान्तिमदलङ्कारः ॥ ५२ ॥

स्रुतमिति । राजताद्रिस्थलाभं सुधाधवलितत्वात् कैलासतट-सन्निभं यद्वेश्म निशासु शिशिरांशोरिन्दोरंशुभिश्चन्द्रिकाभिः स्रुतं धौतं सत् स्फटिकमयं स्फटिकविकार इवाराजत् रेजे तदेतद्वेश्म भानोः सूर्यस्याकठोरैः कोमलैः भानुभिररुणितमरुणीकृतं सत् काश्मीरदेशे जातं काश्मीरजं कुङ्कुमं तत्खाम्भसा स्नपितं सिक्तमिव भाति । उत्प्रे-क्षयोः संसृष्टिः ॥ ५३ ॥

सरसेति । प्रणयिनि योषितां सरसनखपदानामार्द्रनखक्षताना-मन्तर्मध्ये दष्टानां लग्नानां केशानां शिरोरुहाणां प्रमोकं प्रमोचनं विदधाने सति सीत्कृतैर्व्यथाविर्भूतसीत्कारैराविष्कृतानां दशनाना-मुल्लसन्त्यः वैमल्याद्दन्तेषु प्रतिफलन्त्यः अभिनवरविभासः पद्मरागाणा-मनुकारमनुकरणं विदधति । उपमालङ्कारः रविभासामारुण्यप्रति-पादकाभिनवविशेषणप्रसादलब्ध इति काव्यलिङ्गेन सङ्करः ॥ ५४ ॥

अविरतेति । अविरतेनाविच्छिन्नेन दयितानां प्रेयसासङ्गस

कनकनिकषरेखा कोमलं कामिनीना-
मवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ५५ ॥

सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः
करनयनसहस्रं हेतुमालोकशक्तेः ।
अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं
हरिरिव हरिदश्वः साधु वृत्रं भिनत्ति ॥ ५६ ॥

आसङ्गेन शरीरसम्पर्केण सञ्चारितेन संक्रामितेनाभिनवस्याङ्गरा-गस्येव कान्तिर्यस्य तेन कुङ्कुमेन छुरितं कनकस्य या निकषे निकषो-पले रेखा राजिस्तद्वत् कोमलं मनोहरमित्युपमा । कामिनीनां वपुरा-तपेऽपि अवाप्तच्छायं लब्धवर्णोत्कर्षमेव भवति अतः सुवर्णवर्णस्य ततः कुङ्कुमाङ्कितस्य कामिनीगात्रस्य पुनर्बालातपव्याप्तिरिति महतो वर्णो-त्कर्षसामग्रीति भावः । आतपे छाया नातप इति विरोधाभासे अपिशब्दः । छाया त्वनातपे कान्तावित्यमरः । अत्र संक्रान्तकुङ्कुमच्छु-रितत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षया छायावाप्तिहेतुत्वादुपमा-सङ्कीर्णं काव्यलिङ्गं तदातपेऽप्यवाप्तच्छायमित्यत्र विरोधेन एकवाचका-नुप्रवेशेन सङ्कीर्यते ॥ ५५ ॥

सरसीति । सरसिजातानि सरसिजानि । सप्तम्या जनेर्डः । तत्पुरुषे कृतिबहुलमित्यलुक् । तद्वनस्य कान्तं प्रियम् । अन्यत्र तद्वत् कान्तं रम्यम् आलोकशक्तेर्लोकलोचनानां विषयग्रहणशक्तेर्हेतुम् आ-लोकान्तरसहकृतानामेव तेषां तत्सामर्थ्यात् । अन्यत्र आलोकशक्ते-र्दर्शनव्यापारस्य हेतुं दर्शनसाधनमित्यर्थः । करानयनानीव अन्यत्र करा इव नयनानि तेषां सहस्रं करनयनसहस्रं बिभ्रत् अभ्रान्ते नभोमध्ये वृत्तिर्यस्य सोऽभ्रान्तवृत्तिः अन्यत्राभ्रान्ते मेघे वृत्तिर्यस्य सः मेघवाहन इत्यर्थः । अभ्रमभः खगंवलाहकेष्विति विश्वः । हरितो-ऽश्वा यस्य स हरिदश्वोऽर्कः हरिरिन्द्र इवातिमहिम्ना अतिमहत्तया अवश्यत्यर्थः । लोकमाक्रान्तवन्तं व्याप्तवन्तम् एकत्र प्रत्यक्षादन्यत्र स

अवतमसभिदायै भास्वताभ्युद्गतेन
प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः ।
निरसितुमरिमिच्छोर्ये तदीयाश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ५७ ॥

प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ।
बहिरभिहतमद्रेः संहतङ्कन्दरान्त-
र्गतमपि तिमिरौघङ्घर्मभानुर्भिनत्ति ॥ ५८ ॥

इषुमात्रमिषुमात्रं विष्वग्वर्त्त इमान् लोकानाष्टणोदित्यागमादिवि
ज्ञायः । हलं ध्वान्तं दानवं च लाङ्गं साधु छिनत्ति हन्ति । ध्वान्ता-
रिदानवा हला इत्यमरः । उपमा श्लेषो वा मतभेदात् ॥ ५६ ॥

अवतमसेति । अवतमसन्तिमिरम् । अवसमन्धेभ्यस्तमस इति
समासान्तः । यद्यपि क्षीणेऽवतमसन्तम इत्युक्तं तथापीह विरोधा-
द्विशेषानादरेण सामान्यमेव ग्राह्यन्तस्य भिदायै भेदाय । पिद्भिदा-
दिभ्योऽङ् । अभ्युद्गतेनाभ्युदितेनोद्यतेन च भास्वता सूर्येण दर्शनी-
योऽप्युडुगणोऽसौ प्रसभं बलात् अपास्तः तथाहि, अरिं निरसितु-
मिच्छोर्ये तदीयेनाश्रयेणाश्रयणेन श्रियं सम्पदं शोभाञ्च । शोभा सम्प-
त्तिपद्मासु लक्ष्मीः श्रीरपि गद्यत इति विश्वः । अधिगतवन्तः प्राप्तव-
न्तस्तेऽपि हन्तव्यपक्षे बध्यकोटावेव अरिवदरिपक्षा अपि बध्या
एवेत्यर्थः । उडुगणोऽपि तमसि शोभते अतस्तत्पक्ष इति भावः ।
सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

प्रतीति । घर्मभानुरुष्णांशुः सम्मुखावस्थितायां सान्द्रचन्द्रांशु-
वद्गौर्यां धवलायामित्युपमा । षिद्गौरादिभ्यश्चेति ङीप् । रजत-
कटकमेव भित्तिस्तस्यां करौघे स्वकिरणजाले प्रतिफलति सति अद्रेर्ब-
हिरभिहतं कन्दराणां दरीणाम् अन्तर्गतं संहतं तिमिरौघमपि
भिनत्ति पुरोगतरजतभित्तिप्रतिहतस्य निजतेजसः कन्दरान्तःप्रवेशा-

बह्विरपि विलसन्त्यः काममानिन्यिरे य-
द्दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेषु ।
नियतविषयवृत्तेरप्यनल्पप्रताप-
क्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ५९ ॥
चिरमतिरसलौल्याद्बन्धनं लम्भितानां
पुनरयमुदयाय प्राप्य धाम स्वमेव
दलितदलकपाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ६० ॥

इति भावः । अत्र करौघस्यान्तःसत्त्वस्वाभावेऽपि सत्त्वस्योक्तेरति-शयोक्तिः ॥ ५८ ॥

बह्विरिति । वह्विर्विलसन्त्योऽपि दिवसकररुचोऽर्कभासः अन्तर्गृहेषु गर्भागारेषु कामं यथेष्टं ध्वान्तमन्तं नाशमानिन्यिरे प्रापयामासुरिति यत् । नयतेर्द्विकर्मकात् कर्त्तरि लिट् । सोऽन्तर्गृहध्वान्तनिरासो नियतविषये नियतस्थाने वृत्तिर्यस्य तस्य नियतदेशवर्त्तिनोऽपीत्यर्थः । तृतीयादिष्विति पुंवद्भावः । तेजसोऽनल्पेन प्रतापेन स्वप्रकाशेन स्वप्रभावेनैवेत्यर्थः । प्रतापौ पौरुषातपाविति वैजयन्ती । क्षतसकलविपक्षः निरस्तसमस्तप्रतिपक्षः । स्वभावः तेजस्विनामेष स्वभावो यत्प्रतापेनैव परोच्छेदनमतो युक्तमर्कभासामप्यन्तर्ध्वान्तहरणमित्यर्थः । अत्र समर्थ्यसमर्थकयोः सामान्यविशेषभावादर्थान्तरन्यासः ॥ ५९ ॥

चिरमिति । अयमर्कः पुनर्भूयोऽपि उदयाय स्ववृद्धये स्वं स्वकीयमेव धाम स्थानं तेजो वा प्राप्य अतिरसलौल्यादतिमात्राद्रसेषु च लौल्यादासक्तेः सरोजे चिरं बन्धनं लम्भितानां प्रापितानां षट्पदानां सरभसः सत्वरो दलितं विघट्टितं दलमेव कपाटं येन स सन् गुप्तिस्फोटं बन्धनमोक्षं करोतीवेत्युत्प्रेक्षा । यथा कश्चित् परभ्रष्टः पुनर्बन्ध-

युगपदयुगसप्तिस्तुल्यसङ्ख्यैर्मयूखै-
र्दशशतदलभेदङ्कौतुकेनाशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितामम्बुजान्त-
र्भवनमधिशयानामादरात्पश्यतीव ॥ ६१ ॥
उदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तङ्कान्तिनिर्यासमच्छ-
स्रुतनवजलपाण्डुम्पुण्डरीकोदरेषु ॥ ६२ ॥

पदः पूर्वपदात्सवधूनागत्य स्वयमेव कारकपाटमुद्घाट्य मोचयति तद्व-दिति भावः ॥ ६० ॥

युगपदिति । अयुगा विषमाः सप्तयोऽश्वा यस्य सः अयुगसप्तिः सप्ताश्वोऽर्कः युगशब्दस्य युग्मशब्दस्य च विशेष्यलिङ्गतावगन्तव्या । युगपदेकदैव तुल्यसङ्ख्यैः सहस्रसङ्ख्यैरित्यर्थः मयूखैः करैः दश शतानि येषान्तानि दशशतानि बहूनीत्यर्थः । तेषान्दलानां भेदं विघट्टनं कौतुकेनाशु कृत्वा अलिकुलस्य गीतैर्लालितां सत्कृतां पङ्कजमेवान्त-र्भवनं गर्भगृहम् अधिशयानाम् । अधिशीङ्स्थानां कर्मेति कर्मत्वम् । श्रियमादरात्पश्यतीवेत्युत्प्रेक्षा । कश्चित् कान्तः कान्तामिवैकान्तगता-मिति भावः ॥ ६१ ॥

उदयमिति । अहरादौ प्रभाते रागवानुदयरागवान् पुण्डरीक-श्रेहवांश्चैष उष्णरश्मिरर्कः शशधरं चन्द्रं कराग्रैः रश्म्यग्रैः हस्ता-ग्रैश्च उदयं निर्दयं सद्यो निष्पीड्य अच्छात् मेघात् स्रुतं स्रस्तं नवजल-मिव पाण्डुं शुभ्रङ्कान्तिनिर्यासं लावण्यसारं पुण्डरीकाणां सिताब्जा-नामुदरेष्वभ्यन्तरेषु नितान्तमवकिरतीव विक्षिपतीव । अत्र सूर्योदये चन्द्रस्य कान्तिक्षयात् पुण्डरीकाणान्तत्प्रादुर्भावाच्च सूर्यश्चान्द्रीमेव कान्तिं पुण्डरीकस्नेहात्तेषु सिञ्चतीत्युत्प्रेक्षा । यथा द्विषन्तं प्रपीड्य तदीयं वसुसारं सुहृदे प्रयच्छति तद्वदिति भावः ॥ ६२ ॥

प्रविशति चिराय द्योतिताशेषलोके
दशशतकरमूर्त्तावर्चिषीव द्वितीये ।
सितकरवपुषासौ लक्ष्यते सम्प्रति द्यौ-
र्विगलितकिरणेन व्यङ्गितैकेक्षणेव ॥ ६३ ॥

कुमुदवनमपश्रि श्रीमदम्भोजषण्ड-
म्त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ ६४ ॥

प्रविशतीति । द्योतितः प्रकाशितोऽशेषलोको येन तस्मिन् दश-शतानि येषान्ते दशशतास्ते करा यस्याः सा दशशतकरा सहस्रकरा मूर्त्तिर्यस्य तस्मिन् दशशतकरमूर्त्तौ सूर्य्ये द्वितीयेऽर्चिषि चक्षुषीव चिराय प्रविशति सति सम्प्रत्यसौ द्यौराकाशं स्त्री च गम्यते विग-लितकिरणेन निष्प्रकाशेन सितकरं शुभ्रकिरणं वपुर्यस्य तेन सितकर-वपुषा चन्द्रेण व्यङ्गितं विकलीकृतमेकेक्षणमेकनेत्रं यस्याः सा व्यङ्गि-तैकेक्षणा.काणेव लक्ष्यते । अत्र दिवः काणत्वमुत्प्रेक्ष्यते । तच्च काणत्व-मर्चिष्ट्वेनाध्यवसितेन निष्प्रकाशितेन चन्द्रेणेति । तत्र येनाङ्गविकार इति तृतीया ॥ ६३ ॥

कुमुदेति । कुमुदवनम् अपगता श्रीर्यस्य तदपश्रि विगतशोभम् । गोऽस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम् । अम्भोजषण्डं श्रीमत् शोभा-युक्तम् उलूकः पेचको मुदं त्यजति तस्य दिवान्धत्वादिति भावः । चक्रवाकः प्रीतिमान् रजनीविरहाभावत्वात्तस्येति भावः । अहिमरश्मि-रुष्णांशुरुदयं याति हिमांशुरिन्दुरस्तमदर्शनं याति अस्तमित्यव्ययं कथमेतद्वैपरीत्यमित्याह । हतेति । हतविधिलसितानां दुष्टदैवचेष्टितानां विपाकः परिपाकः तत्तत्प्राणिकर्मानुरूपफलदानप्रकार इति यावत् विचित्रो विविधः न त्वेकविध इत्यर्थः । हीति विस्मये इत्यमरः ।

क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।
द्रुततरमुपयाति स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ६५ ॥

प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ ६६ ॥

विधिविपाकवैचित्र्याज्जगद्वैचित्र्यं युज्यते इति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

क्षणमिति । अतुहिनधाम्नि उष्णांशौ दिशो वध्व इवेत्युपमितसमासः । तासां दिग्वधूनां पाणिं गृह्णातीति पाणिग्राहो निजभर्तुरिव पाणिग्राहवत् । तत्र तस्येवेति तत्रार्थे वतिः । क्षणमोष्य प्रवासं कृत्वा । प्रपूर्वाद्वसधातोः क्त्वा तस्य समासे नञ्पूर्वेऽक्त्वो ल्यप् वचिस्वपीत्यादिना सम्प्रसारणम् । भूयः पुनरपि पुरस्तात् पूर्वस्यां दिशि मार्गे चोपगतवत्यागतवति सति असौ चन्द्र उपपतिर्जार इव । जारस्तूपपतिः समावित्यमरः । स्रंसमानांशुको गलद्रश्मिकः । शैषिकः कप्प्रत्ययः । स्रस्तवस्त्रश्च नीचैर्नम्रः सन् पश्चिमान्तेन पश्चिमदिक्कोणेन केनचिदपरद्वारेण द्रुततरमुपयात्यपसरति, यथा पूर्वद्वारेण निजपतावागते पश्चान्मार्गेणोपपतिरपसरति तद्वदित्यर्थः । उपमालङ्कारः ॥ ६५ ॥

प्रलयमिति । अखिलस्तारालोको लोक इव तारानिचयं तमखिलं तारालोकमह्नाय द्राक् प्रलयं क्षयं नीत्वा अतएव यतो नास्त्यतिशयं सा अनतिशया सर्वातिशायिनी श्रीर्महिमा यस्य सोऽनतिशयश्रीः सानुरागामुदयरागवतीं श्रियं शोभामन्यत्र सानुरागामनुरागवतीं श्रियं रमां च दधानः एष भास्वानेको मधुरिपुर्विष्णुरिव

कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः
क्षयितकुमुदतारकश्रीर्वियोगन्नयन् कामिनः ।
बहुतरगुणदर्शनादभ्युपेताल्पदोषः कृती
तव वरद ! करोतु सुप्रातमह्नामयन्नायकः ॥ ६७ ॥

इतिश्रीमाघकृतौ शिशुपालवधे महाकाव्ये
प्रत्यूषवर्णनो नामैकादशः सर्गः ॥ ११ ॥

रात्रिकल्पावसानं कल्पान्त इव तस्मिन् रात्रिकल्पावसाने गगनं सलिलराशिरिव तद्गगनसलिलराशिमधिशेतेऽधितिष्ठति । अत्र मधुरिपुरिवेति वाक्यगतोपमैव समासगतोपमानां प्रसाधिकेति सर्वत्रोपमितसमासाश्रयणमेवोचितम् ॥ ६६ ॥

कृतेति । कृतसकलजगद्विबोधः कृताखिलजगत्प्रबोधः अवधूतो विक्षिप्तोऽन्धकारस्योदय उज्जृम्भणं येन सोऽवधूतान्धकारोदय इति महागुणोक्तिः । दोषमाह, क्षयिता नाशिता कुमुदानां तारकाणां च श्रीर्येन सः कामिनः स्त्रीपुंसान्वियोगन्नयन् प्रापयन् तथापि बहुतरगुणस्य पूर्वोक्तमहागुणस्य दर्शनादभ्युपेतो लोकैरङ्गीकृतोऽल्पदोषः पूर्वोक्त एव यस्य सः । एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क इति न्यायादिति भावः । अतएव कृती कृतार्थोऽयमह्नान्नायकः प्रभुः सूर्यः, हे वरद ! कामद ! तव सुप्रातं सुप्रभातं करोतु । आशिषि लिङ्लोटावित्याशीरर्थे लोट् । शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रातवानुच्यते । सुप्रातसुश्वेत्यादिवङ्गीहावच्प्रत्ययान्तो निपातितः । अत्र भावप्रधानो निर्देशः तव सुप्रातं सुप्रभातत्वं करोत्वित्यर्थः । महामालिनीवृत्तमेतत्, यदिह न युगलं ततो वेदरेफैर्महामालिनीति लक्षणात् ॥ ६७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
एकादशः सर्गः ॥ ११ ॥

# द्वादशः सर्गः ।

———०॰———

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १ ॥

एवम्प्रभातं वर्णयित्वा भगवतः प्राभातिकप्रस्थानवर्णनाय प्रक्रमते । इत्थम्भूते पूर्वसर्गोक्तविधे इत्यर्थः । प्रगे प्रातःकाले । सायं साये प्रगे प्रातरित्यव्ययेष्वमरः । अथ सूर्योदयानन्तरं रथाश्वेभे निषीदन्तीति रथाश्वेभनिषादिनां रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः । नृपाणां गणः तोरणात् भगवतः बाह्यद्वाराद्बहिः । अपपरिबहिरञ्चवः पञ्चम्येति पञ्चमीसमासविधानात् ज्ञापकात् पञ्चमी । तोरणोऽस्त्री बहिर्द्वारमित्यमरः । प्रस्थानकाले प्रयाणकाले क्षम उचितो वेषः आकल्पः । आकल्पवेषौ नेपथ्यमित्यमरः । तस्य कल्पनया सम्पादनेन कृतः क्षणक्षेपः क्षणविलम्बो येन तमच्युतं हरिमुदैक्षत प्रतीक्षितवानित्यर्थः । अताच्युतविलम्बस्य विशेषणगत्या प्रतीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अस्मिन् सर्गे विषमपादयोर्जागतमिन्द्रवंशावृत्तम् । स्यादिन्द्रवंशा ततजैरसंयुतैरिति लक्षणात् । समपादयोस्तु जागतमववंशस्थं वृत्तम् । जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् । तदेवमुभयमेलनादुपजातिभेदोऽयम् । अतएव त्रिष्टुभिन्द्रवज्रोपेन्द्रवज्रालक्षणानन्तरम् अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इत्युक्तोक्तम् इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्वेव नामैति ॥ १ ॥

स्वच्चं सुपत्रं कनकोज्ज्वलद्युति-
र्ज्जवेन नागान् जितवन्तमुच्चकैः।
आरुह्य तार्क्ष्यं नभसीव भूतले
ययावनुद्घातसुखेन सोऽध्वना॥ २॥

हस्तस्थिताखण्डितचक्रशालिनं
द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया।
सत्यानुरक्तं नरकस्य जिष्णवो
गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः॥ ३॥

स्वच्चमिति। स हरिः शोभनोऽच्चश्चक्रधारणदारुभेदो यस्य तं स्वच्चम्। स्यादच्चश्चक्रधारण इति वैजयन्ती। अन्यत्र शोभनेन्द्रियम्। अथाच्चमिन्द्रिय इत्यमरः। सुपत्रं शोभनं पत्रं वाहनं यस्य तं स्वश्व-मित्यर्थः अन्यत्र सुपक्षम्। पत्रं वाहनपच्चयोरित्यमरः। कनकोज्ज्वल-द्युतिं कनकरचनावन्तम् अन्यत्र कनकवदुज्ज्वलद्युतिं कनकवर्णम्। जवेन नागान् गजान् उरगांश्च जितवन्तं ततोऽधिकवेगमित्यर्थः। अन्यत्र नागान्तकमित्यर्थः। उच्चकैरुन्नतं तार्क्ष्यं रथं गरुड़ं च। तार्क्ष्यः स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयोः। तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुड़े गरुड़ाग्रज इति विश्वः। आरुह्य नभसीव भूतले अनुद्घातेना-प्रतिघातेन सुखः सुगमः तेनाध्वना ययौ गरुड़मारुह्य नभसीव रथ-मारुह्य भूतलेऽप्यप्रतिहतं ययौ गरुड़वदेव तद्रथस्यापि सर्वत्राप्रति-हतगतित्वादित्यर्थः। नायं श्लेषः प्रकृताप्रकृतवादेऽपि तार्क्ष्यमिति विशेष्यश्लेषायोगादन्यत्राप्रसङ्गाच्च श्लेषसङ्कीर्णेयमुपमा॥ २॥

हस्तेति। अत्र न्दविशेषणानि शार्ङ्गिण्यपि विभक्तिविपरिणा-मेन योज्यानि। हस्तस्थितैरखण्डितैश्चक्रैश्चक्ररेखाभिः शालन्त इति तथोक्ताः। अन्यत्र चक्रं सुदर्शनं तच्छालिनं द्विजेन्द्रकान्ताः ब्राह्मणो-त्तमप्रियाः अन्यत्र द्विजेन्द्रश्चन्द्रः। तस्मात् सोमराजानो ब्राह्मणा इति श्रुतेः। अतएव द्विजराजः शशधर इत्यमरः। तद्वत् कान्तं

शुक्लैः सतारैर्मुकुलीकृतैः स्थुलैः
कुमुद्वतीनाङ्कुमुदाकरैरिव ।
व्युष्टप्रयाणञ्च वियोगवेदना-
विदूननारीकमभूत्समन्ततः ॥ ४ ॥

सुन्दरं श्रिया शोभया श्रितवक्षसो व्याप्तोरस्काः । अन्यत्र रमयाधिष्ठितोरस्कं सत्ये सत्यवचनेऽनुरक्ताः । अन्यत्र सत्यायां सत्यभामायामनुरक्तम् । नरकस्य जिष्णवः अन्यत्र नरकासुरस्य जेतारम् । ग्लाजिस्थश्चेति ग्स्नुच् । नरको निरये दैत्ये इति विश्वः । एवम्भूता नृपा एवम्भूतं शार्ङ्गिणं गुणैर्विनयादिभिर्हेतुना अन्वयासिषुः अनुजग्मुः गुणैः पूर्वोक्तैरन्वकार्षुश्च । यातेर्लुङि स्नुः सिच् । अत्र शार्ङ्गिणो नृपाणाञ्च प्रकृतत्वात् शब्दमात्रसाधर्म्याच्च केवलः प्रकृतिविषयः शब्दश्लेषः ॥ ३ ॥

शुक्लैरिति । शुक्लैः शुभ्रैः सतारैः सरज्जुकैः वर्णाङ्कैश्च मुकुलीकृतैर्बन्धनशैथिल्याय सङ्कोचितैः अन्यत्र रात्रिविकासित्वान्मुकुलीकृतैः प्राप्तैः स्थुलैर्दीर्घैः पटमण्डपैरिति यावत् । कुमुदाकरैः कुमुदषण्डैरिवोपलक्षितम् अन्यत्र स्थुलैरिव कुमुदाकरैरुपलक्षितं वियोगवेदनया विरहव्यथया विदूनाः परितप्ताः । स्वादिभ्य इति निष्ठानत्वम् । ता नार्यो यस्मिंस्तथोक्तं द्वयोरपि वियोगकालत्वादिति भावः । नद्यृतश्चेति कप् । कुमुदान्यासु सन्तीति कुमुद्वत्यः कुमुदप्रायाः भूमयः । कुमुद्वान् कुमुदप्राय इत्यमरः । कैरविण्यो वा । कुमुद्वती कैरविण्यामिति विश्वः । कुमुदनडवेतसेभ्यो ड्मतुबिति ड्मतुप्प्रत्ययः, मादुपधाया इति मकारस्य वत्वम् । तासां कुमुद्वतीनां सम्बन्धे व्युष्टप्रभातम् । व्युष्टप्रभातं प्रत्यूषमित्यभिधानचिन्तामणिः । तत्र किञ्चित्करत्वात्तत्सम्बन्धित्वं प्रयाणं च सेनानामिति शेषः । तदा तस्मिन् काले समुच्चयरीत्या अन्योन्यसदृशमभूत् । व्युष्टप्रयाणयोर्द्वित्वेऽपि समुदायविवक्षायामभूदित्येकवचनं व्युष्टं प्रयाणं च द्वयमपि समभूदित्यर्थः । अत्र वर्णितेन प्रकृतस्य प्रयाणस्य प्रकृतव्युष्टसाम्योक्तेरुपमा सङ्कीर्णा ॥ ४ ॥

उत्क्षिप्तगात्रः स्म विडम्बयन्नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रोहनिरूपितक्रमं
करेणुरारोहयते निषादिनम् ॥ ५ ॥

स्वैरङ्कृतास्फालनलालितान् पुरः
स्फुरत्तनूदर्शितलाघवक्रियाः ।
वङ्क्षाविलग्नैकसवल्गपाणय-
स्तुरङ्गमानारुरुहुस्तुरङ्गिणः ॥ ६ ॥

उत्क्षिप्तेति । उत्क्षिप्तगात्र उन्नमितपूर्वकायः अत एव नभः खमुत्पतिष्यन्तम् उत्पतनोद्युक्तम् अगेन्द्रं महाद्रिं विडम्बयन्ननुकुर्वन्नित्युत्प्रेक्षा । अभूतोपमेति केचित् । उच्चैरुन्नतः करेणुरिभः । करेणुरिभ्यां स्त्री नेभे इत्यमरः । आकुञ्चितो नमितप्रोहः गजाङ्घ्रिः । गजाङ्घ्रिः प्रोह इति विश्वः । तत्र निरूपितक्रमं न्यस्तपादन्यासं निषादिनं यन्तारम् आरोहयते स्म स्वयमेव स्वात्मन्यारोपयति स्मेत्यर्थः । रोहतेर्गत्यर्थत्वाद् गतिबुद्धीत्यादिना अणिकर्तुर्निषादिनः कर्मत्वम् । अत्र कर्त्रभिप्राये णिचश्चेत्यात्मनेपदे सिद्धेऽपि प्रयोगवैचित्र्यस्याप्यलङ्कारत्वादकर्त्रभिप्रायेऽपि णेरणौ यत् कर्म णौ चेत्स कर्ता नाध्याने इति आत्मनेपदं वदन्ति अणिकर्मणः करेणोरेवाण्यन्ते कर्तृत्वात्तस्यैव चार्थात् कर्मत्वादिति । ननु यत्कर्मपदमन्यकर्मार्थमित्युक्तं तेन कर्मान्तरनिषेधात् कथं निषादिनि कर्मण्यात्मनेपदं सत्यम् अन्येषां मतं भाष्यकारस्तु दर्शयते भवान् राजेत्युदाहरणादणि कर्तृकर्मव्यतिरिक्तकर्मण एव निषेधो विवक्षित इति कैयटः । तदेतत् सम्यग्विवेचितमस्माभिः किरातार्जुनीयटीकायां घण्टापथे स सन्ततं दर्शयते गतस्मय इत्यत्र । स्वभावोक्तिः ॥ ५ ॥

स्वैरमिति । तुरङ्गिणोऽश्वारोहाः पुरः पूर्वं स्वैरं मन्दं कृतं यदास्फालनं पाणितलेन संस्पर्शनं तेन लालितान् त्वाजिनः

अङ्गाय यावन्न चकार भूयसे
निषेदिवानासनबन्धमध्वने ।
तीव्रोत्थितास्तावदसह्यरंहसो
विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥ ७ ॥
गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया
विराजमानान्नवयोदरश्रिया ।
कश्चित् सुखम्प्राप्तुमनाः सुसारथी-
रथीं युयोजाविधुरां वधूमिव ॥ ८ ॥

सोद्वेगानित्यर्थः अतएव स्फुरत्तनूः कम्पितदेहान् तुरङ्गमानश्वा-न्व्यर्थितं लाघवं शैघ्र्यं यासु ताः क्रियाः उत्पतनकर्माणि येषान्ते वल्कः पल्याणकोटिः । वल्कः पल्याणभागे स्यादिति विश्वः । तत्र विलग्नः सक्त एक एकैकः सवल्गो सुखरज्जुसहितः पाणियैषान्ते तथोक्ताः सन्तः आरुरुक्षराक्रढ़ाः । स्वभावोक्तिः ॥ ६ ॥

अङ्गायेति । निषेदिवानुपर्युपविष्टः निषादीति शेषः । भाषायां सदवसश्रुव इति क्वसुप्रत्ययः । भूयसे दवीयसे अध्वने भूयांसमध्वानं गन्तुमित्यर्थः । क्रियार्थोपपदस्येति चतुर्थी । अङ्गाय झटिति । द्राक् झटित्यञ्जसाङ्गायेत्यमरः । यावदासनबन्धं दूराध्वगमनौपयि-कमासनविशेषं न चकार तावत् तीव्रन्तीक्ष्णम् उत्थिताः असह्यरंहसो दुःसहवेगाः शृङ्खलकाः करभा उष्ट्रभेदाः । करभाः स्युः शृङ्खलका दारवैः पादबन्धनैरित्यमरः । विशृङ्खलमनर्गलं प्रतस्थिरे प्रस्थिताः । समवप्रविभ्यः स्थ इति आत्मनेपदम् । एषापि स्वभावोक्तिः ॥ ७ ॥

गण्डेति । सुखमक्लिष्टं यथा तथा प्राप्तुङ्गन्तुं मनोयस्य स प्राप्तुमनाः अन्यत्र सुखमानन्दं लब्धुकामः । तुङ्काममनसोरपीति मकारलोपः । शोभनः सारथिर्यस्य स सुसारथिः अन्यत्र सुसहायः-वान् । कश्चित् कोऽपि रथी कामी च गण्डैश्चिह्नैः उज्ज्वलामन्यत्र कपोलोज्ज्वलाम् । गण्डः कपोले चिह्ने चेति विश्वः । उज्ज्वलो नाभि-

उत्पातुमिच्छन् विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।
अर्द्धोज्झितोद्गारविभक्तरस्वरः
स्वनाम निन्ये रवणः स्फुटार्थताम् ॥ ९ ॥
नस्याग्रहीतोऽपि धुवन्विषाणयो-
र्युगं ससूत्कारविवर्त्तितत्रिकः ।

धियवच्च्यं ययोस्ते चक्रे रथा वस्यास्तयोर्व्वननाभिचक्रया अत्यन्तो-च्चवलं नाभिचक्रं नाभिमण्डलं यस्यास्तया । नाभिः प्राण्यङ्गके क्षेत्रे चक्राङ्गचक्रवर्त्तिनोरिति विश्वः । नवया प्रत्यग्रया उद्गता अराश्चक्रशलाकाः । अरः शीघ्रे च चक्राङ्ग इति विश्वः । तेषां श्रिया अन्यत्र उदरस्य मध्यस्य श्रिया शोभया विराजमानां विगता धूरग्रं यस्याः सा विधुरा । धूः स्त्री क्लीबे यानमुखमित्यमरः । ऋक्पूरित्यादिना समासान्तः । सा न भवतीत्यविधुरा तां सधुरा-मित्यर्थः । अन्यत्राविधुरामविकलां रथीं शकटीम् । बह्वादिभ्यश्चेति विकल्पेन ङीप् । वधूमिव युयोज योजयामास । अत्र शब्दसाम्य-साधर्म्यात्सभङ्गाभङ्गपदमिश्रणादुभयगोचरत्वाच्च प्रकृताप्रकृतगोचरागो-चरः शब्दार्थश्लेषः ॥ ८ ॥

उत्पातुमिति । रौतीति रवणः उष्ट्रः । रुशब्द इति धातो श्चलनशब्दादकर्मकाद्युजिति युच्प्रत्ययः । भारारोपणाय यन्त्ररूपेण निर्मिते भरभाजि भारयुक्ते यन्त्रके गोण्यादौ निधीयमाने सति बला-दुत्पातुमिच्छन् अतएव पुरो मुखभागे विधृतः गृहीतः एवं स्वैरचा-रव्याघाततः । अर्द्धोज्झितेनोद्गारेण स्वजग्धपिचुमर्दादिपत्ररसेनेव विरूक्षरो विषमःस्वरो यस्य स रवणः उष्ट्रः स्वनाम स्फुटार्थतां निन्ये । रौतीति रवण इति व्युत्पन्नं स्वनाम यथार्थमकरोदित्यर्थः ॥ ९ ॥

नस्येति । नस्या नासिकाया नसादेशः नासिकाभवा नस्या । दिगादित्वाद्यत् । [illegible] विषाणयो-

गीर्णोज्झनेन स्म निधातुमुद्धृता-
मनुच्चणन्नोच्चतरः प्रतीच्छति ॥ १० ॥

नानाविधाविष्कृतसामजस्वरः
सहस्रवर्त्मा चपलैर्दुरध्ययः ।
गान्धर्वभूयिष्ठतया समानतां
स सामवेदस्य दधौ बलोदधिः ॥ ११ ॥

प्रत्यन्यनागं चलितस्त्वरावता
निरस्य कुण्ठं दधताऽन्यमङ्कुशम् ।
मूर्द्धानमूर्ध्वायतदन्तमण्डलं
धुवन्नरोधि द्विरदो निषादिना ॥ १२ ॥

युगं धुवन् विधुन्वन् स्कन्धद्वयं कम्पयन् ससूत्कारेति सूत्कार इति शब्दानुकरणम् अमर्षजः सशब्दनिःश्वासो वा ससूत्कारं यथा तथा विशर्त्तितं त्रिकं पृष्ठवंशाधरसन्धिर्येन । पृष्ठवंशाधरे त्रिकमित्यमरः । उच्चतरो महोक्षः पृष्ठे निधातुमुज्झनेनानुच्चणमुद्धृतां गोणीं न प्रतीच्छति स्म न स्वीकृतवान् निधातुमवसरं न दत्तवानित्यर्थः ॥ १० ॥

नानेति । सामजाः गजाः । सामजौ गजसामध्याविति शाश्वतः । नानाविधमाविष्कृताः सामजानां स्वराः ध्वनयो बृंहितानि यस्मिन् सः सहस्रवर्त्मा बहुभिर्मार्गैर्गच्छन् । गान्धर्वा इति गान्धर्वाः अश्वाः । वाजिवाहार्वगन्धर्व इत्यमरः । तैर्भूयिष्ठतया चपलैरस्थिरैः । दुरध्ययो दुष्प्रापः । इण् गतावित्यस्मात् कृच्छ्रार्थे खल् । ईदृशः स बलोदधिः सेनासमुद्रः सामवेदस्य समानतां दधौ तत्समोऽभूदित्यर्थः । सामवेदोऽपि बहुधाविष्कृतबृहद्रथन्तरादिसामोत्थितस्वरः सहस्रशाखत्वात्सहस्रवर्त्मा गान्धर्वगानबहुत्वाच्चपलमतिभिः अध्येतुमशक्य इत्यर्थः । इङ् अध्ययने इत्यस्माद्धातोः खलि दुरध्यय इत्येव रूपम् ॥ ११ ॥

प्रत्यन्येति । अन्यनागं प्रति धावति ऊर्ध्वायतदन्तमण्डलं मूर्द्धानं

सम्मूर्च्छदुच्छृङ्खलशङ्खनिःस्वनः
स्वनः प्रयाते पटहस्य शार्ङ्गिणि ।
सत्त्वानि निन्ये नितरां महान्त्यपि
व्यथां द्वयेषामपि मेदिनीभृताम् ॥ १३ ॥

कालीयकक्षोदविलेपनश्रिय-
न्दिशद्दिशामुल्लसदंशुमद्द्युति ।
खातं खुरैर्मुद्गभुजां विपप्रथे
गिरेरधः काञ्चनभूमिजं रजः ॥ १४ ॥

मन्द्रैर्गजानां रथमण्डलस्वनै-

धुवन् कम्पयन् द्विरदः कुण्ठमतीक्ष्णम् अङ्कुशं निरस्यान्यमकुण्ठमङ्कुशं दधता त्वरावता निषादिना अरोधि रुद्धः ॥ १२ ॥

सम्मूर्च्छन्निति । मूर्च्छा मोहसमुच्छ्राययोरिति धातुः । सम्मूर्च्छन्नुच्छ्रायं गच्छन् प्रचुरीभवन् उच्छृङ्खलोऽनर्गलः सर्वव्यापी शङ्खध्वनिःस्वनो यस्मिन् सः शार्ङ्गिणि प्रयाते यातुमुपक्रान्ते पटहस्य स्वनः द्वयेषामुभयेषामपि मेदिनीभृतां राज्ञां पर्वतानां च महान्त्यपि सत्त्वानि बलानि भूतानि च नितरां व्यथां निन्ये कृष्णस्य पटहस्वनश्रवणाद्राज्ञां बलान्यभिभवशङ्कया व्यथितान्यासन् तथा गिरिस्थिताः सिंहादयो जन्तवश्च किमिदमिति ससाध्वसा आसन्नित्यर्थः । व्यवसाये स्वभावे च पिशाचादौ गुणे बले । द्रव्यात्मभावयोश्चैव सत्त्वं प्राणेषु जन्तुष्विति शाश्वतः ॥ १३ ॥

कालीयेति । कालीयं कुङ्कुमम् । काश्मीरजन्म घुसृणं कालीयं कुङ्कुमं विदुरिति शाश्वतः । कालीयकक्षोदैः कुङ्कुमचूर्णैः कृतानुलेपनश्रियं दिशां दिशत् ददत् उल्लसदिति उद्यदादित्यसमद्युतियस्य तत् मुद्गभुजामश्वानां खुरैः खातं विदारितङ्काञ्चनभूमिजं रजो गिरेरधो गुरुत्वाद्गिरेरधस्तादेव विपप्रथे विस्तीर्णमभवत् ॥ १४ ॥

निंजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्बभूवे परभागलाभतः
परिस्फुटैस्तेषु तुरङ्गहेषितैः ॥ १५ ॥

अन्वेतुकामोऽवमताङ्कुशग्रह-
स्तिरोगतं साङ्कुशमुद्वहन् शिरः ।
स्थूलोच्चयेनागमदन्तिकागता-
ङ्गजोऽग्रयाताग्रकरः करेणुकाम् ॥ १६ ॥

यान्तोऽस्पृशन्तश्चरणैरिवावनि-
ञ्जवात्प्रकीर्णैरभितः प्रकीर्णकैः ।
अद्यापि सेनातुरगाः सविस्मयै-
रलूनपक्षा इव मेनिरे जनैः ॥ १७ ॥

मन्द्रैरिति । मन्द्रैर्गम्भीरैः । मन्द्रस्तु गम्भीर इत्यमरः । रथ-सङ्घस्वनैः तादृशं तद्रूपमेव गजानां बृंहितं निजुह्नुवे तिरस्कृतम् । गजध्वनिरेकरूपत्वेन रथशब्दान्न पृथगज्ञायीत्यर्थः । तारैरुच्चै-स्तरैर्मन्द्रस्वरविलक्षणैस्तुरङ्गहेषितैः परभागलाभतस्तेषु तादृशध्वनि-गुणसंदर्लाभेषु परिस्फुटैर्बभूवे तुरगहेषाः सुव्यक्ता एव शुश्रुविरे इत्यर्थः । बृंहितं करिणां शब्दो हेषा ह्रेषा च वाजिनाम् । बभूवे इति भावे लिट्, निजुह्नुवे इति कर्मणि लिट् ॥ १५ ॥

अन्वेत्विति । अन्तिकागताङ्करेणुकाङ्करिणीम् अन्वेतुकामो अनु-गन्तुकामः अङ्कुशं गृह्णातीत्यङ्कुशग्रहो निषादी सोऽवमतो येन सः निषादिना साङ्कुशं कृतं तिरोगतम् अङ्कुशाकर्षणेन तिर्यग्भूतं शिरो मस्तकम् उद्वहन् गजः अग्रयाताग्रकरः करिणीग्रहणाय प्रसारित-कराग्रो भूत्वा स्थूलोच्चयेन गतिविशेषेणागमत् जगाम । गजमध्यगतौ स्थूलोच्चयः साकल्यपुञ्जयोरिति रत्नप्रकाशः ॥ १६ ॥

यान्त इति । [illegible] इव यान्तः सेना-

ऋज्वीर्दधानैरवतत्य कन्धरा-
श्चलावचूडाः कलघर्घरारवैः ।
भूमिमंहत्यप्यविलम्बितक्रमं
क्रमेलकैस्तत्क्षणमेव चिच्छिदे ॥ १८ ॥

तूर्णम्प्रणेत्रा कृतनादमुच्चकैः
प्रणोदितं वेसरयुग्यमध्वनि ।
आत्मीयनेमिक्षतसान्द्रमेदिनी-
रजश्चयाक्रान्तिभयादिवाद्रवत् ॥ १९ ॥

व्यावृत्तवक्त्रैरखिलैश्चमूचरै-

तुरगाः अभितः प्रकीर्णैरुभयतः प्रसृतैः प्रकीर्णकैश्चामरैः । चामरन्तु प्रकीर्णकमित्यमरः । कण्ठभूषणचामरैर्हेतुभिरद्यापि अलूनपक्षा इवेति सविस्मयैर्जनैर्मेनिरे पूर्वं तुरगाणामपि पक्षा आसन् पश्चात् केनचित् कारणेन देवैः पक्षच्छेदः कारित इति प्रसिद्धिः ॥ १७ ॥

ऋज्वीरिति । ऋज्वीरवक्राश्चलावचूडाः चलितकण्ठभूषणाः । शिरःशिखाभूषणेषु चूडेति यादवः । चलितशिरस्क इति वा कन्धराः शिरोधराः अवतत्य वितत्य दधानैः कलघर्घरारवैः । घर्घरा क्षुद्रघण्टी स्यादिति कोषः । अथवा घर्घरारव इति शब्दानुकरणम् । क्रमेलकैरुष्ट्रैरविलम्बितक्रमं क्रमः पदक्षेपः द्रुतपादक्षेपं यथा तथा महत्यपि भूमिस्तत्क्षणमेव चिच्छिदे अतिक्रान्ता । स्वभावोक्तिः ॥ १८ ॥

तूर्णमिति । प्रणेत्रा सारथिना प्रणोदितं गमनाय प्रेरितम् । अतएव उच्चकैरुच्चैस्तरां कृतनादं यथा तथा वेसरयुग्यम् । सङ्कराश्वो वेसरः । वेसराभ्यां युग्यं शकटमात्मीयनेमिः स्वचक्रधारा तया क्षतस्य सान्द्रस्य मेदिनीरजसश्चयेन समूहेन यदाक्रमणं तद्भयादिव तूर्णमध्वनि अद्रवत् । आत्मीयनेमिसमुद्भूतधूलिजालेनास्पृष्टं सत् द्रुतमगमदित्यर्थः ॥ १९ ॥

र्जनद्भिरेव च्चणमीचितानना: ।
वलाद्गरीय:स्तनकम्प्रकञ्चुकं
ययुस्तुरङ्गाधिरुहोऽवरोधिका: ॥ २० ॥

पादै: पुर: कूवरिणां विदारिता:
प्रकाममाक्रान्ततलास्ततो गजै: ।
भग्नोन्नतानन्तरपूरितान्तरा
बभुर्भुव: कृष्टसमीकृता इव ॥ २१ ॥

दुर्दान्तमुत्प्लुत्य निरस्तसादिनं
सहासहाकारमलोकयज्जन: ।
पर्य्याणतस्स्रस्तमुरोविलम्बिन-
स्तुरङ्गमम्प्रद्रुतमेकया दिशा ॥ २२ ॥

व्यात्तेति । व्यात्तवक्त्रैर्विवृत्तमुखैर्जनद्भिरेवाखिलैश्चमूचरै: च्चण-मीचितानना: तुरङ्गाधिरुहस्तुरङ्गानधिरुहन्तीति क्विप् । तुरङ्गाधि-रूढा: अवरोधिका: अवरोधस्त्रिय: बलाद्भिश्चलद्भि: गरीयोभिर्गुरु-तरैस्तनै: कम्प: कम्पनशील: कञ्चुक: कूर्पासो यस्मिन् कर्म्मणि यद्यथा तथा ययु: । नमिकम्पीत्यादिना रन्प्रत्यय: ॥ २० ॥

पादैरिति । कूवरिणां रथानाम् । कूवरस्तु युगन्धर इत्यमर: । स एषामस्तीति ते रथास्तेषां पादैश्चक्रै: पुर: पूर्वं विदारिता: ततो गजै: प्रकाममाक्रान्ततला: भग्नैरुक्तप्रकारेण पूर्वं भग्नत्वादुन्नतैरनन्तरै-रुभयभागै: पूरितान्तरा: समीकृतनिम्नप्रदेशा: यद्वा पूर्वं रथचक्रविदा-रितत्वाद्भग्नोन्नता: अनन्तरं गजपतिपरिक्रमणेन पूरितानतप्रदेशा: भुव: कृष्टसमीकृता: पूर्वं हलै: कृष्टा अनन्तरं बीजवपनार्थं समीकृता इव बभु: शुशुभिरे ॥ २१ ॥

दुर्दान्तमिति । उरोविलम्बिन: पर्य्याणत: पल्ययनतस्स्रस्तमत-एवोत्प्लुत्य निरस्तसादिनं सहासहाकारमेकया दिशा द्रुतं

भूभृद्भिरप्यस्खलिताः खलून्नतै-
रपङ्कवाना सरितः पृथूरपि ।
अन्वर्थसंज्ञैव परं त्रिमार्गगा
ययावसङ्गैः पथिभिश्चमूरसौ ॥ २३ ॥

त्रस्तौ समासन्नकरेणुसूत्कृता-
न्नियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन गां
विलङ्घ्य लघ्वीं करभौ बभञ्जतुः ॥ २४ ॥

पलायितं दुर्दान्तं दुर्विनीतं तुरङ्गमं हासकृतेन हाकारेण सह यथा तथा जनोऽलोकयत् अवलोकितवान् ॥ २२ ॥

भूभृद्भिरिति । उन्नतैरपि भूभृद्भिः भूधरैर्भूपैश्चास्खलिता अप्रतिहताः पृथूर्महतीरपि सरितो यमुनाप्रभृतीर्नदीरपङ्कवाना स्वर्माहिम्नाच्छादयन्ती त्रिभिर्मार्गैर्गच्छन्तीति त्रिमार्गगा गङ्गा परमत्यन्तमन्वर्था अनुगतार्था संज्ञा त्रिमार्गगेति नामधेयं यस्याः सैव खलु त्रिभिरेव मार्गैर्ययौ न चतुर्थेनेत्यर्थः । असौ चमूस्त्वसङ्गैः पथिभिर्ययौ अतो गङ्गाया अप्यधिका चमूरिति भावः । अतएव व्यतिरेकालङ्कारः । भेदप्राधान्यसाधर्म्यमुपमानोपमेययोः । अधिकाल्पत्वकथनाद्व्यतिरेकः स उच्यत इति लक्षणात् ॥ २३ ॥

त्रस्ताविति । समासन्नस्य प्रत्यासन्नस्य करेणोरिभस्य सूत्कृतात् सूत्कारात्त्रस्तौ करभौ वेसरौ । करभो वेसरेऽप्युष्ट्रे इति सज्जनः । नियन्तरि सारथौ व्याकुलं व्यग्रं यथा तथा मुक्तरज्जुके त्यक्तप्रग्रहे सति क्षिप्ताः पातिताः अवरोधाङ्गना यस्मिन् कर्मणि तद्यथा तथा उत्पथेनापथेन । ऋक्पूरित्यादिना समासान्तः । गां भूमिं विलङ्घ्य दूरमतीत्य लघ्वीं रथविशेषम् । लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य चेति हेमः । बभञ्जतुः भग्नवन्तौ । अत्र त्रासस्य विशेषणगत्या भञ्जनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं स्वभावोक्त्या सङ्कीर्यते ॥ २४ ॥

स्रस्ताङ्गसन्धौ विगताक्षपाटवे
रुजा निकामं विकलीकृते रथे ।
आप्तेन तक्ष्णा भिषजेव तत्क्षण-
मचक्रमे लङ्घनपूर्वकः क्रमः ॥ २५ ॥

धूर्भङ्गसङ्क्षोभविदारितोष्ट्रिका-
गलन्मधुप्लावितदूरवर्त्मनि ।
स्थाणौ निषङ्गिण्यनसि क्षणं पुरः
शुशोच लाभाय कृतक्रयो वणिक् ॥ २६ ॥

स्रस्तेति । स्रस्ता विश्लिष्टा अङ्गयोरथाङ्गयोरङ्गानां करचरणा-दीनां च सन्धयः सन्धिभागा यस्य तस्मिन् विगतमक्षस्य चक्रधार-काष्ठस्याक्षाणामिन्द्रियाणां च पाटवं सामर्थ्यं यस्य तस्मिन् रथे स्यन्दने शरीरे च। रथः स्यात् स्यन्दने काय इति विश्वः। रुजा भङ्गेन रोगेण च निकामं विकलीकृते सति आप्तेन हितेन तक्ष्णा वर्द्धकिना आप्तेन भिषजा वैद्येनेव। तक्षा तु वर्द्धकिस्त्वष्टेत्यमरः। तत्क्षणं तस्मिन्नेव क्षणे। अत्यन्तसंयोगे द्वितीया। लङ्घनं पादेनाक्रमणम् उप-वासश्च। लङ्घनं तूपवासे स्यादाक्रमने प्लवनेऽपि चेति विश्वः। तत्पूर्वकः क्रमो विधिः प्रचक्रमे प्रक्रान्तः प्रायेण ज्वरादिचिकित्साया लङ्घनपूर्वक-त्वादिति भावः। श्लेषालङ्कारः ॥ २५ ॥

धूर्भङ्गेति। स्थाणौ कीले। स्थाणुः कीले स्थिरे हरे इति विश्वः। निषङ्गिणि सक्ते अनसि शकटे। क्लीबेऽनः शकटोऽस्त्री स्या-दित्यमरः। धुरोऽक्षस्य भङ्गेन यः सङ्क्षोभो विपर्य्यासः तेन विदारिता भिन्ना या उष्ट्रिका मृण्मयं मद्यभाण्डम्। उष्ट्रिका मृत्तिकाभाण्डभेदे करभयोषितीति विश्वः। ततो गलता स्रवता मधुना मद्येन प्लावितं सिक्तं दूरवर्त्म दीर्घाध्वा येन तस्मिन् तथा सति पुरः पूर्वं लाभाय कृतः क्रयः क्रयणं येन स वणिक् क्षणं शुशोच। अत्र मधुस्रावधन-व्यययोर्विनिमयगत्या शोकहेतुत्वात् काव्यलिङ्गभेदः ॥ २६ ॥

भेरीभिराक्रुष्टमहागुहामुखो
ध्वजांशुकैस्तर्जितकन्दलीवनः ।
उत्तुङ्गमातङ्गजिताखघूपलो
बलैः स पश्चात् क्रियते स्म भूधरः ॥ २७ ॥

वन्येभदानानिलगन्धदुर्धराः
क्षणान्तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथञ्चिदारादपथेन निन्यिरे ॥ २८ ॥

भेरीभिरिति। भेरीभिराक्रुष्टानि निन्दितानि महान्ति गुहामुखानि येन सः भेरीझङ्कारभर्त्सितनितान्तवाव्यासुखरमहागुहाद्वार इत्यर्थः। ध्वजांशुकैस्तर्जितानि भर्त्सितानि कन्दलीदलानि गुल्मपलाशि येन सः उत्तुङ्गैर्मातङ्गैर्जिताः खलघूपलाः स्थूलपाषाणा येन सः भूधरो रैवतकाद्रिः बलैः सैन्यैः पश्चात् क्रियते स्म पश्चात्कृतः स्वयं दूरगमनेन पृष्ठतः कृत इत्यर्थः उक्तविशेषणमहिम्ना अधरीकृत इति च प्रतीयते। लट् स्म इति भूतार्थे लट्। आक्रुष्टेति क्रोशतेः कर्मणि क्तः, श्वादित्वात् पत्वे ष्टुत्वम्। अत्र पश्चात्करणस्याक्रुष्टादिपदार्थहेतुकत्वात् काव्यलिङ्गं तच्चोक्तं प्रतीयमानाभेदाध्यवसायातिति श्लेषमूलातिशयोक्तिसङ्कीर्णं तेन बलानां भूधरौपम्यं गम्यत इत्यर्थालङ्कारेणालङ्कारध्वनिः ॥ २७ ॥

वन्येभेति। वन्येभदानानिलगन्धेन वनगजमदमारुतगन्धाघ्राणेन दुर्धराः क्रोधान्धाः दुर्ग्रहाः। अतएव क्षणं तरुच्छेदेन विनोदितक्रुधः प्रतिगजासान्निध्ये वृक्षाणां भङ्गेनापनीतक्रोधाः उन्मदिष्णवोऽत्यन्तमदशीलाः। अलङ्कृञित्यादिना इष्णुच्। व्यालद्विपाः दुष्टगजाः यन्तृभिराधोरणैः कथञ्चिदारात् दूरादपथेनामार्गेण। पथो विभाषेति निषेधविकल्पात्कमसमासान्तः। अपथं नपुंसकमिति

तैर्वैजयन्तीवनराजिराजिभि-
र्गिरिप्रतिच्छन्दमहामतङ्गजैः ।
बह्व्यः प्रसर्पज्जनतानदीशतै-
र्भुवो बलैरन्तरयाम्बभूविरे ॥ २९ ॥

तस्थे मुहूर्तं हरिणीविलोचनैः
सदृंषि दृष्ट्वा नयनानि योषिताम् ।
सत्वाद्य सत्रासमनेकविभ्रम-
क्रियाविकाराणि मृगैः पलाय्यत ॥ ३० ॥

नपुंसकत्वम् । निन्यिरे नीताः । अत्रापि द्विपविशेषणानां तदुपमेयहेतुकत्वात् काव्यलिङ्गं सत्स्वभावोक्त्या सङ्कीर्यते ॥ २८ ॥

तैरिति । वैजयन्त्यः पताकास्ता वनराजय इव ताभीराजन्तीति तथोक्तैः गिरीणां प्रतिच्छन्दाः प्रतिनिधयस्तत्सदृशा इत्यर्थः । एतस्मादेव सादृश्योपमालिङ्गादन्यत्राप्युपमितसमासाश्रयणम् । ते महामतङ्गजा येषु तैः । जनता जनसमूहास्ता नद्य इव तासां शतानि प्रसर्पन्ति प्रवहन्ति येषु तैर्बलैस्तथोक्तैः सैन्यैः । बह्व्यो बहवः । बह्वादिभ्यश्चेति विकल्पादीकारः । भुवो भूमयः अन्तरयाम्बभूविरे अन्तरा दूराः कृता इति अतिक्रान्ता इत्यर्थः । न केवलं रैवतकाद्रिरेवेति भावः । बलैर्वैपुल्यादाच्छादिता इत्यर्थः । उक्तविशेषणावगतसादृश्यादष्टद्वीतभेदाः कृता इति च गम्यते । एतेनाभेदाध्यवसायादेवाख्याक्रियणरूपान्तरीकरणस्य बलविशेषणावगतसादृश्यस्य हेतुत्वात्तदङ्गभूतोपमासङ्कीर्णं पदार्थहेतुकं काव्यलिङ्गं श्लेषमूलाभेदातिशयोक्त्यापितासिति सङ्करः । अन्तरशब्दात्तत् करोतीति ण्यन्तात् कर्मणि लिट्, आम्प्रत्यये भुवोऽनुप्रयोगः ॥ २९ ॥

तस्थ इति । हरिणीविलोचनैः सदृंषि सदृशानि । नपुंसकस्य झलच इति नुम् । योषितां नयनानि दृष्ट्वा । मृगैः कृष्णसारैः कर्तृभिर्मुहूर्तमल्पकालम् । मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि

निम्नानि दुःखादवतीर्य सादिभिः
सयत्नमाकृष्टकशाः शनैः शनैः ।
उत्तेरुरुत्तालखुरारवं द्रुताः
श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥ २१ ॥
अध्यध्वमारूढवतैव केनचित्
प्रतीक्षमाणेन जनस्य दुर्धृतः ।
दाक्ष्यं हि सद्यः फलदं यदग्रत-
श्चखाद दासेरयुवा वनावलीः ॥ २२ ॥

वेति विश्वः । तस्य स्थितम् । हरिणीविलोचनशङ्कयेति भावः । अथानन्तरमनेकविभ्रमक्रिया विलासक्रिया एव विकारा येषां तानि मत्वा सविलासानि ज्ञात्वेत्यर्थः सत्रासं सभयं यथा तथा पलाय्यत पलायितम् । हरिणीदुर्लभैर्विलासैर्योषिन्निश्चयादिति भावः । अत एव निश्चयान्तः संशयालङ्कारः । परापूर्वादयतेर्भावे लङ् । उपसर्गस्यायताविति लत्वम् ॥ २० ॥

निम्नानीति । अर्वतामश्वानाम् । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय इत्यमरः । अर्वणस्त्रसावनञ इति त्रादेशः । व्रजाः समूहाः । सादिभिरश्वारूढैः सयत्नमाकृष्टकशाः दृढगृहीतवल्गाः सन्तः । यद्यप्यश्वादेस्ताडिनी कशेत्यमरः तथाप्यत्र ताडिनीवल्गयोः कशेति दर्शनादविरोधः । शनैः शनैर्दुःखात् कृच्छ्रान्निम्नानि निम्नभूप्रदेशानवतीर्य उत्तालखुरारवम् उन्नतखुरशब्दं श्लथीकृतप्रग्रहं शिथिलितवल्गं च यथा तथा द्रुताः सत्वराः सन्त उत्तेरुः उत्पुप्लुविरे । निम्नेषु शनैरवतीर्य दीर्घं धावतीत्यश्वानां स्वभाव इति भावः । अतएव स्वभावोक्तिः ॥ २१ ॥

अध्यध्वमिति । दक्षस्य भावो दाक्ष्यं कौशलं सद्यः फलदं कुतः यद्यस्मादध्यध्वमध्वनि । विभक्त्यर्थेऽव्ययीभावः, अनश्चेति समासान्तोऽच्प्रत्ययः, नस्तद्धित इति टिलोपः । आरूढवतैव आरुह्यैव स्थितेन ।

शौरेः प्रतापोपनतैरितस्ततः
समागतैः प्रश्रयनम्रमूर्त्तिभिः ।
एकातपत्रा पृथिवीभृतां गणै-
रभूद्बहुच्छत्रतया पताकिनी ॥ ३३ ॥
आगच्छतोऽनूचि गजस्य घण्टयोः
स्वनं समाकर्ण्य समाकुलाङ्गनाः ।
दूरादपावर्त्तितभारवाहणाः
पथोऽपसस्रुस्त्वरितञ्चमूचराः ॥ ३४ ॥

निष्ठेति रुहेः क्तवतुप्रत्ययः । जनं शनैः पश्चादागच्छन्तं स्वजनं प्रतीक्षमाणेन केनचित् पुंसेति शेषः । मुहुर्ष्टतः स्थापितोऽपि दासेरयुवा तरुणोष्ट्रः । विशेषणसमासः । अमतो वनावलीस्वखाद पुरः पिचुमर्दादिकं भक्षयन्नास्त इत्यर्थः । न हि कुशलो वृथा कालं यापयतीति भावः । अत्र दाक्ष्यवाफल्यस्य सामान्यस्य तद्विशेषेण दासेरकौशलेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥३२॥

शौरेरिति । शौरेः कृष्णस्य पताकिनी सेना । ब्रीह्यादित्वादिनिः । प्रतापेन हरितेजसा उपनतैर्नम्रैर्विधेयैरित्यर्थः । अतएवेतस्ततः समागतैः पार्श्वदेशागतैः प्रश्रयनम्रमूर्त्तिभिर्हरिसन्निधौ विनयनम्रविग्रहैः पृथिवीभृतां राज्ञां गणैर्हेतुना बहुच्छत्रतया अखण्डातपत्रवत्तया निमित्तेन एकानि केवलानि आतपत्राणि यस्याः सा एकातपत्रा केवलातपत्रमयी अभूत् । आतपत्रातिरिक्तं न किञ्चिदलक्ष्यतेत्यर्थः । एके मुख्यान्यकेवलाः इत्यमरः । बहुच्छत्राप्येकच्छत्रेति विरोधभासनाद्विरोधाभासोऽलङ्कारः ॥ ३३ ॥

आगच्छत इति । अन्वञ्चतीत्यन्वङ् तस्मिन् अनूचि पृष्ठदेशे । ऋत्विगित्यादिनाञ्चेः क्विन्प्रत्ययः । आगच्छतो गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः संभ्रान्तवधूकाः चमूचराः दूरादेवापावर्त्तिता अपसारिता भारसाधनादिवाहना भारवाहणा भारवाहिन

ओजस्विवर्णोज्ज्वलवृत्तशालिनः
प्रसादिनोऽनुज्झितगोत्रसंविदः ।
श्लोकानुपेन्द्रस्य पुरः स्म भूयसो
गुणान् समुद्दिश्य पठन्ति वन्दिनः ॥ २५ ॥
निःशेषमाक्रान्तमहीतलो जलै-
श्चलन् समुद्रोऽपि समुज्झति स्थितिम् ।

उन्नादवो येस्ते तथा सन्तः । वाञ्छनाच्छिनादिति यावत् । वल्गेर्यर्थ-त्वात् कर्तरि ल्युट् । त्वरितं शीघ्रं ययो मार्गादपसस्रुरपजग्मुः । स्वभावोक्तिः ॥ २४ ॥

ओजस्वीति । वन्दिनः स्तुतिपाठकाः । वन्दिनस्तुतिपाठका इत्यमरः । ओजस्विवर्णस्य तेजस्विवर्णस्य क्षत्रजातेर्यदुज्ज्वलं वृत्तमुद्-धव्यापारः विजयाख्यं तेन शालत इति ओजस्विवर्णोज्ज्वलवृत्तशाली तस्य अन्यत्र ओजस्विवर्णैः समासभूयिष्ठाक्षरैरुज्ज्वलास्ते च ते वृत्त-शालिनो वसन्ततिलकादिच्छन्दोविशेषशालिनश्च । वृत्तं चरित्रच्छन्दसो-रपीति विश्वः । तान् प्रसादोऽस्यास्तीति प्रसादी तस्य प्रसादिनो-ऽनुग्रहशीलस्य । अन्यत्र प्रसादगुणयुक्तान् । प्रसिद्धार्थपदत्वं यत् प्रसादो निगद्यत इति । अनुज्झिता गोत्रसंविदो कुलाचारो येन तस्य यादवंशोत्पन्नस्येत्यर्थः । अन्यत्र कुलनामनी यैस्तान्, वंशना-माङ्कितानित्यर्थः । संविद्युद्धे प्रतिज्ञायां सङ्केताचारनाम्नि वैज-यन्ती । एवम्भूतस्य उपेन्द्रस्य हरेर्गुणान् समुद्दिश्याधिकृत्य भूयसो बहुलान् श्लोकान् स्तुतिपद्यानि पुरोऽग्रे पठन्ति स्म । अत्रोपेन्द्रस्य तच्छ्लोकानां च वर्ण्यत्वेन प्रकृतानां श्लेषसाधर्म्यादौपम्यगम्यतायां श्लेषप्रतिभोत्थापिता केवलप्रकृतगोचरा तुल्ययोगिता श्लेषश्च प्रकृतिषु प्रत्ययेषु नेति ॥ २५ ॥

निःशेषमिति । चलन् कल्पान्ते क्षुभितः समुद्रोऽपि जलैर्निःशेष-माक्रान्तमहीतलः सन् स्थितिं मर्यादां वेलालङ्घनलक्षणां समुज्-

ग्रामेषु सैन्यैरकरोदवारितः
किमव्यवस्थाञ्चलितोऽपि केशवः॥ ३६॥
कोशातकीपुष्पगुलुच्छकान्तिभि-
र्मुखैर्विनिद्रोल्वणबाणचक्षुषः।
ग्रामीणवध्वस्तमलक्षिता जनै-
श्चिरं वृतीनामुपरि व्यलोकयन्॥ ३७॥
गोष्ठेषु गोष्ठीकृतमण्डलासनान्
सनादमुत्थाय मुहुः स वल्गतः।

मिति त्यजति। केशवस्तु चलितोऽपि प्रस्थितोऽपि अवारितै-रपरिमितैः सैन्यैर्निःशेषमाक्रान्तमहीतलः सन् ग्रामेषु अव्यवस्थाम-मर्य्यादां किमकरोन्नाकरोदेवेत्यर्थः। अत्रोपमानात्समुद्रादुपमेयस्य केशवस्य मर्य्यादानतिक्रमेणाधिक्यकथनाद्व्यतिरेकालङ्कारः। लक्षणं तूक्तम्॥ ३६॥

कोशातकीति। कोशातकीपुष्पगुलुच्छकान्तिभिः पटोलीप्रसून-गुच्छसच्छायैः खरपाण्डुरैरित्यर्थः। कोशातकी पटोली स्यादिति हलायुधः। मुखैरुपलक्षिताः विनिद्रं विकसितम् अतएवोल्वणं विपुलं बाणनीलसैरेयपुष्पमिव चक्षुर्यासान्ताः। नीला झिण्टीद्वयोर्बाणा इत्यमरः। ग्रामेषु भवा ग्रामीणाः। ग्रामाद्यखञाविति खञ्-प्रत्ययः। ताश्च वध्वः स्त्रियः तं कृष्णं ग्रामान्तर्गामिनमिति भावः। जनैस्वमूचरैरलक्षिता वृतिभिस्तिरोहिता इत्यर्थः। चिरं वृतीनां कण्ट-कशाखावरणानामुपरि उपरितनावकाशे व्यलोकयन्। उपमास्वभा-वोक्त्योः सङ्करः॥ ३७॥

गोष्ठेष्विति। स कृष्णो गावस्तिष्ठन्त्येष्विति गोष्ठानि गोस्थानानि। गोष्ठं गोस्थानकमित्यमरः। सुपि स्थ इति कप्रत्ययः, अम्बाम्बगो-भूमीत्यादिना षत्वम्। गोष्ठेषु वार्त्तासु। गोष्ठी सभायामालाप इति विश्वः। कृता [illegible] मण्डलाकारेणोपवेशनानि यैस्तान्मुहुः

ग्राम्यानपश्यत्कपिशम्पिपासतः
स्वगोत्रसङ्कीर्त्तनभावितात्मनः ॥ २८ ॥

पश्यन् कृतार्थैरपि वल्लवीजनो
जनाधिनाथं न ययौ वितृष्णताम् ।
एकान्तमौग्ध्यानवबुद्धविभ्रमैः
प्रसिद्धविस्तारगुणैर्विलोचनैः ॥ २९ ॥

प्रीत्या नियुक्ताल्लिहतीः स्तनन्धया-
न्निगृह्य पारीमुभयेन जानुनोः ।

सनादं स्वैलाट्टाट्टहासाद्यारावसहितं यथा तथोत्थाय वल्गत उत्प्लव-मानान् कपिशं मद्यम् । कश्यं मद्यं च मैरेयं कपिशं कापिशायन-मिति हलायुधः । पिपासतो मुहुर्मुहुः पातुमिच्छतः । पिबतेः सन्नन्ताल्लटः शतरि शप् । स्वगोत्रसङ्कीर्त्तने स्वनामसङ्कीर्त्तने भावि-तात्मनः प्रवर्त्तितचित्तान् कृष्णनामानि गायत इत्यर्थः । ग्रामेषु भवान् ग्राम्यान् घोषजनानित्यर्थः । ग्रामाद्यञ्खञाविति यञ्प्रत्ययः । अपश्यदालोकितवान् । स्वभावोक्तिः ॥ २८ ॥

पश्यन्निति । एकान्तमौग्ध्येनात्यन्तमुग्धया अनवबुद्धविभ्रमैरज्ञात-विलासैः किन्तु प्रसिद्धो विस्तार एव गुणो येषान्तैरतिविशालैरित्यर्थः । कृतार्थैरपि सकृद्दर्शनाल्लब्धविस्तारफलैरित्यर्थः । विलोचनैर्जनाधिनाथं कृष्णं पश्यन् वल्लवीजनो गोपाङ्गनाजनः वितृष्णतां तृप्ततां न ययौ भूयोभूयः पश्यन्नपि नालंबुद्धिमवापेत्यर्थः । तृप्तिकारणे दर्शने सत्यपि तृप्तिकार्य्यानुत्पत्तेर्विशेषोक्तिः सा कृष्णस्य मदनकोटिलावण्यलक्ष्मीं व्यञ्जयति ॥ २९ ॥

प्रीत्येति । नियुक्तान् दामपादे एव संयतान् स्तनन्धयन्ति पिब-न्तीति स्तनन्धयान्वत्सान् । नासिकास्तनयोर्ध्माधेटोरिति धेटः खश्-प्रत्ययः । प्रीत्या वत्सान् । लिहतीर्जिह्वया स्वादयन्तीः रोहिणीर्गाः । अर्जुन्यघ्ना रोहिणी स्यादित्यमरः । पयः क्षीरं जानुनोरुभयेन जानु-

वर्द्धिष्णुधाराध्वनि रोहिणीः पय-
श्चिरन्निदध्यौ दुहतः स गोदुहः ॥ ४० ॥
अभ्याजतोऽभ्यागततूर्णतूर्णका-
न्निर्य्याणहस्तस्य पुरो दुधुक्षतः।
वर्गान्गवां हुङ्कृतिचारु निर्यती-
मरिर्मधोरैक्षत गोमतल्लिकाम् ॥ ४१ ॥
स व्रीहिणां यावदपासितुङ्गताः

द्वयेन पारीं दोहनपात्रीम्। पारी पात्रीपरागयोरिति विश्वः। निरुद्ध्य निरुध्य। वर्द्धिष्णुधाराध्वनि वर्द्धनशीलक्षीरधारा शब्दं यथा भवति तथा दुहतः प्रपूरयतः। दुहेः लटः शतरि शप्। दुह्याचीति द्विकर्मकत्वम्। गां दुहन्तीति गोदुहः गोदोहकान्। सत्सूद्विषेत्यादिना क्विप्। स हरिश्चिरं निदध्यौ व्यवलोकयति स्म। निध्यानमवलोकनमिति वैजयन्ती। स्वभावोक्तिः ॥ ४० ॥

अभ्येति। अभ्याजतः दोग्धुमभिमुखमागच्छतः। अजेर्लटः शत्रादेशः। निर्य्याणं पादबन्धनन्दाम। निर्य्याणं दामसं दानं पशूनां पादबन्धने इति वैजयन्ती। तद्धस्ते यस्य तस्य निर्याणहस्तस्य दुधुक्षतो दोग्धुमिच्छतो दोग्धुरिति शेषः। दुहेः सन्नन्ताल्लटः शत्रादेशः षत्वभत्वे। पुरोऽग्रेऽभ्यागतोऽभिमुखमागतस्तूर्णः स्तनपाने त्वरमाणस्तूर्णकोऽतिबालो वत्सो यस्यास्ताम्। सद्योजातस्तु तूर्णक इत्यमरः। गवां वर्गान्गोव्रजात् हुङ्कृतिचारुहुङ्कार मनोहरं यथा तथा निर्यतीं निर्गच्छन्तीम्। इणः शतरि ङीप्, इणो यणादेशः। प्रशस्तां गां गोमतल्लिकाम्। प्रशस्तवचनैश्चेति नित्यसमासः। मतल्लिकामचर्चिका प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनीत्यमरः। मधोररिर्मधुसूदन ऐक्षत ईक्षितवान्। ईक्षतेर्लङ्याडजादीनामित्याट्, आटश्चेति वृद्धिः। स्वभावोक्तिः ॥ ४१ ॥

स इति। व्रीहिणां ... शालिकेदारेभ्यस्तावन्मृगैरुपद्रुत-

शुकान्मृगैस्तावदुपद्रुतश्रियाम् ।
कैदारिकाणामभितः समाकुलाः
सहासमालोकयति स्म गोपिकाः ॥ ४२ ॥

व्यासेद्धुमस्मानवधानतः पुरा
चलत्यसावित्युपकर्णयन्नसौ ।
गीतानि गोप्याः कलमं मृगव्रजो
न नूनमत्तीति हरिर्व्यलोकयत् ॥ ४३ ॥

लीलाचलत्स्त्रीचरणारुणोत्पल-
स्खलत्तुलाकोटिनिनादकोमलः ।

श्रियामुपद्रुतसम्पदां व्रीहिणां व्रीहिमताम् । व्रीह्यादिभ्यश्चेति इनिप्रत्ययः । कैदारिकाणां क्षेत्रसमूहानाम् । पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु । कैदारिकं स्यात् कैदार्यं क्षेत्रं कैदारिकं गणे इत्यमरः । ठञ् कवचिनश्चेति चकाराट्ठञ्प्रत्ययः । तद्योगात् कर्मणि षष्ठी । गोपिकाः गोपीभिरभितः समाकुलाः व्यग्राः उभयतः समाक्रम्यमाणाः सतीरित्यर्थः । स हरिः सहाससमालोकयति स्म । अत्र सहासावलोकनस्य विशेषणगत्या समाकुलपदार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ ४२ ॥

व्यासेद्धुमिति । गोप्याः शालिगोप्याः । गौरादित्वात् ङीप् । गीतानि उपकर्णयन् शृण्वन् असौ मृगव्रजः नूनं निश्चितं कलमं नात्ति न खादति इति किं कलमभक्षणे गीतश्रवणविशेष इत्यत आह असौ गोपी अस्मान् व्यासेद्धुं निवारयितुम् अवधानतो गीतैकाग्र्यात् पुरा चलति चलिष्यति । यावत्पुरानिपातयोर्लडिति भविष्यदर्थे लट् । इतीत्थं वितर्कयन्निति शेषः । हरिर्व्यलोकयत् । अत्र मृगाणां कलमखादननिवृत्तेर्गीतासक्तिनिमित्तायास्तदाकर्णनसुखभङ्गहेतुकत्वमुत्प्रेक्ष्यते ॥ ४३ ॥

लीलेति । अनुगता आपो येषु ते अनूपाः जलप्रायदेशाः । जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः इत्यमरः । प्रादिभ्यो धातु-

शौरेरुपानूपमपाहरन्मनः
स्वनान्तरादुन्मदसारसारवः ॥ ४४ ॥

उच्चैर्गतामस्खलिताङ्गरीयसी-
ल्लदातिदूरादपि तस्य गच्छतः।
एके समूहुर्बलरेणुसंहतिं
शिरोभिराज्ञामपरे महीभृतः ॥ ४५ ॥

प्रायेण नीचानपि मेदिनीभृतो
जनः समेनैव पथाधिरोहति।

तस्य वाच्योर्थाचोत्तरपदलोपश्चेति बहुव्रीहिः, ऋक्पूरित्यादिना समासान्तः अदनोऽङ्ग इत्यूकारः। तेषां समीपे उपानूपम्। समीपार्थेऽव्ययीभावः। लीलया चलति चलनशीले स्त्रियाश्चरणे अरुणोत्पले इव तयोः स्खलन्त्यौ ये तुलाकोटी नूपुरौ। पादाङ्गदन्तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियामित्यमरः। तयोर्निनाद इव कोमलो मधुरः उन्मदसारसारवः मत्तहंसकूजितम्। चक्राङ्गसारसौ हंस इति शब्दार्णवे। शौरेर्मनः स्वनान्तरादपाहरत्। अत मनोहरणस्य लीलेत्यादिविशेषणार्थहेतुकत्वादुपमासङ्कीर्णं काव्यलिङ्गम् ॥ ४४ ॥

उच्चैरिति। तदा तस्मिन् समये अतिदूराद्गच्छतोऽपि तस्य हरेः सम्बन्धिनीमुच्चैर्गतामत्यूर्ध्वमुन्नताम्। अन्यत्रोर्ध्वलोकेष्वपि व्याप्ताम् अस्खलितामभङ्गुरां सत्यां च गरीयसीमतिमहतीं पूज्यां च बलरेणुसंहतिं सेनारेणुसङ्घातम् एके कतिपये महीभृतः पर्वताः। आज्ञां शासनम् अपरे महीभृतो राजानश्च शिरोभिः शेखरैः शीर्षैश्च समूहुः संवहन्ति स्म। वहेर्लिटि ऋर्जुसि वचिस्वपीत्यादिना सम्प्रसारणम्। अत हरिमहिमवर्णनायामुभयेषामपि महीभृतां प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता श्लेषप्रतिभोत्थापिता चेति सङ्करः।

प्रायेणेति। प्रायेण प्राचुर्येण नीचान् कुब्जानपि मेदिनीभृतोऽद्रीन् जनो लोकः समेन सुगमेन पथा मार्गेणैवाधिरोहति। सा

सेना मुरारेः पथ एव सा पुन-
र्महामहीध्रान् परितोऽध्यरोहयत् ॥ ४६ ॥

दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः
शिलोच्चयानारुरुहुर्महीयसः ।
तिर्यक्कटप्लाविमदाम्बुनिम्नगा-
विपूर्य्यमाणश्रवणोदरान्द्विपाः ॥ ४७ ॥

स्रग्रोतन्मदाम्भःकणकेन केनचि-
ज्जनस्य जीमूतकदम्बकच्युता ।
नागेन नागेन गरीयसोच्चकै-
ररोधि पन्थाः पृथुदन्तशालिना ॥ ४८ ॥

मुरारेः सेना पुनः पथो मार्गानेव महामहीध्रान् महाद्रीन् परितोऽध्यरोहयत् । लोके हि सति चुसंऽध्वनि तेन शैलारोहणसम्भवः सेना सर्वपथातिरेकिण्यभूत् । पूर्वापरःमहत्त्वं पन्थानः स्वारोहणेन प्रवर्त्तिता इत्यर्थः । रोहतेर्गत्यर्थत्वाद्गतिबुद्धीत्यादिना पथामणिकर्तृणां णौ कर्मत्वम् । महीं धरन्तीति महीध्राः । मूलविभुजादित्वात् कः । अत्र सेनायाः पथां शैलाधिरोहणेनोपमानाज्जनादाधिक्यकथनाद्व्यतिरेकः ॥ ४६ ॥

दन्ताग्रेति । द्वाभ्यां पिबन्तीति द्विपाः । सुपीति योगविभागात् कप्रत्ययः । उन्मुखा उन्नमितमुखाः सन्तः दन्ताग्रैर्निर्भिन्ना विदारिताः पयोदाः शृङ्गगता यस्मिन् कर्मणि तद्यथा तथा तिर्य्यगूर्ध्वमुखत्वात्तिरश्चीनं यथा तथा कटेभ्यः स्रवन्ते चरन्तीति कटप्लाविनीभिर्मदाम्बुनिम्नगाभिर्मदजलप्रवाहैर्विपूर्य्यमाणानि श्रवणोदराणि यस्मिन् कर्मणि तद्यथा तथा महीयसो महत्तरान् शिलोच्चयान् आरुरुहुः । स्वभावोक्तिः ॥ ४७ ॥

स्रग्रोतदिति । स्रग्रोतन्तः चरन्तो मदाम्भःकणा यस्य तेन । शैषिकः कपप्रत्ययः । जीमूतकदम्बकच्युत इव दुर्गतिर्यस्य तेन । पृथुभ्यां

भग्नद्रुमाश्चक्रुरितस्ततो दिश:
समुल्लसत्केतनकाननाकुला: ।
पिष्टाद्रिपृष्ठास्तरसा च दन्तिन-
श्चलन्निजाङ्गाचलदुर्गमा भुव: ॥ ४९ ॥
आलोकयामास हरिर्महीधरा-
नधिश्रयन्तीर्गजता: पर:शता: ।
उत्पातवातप्रतिकूलपातिनी-
रुपत्यकाभ्यो बृहती: शिला इव ॥ ५० ॥

दन्ताभ्यां शालत इति तच्छालिना । गरीयसा गुरुतरेणोच्चकैरुन्नतेन । केनचिन्नागेन गजेन जनस्य पन्था: मार्गो यथा अरोधि, अगेनाचलेन न तथारोधि रुद्ध: । मत्तमातङ्गस्य दुरासदत्वाच्छैलवदनतिक्रमणीयत्वादिति भाव: । अतएवोपमानादगादुपमेयस्य नागस्याधिक्याद्व्यतिरेक: ॥ ४८ ॥

भग्नेति । दन्तिनो गजा इतस्ततो भग्नद्रुमा: स्वभग्नाखिलवृक्षा: दिश: समुल्लसद्भि: केतनैरेव काननैराकुला: सङ्कीर्णाश्चक्रु: । तथा तरसा बलेन पिष्टानि चूर्णितानि अद्रिपृष्ठानि यासु ता भुवो भूमी: चलद्भिर्निजाङ्गैरेवाचलैर्दुर्गमा: दुष्प्रापाश्चक्रु: । अत्र केतनेष्वङ्गेषु च काननाचलत्वरूपणाद्रूपकालङ्कार: तेन गजानां पुरातनसृष्टिसंहारेण सृष्ट्यन्तरप्रवर्त्तनरूपं लोकोत्तरं सामर्थ्यं गम्यत इत्यलङ्कारेण वस्तुध्वनि: ॥४९

आलोकेति । हरिर्महीधरान् अधिश्रयन्ती: पर:शता: शतात्परा: असङ्ख्याता इत्यर्थ: । पर:शताद्यास्ते येषां परा सङ्ख्या शताधिकेत्यमर: । पञ्चमीति योगविभागात् समास:, राजदन्तादित्वादुपसर्जनस्यापि शतशब्दस्य परनिपात:, पारस्करादित्वात् सुडागम: । गजता: गजसमूहान् । गजाच्चेति वक्तव्यमिति सामूहिकस्तल्प्रत्यय: । उपत्यकाभ्य आसन्नभूमिभ्य: । उपत्यकाद्रेरासन्ना भूमिरित्यमर: । उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन्प्रत्यय: । उत्पातवातेन । तत्र-

शैलाधिरोहाभ्यसनाधिकोद्धुरैः
पयोधरैरामलकीवनाश्रिताः ।
तम्पर्वतीयप्रमदाश्चचायिरे
विकाशविस्फारितविभ्रमेक्षणाः ॥ ५१ ॥

सावज्ञमुन्मील्य विलोचने सकृत्
क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ।
सैन्यान्न यातः समयापि विव्यथे
कथं सुराजम्भवमन्यथाथवा ॥ ५२ ॥

तिकूलं पतन्तीति तत्पातिनीरूर्ध्वगामिनीरित्यर्थः । दृषदः शिला इवेत्युत्प्रेक्षा । आलोकयामास ॥ ५० ॥

शैलेति । शैलाधिरोहाभ्यसनेन पर्वतारोहणाभ्यासेनाधिकोद्धुरैरत्युन्नतैः पयोधरैः स्तनैरुपलक्षिताः आमलकीवनाश्रिताः धात्रीवनगताः । पर्वतो निवासो येषान्ते पर्वतीयाः किरातादयः । पर्वताच्चेति छप्रत्ययः । तेषां प्रमदाः । विकाशेन विस्मयकृतविस्तारेण विस्फारिता विवर्त्तिताः विभ्रमा विलासा येषान्तानीक्षणानि यासान्तास्तथा सत्यः तं हरिं चचायिरे ददृशुः । चाय पूजानिशामनयोरिति धातोः कर्त्तरि लिट् । निशामनं दर्शनं निरीक्षणनिशामने इति दर्शनपर्य्यायेषु भट्टमल्लः । एतेन हरेर्लोकोत्तरं लावण्यं व्यज्यत इति वस्तुना वस्तुध्वनिः स्वभावोक्तिवृत्त्यनुप्रासयोः संसृष्टिः ॥ ५१ ॥

सावज्ञमिति । सावज्ञमनादरं यथा तथा विलोचने सकृदेकवारम् । एकस्य सकृदिति सकृदर्थे निपातः । क्षणमुन्मील्योन्मिष्य । पुनः सुषुप्सुना स्वप्तुमिच्छता । स्वपेः सन्नन्तादुप्रत्ययः । रुदविदेत्यादिना सनः कित्त्वाद्वचिस्वपीत्यादिना सम्प्रसारणम् । मृगेन्द्रेण सिंहेन समया समीपे । समयानिकषाशब्दौ समीपे सम्प्रकीर्त्तिताविति सज्जनः । यातो गच्छतोऽपि । यातेर्लटः शत्रादेशः । सैन्यात् सेनातः । भीत्रार्थानां भयहेतुरित्यपादानत्वम् । न विव्यथे न बिभ्ये । व्यथ

उत्सेधनिर्धूतमहीरुहां ध्वजै-
र्जनावरुद्धोद्धतसिन्धुरंहसाम् ।
नागैरधिच्छिन्नमहाशिलम्मुहु-
र्बलम्बभूवोपरि तन्महीभृताम् ॥ ५३ ॥

भ्रमभ्रूयमाणे मधुजालके तरो-
र्गजेन गण्डङ्कषता विधूनिते ।
क्षुद्राभिरक्षुद्रतराभिराकुलं
विदश्यमानेन जनेन दुद्रुवे ॥ ५४ ॥

अयनञ्जुलनयोरिति धातोर्भावे लिट् । अथवा तथाहीत्यर्थः । अन्यथा भीतत्वे कथं सुराजन्यत्वं सुखेन राज्ञा भूयते न कथमपीति भावः । राजा चायं स्वगाणामिति भावः । कर्तृकर्मणोश्च भूकृञोरिति कर्त्तरीषदादौ चोपपदे भवतेः खल्प्रत्यये नलोपमुमागमौ । अर्थान्तरन्यासः ॥ ५२ ॥

उत्सेधेति । नागैर्गजैरधिच्छिन्नास्तिरस्कृता महाशिला येन तत् तद्बलं सैन्यं ध्वजैरुत्सेधेनौन्नत्येन निर्धूता अवगणिता महीरुहो येषु तेषाम् । उत्सेधश्चोच्छ्रयश्च स इत्यमरः । जनैरवरुद्धं प्रतिबद्धमुद्धतमुद्वेलं सिन्धुरंहो नदीवेगो येषां तेषां महीभृतां पर्वतानाम् उपरि मुहुर्बभूव सार्गवशाद्भूयसो भूधरान्मुहुरारुरोहेत्यर्थः । हयौघरुद्ध इति पाठे हयौघेन घोटकसमूहेन रुद्धमित्यादि पूर्ववत् । अत्रावरोहणवदुत्कर्षस्योपरिभावो विशेषणवैभवात् प्रतीयते इति तद्भेदेनोपरिभावस्य बलभूधरविशेषणपदार्थहेतुकत्वाच्छ्लेषप्रतिभोत्थापितकाव्यलिङ्गविशेषः ॥ ५३ ॥

भ्रमभ्रूयेति । तरोर्वृक्षस्य भ्रमभ्रूयमाणे भ्रमवदाचरति तद्वदाचरमाण इत्यर्थः । उपमालङ्कारः । भ्रमशब्दादाचारे क्यङन्ताल्लटः शानजादेशः अकृत्सार्वधातुकयोर्दीर्घः । गण्डं कपोलं कषता वत्स-स्कन्धे कण्डूयमानेन गजेन मधुजालके मधूपटले विधूनिते कम्पिते

नीते पलाशिन्युचिते शरीरव-
द्गजान्तकेनान्तमदान्तकर्मणा ।
सश्चेरात्मान इवापरं चणात्
समारुहन्दे हमिव प्लवङ्गमाः ॥ ५५ ॥

प्रह्वानतीव क्वचिदुद्धतिश्रितः
क्वचित्प्रकाशानथ गह्वरानपि ।
साम्यादपेतानिति वाहिनी हरे-
स्तदातिचक्राम गिरीन् गुरूनपि ॥ ५६ ॥

सति । छजो ख्यन्तात् कर्मणि क्तः, धूञ्प्रीञोर्नुग्वक्तव्य इति नुगागमः । अच्छुद्रतराभिरतिस्थूलाभिः चुद्राभिः सरघाभिः । चुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिकेत्यमरः । विदश्यमानेन चक्षुभिर्भिद्यमानेन जनेन आकुलं व्यग्रं यथा तथा दुद्रुवे पलायितम् । भावे लिट् । स्वभावोक्तिरुक्तोपमासंसृष्टा ॥ ५४ ॥

नीत इति । उचिते परिचिते पलाशिनि द्रुमे । पलाशी द्रुमागमा इत्यमरः । शरीरवत् पूर्वशरीरवत् । तत्र तस्येवेति वतिप्रत्ययः । अदान्तकर्मणा दुर्दान्तव्यापारेण गजोऽन्तक इवेति उपमितसमासः साहचर्य्यात् । तेन गजान्तकेनान्तं नाशं नीते गमिते सति प्लवैर्गच्छन्तीति प्लवङ्गमाः कपयः । गमेश्चेति खच्प्रत्यये मुमागमः । आत्मानो जीवा इवापरं समारुहं देहमिव चणात् सश्चेरः सम्प्रविष्टा इत्यर्थः । अनेकेवशब्दवाक्यार्थोपमा सा च शरीरवदिति तद्धितगता अन्यत्र समासगतेति सङ्करः ॥ ५५ ॥

प्रह्वानिति । क्वचिदतीव नितान्तं प्रह्वान् प्रवणान् । अन्यत्रानुकूलान् क्वचिदुद्धतिं श्रयन्तीत्युद्धतिश्रितः औन्नत्यभाज औद्धत्यभाजश्च । श्रयतेः क्विप् तुक् । क्वचित्प्रकाशान् प्रकटाननवगूढवृत्तींश्च । क्वचिदतिगह्वरानपि । अपिश्चार्थे । अप्रवेशान् अन्यत्र गूढांश्च । इतीत्थं साम्यादपेतान् विसदृशान् विषमवृत्तांश्च । अतएव गुरून् महतो-

स व्याप्नवत्या परितोऽपथान्यपि
स्वसेनया सर्वपथीनया तया ।
अम्भोभिरुल्लङ्घिततुङ्गरोधसः
प्रतीपनाम्नीः कुरुते स्म निम्नगाः ॥ ५७ ॥
यावद् व्यगाहन्त न दन्तिनाङ्घटा-
स्तुरङ्गमैस्तावदुदीरितं खुरैः ।

ऽपि पूज्यानपि गिरींस्तदा हरेर्वाहिनी सेना अतिचक्राम अतीत्य गता उल्लङ्घिता च । गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते इति स्मरणादिति भावः । गुरूणाम्° अप्यतिक्रम इति विरोधेऽपिशब्दः स चोक्तवैषम्यदोषोद्घाटनेन परिहृत इति विरोधाभासः स च गुरूनिति वाच्यप्रतीयमानयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापित इति सङ्करः ॥ ५६ ॥

स इति । स हरिः परितः समन्तादपथान्यपमार्गानपि । पथो विभाषेति निषेधविकल्पादृक्पूरित्यादिना समासान्तः । अपथं नपुंसकमिति नपुंसकत्वम् । व्याप्नवत्यापि सर्वान् पथो व्याप्नोतीति सर्वपथीना । तत्सर्वादेरित्यादिना खप्रत्ययः । तया सर्वपथीनया तया स्वसेनया निखिलेन अम्भोभिरुल्लङ्घितानि युगपदखिलसेनाप्रवेशेन प्रतीपगमनादुपर्याक्रान्तानि तुङ्गरोधांसि यासान्ताः निम्नं गच्छन्तीति निम्नगा नद्यः प्रतीपनाम्नीः कुरुते स्म । प्रतिगता उत्तानगा आपो यासान्ताः प्रतीपाः । ऋक्पूरित्यादिना समासान्तः द्व्यन्तरुपसर्गेभ्योऽप इतीकारः । अथवा प्रतीपं निम्नगानामविरुद्धं नाम उत्तानगा इति नामधेयं यासान्ताः प्रतीपनाम्नाः । अन उपधालोपिनोऽन्यतरस्यामिति ङीप् । तास्तथा चकारेत्यर्थः । अत्र निम्नगानां प्रतीपानामसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५७ ॥

यावदिति । दन्तिनां घटा गजव्रजा यावन्न व्यगाहन्त न व्यलोडयन् तावत् तुरङ्गैः कर्तृभिः खुरैः करणैः उदीरितम् उत्था-

क्षिप्तं समीरैः सरितां पुरः पत-
ज्जलान्यनैषीद्रज एव पङ्कताम् ॥ ५८ ॥

रन्तुं च्युतोत्तुङ्गनितम्बभूमयो
मुहुर्व्रजन्तः प्रसभं मदोद्धताः ।
पङ्कं करापाकृतशैवलांशुकाः
समुद्रगाणामुदपादयन्निभाः ॥ ५९ ॥

रुग्णोरुरोधःपरिपूरिताम्भसः
समस्थलीकृत्य पुरातनीर्नदीः ।
कूलङ्कषौघाः सरितस्तथापराः
प्रवर्तयामासुरिभा मदाम्बुभिः ॥ ६० ॥

पितम् । अथ समीरैः मारुतैः क्षिप्तं विकीर्णम् । अत एव पुरो गजप्रवेशात् प्रागेव पतद्रजो भूरेणुरेव सरितां जलानि पङ्कतामनैषीन्निनाय । नयतेर्द्विकर्मकत्वात् दुहि इत्यादिः । अत्रापि सरितां पङ्कत्वासम्बन्धेऽपि सम्बन्धोक्तेः पूर्ववदतिशयोक्तिः ॥ ५८ ॥

रन्तुमिति । रन्तुं क्रीडितुं च्युता एकत्र विषाणैरन्यत्र नखैश्च विदलिता उत्तुङ्गा नितम्बभूमयो रोधोभागाः श्रोणिभागाश्च यैस्ते । नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके इति विश्वः । मुहुः प्रसभं हठं व्रजन्तः मदेन दानेन दर्पेण चोद्धताः । करैर्हस्तैरपाकृतानि शैवलानि अंशुकानीवांशुकानि यैस्ते इभाः समुद्रं गच्छन्तीति समुद्रगाणां समुद्रपत्नीनां नदीनाम् । एकाजुत्तरपदे णः इति णत्वम् । पङ्कं कर्दमं कलुषं चोदपादयन् । पङ्कोऽस्त्री कर्दमैनसोरिति विश्वः । यथा मदोद्धताः पराङ्गनानां दोषमुत्पादयन्ति तद्वदिति भावः । अत्र प्रस्तुतेभविशेषणसाम्यादप्रस्तुतस्त्रीसंग्रहणसाहसिकप्रतीतेः समासोक्तिः स्त्रीपङ्कयोरभेदाध्यवसायादिति श्लेषमूलातिशयोक्त्युत्थापितेति सङ्करः ॥ ५९ ॥

रुग्णेति । इभा रुग्णैर्भग्नैरुरुभिर्महद्भी रोधोभिस्तटैः परिपूरिताम्भसो [illegible] । पुराभवाः पुरातनीः ।

पद्मैरनन्वीतवधूमुखद्युतो
गता न हंसैः श्रियमातपत्रजाम् ।
दूरेऽभवन् भोजबलस्य गच्छतः
शैलोपमातीतगजस्य निम्नगाः ॥ ६१ ॥

स्निग्धाञ्जनश्यामतनूभिरुन्नतै-
र्निरन्तराला करिणां कदम्बकैः ।
सेना सुधाक्षालितसौधसम्पदां
पुरां बहूनामपरभागमाप सा ॥ ६२ ॥

सार्यश्चिरमित्यादिना ष्यप्रत्ययः तुगागमश्च, टिड्ढाणञित्यादिना ङीप् । नदीः समस्थलीकृत्य स्थलसमाः कृत्वा मदाम्बुभिः समदोदकैः कूलङ्कषन्तीति कूलङ्कषाः ओघा यासां ताः उभयकूलप्रवाहिन्योऽपरा अन्याः सरितः प्रवर्त्तयामासुः । एतेन गजसम्पत्तिरुक्ता । अत्र नदीनां समस्थलत्वासम्बन्धे मदाम्बूनाञ्च नदीत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरिति सजातीयसङ्करः ॥ ६० ॥

पद्मैरिति । पद्मैरनन्वीता अप्राप्ता वधूमुखस्य द्युत् श्रीर्याभिस्ताः वधूमुखश्रीजितपद्मा इत्यर्थः । अन्वीतेति ईङ् गताविति धातोः कर्मणि क्तः । हंसैरातपत्रजां छत्रजन्यां श्रियं न गता अगताः आतपत्रजितहंसश्रीका इत्यर्थः । निम्नगा नद्यः शैलोपमामतीताः शिलासाम्यमतिक्रान्ता गजा यस्मिन् तस्य गच्छतो भोजबलस्य यादवसैन्यस्य दूरेऽभवन् अतिव्यवहिता इत्यर्थः । अपकृष्टाश्चेति गम्यते तदभेदाध्यवसायेन निम्नगानां दूरभवनस्य तद्विशेषणपदार्थहेतुकत्वात् श्लेषमूलातिशयोक्तिसमुत्थापितः काव्यलिङ्गभेदः ॥ ६१ ॥

स्निग्धेति । स्निग्धाञ्जनमिव श्यामाभिस्तनूभिरुन्नतैः करिणां कदम्बकैर्निरन्तराला नीरन्ध्रा सा सेना सुधया लेपनविशेषेण क्षालिता धवलिताः सौधसम्पदो यासान्तासाम् । लेपभेदेऽमृते सुधेति वैजयन्ती । बहूनां पुरां पुरीणां परभागं विप्रकृष्टदेशमाप दूरमतीय

प्रासादशोभातिशयालुभिः पथि
प्रभोर्निवासाः पटवेश्मभिर्बभुः ।
नूनं सहानेन वियोगविक्लवा
पुरः पुरश्रीरपि निर्ययौ तदा ॥ ६३ ॥

वर्ष्म द्विपानां विरुवन्त उच्चकै-
र्वनेचरेभ्यश्चिरमाचचक्षिरे ।
गण्डस्थलाघर्षगलन्मदोदक-
द्रवद्रुमस्कन्धनिलायिनोऽलयः ॥ ६४ ॥

आयामवद्भिः करिणां घटाशतै
रथःकृताट्टालकपङ्क्तिरुच्चकैः ।

मतेत्यर्थः । वर्णोत्कर्षस्य परभागः । तद्भेदाध्यवसायेन परभागाप्तौ विशेषणगत्या श्यामकरिकदम्बकनैरन्तर्यं स्वहेतुत्वात् पूर्ववत् काव्यलिङ्गभेदः ॥ ६२ ॥

प्रासादेति । पथि मार्गे प्रभोः कृष्णस्य निवासाः सेनानिवेशाः प्रासादशोभामतिशयालुभिरतिशायकैः । श्यालुचि शीङ्ग्रहणमपि कर्त्तव्यमित्यालुच्प्रत्ययः । पटवेश्मभिः पटवस्त्रैर्बभुः । तेनोत्प्रेक्ष्यते । तदा द्वारकानिर्याणकालेऽनेन कृष्णेन सह वियोगविक्लवा विरहभीरुः पुरश्रीर्द्वारकानगरलक्ष्मीरपि पुरोऽग्रे निर्ययौ निर्गता । नूनं द्वारकातो न भिद्यन्ते अस्य निवासाः शोभयेति भावः ॥ ६३ ॥

वर्ष्मेति । गण्डस्थलानामाघर्षेण सङ्घर्षेण गलता स्रवता मदोदकेन द्रवेषु आर्द्रेषु द्रुमस्कन्धेषु निलीयन्त इति निलायिनस्तन्निवासिनः उच्चकैर्विरुवन्तो गुञ्जन्तोऽलयः द्विपानां सेनागजानां वर्ष्म प्रमाणम् । वर्ष्म देहप्रमाणयोरिति विश्वः । वनेचरेभ्यः किरातेभ्यः चिरमाचचक्षिरे इयन्तो गजा इत्याख्यातवन्त इत्यर्थः । गजवर्ष्मानुमापकेष्वलिषु विरावयोगादाख्यानमुत्प्रेक्ष्यते । वाचकाप्रयोगाद्गम्योत्प्रेक्षा ॥ ६४ ॥

दूष्यैर्जितोदग्रगृहाणि सा चमू-
रतीत्य भूयांसि पुराण्यवर्त्तत ॥ ६५ ॥
उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः
प्रतप्तमभ्यर्णतया विवस्वतः ।
आह्लादिकह्लारसमीरणाहते
पुरः पपाताम्भसि यामुने रजः ॥ ६६ ॥
या घर्मभानोस्तनयापि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।

आयामेति । आयामो दैर्घ्यं सोऽस्ति येषां तद्वद्भिरायतैरित्यर्थः । करिणां सम्बन्धिभिर्घटायतैर्व्यूहगतैः । करिणां घटना घटेत्यमरः । अधःकृतास्तिरस्कृता अट्टालकपङ्क्त्योऽट्टश्रेण्यो यया सा । अट्टास्वट्टालकः स्मृत इति वैजयन्ती । सा चमूरुच्चकैरुन्नतैः दूष्यैः पटमण्डपैः जितान्युदग्राणि गृहाणि येषां तानि भूयांसि पुराणि अतीत्यावर्त्तत अतिक्रम्य गतेत्यर्थः शोभया अतिशय्यास्थितेति च गम्यते । तद्भेदाध्यवसायेन श्लेषमूलातिशयोक्त्युत्थापितं पूर्ववत् पदार्थहेतुकं काव्यलिङ्गम् ॥ ६५ ॥

अथ हरिसेनाः कालिन्दीं प्रत्यासेदुरित्याह । उद्धूतमिति । ध्वजिनीभिः सेनाभिरुच्चैरुद्धूतम् उद्धूं क्षिप्तम् । अतएव अभ्यर्णतया अन्तिकतया । उपकण्ठान्तिकाभ्यर्णमित्यमरः । विवस्वतोऽंशुभिः प्रतप्तं प्रतप्तमिवेत्यर्थः । अतएव व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । आह्लादिन आह्लादकराः कह्लारसमीरणाः सौगन्धिकमारुताः । सौगन्धिकं तु कह्लारमित्यमरः । तैराहते कम्पिते यामुने यमुनासम्बन्धिन्यम्भसि पुरोऽग्रे रजो धूलिः पपात । सन्तप्ता हि सन्तापमसहमानाः पुरो धावित्वा क्वचन शिशिरे पयसि पतन्तीति भावः ॥ ६६ ॥

अथ चतुर्भिर्यमुनां वर्णयति । येत्यादि । या यमुना घर्मभानोरुष्णांशोस्तनयापि सती शीतलैरपि आपादितैरपि स चोष्णजातायाः

कृष्णापि शुद्धेरधिकं विधातृभि-
र्विहन्तुमंहांसि जलैः पटीयसी ॥ ६७ ॥

यस्या महानीलतटीरिव द्रुताः
प्रयान्ति पीत्वा हिमपिण्डपाण्डुराः ।
कालीरपस्ताभिरिवानुरञ्जिताः
क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ ६८ ॥

व्यक्तम्बलीयान् यदि हेतुरागमा-
दपूरयत् सा जलधिं न जाह्नवी ।

शैत्यानुपपत्तेरिति भावः । यमस्यान्तकस्य स्वसापि जनस्य जीवनैरु-
ज्जीवकैः अत्राप्येकोदराणां भिन्नक्रियानुपपत्तेर्विरोधः । कालिन्दी
सूर्यतनया यमुना शमनस्वसेत्युभयत्राप्यमरः । किञ्च । कृष्णा कृष्ण-
वर्णा मलिना च तथापि शुद्धेर्नैर्मल्यस्याधिकं विधातृभिः स्रष्टृभिः तस्मादकै-
र्जलैरंहांसि पापानि विहन्तुं पटीयसी समर्थतरा । अत्र यमुना-
तज्जलगतत्वेन निर्दिष्टयोर्गुणक्रिययोर्विरोधेन त्रिषु विरोधेषु संसृष्टेषु
तृतीयः कृष्णेति श्लेषप्रतिभोत्थापित इति संक्षेपः ॥ ६७ ॥

यस्या इति । हिमपिण्डपाण्डुरा हिमखण्डशुभ्राः घना मेघाः
द्रुता द्रवीकृताः महानीलतटीः इन्द्रनीलस्थलानीव कालीः कृष्ण-
वर्णाः । जानपदेत्यादिना ङीप् । यस्याः कालिन्द्याः अपः पीत्वा
ताभिः पीताभिरद्भिरनुरञ्जिता इव क्षणेन भिन्नाञ्जनवर्णतां स्नेह-
च्छुदितकज्जलवर्णतां प्रयान्ति । अत्र तटीरिवानुरञ्जिता इवेति
चोत्प्रेक्षया सङ्कीर्णेयं घनानामञ्जनोपमेति संग्रहः ॥ ६८ ॥

व्यक्तमिति । हेतुर्युक्तिरनुमानमिति यावत् । आगमाद्गङ्गासा-
गरपूरणीत्यागमप्रमाणात् । बलीयान् यदि प्रबलश्चेत् सा यमुना
जलधिमपूरयत् । जह्नोरपत्यं स्त्री जाह्नवी नापूरयत् । व्यक्तं मध्यम्
इत्युत्प्रेक्षा । कुतः । अन्यथा विपर्यये अस्य जलधेः तत्प्रसिद्धमर्णो-
ऽस्य: । [illegible] । मार्गेण गङ्गासम्बन्धिना

गाङ्गौघनिर्भर्त्सितशम्भुकन्धरा
सवर्णमर्णः कथमन्यथास्य तत् ॥ ६९ ॥
अभ्युद्यतस्य क्रमितुञ्जवेन गां
तमालनीला नितरान्धृतायतिः।
सीमेव सा तस्य पुरः क्षणम्बभौ
बलाम्बुराशेर्महतो महापगा ॥ ७० ॥
कलापकम् ॥
लोलैररित्रैश्चरणैरिवाभितो
जवाद्व्रजन्तीभिरसौ सरिज्जनैः।
नौभिः प्रतेरे परितः प्लवोदित-
भ्रमीनिमीलल्ललनावलम्बितैः ॥ ७१ ॥

ओघेन प्रवाहेन निर्भर्त्सिताया: निर्भर्त्सीकृतायाः शम्भुकन्धरायाः हरकण्ठस्य सवर्णं समानवर्णं कृष्णवर्णमित्यर्थः। ज्योतिर्जनपदेत्यादिना समानस्य सभावः। अन्यथा गङ्गौघस्य धावल्याद्धवलमेव स्यात्। तथाच यावाप्लवनवाक्यवदागसोऽप्यन्यथा नेय इति कवेराशयः ॥६९॥

अभीति। तमालवत् नीला कृष्णा नितरां धृतायतिरत्यन्तं कृतदैर्घ्या सा महापगा महानदी यमुना। जवनगां भुवं क्रमितुमाक्रमितुम् अभ्युद्यतस्योद्युक्तस्य तस्य महतो बलाम्बुराशेः सेनासमुद्रस्य पुरोऽग्रे क्षणं सीमेव वेलेव बभावित्युत्प्रेक्षा। क्षणमिति क्षणमात्रनिरोधिकाऽभवदनन्तरमेव तरणादिति भावः ॥ ७० ॥

लोलैरिति। अभितः उभयतो लोलैश्चलद्भिररित्रैः केनिपातकदण्डैः। केनिपातः स्यादरित्रं केनिपातक इत्यमरः। चरणैः पादैरिवेत्युत्प्रेक्षा। जवात् व्रजन्तीभिर्गच्छन्तीभिर्नौभिः साधनैरसौ सरिद्यमुना कर्म प्लवेनोदिता नौवेगेनोत्पन्ना भ्रमी भ्रान्तिः तस्या भयान्निमीलन्तीभिर्भयादक्षिनिमीलनं कुर्वतीभिर्ललनाभिरवलम्बितैर्जनैः कर्तृभिः

तत् पूर्वमंसद्वयसं द्विपाधिपाः
क्षणं सहेलाः परितो जगाहिरे ।
सद्यस्ततस्तैरनारतस्रुत-
स्वदानवारिप्रचुरीकृतम्पयः ॥ ७२ ॥

प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखै-
स्तुरङ्गमैरायतकीर्णवालधि ।
उत्कर्णमुद्ग्राहितधीरकन्धरै-
रतीर्य्यताग्रे तटदत्तदृष्टिभिः ॥ ७३ ॥

परितः सर्वतः । सर्वोभयार्थे वर्त्तमानाभ्यां पर्य्यभिभ्यां तसिविधानात् । प्रतेरे प्रतीर्णा ॥ ७१ ॥

तत्पूर्वमिति । द्विपाधिपा महागजाः । पूर्वं प्रथमम् अंसौ प्रमाणमस्य अंसद्वयसम् अंसप्रमाणं तेषां तयोन्नतत्वादिति भावः । प्रमाणे द्वयसजिति द्वयसच् प्रत्ययः । तत्तयाऽगम्भीरं पयो यमुनाजलं सहेलाः सावज्ञाः । परितो जगाहिरे प्रविशन्ति स्म । ततः प्रवेशानन्तरं सद्यः अविलम्बेन अनारतमविच्छिन्नं स्रुतेन स्रवता स्वदानवारिणा स्वमदोदकेन प्रचुरीकृतं बहुलीकृतं तत्पयस्तैः तरन्ति स्म । अत्रातिगम्भीरस्याप्यम्भसोऽंसदघ्नत्वातिशयोक्त्या गजानामौन्नत्यं पुनस्तस्यैव तन्मदाम्बुसम्भेदतात्पर्य्योक्त्या तेषां मदातिरेकश्च व्यज्यते ॥७२॥

प्रोथैरिति । स्फुटशब्दं स्पष्टध्वानं यथा तथा स्फुरद्भिश्चलद्भिः प्रोथैर्घोणाभिरुपलक्षितैः । घोणा तु प्रोथमस्त्रियामित्यमरः । उन्मुखैरुर्द्ध्वमुखैस्तथा उत्कर्णमुन्नमितकर्णं यथा तथा उद्ग्राहिताः ऊर्द्ध्वं प्रसारिता धीरा निश्चलाः कन्धरा ग्रीवा येषां तैरग्रे पुरः तटे दत्तदृष्टिभिस्तुरङ्गमैरायताः प्रसारिताः कीर्णा विक्षिप्ता वालधयो यस्मिन् कर्मणि तद्यथा तथा अतीर्य्यत अतारि सरिदिति शेषः । कर्मणि लङ् । स्वभावोक्तिः ॥ ७३ ॥

तीर्त्वा जवेनैव नितान्तदुस्तरां
नदीम्प्रतिज्ञामिव ताङ्गरीयसीम्।
शृङ्गैरपस्कीर्णमहत्तटीभुवा-
मशोभतोच्चैर्नदितङ्ककुद्मताम् ॥ ७४ ॥
सीमन्त्यमाना यदुभूभृताम्बलै-
र्बभौ तरङ्गिर्गवलासितद्युतिः।
सिन्दूरितानेकपकङ्कणाङ्किता-
तरङ्गिणी वेणिरिवायता भुवः ॥ ७५ ॥
अव्याहतक्षिप्रगतैः समुच्छ्रिता
ननुज्झितद्राघिमभिर्गरीयसः।

तीर्त्वेति। नितान्तदुस्तरामतिमहत्तया अत्यन्ताशक्यतरणां तां नदीं गरीयसीमतिदुस्तरां प्रतिज्ञामिव जवेन वेगेनैव तीर्त्वा। शृङ्गै-र्विषाणैरपस्कीर्णा आलेखिता महत्यस्तटीभुवस्तीरप्रदेशास्तेषाम्। अपा-च्चतुष्पाच्छकुनिष्वालेखन इति किरतेः कात्पूर्वतः सुडागमः। ककुद्म-तामुक्ष्णामुच्चैस्तरं नदितं नादः अशोभत। उपमासङ्कीर्णा स्वभा-वोक्तिः ॥ ७४ ॥

सीमन्त्यमानेति। तरङ्गिर्यदुभूभृतां यादवभूपानां बलैः सैन्यैः सीमन्त्यमाना सीमन्तवतीक्रियमाणा। सीमन्तवच्छब्दात् तत् करोतीति ण्यन्तात् कर्मणि लटः शानजादेशः, णाविष्टवद्भावाद्विन्मतोर्लुक्। गवलासितद्युतिः माहिषविषाणमेचकप्रभा। गवलं माहिषं शृङ्ग-मित्यमरः। सिन्दूरिताः सिन्दूरवत्कृताः। सिन्दूरवच्छब्दात् तत् करोतीति ण्यन्तात् कर्मणि क्तः, णाविष्टवद्भावाद्विन्मतोर्लुक्। तैरनेक-पैर्द्विपैः कङ्कणैः शेखरैः अङ्किता चिह्निता। कङ्कणं शेखरे हस्तसूत्र-मण्डनयोरपीति विश्वः। तरङ्गिणी यमुना नदी आयता दीर्घा भुवो वेणिरिव बभौ इत्युत्प्रेक्षा ॥ ७५ ॥

अव्याहतेति। अनीमर्षा भुजाना विषयाण्युभयविपरिणामेन

नाव्यम्पयः केचिदतारिषुर्भुजैः
क्षिपद्भिरूर्मीनपरैरिवोर्मिभिः ॥ ७६ ॥
विदलितमहाकूलामुच्चां विषाणविघट्टनै-
रलघुचरणाकृष्टग्राहां विषाणिभिरुन्मदैः ।
सपदि सरितं सा श्रीभर्त्तुर्वृहद्रथमण्डलैः
स्खलितसलिलामुल्लङ्घ्यैनाञ्जगाम वरूथिनी ॥ ७७ ॥
इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रयाण-
वर्णनो नाम द्वादशः सर्गः ॥ १२ ॥

योज्यानि । केचिज्जनाः नावा तार्य्यं नाव्यम् । नाव्यं त्रिलिङ्गं नौताय्य-मित्यमरः । नौवयोधर्मेत्यादिना यत्प्रत्ययः । पयो जलम् अव्याहत-क्षिप्रगतैरप्रतिहतशीघ्रगमनैरनुजृम्भितो द्राघिमा दैर्घ्यं यैस्तैरतिदीर्घै-रित्यर्थः । समुच्छ्रितानुन्नतान् गरीयसो गुरुतरान् ऊर्मीन् क्षिपद्भि-रपाकुर्वद्भिरतएवापरैरूर्मिभिरिव स्थितैरित्युत्प्रेक्षा । भुजैर्बाहुभि-रतारिषुस्तरन्ति स्म । तरतेर्लुङि सिचि वृद्धिरिडागमः ॥ ७६ ॥

विदलितेति । सा प्रकृता श्रीभर्त्तुः कृष्णस्य वरूथिनी सेना उच्चामनडुहां विषाणविघट्टनैः शृङ्गाघातैर्विदलितानि महाकूलानि यस्यास्ताम् उन्मदैरुद्भूतमदैर्विषाणिभिरलघुभिर्गुरुभिश्चरणैः पादैरा-कृष्टा वहिर्नीताः ग्राहा जलग्राहा यस्यास्तां वृहद्भीरथमण्डलैरथ-समूहैः स्खलितानि व्याकुलीकृतानि सलिलानि यस्यास्तामेनां सरितं यमुनां सपदि उल्लङ्घ्य जित्वा तीर्त्वेत्यर्थः । भङ्क्त्वेति गम्यते विशेषण-सामर्थ्यात् । जगाम । अत्र जयस्य विशेषणगत्या कूलदलनादिहेतुक-त्वात् काव्यलिङ्गभेदः । हरिणीवृत्तम् । भवति हरिणी न्सौ म्रौ स्लौ गोरसाम्बुधिविष्टपैरिति लक्षणात् ॥ ७७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां माघकाव्यव्याख्यायां सर्वङ्कषाख्यायां द्वादशः सर्गः ॥ १२ ॥

# त्रयोदशः सर्गः ।

यमुनामतीतमथ शुश्रुवानमु-
न्तपसस्तनूज इति नाधुनोच्यते ।
स यदाऽचलन्निजपुरादहर्निशं
नृपतेस्तदादि समचारि वार्त्तया ॥ १ ॥

यदुभर्त्तुरागमनलब्धजन्मनः
प्रमदादमानिव पुरे महीयसि ।
सहसा ततः स सहितोऽनुजन्मभि-
र्वसुधाधिपोऽभिमुखमस्य निर्ययौ ॥ २ ॥

यमुनामिति । अथ यमुनातरणानन्तरं तपसस्तनूजो धर्मनन्दनः अधुना यमुनामतीतम् अमुं हरिं शुश्रुवान् । भाषायां सदवसश्रुव इति क्वसुप्रत्ययः । इति नोच्यते किन्तु स हरिर्यदा निजपुरादचलत् तच्चलनमादि यस्मिन् कर्मणि तत्तदादि तत्प्रभृति । अहश्च निशा च अहर्निशम् । समाहारे द्वन्द्वैकवद्भावे अत्यन्तसंयोगे द्वितीया । नृपतेर्धर्मराजस्य वार्त्तया इह निविष्ट इतो निर्गत इति वृत्तान्तेन समचारि सञ्चरितमागतमिति यावत् । भावे लुङ् । सन्निहितयमुनातरणवृत्तान्तवद्व्यवहितसकलदैनन्दिनवृत्तान्तो निजनगरप्रस्थानात् प्रभृति प्रतिक्षणमागत एवेत्यर्थः । अस्मिन् सर्गे मञ्जुभाषिणीवृत्तम् । सजसजा गौ भवति मञ्जुभाषिणीति लक्षणात् ॥ १ ॥

यदुभर्त्तुरिति । ततो हरेर्यमुनोत्तरणश्रवणानन्तरं स वसुधाधिपो धर्मराजः । यदुभर्त्तुः हरेरागमनेन लब्धजन्मनो लब्धोदयात् जातादित्यर्थः । प्रमदाद्धर्षात् । प्रमदसम्मदौ हर्षे इत्यप्प्रत्ययान्तो निपातः ।

रभसप्रवृत्तकुरुचक्रदुन्दुभि-
ध्वनिभिर्जनस्य बधिरीकृतश्रुतेः।
समवादि वक्तृभिरभीष्टसङ्कथा-
प्रकृतार्थशेषमथ हस्तसंज्ञया॥ ३॥

अपदान्तरञ्च परितः क्षितिक्षिता-
मपतन् द्रुतभ्रमितहेमनेमयः।
जविमारुताञ्चितपरस्परोपम-
क्षितिरेणुकेतुवसनाः पताकिनः॥ ४॥

महीयस्यतिविपुलेऽपि पुरे व्यमान् हर्षकृतशरीरवृद्धेरिवापरिमित-विकाशः सन्निव्युत्प्रेक्षा। सहसा अनुजन्मभिरनुजैः सहितोऽस्य हरेरभिमुखं निर्ययौ नगरान्निर्गत इत्यर्थः॥ २॥

रभसेति। रभसो हर्षः। रभसो वेगहर्षयोरिति विश्वः। तेन प्रवृत्तैः कुरुचक्रदुन्दुभिध्वनिभिः कौरवसेनातूर्यघोषैः बधिरीकृतश्रुते-र्विकलीकृतश्रोत्रेन्द्रियस्य। श्रोतृजनस्य वक्तृभिः कथकैरभीष्टसङ्कथा-स्विष्टालापेषु प्रकृतस्य वक्तुं प्रक्रान्तस्याभिधेयस्य शेषं वक्तव्यावशिष्टम् अथ बाधिर्य्यानन्तरं हस्तसंज्ञया हस्तसङ्कोचेन समवादि संवादितम्। श्रीकृष्णस्यागमनसन्तोषात्तथा दुन्दुभीनाजघ्नुः यथा कण्ठोक्तशेषं कर-संज्ञया निष्पाद्यत इत्यर्थः। अत्र बधिरीकरणस्य जनविशेषणद्वारा हस्तसंज्ञया वदनहेतुत्वात् काव्यलिङ्गभेदः॥ ३॥

अपदेति। द्रुतं शीघ्रम्। भ्रमिताः परिवर्त्तिताः हेमनेमयः कनकचक्रान्ता येषान्ते। चक्रधारा प्रधिर्नेमिरिति हलायुधः। अत एव जविना वेगवता मारुतेनाञ्चितानि कम्पितानि परस्परमुपमान्तीति परस्परोपमानि अन्योन्यसदृशानि क्षितिरेणुकेतुवसनानि स्तोत्थापित-भूरेणवः स्वारोपितध्वजपटाश्च येषान्ते क्षितिं क्षियन्तीशते इति क्षितिक्षितः क्षितीशाः। क्षि ऐश्वर्य्ये वासे इति धातोस्तौदादिकात् क्विपि तुक्। क्षितिपतिर्क्ष्मेवासौ क्षितिक्षित् इति भट्टमल्लः। तेषां

द्रुतमध्वनन्नुपरिपाणिवृत्तय:
पणवा इवाश्वचरणक्षता भुवः ।
ननृतुश्च वारिधरधीरवारण-
ध्वनिहृष्टकूजितकलाः कलापिनः । ५ ॥

व्रजतोरपि प्रणयपूर्वमेकतां
कुकुराधिनाथकुरुनाथसैन्ययोः ।
करुषे विषाणिभिरनुच्चणाम्मिथो
मदमूढ़बुद्धिषु विवेकिता कुतः ॥ ६ ॥

सम्बन्धिनः पताकाः सन्तीति पताकिनो रथाः । व्रीह्यादित्वादिनिः । परितः सर्वतः नास्ति पदस्थान्तरमवकाशो यस्मिन् कर्मणि तदपदान्तरं संसक्तं यथा तथा । संसक्ते त्वव्यवहितमपदान्तरमित्यपीत्यमरः । अपतन्नधावन् । अत्र राज्ञवर्णने रेणूनां केतूनां च प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता । तथाच परस्परोपमेति विशेषणाद्रेणुवत् केतवः केतुनच्च रेणव इति उपमेयोपमया के रेणवः के केतवः इति संशयस्य व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ४ ॥

द्रुतमिति । अश्वचरणक्षताः तुरगखुरघट्टिताः भुवः उपरि पृष्ठभागे पाणिवृत्तयः पाणिताड़नानि येषान्ते उपरिपाणिवृत्तयः पणवा वाद्यविशेषा इवेत्युपमा । द्रुतं द्रुततरमेवाध्वनन् ध्वनन्ति स्म । द्रुतं शीघ्रमित्यमरः । वारिधरशब्देन तद्गर्जितं लक्ष्यते । तद्धीरैर्गम्भीरैर्वारणध्वनिभिर्गजबृंहितैर्हृष्टा अत एव कूजितकलाः कूजिता इत्यर्थः । ततो विशेषणसमासः । कलापाः येषां सन्तीति कलापिनो बर्हिणश्च ननृतुर्नृत्यन्ति स्म । अत्रोपमयोः संसृष्टिः वारिधरोपमया कलापिनां गजबृंहितेषु घनगर्जितभ्रान्तिमन्तरेण नृत्यासम्भवात् भ्रान्तिमदलङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ५ ॥

व्रजतोरिति । तदा तस्मिन् समये कुकुराधिनाथकुरुनाथसैन्ययोः हरिपार्थसैन्ययोः प्रणयपूर्वं स्नेहपूर्वकमेकतामैक्यं व्रजतोर्गच्छतोः

अवलोक एव नृपतिः स्म दूरतो
रभसाद्रथादवतरीतुमिच्छतः ।
अवतीर्णवान् प्रथममात्मना हरि-
र्विनयं विशेषयति संभ्रमेण सः ॥ ७ ॥

वपुषा पुराणपुरुषः पुरःक्षितौ
परिपुञ्जमानपृथुहारयष्टिना ।
भुवनैर्नतोऽपि विहितात्मगौरवः
प्रणनाम नाम तनयम्पितृष्वसुः ॥ ८ ॥

सतोरपि विषाणिभिरुभयसेनावर्त्तिभिः गजैरनुक्षणं प्रतिक्षणं मिथः परस्परं रुरुषे चुक्रुधे । भावे लिट् । तथाहि, मदेन मूढबुद्धिषु विपरीतप्रज्ञेषु विवेकिता कार्य्याकार्य्यविचारिता कुतः नास्त्येवेत्यर्थः । अथ तेषां स्वामिसौहार्द्देऽपि स्वयं विरोधिता न दोषायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६ ॥

अवलोक इति । दूरतो दूरादेवावलोके हरेर्दर्शन एव रभसा-द्धर्षाद्रथादवतरीतुमवरोढुम् । इतो वेति विकल्पाद्दीर्घः । इच्छतो नृप-तेर्धर्मराजात् प्रथमं तदवतरणात् पूर्वमेवेत्यर्थः । आत्मना स्वयमेव । प्रकृत्यादित्वात् तृतीया । अवतीर्णवान् रथादवरूढः सन् । निष्ठेति तरतेः क्तवतुप्रत्ययः । ऋत इद्धातोरितीत्वे र्वोरुपधाया दीर्घः, रदा-भ्यामिति निष्ठानत्वे रषाभ्यामिति णत्वम् । स हरिः संभ्रमेण त्वराविशेषेण विनयं मानौद्धत्यं विशेषयति स्म अतिशाययति स्म । एतेन हरेः पूज्यविषयो रत्याख्यो भावो ध्वन्यते ॥ ७ ॥

वपुषेति । पुराणपुरुषः हरिः सर्वलोकज्येष्ठोऽपीति भावः । तथा भुवनैर्नतो नमस्कृतोऽपि विहितं सम्पादितमात्मनो गौरवमुत्-कर्षो येन स सन् पूज्येषु नमस्काया औन्नत्यहेतुत्वादिति भावः । अत-एवात्र विचित्रालङ्कारः । विचित्रं स्वविरुद्धस्य फलस्य स्वात्मसमुद्यमः इति लक्षणात् । पुरःक्षितावग्रभूमौ परिपुञ्जमाना परितः पुञ्जी-

मुकुटांशुरञ्जितपरागमग्रतः
स न यावदाप शिरसा महीतलम् ।
क्षितिपेन तावदनपेक्षितक्रमं
भुजपञ्जरेण रभसादगृह्यत ॥ ९ ॥

न ममौ कपाटतटविस्तृतन्ततनौ
मुरवैरिवक्ष उरसि क्षमाभुजः ।
भुजयोस्तथापि युगलेन दीर्घयो-
र्विकटीकृतेन परितोऽभिषस्वजे ॥ १० ॥

क्रियमाणा पृथुः स्थूलो हारो मुक्तावलिर्यष्टिरिव यस्य तेन वपुषा शरीरेण। न त्वञ्जलिमात्रेण तथास्य पूज्यत्वादिति भावः। पूज्यत्वे हेतुमाह। पितृष्वसुस्तनयमिति पितृभगिनीपुत्रं धर्मराजमित्यर्थः। विभाषा स्वसृपत्योरित्यलुक् षोपदेशस्येति षत्वम्। अत्रापि पूर्ववद् भावध्वनिः। भुवनैर्नतोऽपि हारलौकिकयात्रानुवर्त्ती स्वयमेनं ननवा-निति विरोधाभासोऽलङ्कारो विचित्रेणोक्तेन सङ्कीर्णः नामनामेति छेकानुप्रासभेदश्च संसृष्ट इत्याद्यूह्यम् ॥ ८ ॥

मुकुटेति। स हरिर्मुकुटांशुभिः रञ्जितः स्वर्वर्णमापादितः परागो रेणुर्यस्य तदग्रतः पुरतो महीतलं शिरसा यावन्नाप नास्पृशदित्यर्थः तावत् क्षितिपेन धर्मराजेनानपेक्षितक्रमम् अनपेक्षितः क्रमः परिपाटी यस्मिन् कर्मणि तत्तथा। भुजाभ्यामेव पञ्जरेण इति रूपकं रभसाद्वेगादगृह्यत गृहीतः प्रणामक्रियासमारम्भे: प्रागेवोत्थाप्याश्लिष-दित्यर्थः ॥ ९ ॥

नेति। कपाटतटविस्तृतं मुरवैरिणो हरेर्वक्षस्तनावङ्के। क्षमा-भुजो धर्मराजस्योरसि न ममौ न परिमितमित्यर्थः। तथापि विक-टीकृतेन विपुलीकृतेन दीर्घयोर्भुजयोर्युगलेन परितः समन्तात् अभि-षस्वजे आलिङ्गितं वक्षसा भुजाभ्यां च कथञ्चित्परिच्छिन्नमभूत् न तु वक्षसैवेत्यर्थः। षदिसञ्ज्ञोः परस्य लिटीति धातुसकारस्य षत्वनिषे-

गतया निरन्तरनिवासमच्युत:
परिनाभि नूनमवमुच्य वारिजम्।
कुरुराजनिर्दयनिपीड़नाभयात्
मुखमध्यरोहि मुरविद्विष: श्रिया ॥ ११ ॥

शिरसि स्म जिघ्रति सुरारिबन्धने
छलवामनं विनयवामनन्तदा।
यशसेव वीर्य्यविजितामरद्रुम-
प्रसवेन वासितशिरोरुहे नृप: ॥ १२ ॥

धात् स्यादित्वेऽप्यभ्यासस्यैव षत्वम्। अत्र हरिवक्षसो वैपुल्यादति-शयद्योतनाय नृपवक्ष:सम्बन्धेऽप्यसम्बन्धोक्ते: सम्बन्धे असम्बन्धरूपा-तिशयोक्तिश्च। अनयोश्च स्वत:सिद्धकविप्रौढ़ोक्तिसिद्धयोरप्यतिशययो-रभेदाध्यवसायादुत्थापनमिति रहस्यम् ॥ १० ॥

गतयेति। नाभ्यां परिनाभि। विभक्त्यर्थेऽव्ययीभाव:। वारिजं नाभिकमलमित्यर्थ:। अवमुच्य विहाय अध्युर उरसि। विभक्त्यर्थे-ऽव्ययीभाव:। निरन्तरं सततं निवासं गतया प्राप्तया श्रिया शोभया रमया च नाभिसरोजत्यागेनात्र निवासेन तस्मादपहृतमिति ध्वनितं कुरुराजस्य या निर्दयनिपीड़ना गाढ़ाश्लेषरूपा ततो भयान्मुरविद्विषो मुरवैरिणो मुखमध्यरोहि अधिरूढ़म्। भीता ह्युच्चमारोहन्तीति लोकवेदयो: प्रसिद्धमिति भाव:। नूनमित्युत्प्रेक्षा। अत्र वाच्याया: सुहृदाश्लेषप्रभवाया: शोभाया: श्रियेति श्लेषमहिम्ना प्रतीयमानया रमया सहाभेदाध्यवसायात् क्रमेण नाभिमुखकमलाधारसम्बन्धाभि-धानात् श्लेषमूलातिशयोक्त्युत्थापित: पर्य्यायभेद:। क्रमेणैकमनेक-स्मिन्नाधारे वर्त्तते यदि। एकस्मिन्नथ वानेकम्पर्य्यायालङ्कृतिर्मतेति लक्षणात्। तदुपजीविता श्रीमुखारोहणस्य भयहेतुकत्वकथनादुत्-प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्कर: ॥ ११ ॥

शिरसीति। नृपो धर्मराज: सुरारिबन्धने पुरा बलिबन्धने

सुखवेदनाहृषितरोमकूपया
शिथिलीकृतेऽपि वसुदेवजन्मनि ।
कुरुभर्तुरङ्गलतया न तत्यजे
विकसत्कदम्बनिकुरम्बचारुता ॥ १२ ॥

इतरानपि क्षितिभुजोऽनुजन्मनः
प्रमनाः प्रमोदपरिफुल्लचक्षुषः ।
स यथोचितञ्जनसभाजनोचितः
प्रसभोद्धतासुरसभोऽसभाजयत् ॥ १४ ॥

छलवामनं कपटवामनं तदा पार्थोपपत्तिसमये तु विनयवामनं विनयनम्रमित्यर्थः तं हरिमिति शेषः। वीर्य्यविजितामरद्रुमप्रसवेन पारिजातहरणे शौर्य्यलब्धपारिजातकुसुमेन यशसेव पारिजातविजयप्रसूतयेव कीर्त्त्येत्युत्प्रेक्षा । वासितशिरोरुहे सुरभितकेशे शिरसि जिघ्रति स्म । प्रवासादेत्य मूर्द्धन्यवघ्राणमिति स्मरणात् । पुरा किल भगवान् सत्यभामा प्रीतये बलादिन्द्रलोकादपहृत्य पारिजातं निजगृहेष्वारोपितवानिति कथानुसन्धेया ॥ १२ ॥

सुखेति । वसुदेवाज्जन्म यस्य तस्मिन् वसुदेवजन्मनि वासुदेवे । जन्मोत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिर्वामनवचनादित्युक्तं प्राक् । शिथिलीकृतेऽपि विश्लेषिते सत्यपि सुखवेदनया आलिङ्गनसुखानुभवेन हृषिता उद्गता रोमकूपा रोममूलानि यस्यां तया। हृषेर्लोमसु इतीड़ागमः। कुरुभर्त्तुर्धर्मराजस्य अङ्गलतया विकसतः कदम्बनिकुरम्बस्य कदम्बकुसुमसमूहस्य चारुता कामनीयकं न तत्यजे न त्यक्ता किन्तु स्वीकृतेत्यर्थः । आश्लेषापगमेऽपि तज्जन्मसुखानुवृत्त्या तत्कार्य्यस्य रोमहर्षस्यानुवृत्तेरिति तात्पर्य्यार्थः । अतएव शिथिलीकृते हृषितरोमकूपयेत्यकारणकार्य्यकथनाद्विभावना तदपेक्षया चेयदुपमा कदम्बनिकुरम्बचारुता निदर्शना तया सङ्कीर्य्यते ॥ १२ ॥

इतरानिति । जनसभाजनोचितः सर्वजनसम्भावनार्हः प्रसभेन

समुपेत्य तुल्यमहसः शिलाघनान्
घनपक्षदीर्घतरबाहुशालिनः ।
परिशिश्लिषुः क्षितिपतीन् क्षितीश्वराः
कुलिशात्परेण गिरयो गिरीनिव ॥ १५ ॥

इभकुम्भतुङ्गघटितेतरेतर-
स्तनभारदूरविनिवारितोदराः ।
परिफुल्लगण्डफलकाः परस्पर-
स्मरिरेभिरे कुकुरकौरवस्त्रियः ॥ १६ ॥

बलात् उद्धृता असुरसभा असुरसङ्घो येन सः प्रमनाः हृष्टचित्तः स हरिः प्रमोदपरिफुल्लचक्षुषोत्फुल्लनेत्रान् इतरान् भीमादीन् क्षितिभुजो नृपस्यानु पश्चाज्जन्म येषां तान् अनुजन्मनः अनुजान् यथोचितं यथार्हमसभाजयत् सभाजयति स्म आलिङ्गनादिभिरानन्दयामासेत्यर्थः । आनन्दनसभाजने इत्यमरः । सभाजप्रीतिदर्शनयोरिति धातोश्चौरादिकाल्लङ् ॥ १४ ॥

समिति । तुल्यमहसः समतेजस्कान् शिला इव शिलाभिश्च घनान् दृढान् घनैः पक्षैरिव दीर्घतरबाहुभिः बाहुभिरेव पक्षैश्च शालन्त इति तथोक्तान् एवम्भूतान् क्षितिपतीन् एवम्भूताः क्षितीश्वराः समं युगपदेत्यागत्य । आङ्पूर्वादिणः क्त्वाल्यपि तुक् । कुलिशात् परेण परतः कुलिशक्षतेः पूर्वमित्यर्थः । सम्प्रत्यसम्भवादिति भावः । परेणेति विभक्तिप्रतिरूपकमव्ययम् । गिरयो गिरीनिव परिशिश्लिषुः आलिङ्गितवन्तः । उपमा ॥ १५ ॥

इभेति । इभकुम्भा इव ये तुङ्गाः घटिताश्च इतरेतरसां स्तनभारात्तैर्दूरे विनिवारितान्यतिकार्श्यादस्फुटतया स्थापितान्युदराणि याभ्यास्ताः । स्वाङ्गाच्चेति विकल्पादनीकारः । परिफुल्लगण्डफलकाः हर्षपुलकितगण्डस्थलाः कुकुरकौरवस्त्रियो यादवपाण्डवाङ्गनाः परस्परं परिरेभिरे आश्लिष्टवत्यः । परिरम्भः परिष्वङ्ग आश्लेष

रथवाजिपत्तिकरिणीसमाकुल-
मतदनीकयोः समगतद्वयम्मिथः।
दधिरे पृथक्करिण एव दूरतो
महतां हि सर्वमथवा जनातिगम्॥ १७॥

अधिरुह्यतामिति महीभृतोदितः
कपिकेतुनार्पितकरो रथं हरिः।
अवलम्बितैलविलपाणिपल्लवः
श्रयति स्म मेघमिव मेघवाहनः॥ १८॥

उपगूहनमित्यमरः। परिफुल्लेति फुल्लतेः पचाद्यजन्तं न तु फुल्लेति निष्ठान्ते अनुपसर्गाद्वेति कथनाविरोधात्॥ १६॥

रथेति। रथवाजिपत्तिकरिणीभिः समाकुलं सङ्कीर्णं करिणीग्रहणं पुञ्जव्यावृत्त्यर्थम्। अतो युद्धानर्हतया तासामसेनाङ्गत्वाच्च द्वन्द्वैकवद्भावः। तदनीकयोः सैन्ययोः। वरूथिनी बलं सैन्यञ्चक्रं चानीकमस्त्रियामित्यमरः। द्वयं मिथस्त्वान्योऽन्यं समगत सङ्गतम्। गमेर्लुङि समो गम्यृच्छेत्यादिनात्मनेपदं वा गम इति सिचः कित्त्वादनुदात्तोपदेशेत्यादिना अनुनासिकलोपः, ह्रस्वादङ्गादिति सकारलोपः। करिणः पुञ्जाः दूरत एव पृथगसङ्गतं दधिरे धृताः स्थापिता इत्यर्थः अथवा किमत्र चित्रमिति भावः। महतां महासत्त्वानां सम्बन्धि सर्वं चेष्टितमिति भावः। जनानतिगच्छतीति जनातिगमतिजनं सर्वलोकविलक्षणमिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १७॥

अधीति। हरिरधिरुह्यतां रथ आरुह्यतामित्येवं महीभृता धर्मराजेनोदितः उक्तः सन्। वदेः कर्मणि क्तः, वचिस्वपीत्यादिना सम्प्रसारणम्। कपिकेतुनार्जुनेनार्पितकरो दत्तहस्तः सन्। अवलम्बितोऽवष्टब्धः ऐलविलस्य कुबेरस्य पाणिपल्लवो येन सः मेघवाहन इन्द्रो मेघमिव रथं श्रयति स्म आरूढवानित्यर्थः। उपमा॥ १८॥

रथमास्थितस्य च पुराभिवर्त्तिन-
स्तिसृणाम्पुरामिव रिपोर्मुरद्विषः ।
अथ धर्ममूर्त्तिरनुरागभावितः
स्वयमादित प्रवयणम्प्रजापतिः ॥ १९ ॥

घनकैरथास्य तनुजालकान्तर-
स्फुरितचपाकरकरोत्कराकृति ।
पृथुफेनकूटमिव निम्नगापते-
र्मरुतश्च सूनुरधुवत्प्रकीर्णकम् ॥ २० ॥

रथमिति । किञ्चेति चार्थः । अथ रथारोहणानन्तरं रथमास्थितस्यारूढस्य पुराभिवर्त्तिनः इन्द्रप्रस्थाभिवर्त्तिनः त्रिपुराभिवर्त्तिनश्च मुरद्विषो हरेस्तिसृणां पुरां रिपोः त्रिपुरान्तकस्येव । न तिसृचतसृ इति नामि दीर्घप्रतिषेधः । धर्ममूर्त्तिर्धर्मात्मा प्रजापतिर्जनेश्वरः धर्मराजो ब्रह्मा च अनुरागभावितः सन् । प्रवीयते प्रेर्य्यतेऽनेनेति प्रवयणं प्राजनं प्रतोद इति यावत् । अतएव प्रवयणो दण्डः प्राजनो दण्ड इति काशिका । अजेः करणे ल्युट् वा याविति विकल्पादजेर्वीभावः पूर्वपदात् संज्ञायामिति णत्वम् । स्वयमादित गृहीतवान् सारथ्यं कृतवानित्यर्थः । ददातेः कर्त्तरि लुङि तङ् स्थाघ्वोरितीकारे सिचः कित्त्वे च ह्रस्वादङ्गादिति सलोपः । अत्र त्रिपुरहरणे ब्रह्मा हरस्येव हरेरयं सारथ्यं चकारेत्युपमा तस्याः प्रजापतिरिति राजब्रह्मणोः श्लेषमूलाभेदाध्यवसायादतिशयोक्तिनिर्व्यूढेति सङ्करः ॥ १९ ॥

घनकैरिति । किञ्चेति चार्थः । अथास्य हरेस्तनुषु सूक्ष्मेषु जालकान्तरेषु गवाक्षरन्ध्रेषु स्फुरितस्य प्रसृतस्य चपाकरोत्करस्य शशिकिरणपुञ्जस्याकृतिरिवाकृतिर्यस्य तत्प्रकीर्णकं चामरं निम्नगापतेः समुद्रस्य पृथु विपुलं फेनकूटं फेनपुञ्जमिव मरुतः सूनुर्भीमसेनः घन-

विकसत्कलायकुसुमासितद्युते-
रलघूडुपाण्डु जगतामधीशितुः।
यमुनाह्रदोपरिगहंसमण्डल-
द्युतिजिष्णु जिष्णुरभजतोष्णवारणम् ॥ २१ ॥

पवनात्मजेन्द्रसुतमध्यवर्त्तिना
नितरामरोचि रुचिरेण चक्रिणा।
दधतेव योगमुभयग्रहान्तर-
स्थितिकारितं दुरुधुराख्यमिन्दुना ॥ २२ ॥

कैरधुयत् धुवति स्म। धुवतिरयं तौदादिक इत्युक्तम्। उपमायाः सङ्करः ॥ २० ॥

विकसदिति। विकसत् कलायकुसुमं कालपुष्पम्। कलायः स्यात् काल इति वैजयन्ती। तद्वदसितद्युतेर्नीलवर्णस्य जगतामधीशितुर्जगन्नाथस्य जिष्णुरर्जुनः अलघूडुपाण्डु स्थूलनक्षत्रधवलम्। अत एव यमुनाह्रदस्योपरिगमुपरिगतम्। अन्यत्रापि दृश्यते इति डप्रत्ययः। तस्य हंसमण्डलस्य द्युतिं शोभां जिष्णु जयनशीलम्। ग्लाजिस्थश्चेति गस्नुच्। उष्णवारणमातपत्रमभजत भजतवान्। भजः कर्त्तरि लुङ्, स्वरितञित इत्यात्मनेपदं, झलः सिचः किच्वादगुणत्वाद्‌ ह्रस्वादङ्गादिति सकारलोपः। अत्राप्युपमालङ्कारः ॥ २१ ॥

पवनेति। पवनात्मजेन्द्रसुतमध्यवर्त्तिना भीमार्जुनमध्यगतेन रुचिरेण चक्रिणा हरिणा उभयोरर्कान्यपक्षयोरन्यतमयोरन्तरे मध्ये स्थित्या वशेन कारितं सम्पादितम्। वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगो व्याख्यातः। दुरुधुरेत्याख्या यस्य तत् दुरुधुराख्यं योगं दधता अर्कान्यपक्षमध्यगतेनेत्यर्थः। इन्दुनेवेत्युपमा। नितरामतिशयेन। अव्ययादाम्द्रव्ये इत्यामुप्रत्ययः। अरोचि अशोभि। रोचतेर्भावे लुङ्। स्वभावरमणीयस्यानुरूपान्तरसमायोगाच्छोभातिशयो जायते रत्नकाञ्चनयोरिवेति भावः। अत्र भगवाना-

वशिनं क्षितेरयनयाविवेश्वर-
न्नियमो यमश्च नियतं यतिं यथा ।
विजयश्रिया वृतमिवार्कमारुता-
वनुसस्रतुस्तमथ दस्रयोः सुतौ ॥ २३ ॥
मुदितैस्तदेति दितिजन्मनां रिपा-
वविनीयसम्भ्रमविकाशिभक्तिभिः ।

चार्य्यमिहिरः, हित्वार्कं सुनफाऽनफा दुरुधुरा स्वान्त्योभयस्थैर्ग्रहैः शीतांशोरिति । एतदेव स्पष्टीकृतं कल्याणवर्म्मणा, रविवर्ज्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञितोऽतोऽन्य इति ॥ २२ ॥

वशिनमिति । अथ भीमार्जुनोपवेशनानन्तरं वशिनमिन्द्रियजयवन्तम् अव्यसनिनमिति यावत् । क्षितीश्वरं भूपतिम् अयः शुभावहो विधिर्नीतिर्नयस्ताविव दैवपुरुषकाराविवेत्यर्थः । नियतमाचारनिष्ठं यतिञ्जितेन्द्रियम् । यतिनो यतयश्चेत्यमरः । नियमः शरीरातिरिक्तदेशकालादिसाधनापेक्षः सन्ध्योपासनजपादिः । यमः शरीरमात्रसाधनापेक्षोऽहिंसादिः शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः । नियमस्तु स यत्कर्म नित्यमागन्तु साधनम् । स च यथा यमनियमाविवेत्यर्थः । इववद्वायथाशब्दा इति दण्ड्यभिधानात् । विजयश्रिया युतम् आसन्नविजयं विजिगीषुं विपुमित्यर्थः अर्कमारुताविव दस्रयोरश्विनोः सुतौ नकुलसहदेवौ । नासत्यावश्विनौ दस्रावित्यमरः । तं हरिमनुसस्रतुरनुचेरतुः पृष्ठोपसर्पणं चक्रतुरित्यर्थः । इह सर्वकर्त्तृमनोरथानुकूलव्यापारवत्त्वमनुसरणम् । इयं मालोपमा ॥२३॥

मुदितैरिति । तदा तस्मिन् समये इति मुदितैर्हृष्टैरविनीयोऽकल्कोऽकपट इति यावत् यः संभ्रम आदरस्तेन विकाशिनी स्फुटीभवन्ती भक्तिर्येषां तैः । विपूयविनीयजित्यामुञ्जकल्कहलिष्विति कल्कार्थे निपातः । नञ्पूर्वपदः [illegible] बहुव्रीहिः । अवि-

उपसेदिवद्भिरुपदेष्टरीव तै-
र्वॄते विनीतमविनीतशासिभिः॥ २४॥
गतयोरभेदमिति सैन्ययोस्तयो-
रथ भानुजह्नुतनयाम्भसोरिव।
प्रतिनादितामरविमानमानकै-
र्नितरामुदा परमयेव दध्वने॥ २५॥

नीतं शासतीत्यविनीतशासिभिः दुष्टशिक्षकैः पाण्डवैः दितिजन्मनां रिपौ कृष्णविषये उप समीपे सीदन्ति स्मेति उपसेदिवांसोऽन्तेवासिनः। भाषायां सदवसश्रुवः इति क्वसुः लिटः क्वसुरादेशः। तैरुपसेदिवद्भिरुपदेष्टरि गुराविवेत्युपमा। विनीतमनुद्धतत्वं वव्रते वृतम्। भावे लिट्। ननु विकाशिभक्तिभिरिति अत्र कथं पूर्वपदस्य पुंवद्भावः भक्तिशब्दस्य प्रियादिपाठात् स्त्रियाः पुंवदिति पुंवद्भावसूत्रे प्रियादिष्विति निषेधादिति विकाशिशब्दस्याविकाशिनिवृत्तिमात्रपरतयाऽस्त्रीत्वस्य विवक्षितत्वान्नपुंसकपूर्वपदो बहुव्रीहिरिति केचित् तदेतदभिप्रेत्योक्तं वृत्तिकारेण दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धिरिति एतदेव स्पष्टीकृतं गणव्याख्याने। दृढं भक्तिर्यस्येति नपुंसकं पूर्वपदम्। धात्वर्थविशेषणमात्रपरे दृढशब्दे लिङ्गविशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षितमिति। भोजराजस्तु भक्तौ कर्मसाधनायामित्यनेन सूत्रेण भज्यते सेव्यते इति कर्मार्थत्वेन दृढा भक्तिरित्यादि भवति। भावसाधनायां तु दृढभक्तिर्भवत्येवेत्याह। तदेतत् सर्वमस्माभिः कालिदासत्रयसञ्जीविन्यां दृढभक्तिरिति ज्येष्ठे इत्यादिषु विवेचितं तस्माद्विकाशिभक्तिभिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वे नपुंसकत्वे च रूपसिद्धिरस्तीति स्थितम्॥ २४॥

गतयोरिति। इति इत्थं गतयोः सैन्ययोः भानुजह्नुतनये यमुनाजाह्नव्यौ तयोरम्भसी प्रवाहौ तयोरिव अभेदमैक्यं गतयोः सतोः। यस्य च भावेन भावलक्षणमिति सप्तमी। एतेन सैन्ययोरवार्यत्वमु-

सखमौचितं क्षितिपतेरुपेयुषा-
म्परितः प्रकल्पितनिकेतनं बहिः ।
उपरुध्यमानमिव भूभृतां बलैः
पुटभेदनन्दनुसुतारिरैक्षत ॥ २६ ॥

प्रतिनादपूरितदिगन्तरः पतन्
पुरगोपुरम्प्रति स सैन्यसागरः ।
रुरुचे हिमाचलगुहामुखोन्मुखः
पयसाम्प्रवाह इव सौरसैन्धवः ॥ २७ ॥

नम् । अथ सैन्यमेलनानन्तरम् आनकैर्मङ्गलदुन्दुभिभिः परमया मुदेव हर्षेण दूवेत्युत्प्रेक्षा । प्रतिनादितानि प्रतिध्वनितानि अमरविमानानि दृष्टुमागत्याम्बरस्थितानि विमानानि देवयानानि यस्मिन् कर्मणि तद्यथा तथा नितरान्दध्वने ध्वनितम् । भावे लिट् ॥ २५ ॥

सखमिति । क्षितिपतेर्धर्मराजस्य सखं क्रतुमौचितमुपेयुषां ततस्तत आगतानां भूभृतां राज्ञां बलैः सैन्यैः बहिः परितः प्रकल्पितानि निर्मितानि निकेतनानि निवासा यस्य तत् अतएवोपरुध्यमानं शत्रुसेनावेष्ट्यमानमिव स्थितमित्युत्प्रेक्षा । पुटभेदनं पत्तनं मयकृतमिन्द्रप्रस्थम् । पत्तनं पुटभेदनमित्यमरः । दनुसुतारिर्दानवारिः पुरोऽभ्यैक्षताद्राक्षीत ॥ २६ ॥

प्रतीति । प्रतिनादैः प्रतिध्वानैः पूरितं व्याप्तं दिशाम् अन्तरमन्तरालं येन सः पुरगोपुरं पुरद्वारम्प्रति । गोपुरं तु पुरद्वारि द्वारमात्रे नपुंसकमिति विश्वः । एवं च न पुरशब्दस्य पौनरुक्त्यशङ्का । पतन् धावन् स सैन्यसागरः सेनासमुद्रः हिमाचलगुहामुखस्योन्मुखोऽभिमुखः सुरसिन्धोर्गङ्गाया अयं सौरसैन्धवः । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः । पयसां प्रवाह इव रुरुचे रेजे । उपमालङ्कारः ॥ २७ ॥

असकृद्गृहीतबहुदेहसम्भव-
स्तदसौ विभक्तनवगोपुरान्तरम्।
पुरुषः पुरम्प्रविशति स्म पञ्चभिः
सममिन्द्रियैरिव नतेन्द्रसूनुभिः ॥ २८ ॥

तनुभिस्त्रिणेत्रनयनानवेक्षित-
स्मरविग्रहद्युतिभिरद्युतन्नराः।
प्रमदाश्च यत्र खलु राजयक्ष्मणः
परतो निशाकरमनोरमैर्मुखैः ॥ २९ ॥

असकृदिति। असकृद् बहुशो गृहीतो लोकधारणाय स्वीकृतो बहुषु देहेषु मत्स्यकूर्मादिषु शरीरेषु सम्भवः प्रादुर्भावो येन सः। अन्यत्र स्वकर्मणा प्राप्तनयोनिसम्बन्धरूपसम्भव इत्यर्थः। पुरुषः पुराणपुरुषो हरिर्जीवश्च विभक्तानि नवानि प्रत्यग्राणि गोपुरान्तराणि द्वारविशेषा यस्य तत् अन्यत्र नवसङ्ख्याकानि गोपुरान्तराणि इन्द्रियद्वारभेदा यस्मिन् तत् पुरपत्तनं शरीरञ्च। पुरं पुरी शरीरे चेति विश्वः। पञ्चभिरिन्द्रियैः सममिव पञ्चभिर्नतैरिन्द्रसूनुभी राजपुत्रैः पाण्डवैः सह असौ हरिस्तत्पुरं प्रविशति स्म। जीवो हि देहाद्देहान्तरं पूर्वेन्द्रियैः सह प्रविशति लिङ्गशरीरस्थानपायादिति भावः। श्लेषसङ्कीर्णेयमुपमा ॥ २८ ॥

तनुभिरिति। यत्र पुरे नराः पुरुषाः त्रिनेत्रस्त्र्यम्बकः। पूर्वपदात् संज्ञायामग इति णत्वम्। तस्य नयनेनानवेक्षितस्य स्मरविग्रहस्य द्युतिरिव द्युतिर्यासान्ताभिस्तनुभिः मूर्त्तिभिः। स्त्रियां मूर्त्तिस्तनुस्तनूरित्यमरः। अद्युतन्नद्योतन्त स्म। द्युत दीप्तौ द्युद्भ्यो लुङीति विकल्पात् परस्मैपदं, पुषादित्वेऽप्यङ्। प्रमदाः स्त्रियश्च राज्ञश्चन्द्रस्य यक्ष्मा राजयक्ष्मा क्षयरोगः। राजानं यक्ष्मा आरादिति श्रवणात्। राजयक्ष्मा क्षयः शोष इत्यमरः। तस्मात्परतः ऊर्ध्वमित्यर्थः निशाकरवन्मनोरमैरक्षीणेन्दुसुन्दरैरित्यर्थः मुखैरद्युतन्। तत् पुरं प्रविष्ट इति पूर्वेणान्वयः। उपमयोः संसृष्टिः ॥ २९ ॥

अवलोकनाय सुरविद्विषान्द्विषः
पटहप्रणादविहितोपहूतयः ।
अवधीरितान्यकरणीयसत्वराः
प्रतिरथ्यमीयुरथ पौरयोषितः ॥ ३० ॥

अभिवीक्ष्य सामिकृतमण्डनं यतीः
कररुद्धनीविगलदंशुकाः स्त्रियः ।
दधिरेऽधिभित्ति पटहप्रतिस्वनैः
स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ३१ ॥

अवलोकनायेति । अथ हरेः पुरप्रवेशानन्तरं पटहप्रणादैर्दुन्दुभिध्वनिभिर्विहितोपहूतयः कृताह्वाना इवेत्यर्थः पुरे भवाः पौर्यस्ता योषितः पौरयोषितः । स्त्रियः पुंवद्भावः । सुरद्विषाम् असुराणां द्विषो हरेरवलोकनाय दर्शनार्थमवधीरितान्यकरणीयाः त्यक्तान्यकार्याः ताश्च ताः सत्वराश्च ताः सत्यः रथ्यामति प्रतिरथ्यम् । याथार्थ्येऽव्ययीभावः । ईयुः प्राप्ताः । एतेन स्त्रीणां हरिविलोकने कालाक्षमत्वलक्षणमौत्सुक्यमुक्तम् । अत्र पौराङ्गनाप्राप्तेः प्रवेशवाद्यश्रवणानन्तर्यात्तदुपह्वानोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ३० ॥

अथाष्टादशभिः पौराङ्गनाशृङ्गारचेष्टां वर्णयति । अभीति । सामिकृतमण्डनमर्द्धविरचितसाधनं यथा तथा यतीर्गच्छन्तीः । इणः शतरि ङीप् । कररुद्धनीवीनि करगृहीतग्रन्थीनि गलदंशुकानि स्वंसमानपरिधानानि यासान्ताः लसदिति पाठान्तरं तदा लसदुल्लसदित्यर्थः । अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोरिति शब्दार्णवे । स्त्रियः स्त्रीः अभिवीक्ष्य सौधपङ्क्तयः अधिभित्ति भित्तिषु । विभक्त्यर्थेऽव्ययीभावः । पटहप्रतिस्वनैस्तूर्यप्रतिध्वनिभिः स्फुटमुद्धतम् अट्टहासम् उच्चैर्हसितमिव दधिरे । इवेत्युत्प्रेक्षा । विकृतिदर्शनाद्धासो भवतीति भावः । अत्र कुतूहलाख्या चेष्टोक्ता । कुतूहलं रम्यदृष्टौ चापल्यं परिकीर्त्तितमिति लक्षणात् ॥ ३१ ॥

रभसेन हारपददत्तकाञ्चयः
प्रतिमूर्द्धजन्निहितकर्णपूरकाः।
परिवर्त्तिताम्बरयुगाः समापतन्
वलयीकृतश्रवणपूरकाः स्त्रियः॥ ३२॥

व्यतनोदपास्य चरणम्प्रसाधिका
करपल्लवाद्रसवशेन काचन।
द्रुतयावकैकपदचित्रितावनिं
पदवीङ्गतेव गिरिजा हरार्द्धताम्॥ ३३॥

व्यचलन् विशङ्कटकटीरकस्थली-
शिखरस्खलन्मुखरमेखलाकुलाः।

रभसेनेति। रभसेन त्वरया हारपदे मुक्तादामस्थाने वक्षसि दत्तकाञ्चयो न्यस्तरशनाः प्रतिमूर्द्धजं मूर्द्धजेषु केशेषु। विभक्त्यर्थेऽव्ययीभावः। विहिताः कर्णपूरकाः। कर्णावतंसा याभिस्ताः। परिवर्त्तितं विपर्य्यासेन धृतम् अम्बरयुगं वाससी याभिस्ताः परिधानीकृतमुत्तरीयं कुचांशुकञ्च जघने दत्तमित्यर्थः। वलयीकृताः कङ्कणीकृताः श्रवणपूरकाः कुण्डलानि याभिस्ताः स्त्रियः समापतन् अधावन्। एतेन विभ्रमाख्या चेष्टोक्ता। विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय इति लक्षणात्। स च भ्रममूल इति भ्रान्तिमदलङ्कारो व्यज्यते॥३२॥

व्यतनोदिति। काचन स्त्री रसवशेन हरिवीक्षणपारतन्त्र्येण। गुणे द्रवे रस इत्यमरः। प्रसाधिकायाः अलङ्कर्त्र्याः करपल्लवाच्चरणमपास्य असमाप्तावेवाक्षिप्य। हरार्द्धतां हरस्यार्द्धाङ्गताङ्गता अन्यथैकपादालक्तकासम्भवादिति भावः। गिरिजा गौरीव। यावकेनार्द्रालक्तकेन एकपदेन चित्रिता चित्रवर्णीकृता अवनिर्यस्याः तां पदवीं व्यतनोदकरोत्। उपमालङ्कारः। एषा कुतूहलाख्या चेष्टा रसाहिइच्छाजनितचापलरूपत्वादिति॥ ३३॥

भवनानि तुङ्गतपनीयसंक्रम-
क्रमणक्वणत्कनकनूपुराः स्त्रियः ॥ ३४ ॥
अधिरुक्ममन्दिरगवाक्षमुल्लसत्
सुदृशो रराज मुरजिद्दिदृक्षया ।
वदनारविन्दमुदयाद्रिकन्दरा-
विवरोदरस्थितमिवेन्दुमण्डलम् ॥ ३५ ॥
अधिरूढया निजनिकेतमुच्चकैः
पवनावधूतवसनान्तयैकया ।
विहितोपशोभमुपयाति माधवे
नगरं व्यरोचत पताकयेव तत् ॥ ३६ ॥

व्यचलन्निति । विशङ्कटानां विशालानां कटीरकस्थलीनां कटि-भागानां शिखरेषु अग्रेषु स्खलन्त्यो लुठन्त्योऽतएव मुखराः शब्दाय-मानाः ताभिर्मेखलाभिराकुलाः तुङ्गेषु तपनीयसंक्रमेषु कनकसोपानेषु क्रमणेन क्वणन्तः कनकनूपुरा यासान्ताः स्त्रियः भवनानि हर्म्याणि व्यचलन् तत्र गत्वारोहन्नित्यर्थः । चलेर्गत्यर्थाल्लङ् । एतदपि पूर्ववदतिकुतूहलमेव । वृत्त्यनुप्रासोऽलङ्कारः ॥ २४ ॥

अधीति । मुरजितो हरेर्दिदृक्षया द्रष्टुमिच्छया । दृशेः सन्नन्तादप्रत्ययादिति स्त्रियामप्रत्यये टाप् । रुक्ममन्दिरस्य कनकहर्म्यस्य गवाक्षे अधिरुक्ममन्दिरगवाक्षम् । विभक्त्यर्थेऽव्ययीभावः । उल्लसत् प्रकाशमानं सुदृशः स्त्रिया वदनारविन्दम् उदयाद्रिकन्दराविवरोदरस्थितं तत्र स्थितमिन्दुमण्डलमिव रराजेत्युपमा । अत्रापि सुदृशो गवाक्षाक्रमणस्य दर्शनार्थचापलरूपत्वात् कुतूहलमेव मुरजिद्दिदृक्षयेत्यादिना व्यक्तमेव ॥ २५ ॥

अधीति । उच्चकैर्निजनिकेतं स्वसौधमधिरूढया आरूढवत्या पवनेनावधूतः कम्पितः वसनान्तो वस्त्राञ्चलो यस्यास्तया एकया कया॰

करयुग्मपद्ममुकुलापवर्जितैः
प्रतिवेश्म लाजकुसुमैरवाकिरन्।
अवदीर्णशुक्तिपुटमुक्तमौक्तिक-
प्रकरैरिव प्रियरथाङ्गमङ्गनाः॥ २७॥

हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः।
अभवत्प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः॥ २८॥

र्चिदङ्गनया हेतुना तन्नगरम् इन्द्रप्रस्थं माधवे उपयात्यागच्छति। यातेर्लटः शत्रादेशः। पताकया वैजयन्त्या विहितोपशोभं कृतशोभमिवालङ्कृतमिवेत्युत्प्रेक्षा। व्यरोचत व्यराजत। कृत्स्नस्यापि नगरस्य स्वयं पताकेव बभावित्युत्प्रेक्षा। तस्याः सकलपौराङ्गनातिशायि लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। अत्रापि प्रासादारोहणं पूर्ववत् कुतूहलमेव॥ २६॥

करेति। प्रतिवेश्म वेश्मनि। विभक्त्यर्थेऽव्ययीभावः। अङ्गनाः पुरन्ध्र्यः। करयुग्मान्यञ्जलयस्तानि पद्ममुकुलानीवेत्युपमितसमासः। तैरपवर्जितैरतएवावदीर्णैर्विभिन्नैः शुक्तिपुटैः शुक्तिकोशैः मुक्ता उत्सृष्टा ये मौक्तिकप्रकरा मुक्तानिकरास्तैरिव स्थितैरित्युत्प्रेक्षा। लाजाः कुसुमानीव तैः लाजकुसुमैः आचारलाजैरित्यर्थः। प्रियं रथाङ्गं चक्रं यस्य तं प्रियरथाङ्गं चक्रिणं हरिमित्यर्थः। अवाकिरन् छादयामासुः॥ २७॥

हिमेति। हिममुक्तः शिशिरापगमाद्धिमान्निर्मुक्तश्चन्द्रः स इव रुचिरः। अन्यत्र तेन रुचिरः पद्मेन पद्मया च सह वर्तत इति सपद्मः स एव सपद्मकः। पद्महस्तः सश्रीकश्च। शैषिकः स्वार्थिको वा कप्प्रत्ययः। अन्यत्र सपङ्कजः। शैषिकः कप्रत्ययः। द्विजान् ब्राह्मणान् अन्यत्र पक्षिणः कोकिलादीन् मदयन् हर्षयन् जनित-

धरणीधरेन्द्रदुहितुर्भयादसौ
विषमेक्षणः स्फुटममूर्न पश्यति ।
मदनेन वीतभयमित्यधिष्ठिताः
क्षणमीक्षते स्म स पुरो विलासिनीः ॥ ३९ ॥

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥ ४० ॥

मीनकेतनः प्रद्युम्नजनकः अन्यत्र मदनोद्दीपकः । प्रसादिता अनुगृहीताः सुरा देवा येन । अन्यत्र प्रसादिता निर्मलीकृता सुरा मदिरा यस्मिन् स माधवो हरिर्वसन्तश्च । माधवस्तु वसन्ते स्याद्वैशाखे गरुडध्वजे इति विश्वः । प्रमदैव जनस्तस्य प्रमदाजनस्य । जातावेकवचनम् । चिराय महोत्सवोऽभवत्, तद्वदानन्दकरोऽभूदित्यर्थः । इहानन्दकरत्वसाम्येन माधवे महोत्सवरूपणात् रूपकसिद्धिः । श्लेषस्तु हरिवसन्तयोरिह नास्त्येव । प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात् । किन्तु शब्दशक्तिमूलो ध्वनिरेव ॥ ३८ ॥

धरणीति । असौ रुद्रादन्यो विषमेक्षणस्त्र्यक्षः धरणीधरेन्द्रदुहितुः पार्वत्याः सपत्नीशङ्किन्या इति भावः । भीत्रार्थानां भयहेतुरिति पञ्चमी । भयात् स्फुटम् अमूः पौरयोषितः न पश्यतीति हेतोरिति विश्वासादित्यर्थः । अतएव गम्योत्प्रेक्षा । मदनेन वीतभयमधिष्ठिता आक्रान्ता अत्यारूढमदना इत्यर्थः पुरो विलासिनीः स हरिः क्षणमीक्षते स्म सविस्मयमिति भावः ॥ ३९ ॥

विपुलेति । युगक्षये कल्पान्ते । सागरे शेते इति सागरशयस्य । अधिकरणे शेतेरित्यच्प्रत्ययः, शयवासवासिष्वकालादिति विकल्पादलुगभावः । यस्य हरेर्विपुलेन कुक्षिणा भुवनानि पपिरे पीतानि । पिबतेः कर्मणि लिट् । स [illegible] स्त्रिया पुनः कदाचित्

अधिकोन्नमद्घनपयोधरम्मुहुः
प्रचलत्कलापिकलशङ्खकस्वना ।
अभिकर्णमङ्गुलिमुखेन काचन
द्रुतमेककर्णविवरं व्यघट्टयत् ॥ ४१ ॥
परिपाटलाब्जदलचारुणासक्त-
स्खलिताङ्गुलीकिशलयेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुम्मधो-
रनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥ ४२ ॥

पौराङ्गनया मदविभ्रमेण मदविकारेणासकलया असमग्रया एकया दृशा पपे पीतः सतृष्णं दृष्ट इत्यर्थः । कुचिकोणनिविष्टनिखिलविष्टपस्य हरेर्महतः आधेयस्यात्यल्पतरैककान्ताकटाक्षकोणाधारत्वोक्त्या चमत्कारादधिकालङ्कारः । आधाराधेययोरानुरूप्याभावोऽधिको मत इति लक्षणात् । अयञ्च तात्कालिकविकारात्मा विलासाख्यो भावो यत्कटाक्षवीक्षणम् । तात्कालिकविकारः स्याद्विलासोऽङ्गक्रियादिष्विति दशरूपकात् ॥ ४० ॥

अधिकेति । काचन कान्ता अभिकर्णं कर्णाभिमुखम् । आभिमुख्येऽव्ययीभावः । अधिकं भुजोन्नमनादुद्दूरमुन्नमन् घनः कठिनः पयोधरः स्तनो यस्याः सा मुहुः प्रचलतो नृत्यतः कलापिनो बर्हिण इव कलो मधुरः शङ्खकस्वनो वलयध्वनिर्यस्याः सा सती । शङ्खकं वलये कम्बाविति विश्वः । अङ्गुलिमुखेनाङ्गुल्यग्रेणैकस्य कर्णस्य विवरं रन्ध्रं द्रुतं शीघ्रं व्यघट्टयत् । कण्डूविनोदार्थमिवाताडयत् । वस्तुतस्तु भावाविष्करणार्थमेवेति भावः । अयञ्च पूर्ववद्विलास एव । कलापिकलेत्युपमा ॥ ४१ ॥

परीति । अपरा स्त्री । परिपाटलाब्जदलचारुणा रक्ताब्जपत्ररुचिरेण असक्तम्मुहुःस्खलितान्यङ्गुल्यः किशलयानीवाङ्गुलीकिशलयानि यस्य तेन पाणिना सशिरःप्रकम्पं शिरःकम्पयुक्तं यथा तथा मधोरिपुं

नलिनान्तिकोपहितपल्लवश्रिया
व्यवधाय चारु मुखमेकपाणिना ।
स्फुरिताङ्गुलीविवरनिःसृतोल्लस-
द्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

वलयार्पितासितमहोपलप्रभा-
बहुलीकृतप्रतनुरोमराजिना ।
हरिवीक्षणाक्षणिकचक्षुषान्यया
करपल्लवेन गलदम्बरं दधे ॥ ४४ ॥

ङ्कारम् अनुदीर्णवर्णम् अनुच्चारिताक्षरम् अतएव निभृतार्थं परेषामविदितार्थं यत्तदनुदीर्णवर्णनिभृतार्थं यथा तथा आह्वयत् परप्रकाशनभयादव्याहरन्ती चेष्टयैवाह्वानं कृतवतीत्यर्थः । अत्रापि पूर्ववद्विलासोपमे भावालङ्कारौ ॥ ४२ ॥

नलिनेति । अपरा स्त्री नलिनान्तिके उपहितस्य पल्लवस्य श्रीर्यस्य तेन मुखसन्निधानादिति भावः । एकपाणिना चारु निसर्गसुन्दरं मुखं व्यवधाय तिरोधाय स्फुरदङ्गुलीविवरनिःसृता उज्ज्वलाङ्गुल्यन्तरालनिर्गता अतएवोल्लसन्त उत्सर्पन्तो दशनप्रभा एवाङ्कुरा यस्मिन् कर्मणि तद्यथा तथा अजृम्भत जृम्भणमास्यविवरणान्तश्चेष्टवस्तुसाक्षात्कारकृतजाड्यानुभावः । अत्र नलिनपल्लवयोरसम्बन्धयोः सम्भावनया सम्बन्धाभिधानादतिशयोक्तिः ॥ ४३ ॥

वलयेति । हरिवीक्षणे अक्षणिकचक्षुषा स्थिरदृष्ट्या विस्मयादराभ्यां स्तिमितनेत्रयेत्यर्थः । अन्यया स्त्रिया गलत्सुखपारवश्यात् स्रंसमानमम्बरं वलयेष्वर्पिताः खचिता ये असितमहोपला नीलमहामणयः । उपलौ मणिपाषाणाविति विश्वः । तेषां प्रभाभिर्बहुलीकृता सान्द्रीकृता प्रतनुः सूक्ष्मा रोमराजिर्यस्य तेन करपल्लवेन दध्रे धृतम् । अयञ्च [illegible]विलासः । अत्रेन्द्रनीलप्रभाणां

निजसौरभभ्रमितभृङ्गपक्षति-
व्यजनानिलक्षयितघर्मवारिणा ।
अभिशौरि काचिदनिमेषदृष्टिना
पुरदेवतेव वपुषा व्यभाव्यत ॥ ४५ ॥
अभियाति नः सतृष एष चक्षुषो
हरिरित्यखिद्यत नितम्बिनीजनः ।

रोमावलीवल्लीकरणोक्त्या प्रभास्वपि रोमराजित्वप्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः ॥ ४४ ॥

निजेति । काचित् स्त्री निजेनात्मीयेन सौरभेण सौगन्ध्येन भ्रमितानां भ्रमणं कारितानां भृङ्गाणां पक्षतयः पक्षमूलानि । स्त्री पक्षतिः पक्षमूलमित्यमरः । पक्षात्तिरिति तिप्रत्ययः । ता एव व्यजनानि इति रूपकं स्वेदहरणलिङ्गात् । तासामनिलेन क्षयितं नाशितं घर्मवारि स्वेदो यस्य तेन अभिशौरि शौरेरभिमुखम् । आभिमुख्येऽव्ययीभावः । अनिमेषा दृष्टिर्यस्य तेन वपुषा निमित्तेन पुरदेवतेव इन्द्रप्रस्थाधिदेवतेव व्यभाव्यत विभाविता तर्कितेति यावत् । अनिमेषत्वञ्चेष्टदर्शनजन्यजाड्यसञ्चार्यनुभावः । अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमेषनयननिरीक्षणतूष्णीम्भावदयस्तत्रेति लक्षणात् इष्टाङ्गसौरभानिमेषत्वाभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्ष्यते इत्युपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षा तया चास्याजात्याः पद्मिनीत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः निजसौरभेनेत्यनेन । कमलमुकुलमृद्वी फुल्लराजीवगन्धिः सुरतपयसि यस्याः सौरभन्दिव्यमङ्ग इत्यादिपद्मिनीलक्षणोपलक्षणादिति । विपुलेनेत्यादिश्लोकोक्ताः षड़पि नायिकाः प्रौढ़ाः साधारण्यश्च तत्र तासामसम्भवात् अन्यथासां कृतचेष्टावर्णनानौचित्याच्चेत्यलमतिप्रपञ्चेन ॥ ४५ ॥

अभियातीति । असौ नितम्बिनीजनः स्त्रीजनः नोऽस्माकं चक्षुषः सतृषः सतृष्णस्यैव सतश्चक्षुषः सतृष्णा सत्येव अनादृत्येत्यर्थः ।

न विवेद यः सततमेनमीक्षते
न वितृष्णतां व्रजति खल्वसावपि ॥ ४६ ॥

अकृतस्वसद्मगमनादरः क्षणं
लिपिकर्मनिर्मित इव व्यतिष्ठत ।
गतमच्युतेन सह शून्यतां गतः
प्रतिपालयन्मन इवाङ्गनाजनः ॥ ४७ ॥

अलसैर्मदेन सुदृशः शरीरकैः
स्वगृहान् प्रति प्रतिययुः शनैः शनैः ।

षष्ठी चानादर इति षष्ठी । एष हरिरभियात्यभिगच्छतीत्यखिद्यत खेदङ्गतः । खिदेर्दैवादिकात् कर्त्तरि लङ् । अतोऽत्प्रेक्ष्यते । नेति यो जन एनं हरिं सततमीक्षते असावपि खलु वितृष्णतां न व्रजतीति न विवेद नित्यदर्शनेऽप्यपूर्ववदेव भवतीति नाबुध्यतेत्यर्थः । वेद चेन्नाखिद्यतेति भावः । अत्राखिद्यतेति स्त्रीणां प्रारब्धहरिवीक्षणसुखविच्छेदकृतविषादाख्यसञ्चारिभावनिबन्धनात्प्रेयोऽलङ्कारः तदुत्थापिता चेयमुक्तावेदनोत्प्रेक्षेति सङ्करः । प्रारब्धकार्य्यासिद्ध्यादेर्विषादः सत्त्वसङ्क्षय इति दशरूपके सत्त्वसङ्क्षयश्चित्तभङ्गः ॥ ४६ ॥

अकृतेति । अङ्गनाजनः । अच्युतेन सह गतं मनः प्रतिपालयन् प्रतीक्षमाण इवेत्युत्प्रेक्षा । शून्यतां नीरजस्कतां गतः । अकृतस्वसद्मगमनादरः निवृत्तनिजगृहप्राप्त्यपेक्षः सन् लिपिकर्मनिर्मितः चित्रलिखित इव इत्युत्प्रेक्षा । क्षणं व्यतिष्ठत विस्पन्दमास्तेत्यर्थः । समवप्रविभ्यः स्थ इत्यात्मनेपदम् । अतः शून्यतानुभावाच्चिन्तावगम्यते । ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृदिति दशरूपके । अतोत्प्रेक्षयोः सापेक्षत्वात् सङ्करः ॥ ४७ ॥

अलसैरिति । अलघु अधिकं प्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतं सत्वरम् । लघु क्षिप्रमरं द्रुतमित्यमरः । पीतो यो माधवो हरिरेव रसोऽमृतम् अथवा मधु मद्यं तत्सम्बन्धि रसो माधुर्यं माधवरसः ।

अलघुप्रसारितविलोचनाञ्जलि-
द्रुतपीतमाधवरसौघनिर्भरैः ॥ ४८ ॥
नवगन्धवारिविरजीकृताः पुरो
घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोद्धतध्वजविलम्बिवाससः
पुरवीथयोऽथ हरिणातिपेतिरे ॥ ४९ ॥

रसो रागे विषे वीर्य्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्य्यासेऽमृतशब्दयोरिति वैजयन्ती । तस्यौघः समूहस्तेन निर्भरैर्दुर्भरैः गुरुभिरिति यावत् अतएव मदेनालसैर्मन्थरैः शरीरकार्श्यलघुशरीराणीत्यर्थः । अल्प इति परिमाणे कन्प्रत्ययः । तैरुपलक्षिताः सुदृशः शनैः शनैः स्वगृहान् प्रतिययुः प्रतिनिर्गताः स्वयं लघून्यपि द्रव्याणि रसद्रवभरणाद्गुरूणि भवन्तीति भावः । अत्र माधवरसौघनिर्भरत्वविशेषणगत्या शनैः शनैः प्रतियानहेतुत्वात् कार्य्यहेतुकङ्काव्यलिङ्गन्तच्च माधवरसेनेति श्लेषमूलातिशयोक्त्युत्थापितमिति सङ्करः ॥ ४८ ॥

नवेति । अथ पुरप्रवेशानन्तरं हरिणा पुरः पूर्वं नवगन्धवारिभिर्गन्धवासितोदकैः विरजीकृता अविरजसो विरजसः सम्पद्यमानाः कृताः । अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेत्यभूततद्भावे च्विप्रत्यये सलोपः अस्य च्वाविति ईकारः । घनैः सान्द्रैर्धूपानामगुरुधूपानां धूमैः कृतो रेणुविभ्रमो रजोभ्रमो याभिस्ताः प्रचुरं बहुलमुद्धतेषु उच्छ्रितेषु ध्वजेषु ध्वजस्तम्भेषु विलम्बीनि विलम्बमानानि वासांसि पताका यासु ताः पुरवीथयोऽतिपेतिरेऽतिपातिताः अतिक्रान्ता इत्यर्थः । पतेः कर्मणि लिट् एत्वाभ्यासलोपौ । अत्र सादृश्याद्भूरेणुभ्रान्त्या भ्रान्तिमदलङ्कारः रेणुविभ्रमशब्देन रजोविलासस्यापि प्रतीतेस्तस्य विरजीकरणेन विरोधाद्विरोधाभासश्चेति अनयोरेकवाचकानुप्रवेशलक्षणः सङ्करः ॥ ४९ ॥

उपनीय विन्दुसरसो मयेन या
मणिदारु चारु किल वार्षपर्वणम् ।
विदधेऽवधूतसुरसद्मसम्पदं
समुपासदत्सपदि संसदं स ताम् ॥ ५० ॥

अधिरात्रि यत्र निपतन्नभोलिहां
कलधौतधौतशिलवेश्मनां रुचौ ।
पुनरप्यवापदिव दुग्धवारिधि-
क्षणगर्भवासमनिदाघदीधितिः ॥ ५१ ॥

उपनीयेति । मयेनासुरशिल्पिना वृषपर्वा नाम कश्चिदसुरेश्वरः वृषपर्वण इदं वार्षपर्वणम् । तस्येदमित्यण् । चारु मनोहरं मणिरेव दारु काष्ठं मणिमयं स्तम्भादिकलापमित्यर्थः । तद्विन्दुसरसो हैमवतात्सरोविशेषात् उपनीय समीपमानीय किलेत्यैतिह्ये या संसत् विदधे निर्मिता । अवधूता अधरीकृता सुरसद्मसम्पत् इन्द्रभवनलक्ष्मीर्यया सा तां संसदं सभाम् । सभासमिति संसदः । आस्थानी क्लीवमास्थानं स्त्री नपुंसकयोः सद इत्यमरः । स हरिः समुपासदत् प्रापत् । सदेर्लुङि पुषादित्वात् च्लेरङादेशः । पुरा किल खाण्डवदाहे पाण्डवेनाग्निदाहान्मोचितेन मयेन प्रत्युपकारार्थं पूर्वमात्मनैव विन्दुसरसि गुप्तेन वृषपर्वगृहनिर्माणावशिष्टेन मणिशिलाकलापेन काञ्चनसभा धर्मराजाय निर्मितेति भारते । सभावर्णनाङ्गत्वेनार्जुनमयचरितवर्णनादुदात्तालङ्कारः प्रभूतमहापुरुषचिन्तनं चेति लक्षणम् ॥ ५० ॥

अथ दशभिः सभां वर्णयति । अधीत्यादि । अधिरात्रि रात्रिषु । विभक्त्यर्थेऽव्ययीभावः । यत्र सभायां नभोलिहामभ्रंलिहाम् । क्विप् । कलधौतं रौप्यम् । कलधौतं रूप्यहेम्नोरित्यमरः । तद्वद्धौताः धवलाः शिला येषान्तानि वेश्मानि स्फटिकभवनानीत्यर्थः तेषां रुचौ प्रभायां निपतन् प्रविशन् अनिदाघदीधितिरनुष्णरश्मिर्हिमांशुः पुनरपि दुग्धवारिधौ क्षीराब्धौ क्षणं गर्भवासं न तु मथनात्प्रागिव चिरम्

लयनेषु लोहितकनिर्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः।
जमदग्निसूनुपितृतर्पणीरपो
वहति स्म या विरलशैवला इव ॥ ५२ ॥

विशदाश्मकूटघटिताः क्षपाकृतः
क्षणदासु यत्र च रुचैकतां गताः।
गृहपङ्क्तयश्चिरमतीयिरे जनै-
स्तमसीव हस्तपरिमर्शसूचिताः ॥ ५३ ॥

गर्भवासमिति भावः अत्रापत् प्रापदित्युत्प्रेक्षा । तया वेश्मनां चन्द्रमण्डलातिक्रमो व्यज्यते ॥ ५१ ॥

लयनेष्विति। लीयते एष्विति लयनानि तेषु गृहेषु शितिरत्नानां नीलमणीनां रश्मिभिर्हरितीकृतानि हरितवर्णीकृतानि अन्तराणि मध्यानि यासां ताः लोहितमणयो लोहितकाः पद्मरागाः। लोहितान्मणाविति कन्प्रत्ययः। तैर्निर्मिताः भुवो भूमीर्विरलाः शैवला यासु ताः जमदग्निसूनोः परशुरामस्य पितृणां तर्पणीः तृप्तिकरीरप इवेत्युपमा या सभा वहति स्म। जामदग्न्यः क्षत्रियास्रैः पञ्चशो ह्रदानुत्पाद्य ताभिरद्भिः पितृनतर्पयत् ताश्च रुधिरप्रकृतिकत्वाद्रक्तवर्णा एवेति पुराणम् ॥ ५२ ॥

विशदेति। किञ्चेति चार्थः। यत्र सभायां विशदाश्मकूटघटिताः स्फटिकशिलासङ्घातनिर्मिताः अतएव क्षणदासु क्षपाकृतो निशाकरस्य रुचा चन्द्रिकयैकतां सावर्ण्यादभेदङ्गताः अतएव तमसीव हस्तपरिमर्शसूचिताः पाणिस्पर्शैकगम्या इत्यर्थः। गृहपङ्क्तयः जनैश्चिरमतीयिरे अतिक्रान्ताः पुरोगतान्यपि स्फटिकभवनानि चन्द्रिकाभ्रमादतीत्य गत्वा पश्चात् करपरामर्शैः कथञ्चित्प्राप्यन्त इत्यर्थः। अत्र प्रकृतानां स्फटिकवेश्मनां गुणसाम्यादप्रस्तुतचन्द्रिकैक्योक्त्या सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् ॥५३॥

निलयेषु नक्तमसिताश्मनाञ्चयै-
र्विसिनीवधूपरिभवस्फुटागसः ।
मुहुरत्नसङ्गिरपि यत्र गौरवा-
च्छशलाञ्छनांशव उपांशु जघ्निरे ॥ ५४ ॥

सुखिनः पुरोऽभिमुखतामुपागतैः
प्रतिमासु यत्र गृहरत्नभित्तिषु ।
नवसङ्गमैरबिभरुः प्रियाजनैः
प्रमदं त्रपाभरपराङ्मुखैरपि ॥ ५५ ॥

निलयेष्विति । यत्र सभायां निलयेषु नक्तं रात्रौ विसिन्यो दीर्घिकापद्मिन्यस्ता एव वध्वस्तासां परिभवेन निमीलितेन दूषणेन च स्फुटागसः स्पष्टापराधाः शशलाञ्छनांशवः चन्द्रपादाः अत्रसद्भिरत्नसङ्गिरपि निर्दोषैरपि इति चार्थः । त्रासो भीमणिदोषयोरिति विश्वः । वा भ्राशेत्यादिना श्यनभावपक्षे शतृप्रत्ययः । असिताश्मनाम् इन्द्रनीलमणीनां चयैः समूहैः गौरवात् स्वयत्नभूतत्वात् सम्भावितत्वाच्च उपांशु अंशुसमीपे रहस्य । रहस्योपांशु चालिङ्गे इत्यमरः । मुहुर्जघ्निरे तिरोहिता मारिताश्च । हन्तेः कर्मणि लिट् । समीपगताश्चन्द्रांशवः प्रभूतैरिन्द्रनीलांशुभिस्तिरस्कृता इत्यर्थः अन्यत्रान्तःपुरद्रोहिणो निर्भीकैरपि सम्भावितैर्दुष्कीर्त्तिभयाद्गूढं हन्यन्त इति भावः । अत्र विसिनीनां वधूत्वरूपणात्तत्परिभाविनां चन्द्रांशूनां धूर्त्तकामुकत्वरूपणप्रतीतेः एकदेशविवर्त्ति रूपकन्तच्च गौरवादुपांशु जघ्निर इति च श्लेषेणात्रसद्भिरपीति विरोधेन च सङ्कीर्य्यते ॥ ५४ ॥

सुखिन इति । यत्र सभायां नवः सङ्गमो येषान्तैर्नवसङ्गमैरतएव त्रपाभरेण पराङ्मुखैर्विमुखैरपि गृहाणां रत्नभित्तिषु प्रतिमासु तत्संक्रान्तप्रतिबिम्बेषु पुरोऽग्रेऽभिमुखतामुपागतैः प्रियजनैः कान्ताजनैः सुखिनो भोगिनः प्रमदं हर्षम् अबिभरुः बिभ्रति स्म । भृञो लिटि श्लाविति द्विर्भावे [illegible] गुणादेशः । स्त्रीणां वेश्म-

तृणवाञ्छया मुहुरवाञ्चिताननान्
निचयेषु यत्र हरिताश्मवेश्मनाम् ।
रसनाग्रलग्नकिरणाङ्कुराञ्जनो
हरिणान् गृहीतकवलानिवैक्षत ॥ ५६ ॥

विपुलालवालभृतवारिदर्पण-
प्रतिमागतैरभिविरेजुरात्मभिः ।
यदुपान्तिकेषु दधतो महीरुहः
सपलाशराशिमिव मूलसंहतिम् ॥ ५७ ॥

ख्येऽपि तत्प्रतिबिम्बाभिमुख्यात् पुंसां सुखमेव स्त्रीणां तु उभयथापि क्लिष्टमित्यर्थः । अत्र वैमुख्येऽप्याभिमुख्यमिति विरोधस्य प्रतिमास्विति निरासाद्विरोधाभासोऽलङ्कारः ॥ ५५ ॥

तृणेति । यत्र सभायां हरिताश्मवेश्मनां मरकतमणीनां गृहाणाम् । गारुत्मतं मरकतमश्मगर्भो हरिन्मणिरित्यमरः । निचयेषु संघेषु तृणवाञ्छया तृणाशया मुहुरवाञ्चिताननान्नमितमुखान् अत एव रसनाग्रेषु लग्नाः किरणाः अङ्कुरा इव येषान्ते तान् । अतएव गृहीतकवलान् उपात्ततृणग्रासानिव स्थितान् हरिणान् जन ऐक्षत ईक्षितवान् । ईक्षतेर्लङि आडजादीनामित्याट्, आटश्चेति वृद्धिः । अत्र तृणवाञ्छयेति हरिणानां मरकतेषु तृणभ्रान्तेर्भ्रान्तिमदलङ्कारः, तन्मूला चेयं गृहीतकवलत्वोत्प्रेक्षेति सङ्करः ॥ ५६ ॥

विपुलेति । यदुपान्तिकेषु यस्याः सभायाः उपान्तिकेषु समीपेषु महीरुहो वृक्षाः विपुलेष्वालवालेषु मूलजलाधारेषु । स्यादालवालमावालमित्यमरः । भृतानि संभृतानि वारीण्येव दर्पणास्तेषु प्रतिमां प्रतिबिम्बतां गतैः प्रतिबिम्बितैरित्यर्थः । आत्मभिः स्वमूर्त्तिभिरित्यर्थः सपलाशराशिं सपत्रसन्ततिं मूलसंहतिं दधत इव दधाना इवाभिविरेजुः । स्वालवालेषु स्वप्रतिबिम्बितैरधोमुखैः मूलेष्वपि सपत्रा इव रेजुरित्युत्प्रेक्षा ॥ ५७ ॥

उरगेन्द्रमूर्द्धरुहरत्नसन्निधे-
र्मुहुरुन्नतस्य रसितैः पयोमुचः ।
अभवत् यदङ्गनभुवः समुच्छ्वस-
न्नवबालवायजमणिस्थलाङ्कुराः ॥ ५८ ॥

नलिनी निगूढसलिला च यत्र सा
स्थलमित्यधः पतति या सुयोधने ।
अनिलात्मजप्रहसनाकुलाखिल-
क्षितिपक्षयागमनिमित्ततां ययौ ॥ ५९ ॥

उरगेन्द्रेति । उरगेन्द्राणां मूर्द्धसु रुहाणि रूढानि । इगुपधलक्षणः कः । तेषां रत्नानां सन्निधेः सन्निधानात् मुहुरुन्नतस्य यदा यदा तत्सन्निधिस्तदा तदोदितस्येत्यर्थः पयोमुचो मेघस्य रसितैः स्तनितैर्यदङ्गनभुवो यस्याः प्राङ्गणप्रदेशाः समुच्छ्वसन्तः प्रादुर्भवन्तो नवाः प्रत्यग्राः बालवायजमणिस्थलाङ्कुराः वैदूर्यभूप्ररोहा यासु तास्तथोक्ता अभवन् । वैदूर्यं बालवायजमित्यमरः । बालवायो नाम वैदूर्यप्रभवो देशविशेषः । उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः सहोदितमेव ध्वनेर्विदूरभूमिरुद्भिन्नाङ्कुरा भवतीति प्रसिद्धिः । तदुक्तम् उरगमूर्द्धन्यरत्नसन्निधानादकालेऽपि मेघा गर्जन्तीति वार्त्ता । केचित्तु यत्रैवोरगरत्नं मेघरसितं च तत्रैव वैदूर्यभूमिः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः । तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते इति लक्षणात् ॥ ५८ ॥

नलिनीति । यत्र सभायां निगूढसलिला दलच्छन्नत्वाददृश्यसलिला नलिनी वर्त्तत इति शेषः । या नलिनी सुष्ठु युध्यत इति सुयोधने दुर्योधने । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् वक्तव्यः । स्थलमिति भ्रान्त्या अधः पतति सति अनिलात्मजस्य भीमसेनस्य प्रहसनेनाट्टहासेनाकुलानां क्षुभितानामखिलक्षितिपानां क्षयागमे नाशप्राप्तौ निमित्ततां ययौ । नलिनीदलच्छन्नत्वात् सुयोधनस्य जले स्थलभ्रान्तिः [illegible] न राज्ञां क्षोभ-

हसितुम्परेण परितः परिस्फुर-
त्करवालकोमलरुचावुपेक्षितैः ।
उदकर्षि यत्र जलशङ्कया जनै-
र्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥ ६० ॥

अभितः सदोऽथ हरिपाण्डवौ रथा-
दमलांशुमण्डलसमुल्लसत्तनू ।
अवतेरतुर्नयननन्दनौ नभः
शशिभार्गवावुदयपर्वतादिव ॥ ६१ ॥

तदलक्ष्यरत्नमयकुड्यमादरा-
दभिघातरीत इव इत्यथो नृपे ।

स्ततस्तेषां भारणो रथः प्रवृत्त इति परम्परया तदुच्चयकारणत्वं गतेत्यर्थः । अत्र सभावर्णनाङ्गतया भीमसेनादिचरितवर्णनादुदात्ता-लङ्कारभेदः, लक्षणं चोक्तम् ॥ ५९ ॥

हसितुमिति । यत्र सभायां परितः परिस्फुरन्ती करवालकोमला असिश्यामा रुचिर्यस्यास्तस्याम् इन्द्रनीलभुवि हसितुं परेण जानता-न्येन जनेनोपेक्षितैः स्थलमेतत् न जलमिति उपदिष्टैर्जनैरज्ञै राग-न्तुकजनैर्जलशङ्कया जलभ्रान्त्या मुहुर्दूरमम्बरं वस्त्रम् उदकर्षि नित-म्बादुद्धृतम् । अत्रेन्द्रनीलस्थलसादृश्यात्सलिलभ्रान्तेर्भ्रान्तिमदलङ्कारः ॥ ६० ॥

अभित इति । अथामलांशुमण्डलेन तेजःपुञ्जेन समुल्लसन्त्यौ भासमाने तनू मूर्ती ययोस्तौ नयननन्दनौ नेत्रानन्दकरौ हरिपाण्डवौ सदोऽभितः सभाभिमुखम् । अभितः परित इति द्वितीया । रथात् शशिभार्गवौ अमलेत्यादिविशेषणविशिष्टौ चन्द्रशुक्रौ नभोऽभितो नभो-ऽभिमुखम् उदयाख्यात्पर्वतादुदयाचलादिवावतेरतुः अवतीर्णवन्तौ । तरतेर्लिट्, [illegible] । उपमा ॥ ६१ ॥

धवलाश्मरश्मिपटलाविभावित-
प्रतिहारमाविशदसौ सदः शनैः ॥ ६२ ॥

नवहाटकेष्टकचितन्ददर्श सः
क्षितिपस्य वस्यमथ तत्र संसदि ।
गगनस्पृशाम्मणिरुचाञ्चयेन यत्
सदनान्युदस्मयत नाकिनामपि ॥ ६३ ॥

उदयाद्रिमूर्ध्नि युगपच्चकासतो-
र्दिननाथपूर्णशशिनोरसम्भवाम् ।

तदिति । अथो रथावतरणानन्तरम् असौ हरिर्नृपे युधिष्ठिरे आदरादित इत इत्यभिधातरि सति इत इत आगम्यतामित्यभिदधाने सतीत्यर्थः । तत् पूर्वोक्तमलघुरत्नमयकुड्यम् अदभ्ररत्नभित्तिकम् । बहुलेन सान्द्रेण रश्मिपटलेन मणिप्रभापुञ्जेनाविभावितप्रतिहारमलक्ष्यद्वारम् । स्त्री द्वार्द्वारं प्रतीहार इत्यमरः । सदः सभां शनैराविशत् प्रविष्टवान् । अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६२ ॥

नवेति । अथ प्रवेशनानन्तरं स हरिस्तत्र संसदि सभायां नवभिर्हाटकेष्टकाभिः हिरण्येष्टकाभिश्चितम् । हिरण्यं हेम हाटकमित्यमरः । इष्टकेषीकामालानाञ्चिततूलभारिष्विति ह्रस्वः । पक्वमृत्तिकाविशेषवाचकस्येष्टकाशब्दस्य तादृशि सुवर्णविकारे सुवर्णघटवदुपचारात् प्रयोगः । क्षितिपस्य युधिष्ठिरस्य वस्यं सदनम् । निशान्तवस्त्यसदनमित्यमरः । ददर्श । यत् सदनं गगनस्पृशाम् उच्चैस्तराणां मणिरुचां चयेन समूहेन नाकिनां देवानामपि सदनानि उदस्मयत अहसत् । स्मयतेरुत्पूर्वात् कर्त्तरि लङ् । अत्रापि नृपसदनस्य सुरसदनादाधिक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

उदयाद्रीति । अथ नृपसदनदर्शनानन्तरम् उदयाद्रेर्मूर्ध्नि शिखरे युगपच्चकासतोः प्रकाशमानयोः । चकासृ दीप्ताविति धातोर्लटः

रुचिमासने रुचिरधाम्नि बिभ्रता-
वलघुन्यथ न्यषदतां नृपाच्युतौ ॥ ६४ ॥
सुतरां सुखेन सकलक्लमच्छिदा
सनिदाघमङ्गमिव मातरिश्वना ।
यदुनन्दनेन तदुदन्वतः पयः
शशिनेव राजकुलमाप नन्दथुम् ॥ ६५ ॥
अनवद्यवाद्यलयगामि कोमलं
नवगीतमप्यनवगीततान्दधत् ।

अथादेशः । दिननाथपूर्णशशिनोः सूर्य्यपूर्णचन्द्रमसोरसम्भवां सम्भव-रहितान्वययोस्तथाभूतयोर्यौगपद्यायोगादभूतपूर्वामित्यर्थः रुचिं शोभां बिभ्रतौ नृपाच्युतौ रुचिरधाम्नि उज्ज्वलतेजसि । अलघुनि विपुले आसने सिंहासने न्यषदतामुपविष्टौ। सदेर्लुङि पुषादित्वात् च्लेरङा-देशः सदिरप्रतेरिति षत्वम् । अत्र सम्भावनया अर्कपूर्णेन्दु शोभा-सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥ ६४ ॥

सुतरामिति । तद्राजकुलं कुरुकुलं सकलक्लमच्छिदा सकल-दुःखहारिणा यदुनन्दनेन कृष्णेन सनिदाघं ससन्तापमङ्गं मातरिश्वा वायुस्तेनेव । उदकान्यस्य सन्तीति उदन्वान् उदधिः । उदन्वानुदधौ चेति निपातः । तस्य पयो जलं शशिनेव सुतरामत्यन्तम् । अव्यया-दाम्वक्तव्य इति आमुप्रत्ययः । सुखेनाक्लेशेन नन्दथुम् आनन्दमाप । स्यादानन्दथुरानन्द इत्यमरः । ट्वितोऽथुजित्यथुच्प्रत्ययः । मालो-पमा ॥ ६५ ॥

अनवद्येति । सविलासो विलासयुक्तो लासिकविलासिनीजनः नर्त्त-कस्त्रीजनः सविलासिकविलासिनीजनः। नर्तकीलासिके समे इत्यमरः । अनवद्यमगर्ह्यं वाद्यं वंशादि तस्य लयः साम्यङ्गीतस्य समकालत्वं तद्गामि द्रुतविलम्बादिमानानुवर्त्तीत्यर्थः। तालः कालक्रियामानं लयः साम्यमित्यमरः । नवगीतं यस्य तन्नवगीतं तथाप्यनवगीततां

स्फुटसात्त्विकाङ्गिकमनृत्यदुज्ज्वलं

सविलासलासिकविलासिनीजनः ॥ ६६ ॥

सकले च तत्र गृहमागते हरौ

नगरेऽप्यकालमहमादिदेश सः ।

सततोत्सवन्तदिति नूनमुन्मुदो

रभसेन विस्मृतमभून्महीभृतः ॥ ६७ ॥

हरिराकुमारमखिलाभिधानवित्

दधदिति विरोधेऽपिशब्दः अगर्हितत्वं दधदित्यविरोधाद्विरोधाभासः । अवगीतं तु निर्वादे मुहुर्गीते च गर्हिते इति विश्वः । सत्त्वमन्तःकरणं तेन निर्वृत्तं नृत्यं सात्त्विकम् अङ्गं हस्तादि तेन निर्वृत्तमाङ्गिकम् । निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके इत्यमरः । ते स्फुटे यस्मिंस्तत्तथोक्तम् । वाचिकस्याप्युपलक्षणमेतत् । यथाह भगवान् भरतः । पदार्थाभिनयो नाम ज्ञेयो वागङ्गसत्त्वज इति । अतएव कालिदासोऽपि अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्निति । कोमलं मधुरं नृत्यमुज्ज्वलमुद्धतं चानृत्यत् । तथोक्तं दशरूपके । भावाश्रयन्तु नृत्यं स्यान्नृत्यं तालजयाश्रयम् । आद्यं पदार्थाभिनयो मार्गो देशी तथापरः । मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः । लास्यताण्डवरूपेण नाटकाद्युपकारकमिति ॥ ६६ ॥

सकल इति । किं चेति चार्थः । स राजा हरौ कृष्णे गृहमागते सकले तत्र नगरे इन्द्रप्रस्थे । अकाले प्रसिद्धवसन्ताद्यतिरिक्ते काले । महमुत्सवम् । मह उद्धव उत्सव इत्यमरः । आदिदेश आज्ञापयामास । नूनमलोत्प्रेक्ष्यते उन्मुदः कृष्णागमनादुत्कटानन्दस्य महीभृतो धर्मनन्दनस्य तन्नगरं सततम् उत्सवा यस्मिन् तत् सततोत्सवमिति इत्येतद्रभसेन त्वरया विस्मृतमभूत् अन्यथा कथं कृतकरणोपदेश इति भावः ॥ ६७ ॥

हरिरिति । किञ्चेति चार्थः । अखिलान्यभिधानानि नामानि

स्वजनस्य वार्त्तमयमन्वयुङ्क्त च।
महतीमपि श्रियमवाप्य विस्मयः
सुजनो न विस्मरति जातु किञ्चन ॥ ६८ ॥
मर्त्यलोकदुरवापमवाप्तरसोदयं
नूतनत्वमतिरिक्ततयानुपदं दधत्।
श्रीपतिः पतिरसाववनेश्च परस्परं
सङ्कथामृतमनेकमसिस्वदतामुभौ ॥ ६९ ॥

इति श्रीशिशुपालवधे महाकाव्ये श्रीशब्दालङ्कृत-
सर्गान्ते श्रीकृष्णसमागमो नाम
त्रयोदशः सर्गः ॥ १३ ॥

---

वेत्तीति अखिलाभिधानवित् सकलनामप्रपञ्चाभिज्ञः। नामरूपे व्याकरवाणीति श्रुतेरिति भावः। आख्याह्वे चाभिधानं च नामधेयं च नाम चेत्यमरः। अयं हरिः कृष्णः कुमारमारभ्येत्याकुमारम्। आङ्मर्यादाभिविध्योरित्यभिधानादव्ययीभावः। स्वजनस्य बन्धुजनस्य। बन्धुस्वस्वजनाः समा इत्यमरः। वार्त्तमनामयम् आरोग्यमित्यर्थः। वार्त्तं फल्गुन्यरोगे चेत्यमरः। ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयमिति मनुस्मरणात्। अन्वयुङ्क्त अपृच्छत्। प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। युजेः कर्त्तरि लङ्। तथाहि, महतीं श्रियं सम्पदमवाप्यापि विस्मयः निरहङ्कारः सुजनः अतएव जातु कदाचिदपि किञ्चन किमपि न विस्मरति। सुजनः सम्पन्नोऽप्यहङ्कारं न करोतीति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥६८॥

मर्त्येति। उभौ श्रीपतिः कृष्णः असाववनेः पतिः धर्मसुतश्च परस्परं मर्त्यलोकैर्मनुष्यलोकैर्दुरवापं दुर्लभम् अवाप्तरसोदयं प्राप्तरसौत्कर्ष्यं स्वादुभवदित्यर्थः अतिरिक्ततया अतिस्निग्धतया अनुपद-

# चतुर्दशः सर्गः ।



तञ्जगाद गिरमुद्गिरन्निव
स्नेहमाहितविकाशया दृशा ।
यज्ञकर्मणि मनः समादधद्
वाग्विदां वरमकद्वदो नृपः ॥ १ ॥

अनुक्षणं प्रतिवाक्यं च नूतनत्वमपूर्वतां दधत् अनेकं बहुलं सङ्कथा संभाषणं चैद्यराजजरासन्धादिकार्य्यचिन्तारूपं तदेवामृतं तदभिरसवतां स्वादितवन्तौ । आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवास इति भावः । स्वदतेर्णौ चङ्युपधाया ह्रस्वः । सङ्कथामृतमिति रूपकालङ्कारः स्वादनलिङ्गात् ॥ ६८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये त्रयोदशः
सर्गः ॥ १३ ॥



तमिति । वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः कद्वदः गर्ह्यवाक् । गर्ह्यवादी तु कद्वद इत्यमरः । रथवदयोश्चेति कोः कदादेशः । स न भवतीत्यकद्वदः साधुवादी नृपो युधिष्ठिरः यज्ञकर्मणि यज्ञानुष्ठाने मनः समादधत् सम्यगादधत् तदेव हृदि निधायेत्यर्थः । आहितविकाशया कृतप्रसादया दृशा दृष्ट्या स्नेहमुद्गिरन्नुद्वमन्निवेत्युत्प्रेक्षा । दृष्टिविकाशात् प्रकटितस्नेहः सन्नित्यर्थः । वाचो विन्दन्ति वक्तुं विवेक्तुं च जानन्तीति वाग्विदः वाक्यकोविदाः । सत्सूद्विषेत्यादिना क्विप् । तेषां वरं श्रेष्ठं तं हरिं गिरं जगाद । ब्रूतेरर्थग्रहणात् दुह्याचेत्यादिना गदेर्द्विकर्मकत्वम् । अतोऽत्र चा-

लज्जते न गदितः प्रियम्परो
वक्तुरेव भवति त्रपाधिका ।
व्रीड़मेति न तव प्रियं वदन्
ह्रीमतावभवतैव भूयते ॥ २ ॥
तोषमेति वितथैः स्तवैः पर-
स्ते च तस्य सुलभाः शरीरिभिः ।
अस्ति न स्तुतिवचोऽनृतन्तव
स्तोत्रयोग्य ! न च तेन तुष्यसि ॥ ३ ॥

इत्यनुप्रासयोः संसृष्टिः । अस्मिन् सर्गे रथोद्धतावृत्तं, रान्नराविह रथोद्धता लगौ इति लक्षणात् ॥ १ ॥

गिरं जगादेत्युक्तत्वामेव गिरं दशभिः प्रपञ्चयति । लज्जत इत्यादिभिः । परः अन्यः कश्चित् पुमान् प्रियङ्गदितः प्रियवाक्यमुक्तः सन्नित्यर्थः । गदेर्दुह्यादित्वादप्रधाने कर्मणि क्तः । अप्रधाने दुह्यादीनामिति वचनात् । न लज्जते तस्योत्सुकत्वादिति भावः किन्तु वक्तुः स्तोतुरेवाधिका त्रपा भवति । भयादिना मिथ्यावाचकत्वादिति भावः । प्रकृते तु नैवमित्याह । तव प्रियं वदन् त्वां स्तुवन्नित्यर्थः व्रीड़ां न एति अनन्तगुणाधारे त्वयि बह्वोरपि प्रियस्य अमिथ्यात्वादिति भावः । किन्तु स्तवनेन अत्रभवता पूज्येनैव ह्रीमता भूयते प्रत्युत लज्जावता जिह्रेमीत्यर्थः सद्भूतासत्वुत्सुकत्वादिति भावः । पूज्यस्त्वभवानिति सज्जनः । इतराभ्योऽपीति सार्वविभक्तिकस्तसिल्-प्रत्यये सुप्सुपेति समासः ॥ २ ॥

तोषमिति । परस्त्वदन्यः वितथैरसत्यभूतैः स्तवैः स्तोत्रैः । स्तवः स्तोत्रं नुतिः स्तुतिरित्यमरः । तोषस्तुष्टुतामेति ते च तस्य परस्य ते मिथ्यास्तवाः शरीरिभिः प्राणिभिः सुलभाः असत्प्रलापानामनिरर्गलत्वादिति भावः । त्वयि तु नैवमित्याह । अस्तीति । हे स्तोत्रयोग्य ! गुणाकरादिति भावः । अतएव तव

बह्वपि प्रियमयन्तव ब्रुवन्
न व्रजत्यनृतवादितामयम्।
सम्भवन्ति यददोषदूषिते
सार्व! सर्वगुणसम्पदस्त्वयि ॥ ४ ॥

सा विभूतिरनुभावसम्पदां
भूयसी तव यदायतायति।
एतदूढगुरुभार! भारतं
वर्षमद्य मम वर्त्तते वशे ॥ ५ ॥

सम्वस्थि स्तुतिवचोऽनृतं नास्ति न भवति तेन स्तुतिवचसा न तुष्यसि न प्रसीदसि गम्भीरत्वादिति भावः। अत्र श्लोकद्वये पुरुषान्तरादुपमानभूतादाधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ३ ॥

बह्वपीति। अयञ्जनः स्वयमित्यर्थः परामृश्यते बह्वपि तव प्रियं ब्रुवन् सन् अनृतवादितां मिथ्यावादित्वं न व्रजति न गच्छति यद्यस्मात् हे सार्व! सर्वहितत्वात्सार्वः तत्सम्बोधने। यद्दोषदूषितो न भवतीत्यदोषदूषिते सर्वाऽगुणवर्जिते त्वयि सर्वगुणसम्पदः सम्भवन्ति। अनारोपितगुणवादो भूयानपि न विपर्येतीति भावः। अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४ ॥

सेति। हे ऊढगुरुभार! विश्वम्भरत्वादिति भावः। एतत् भरतस्य राज्ञ इदं भारतम्। भारतनामाख्यं वर्षम्। वर्षोऽस्त्री भारतादौ चेति हेमः। लोकोऽयं भारतं वर्षमित्यमरः। अद्येदानीमायतायति बहुतरकालस्थिरं यथा तथेत्यर्थः। उत्तरः काल आयतिरित्यमरः। मम वशे आयत्ततायां वर्त्तत इति यावत्। वश आयत्ततायाञ्चेति विश्वः।। सा मद्वशवर्त्तनं विधेयप्राधान्यात् स्त्रीलिङ्गता। तवानुभावसम्पदां सामर्थ्यातिशयानां भूयसी महती विभूतिर्महिमा कार्य्यमिति यावत्। त्वत्प्रसादलब्धमिदमैश्वर्यमित्यर्थः।

सप्ततन्तुमधिगन्तुमिच्छतः
कुर्वनुग्रहमनुज्ञया मम।
मूलतामुपगते खलु त्वयि
प्रापि धर्ममयवृक्षता मया ॥ ६ ॥

संभृतोपकरणेन निर्मलां
कर्त्तुमिष्टिमभिवाञ्छता मया।
त्वं समीरण इव प्रतीक्षितः
कर्षकेण वलजान् पुपूषता ॥ ७ ॥

अत्र निजैश्वर्यस्य भगवदनुभावसम्पदं विना सम्बन्धेऽप्यसम्बन्धोक्त्यतिशयोक्तिः ॥ ५ ॥

तदेवं स्तुत्वा हरिमभिमुखीकृत्य स्वार्थमावेदयति। सप्तेति। सप्त तन्तवः संस्था यस्य तं सप्ततन्तुं क्रतुम्। सप्ततन्तुर्मखः क्रतुरित्यमरः। अधिगन्तुं प्राप्तुमिच्छतो ममानुज्ञयानुज्ञादानेनानुग्रहं प्रसादं कुरु साहाय्यं कुर्वित्यर्थः। ननु तः समर्थस्य किं मदनुग्रहेणेत्याह, हे प्रभो! त्वयि मूलतां मुख्यकारणतामङ्घ्रित्वं चोपगते सति। मया धर्ममयवृक्षता धर्मात्मकवृक्षता प्रापि प्राप्ता। प्राप्नोतेः कर्मणि लुङ्। प्रागपि त्वदनुग्रहादेव धर्मवर्धनम् धर्मराजोऽहमस्मीति भावः। अत्र रूपस्य धर्मवृक्षत्वेन हरेस्तन्मूलत्वेन रूपणात् सावयवरूपकं तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्यं व्यज्यते ॥ ६ ॥

संभृतेति। निर्मलां निर्दोषाम् इष्टिं यागम्। यजेः स्त्रियां क्तिन्, वचिस्वपीत्यादिना सम्प्रसारणम्। कर्त्तुमभिवाञ्छता अतएव संभृतोपकरणेन सम्पादितसाधनेन मया वलजान् धान्यराशीन्। वलजो धान्यराशिः स्यादिति वैजयन्ती। पुपूषता पवितुं शोधयितुं निर्बुषीकर्त्तुम् इच्छता। पुनातेः सन्नन्ताल्लटः शत्रादेशः, सनि ग्रहगुहोश्चेति उकारादिटः प्रतिषेधः। कर्षकेण कृषीवलेन समीरणो वायुरिव प्रतीक्षितः। प्रवाते शूर्पादिना धान्यस्योत्क्षेपः पवनं

वीतविघ्नमनघेन भाविता
सन्निधेस्तव मखेन मेऽधुना ।
को विहन्तुमलमास्थितोदये
वासरश्रियमशीतदीधितौ ॥ ८ ॥

स्वापतेयमधिगम्य धर्मतः
पर्य्यपालयमवीवृधच्च यत् ।
तीर्थगामि करवै विधानत-
स्तज्जुषस्व जुहवानि चानले ॥ ९ ॥

तद्वातं विनेव त्वां विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भावः ॥ ७ ॥

वीतविघ्नमिति । अधुना तव सन्निधेर्हेतोर्मे मखेन क्रतुना कर्त्रा वीतविघ्नमविघ्नम् अनघेन निर्दोषेण भाविता भविष्यत इत्यर्थः । भावे लुट् स्यसिच्सीयुडित्यादिना लुटि चिण्वद्भावात् वृद्धिः । तथाहि, अशीतदीधितावुष्णांशावास्थितोदये प्राप्तोदये सति को वासरश्रियन्दिनशोभां विहन्तुमलं शक्तः न कोऽपीत्यर्थः । अत्र हरिमरीचिमालिनोर्वाक्यभेदात् बिम्बप्रतिबिम्बतया सन्निहितद्योतितया समानधर्मतया निर्दोषो दृष्टान्तालङ्कारः । यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते सामान्यधर्मवाक्योक्तिः स दृष्टान्तो निगद्यत इति लक्षणात् ॥ ८ ॥

स्वापतेयमिति । यत् स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम् । पथ्यतिथिवसतिस्वपतेर्ढञ् । द्रव्यं वित्तं स्वापतेयमित्यमरः । धर्मतः क्षत्रियस्य विजितमिति शास्त्रोक्तप्रकारादित्यर्थः अधिगम्य लब्ध्वा । यत्नेन पर्य्यपालयं पालितवान् अवीवृधं वृद्धिं च प्रापितवान् । तत्तीर्थगामि विप्राधीनं करवै करिष्यामि । विधानतः । पालितं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेदिति स्मरणात् । तच्च पात्रं त्वमेवेत्याह । तत्त्वं जुषस्व सेवस्व सदैव भुङ्क्ष्वेत्यर्थः । जुषी प्रीतिसेवनयोरिति धातो-

पूर्वमङ्ग ! जुहुधि त्वमेव वा
स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनि भविष्यते मया
वाञ्छितोत्तमवितानयाजिना ॥ १० ॥

किं विधेयमनया विधीयता-
न्त्वत्प्रसादजितयार्थसम्पदा ।
शाधि शासक ! जगत्त्रयस्य मा-
माश्रवोऽस्मि भवतः सहानुजः ॥ ११ ॥

लोट् । अनले जुहवानि च जुहुयां तन्मुखेनापि तवैव भोक्तृत्वादिति भावः। जुहोतेः संप्रश्नलोटिमेर्निरादेशः ॥ ९ ॥

पूर्वमिति । वेति पक्षान्तरे अथवेत्यर्थः । अङ्ग ! हे कृष्ण ! अथ सम्बोधनार्थकाः स्युः अङ्ग है हे भो इत्यमरः। पूर्वं त्वमेव जुहुधि यजस्वेत्यर्थः। हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः। सोमपायिनि त्वयि अवभृथे यज्ञे । दीक्षान्तोऽवभृथो यज्ञ इत्यमरः। स्नातवति सति ततोऽनन्तरं मया वाञ्छितः उत्तमो वितानः राजसूयाख्यः। क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके इत्यमरः। तेन तथा याजिना भविष्यते। भावे लृट् । त्वयि इष्टवति पश्चादहं यक्ष्ये इत्यर्थः। अत्र श्लोकद्वयेन हरेर्यागसम्बन्धे तदसम्बन्धोक्तेरतिशयोक्तिः ॥ १० ॥

किमिति । अथवा त्वत्प्रसादेन त्वदनुग्रहेण जितया जयलब्धया अनयार्थसम्पदा धनसम्पदा किं विधेयं किमनुष्ठेयं विधीयतां त्वयैव क्रियताम् अहं तु अस्वतन्त्र इत्याह । हे जगत्त्रयस्य शासक ! ननु ममैवेति मां शाधि शिक्षयेत्यर्थः। शासेर्लोटि हुझल्भ्यो हेर्धिरिति धिरादेशः, झलोझलीति सकारलोपः। सहानुजः सानुजः सन् । वोपसर्जनस्येति सहशब्दस्य सभावविकल्पः। भवतः तवाश्रवो विधेयोऽस्मि। विधेयो विनयग्राही वचने स्थित आश्रव इत्यमरः। अत्रा॰

तं वदन्तमिति विष्टरश्रवाः
श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डल-
व्याजहारशबलन्दधद्वपुः ॥ १२ ॥

सादिताखिलनृपम्महन्महः
सम्प्रति स्वनयसम्पदैव ते ।
किम्परस्य स गुणः समश्नुते
पथ्यवृत्तिरपि यद्यरोगिताम् ॥ १३ ॥

नाश्रयाश्रयत्वसम्बन्धोक्तेरतिशयोक्तिरिति । दशश्लोक्यामाचार्यमते-ऽतिप्रियतराख्यानात् प्रेयोऽलङ्कारः । प्रियः प्रियतराख्यानमिति लक्षणात्, आधुनिकास्तु भावनिबन्धने प्रेयोऽलङ्कार इति लक्षयन्ति । स चोदीतस्तत्र तत्रोन्नेष्यते च ॥ ११ ॥

तमिति । अथानन्तरं विष्टराविव श्रवसी यस्य स विष्टरश्रवाः । विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवा इत्यमरः । इति एतादृशं तं वदन्तं नृपम् । समस्तभूभृतः सर्वान् नृपान् श्रावयन् दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन हारेण मुक्ताहारेण शबलं श्यामं वपुर्दधत् व्याजहार व्याहृतवान् । अत्र दशनांशुमण्डलस्य व्याजशब्देनासत्यत्वप्रतिपादनात् अपह्नवभेदः ॥ १२ ॥

यदुक्तं सा विभूतिरित्यादि तत्रोत्तरमाह । सादितेति । सम्प्रति ते तव महन्महस्तेजः स्वनयसम्पदैव निजनीतिमहिम्नैव सादिताखिलनृपं विजितसमस्तराजकं न तु मदनुभावादिति भावः । तथाहि, पथ्या हिता वृत्तिरन्नपानादिक्रिया यस्य सोऽपि अरोगितामारोग्यं समश्नुते यदि प्राप्नोतीति चेत् सोऽपि तदारोग्यमित्यर्थः । विधेयप्राधान्यात् पुंलिङ्गता । परस्य भिषजस्य गुणः किं नेत्यर्थः । पथ्यवृत्तेरारोग्य[illegible] गुणो [illegible] हितमेध्याशिनो न

तत् सुराज्ञि भवति स्थिते पुरः
कः क्रतुं यजतु राजलक्षणम् ।
उद्धृतौ भवति कस्य वा भुवः
श्रीवराहमपहाय योग्यता ॥ १४ ॥
शासनेऽपि गुरुणि व्यवस्थितं
कृत्यवस्तुषु नियुङ्क्ष्व कामतः ।
त्वत्प्रयोजनधनन्धनञ्जया-
दन्य एष इति माञ्च मावगाः ॥ १५ ॥

तथेत्यर्थः स्वयमसमर्थः पराधीनसिद्धिरित्युपचार इति भावः । दृष्टान्तालङ्कारः सुगमः ॥ १३ ॥

यदुक्तं पूर्वमङ्ग ! जुहुधि त्वमेवेति तत्राप्याह । तदिति । तत्तस्मादुक्तरीत्या तवैवाधिकारित्वादित्यर्थः । सुराज्ञि विजयप्रजारक्षणादिगुणयोगात् शुभक्षत्रिये । न पूजनादिति समासान्तप्रतिषेधः । भवति त्वयि पुरःस्थिते सति कस्त्वदन्यः क इत्यर्थः । राज्ञः क्षत्रियस्य लक्षणं चिह्नमसाधारणं यस्य तं क्रतुं राजसूयमित्यर्थः यजतु न कोऽपीत्यर्थः । राजा राजसूयेन यजेतेति राजाधिकारताश्रवणाद्राजा त्वमेवेति भावः । संभावनायां लोट् । अत्र दृष्टान्तमाह । भुव उद्धृतौ भुव उद्धरणे श्रीवराहम् आदिवराहम् अपहाय कस्य पुनर्योग्यता सामर्थ्यं भवति न कस्यापीत्यर्थः । योगाय प्रभवतीति योग्यः । योगाद्यच्चेति यत्प्रत्ययः । अत्र राजवराहयोः वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥ १४ ॥

यच्चोक्तं संभृतोपकरणेनेत्यादिना तत्राह । शासन इति । गुरुण्यतिदुष्करेऽपि शासने नियोगे व्यवस्थितं त्वदाज्ञाकरमित्यर्थः । मां कृत्यवस्तुषु कर्त्तव्यार्थेषु कामतो यथेच्छं नियुङ्क्ष्व प्रेषय । अनुचितमेतन्नियन्त्रणमिति सङ्कोचं वारयन्नाह । त्वदिति । त्वत्प्रयोजनमेव धनं यस्य तं त्वदेकधनमित्यर्थः । धनानि जयतीति धन-

यस्तवेह सवने न भूपतिः
कर्म कर्मकरवत् करिष्यति ।
यस्य नेष्यति वपुः कबन्धता-
बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥

इत्युदीरितगिरन्नृपस्त्वयि
श्रेयसि स्थितवति स्थिरा मम ।
सर्वसम्पदिति शौरिमुक्तवा-
नुद्वहन् मुदमुदस्थित क्रतौ ॥ १७ ॥

अथोऽर्जुनः। संज्ञायां भृतृवृजिधारिसहितपिदम इति खच्प्रत्यये मुमागमः। तस्मादेषोऽन्यः कृष्ण इति मां मावगाः मावेहि च। नियोगसमुच्चयार्थश्चकारः। अवपूर्वादिणो माङि लुङ्, इणो गा लुङीति गादेशः, न माङ्योग इत्यट्प्रतिषेधः। उभयोस्तत्कार्य्यनिबन्धनान्नरनारायणात्मत्वाच्च नावयोर्भेदप्रतिपत्तिः कार्य्येत्यर्थः तथाच तद्वदेव नियोगेऽप्यसङ्कोच उचित इति भावः, अतएवानयोर्वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गलङ्कारः स च कृष्णयोर्भेदाभेदरूपातिशयोक्तिमूल इति अनयोरङ्गाङ्गिभावेन सङ्करः ॥ १५ ॥

यच्चोक्तं वीतविघ्नमित्यादि तत्राभयदानमतिजानीते। य इति। यो भूपतिः तवेहास्मिन् सवने यज्ञे। सवनं यजने स्नाने सोमे निर्दलनेऽपि चेति विश्वः। कर्मकरवद्भृत्यवत् कर्म न करिष्यति तस्य भूपतेर्वपुः जगतां बन्धुः क्षेमङ्करत्वादिति भावः एष सुदर्शनो मच्चक्रम्। शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शन इत्यमरः। कबन्धतां शिरःशून्यतां नेष्यति प्रापयिष्यति छेत्स्यामि चक्रेणास्य शिर इत्यर्थः। कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवर इति विश्वः। अतो विघ्नशङ्का न कार्य्येति भावः। अत्र सुदर्शने बन्धुत्वरूपणाद्रूपकालङ्कारः ॥१६॥

इतीति। इतीत्थम् उदीरितगिरमुपन्यस्तवाचं शौरिं नृपो युधिष्ठिरः त्वयि श्रेयस्यभ्युदये विषये स्थितवति त्वयि क्षेमङ्करे सती-

आननेन शशिनः कलान्दध-
द्दर्शनक्षयितकामविग्रहः।
आप्लुतः स विमलैर्जलैरभू
दष्टमूर्त्तिधरमूर्त्तिरष्टमी॥ १८॥

तस्य साङ्ख्यपुरुषेण तुल्यता-
म्बिभ्रतः स्वयमकुर्वतः क्रियाः।

अर्थः मम सर्वसम्पत् स्थिरेत्युक्तवान्। मुदम् उद्वहन् सहायसम्पत्त्या सन्तुष्यन् सन्। क्रतावुद्स्थित क्रतुं कर्तुम् उद्युक्तवानित्यर्थः। तिष्ठते-र्लुङि उदोऽनूर्द्ध्वकर्मणि इत्यादिनात्मनेपदं, स्थाघ्वोरिच्चेति सिचः कित्त्वादिकारः, ह्रस्वादङ्गादिति सकारलोपः॥ १७॥

अथ प्रकृतिं गता श्लोकैरनेकधा क्रतुं वर्णयति। आननेनेत्यादि। आननेन शशिनः कलामिव कलां कान्तिं दधत्। निदर्शनालङ्कारः। शशिमुख इत्यर्थः। अन्यत्र शशिखण्डधरेत्यर्थः। दर्शनेन क्षयितौ नाशितौ कामविग्रहौ कामक्रोधौ येन सः। अन्यत्र दृष्टिदग्धस्मर-शरीरः विमलैर्जलैराप्लुतः स्नातः नद्यां स्नातीति दीक्षायां स्नान-विधानादिति भावः। अन्यत्र गङ्गोदकसिक्तः गङ्गाधरीत्यर्थः। स नृपः। अष्टानां पूरणी अष्टमी। तस्य पूरणे डडिति डट्प्रत्ययः, नान्तादसङ्ख्यादेर्मडिति मडागमः, टिड्ढाणञित्यादिना ङीप्। अष्टानां मूर्त्तीनां समाहारोऽष्टमूर्त्तिः। तद्धितार्थ इत्यादिना समाहारे द्विगु-रेकवचनं नपुंसकत्वञ्च। तस्य धरो धारयिताऽष्टमूर्त्तिधरः शिवः तस्य अष्टमी मूर्त्तिरभूत् सोमदीक्षितोऽभूदित्यर्थः तस्याप्यागमे शिवमूर्त्ति-त्वप्रसिद्धेः। अत्र प्रकृताप्रकृतयोर्न्नृपशिवयोः शिवशब्दमात्रसाधर्म्यात् श्लेषालङ्कारः॥ १८॥

तस्येति। क्रियाः कर्माणि होमादीनि, अन्यत्र पुण्यपाप-कर्माणि स्वयमकुर्वतोऽननुतिष्ठतः अन्यत्र उदासीनस्य। अतएव साङ्ख्य-पुरुषेण साङ्ख्यशास्त्रोक्तेनात्मना तुल्यतां बिभ्रतस्तस्य रामः कार्ये

कर्तृता तदुपलम्भतोऽभवद्
वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥
शब्दितामनपशब्दमुच्चकै-
र्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन्
द्रव्यजातमपदिश्य देवताम् ॥ २० ॥

अन्तःकरणे यथा बुद्धाविवेत्यर्थः । ऋतौ यजतीति ऋत्विक् याजकः । ऋत्विजो याजकाश्च ते इत्यमरः । ऋत्विग्दधृगिति निपातः । तस्मिन् वृत्तिभाजि होमादिव्यापारं कुर्वतीत्यर्थः । अन्यत्र पुण्यपापकारिणि सति तदुपलम्भतः तस्य ऋत्विग्वृत्तेरुपलम्भात्स्वस्मिन्ननुसन्धानादेव कर्तृता क्रियानुष्ठातृत्वमभवत् । तथैव विधिसामर्थ्यादिति भावः । अतएवाह भगवान् जैमिनिः, अन्यो वा स्यात्परिक्रयाम्नानात्प्रत्यगा-त्मनेपदम् इति । अन्यत्र तदुपलम्भनस्तस्या बुद्धिवृत्तेरनवच्छिन्नत्वे-नानुसन्धानादेव कर्तृत्वमभवत् स्वयं क्रियाभोगरहितोऽपि आत्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः । उपमालङ्कारः ॥१९॥

शब्दितामिति । वाक्यलक्षणविदो मीमांसकाः । यजन-कर्मिणो यजनव्यापारवन्तः ऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनूच्यत इति अनुवाक्या तया अनुवाक्यया । अनूच्य याज्यया जुहोतीति श्रुतेः सा च प्रशास्तृपाठ्या तदभावे होतृपाठ्या देवताह्वानी ऋक् । वचेः ऋहलोर्ण्यत् चजोः कु घिण्ण्यतोरिति कुत्वं शब्दसंज्ञ-त्वाद्वचोऽशब्दसंज्ञायामिति न प्रतिषेधः । उच्चैः अनपशब्दं यथा तथा शब्दितां मन्त्रवर्णेनोच्चैः प्रकाशितामित्यर्थः उच्चैः ऋचा क्रियत इति विधानात् । शब्द संशब्दने इति धातोश्चौरादिकात् कर्मणि क्तः । देवतामिन्द्रादिकामपदिश्य द्रव्यजातं पशुपुरोडाशादि हविःसमूहम् इज्यतेऽनयेति याज्या सा च होतृपाठ्या यागाङ्गसाध-नर्क् याज्यया जुहोतीति श्रुतेः । पूर्ववत् ऋहलोर्ण्यदिति करणे

सप्तभेदकरकल्पितस्वरं
साम सामविदसङ्गमुज्जगौ।
तत्र सूनृतगिरश्च सूरयः
पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥
बद्धदर्भमयकाञ्चिदामया

यवत् यजयाचरुचप्रवचर्चश्चेति कुत्वप्रतिषेधः। तया चत्वजन्नित्यर्थः।
देवतोद्देशेन द्रव्यत्यागो याग इति लक्षणात्। स च त्यागः सामान्यत
आहवनीये जुहोतीति तदा हवनीय इति सामान्यन्यायात् विधाना-
दन्यत्रेति ध्येयम्। द्रव्यत्यागस्याध्वर्युमात्रकर्तृत्वेऽपि याज्या पुरो-
ऽनुवाक्यद्वारा होतृप्रशास्त्रोरपि साहित्यादृत्यजश्चेति बहुत्वव्यपदेशः।
तथाच मैत्रावरुणेन पुरोऽनुवाक्यायामनुक्तायां तत्प्रकाशितदेवतो-
द्देशेनाध्वर्युहोतृ पठितयाज्यान्ते वषट्कारेण सोमादिकं हविरग्ना-
वत्याक्षीदित्यर्थः। स्वभावोक्तिरलङ्कारः ॥ २० ॥

सप्तेति। तत्र क्रतौ। सामानि वेत्तीति सामविदुद्गाता।
सप्तभेदं सप्तप्रकारं यथा तथा करेण हस्तेन कल्पिताः सम्पादिताः
स्वराः निषादादयः यस्य तत् करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वर-
मित्यर्थः। निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेत्यमी सप्ते-
त्यमरः। यद्वा स्वराः क्रुष्टादयः। क्रुष्टः प्रथमो द्वितीयो मन्द्रो नीच
इत्यादयः। साम बृहद्रथन्तरादिकमसङ्गमस्खलितमुज्जगौ उदगायत्।
किञ्च सूनृतगिरः प्रियसत्यवाचः। प्रियं सत्यञ्च सूनृतम् इत्यमरः।
सूरयो विद्वांसो होत्रध्वर्य्वादयः पुण्यं श्रेयस्करम्। ऋचश्च यजूंषि
च तत् ऋग्यजुषमग्निमीळे इषे इत्यादिकम्। द्वन्द्वैकवद्भावः, अचतुरे-
त्यादिना द्वन्द्वे समासान्तनिपातः। अध्यगीषत। इङो लुङि विभाषा
लुङ्लृङोरिति गाङादेशः पक्षे कुटादित्वात् सिचः ङित्त्वे घुमेत्यादिना
ईत्वम्। अत्र साम सामेत्यादौ वृत्त्यनुप्रासभेदो द्रष्टव्यः ॥ २१ ॥

बद्धेति। बद्धं दर्भमयं दर्भविकारं काञ्चिदाम रशनागुणो यस्या

वीक्षितानि यजमानजायया ।
शुष्मणि प्रणयनादिसंस्कृते
तैर्हवींषि जुहवाम्बभूविरे ॥ २२ ॥
नाञ्जसा निगदितुं विभक्तिभि-
र्व्यक्तिभिश्च निखिलाभिरागमे ।
तत्र कर्मणि विपर्ययेणनमन्
मन्त्रमूहकुशलाः प्रयोगिणः ॥ २३ ॥

तया । दाबेति डाबुभाभ्यामन्यतरस्यामिति डाप्प्रत्ययः । यजमानो यष्टा । पूङ्यजोः शानन्निति यजेः शानच्प्रत्ययः । तस्य जायया पत्न्या वीक्षितानि दृष्टानि हवींषि आज्यानि पत्न्यवेक्षितमित्याज्यस्य पत्न्यवेक्षणसंस्कारविधानात् अर्थप्रधानत्वात् सर्वेषामाज्यादीनां प्राणभृन्न्यायेन वीक्षितत्वव्यपदेशः प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणापतने सादनं आदिशब्दात्परिस्तरणपरिधानसंमार्गादिसंस्कारसंग्रहः तैः प्रणयनादिभिः संस्कृते आहिताितशये शुष्मणि अग्नौ । बर्हिः शुष्मा कृष्णवर्त्मेत्यमरः । अत्राध्याहवनीये जुहोतीति हूयमाने अध्वर्युः कर्त्ता । जुहूपात्रव्याप्ततया स्रुवाहवनीयं प्रधानमिति न्यायवचनात् । तैः ऋत्विग्भिः जुहवाम्बभूविरे । जुहोतेः कर्मणि लिट्. भीह्रीभृहुवामिति विकल्पादाम्प्रत्ययः । अत्र विषयस्य योक्तास्यानुपादानेन विषयिणः कार्श्यगुणस्यैव तदभेदेन निर्देशाद्भेदे अभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥ २२ ॥

नेति । तत्र तस्मिन् कर्मणि यज्ञकर्मणि । अन्यथाश्रुतस्य मन्त्रस्यान्यथालिङ्गवचनादिभेदेन विपरिणमनमूहः तत्र कुशलाः । प्रयोग एषामस्तीति प्रयोगिणः प्रयोक्तारः ऋत्विजः आगमे आम्नाये निखिलाभिर्विभक्तिभिः प्रथमादिभिः सुब्विभक्तिभिस्तिङ्विभक्तिभिश्च विभक्तिग्रहणं वचनोपलक्षणम् । व्यक्तिभिर्लिङ्गैश्चाञ्जसा सुखेन निगदितं पठितं न भवत्यथक्यत्वादिति नाञ्जसा निगदितम् । अञ्जस उपसङ्ख्या-

संशयाय दधतोः सरूपतां
दूरभिन्नफलयोः क्रियाम्प्रति ।
शब्दशासनविदः समासयो-
र्विग्रहं व्यवससुः स्वरेण ते ॥ २४ ॥

नमिति । अलुक् नञर्थस्य नशब्दस्य सुप्सुपेति समासः । अथवा अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययं तत्त्वार्थे । अञ्जसा तत्त्वतूर्णयोरिति विश्वः । अञ्जसा तत्त्वेन इत्यर्थः । अस्मिन् पक्षे नैकपद्यनियमः । तं मन्त्रम्, कर्माङ्गदेवतारूपवाक्यं विपर्ययेनमनु विपरिणमन्ति स्म विपरिणमितवन्त इत्यर्थः । विपरिपूर्वकात् ण्यन्तात् णमधातोः लुङ्, सन्वद्भावे सन्यत इत्यभ्यासस्येत्वं, दीर्घो लघोरिति दीर्घः । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् । अत्र नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणामहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥२३॥

संशयायेति । संशयाय सन्देहोत्पादनाय सरूपतां सादृश्यं दधतोरुभयत्र रूपसाम्यादयं समासोऽयं वेति संशयं कुर्वतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शातयिता हन्तेति षष्ठीतत्पुरुषः उपेन्द्रः शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशयः । तत्रानियमे दोषमाह । क्रियां प्रकृतं कर्म तां प्रति तामुद्दिश्येत्यर्थः दूरभिन्नमत्यन्तविलक्षणं फलं ययोर्दूरभिन्नफलयोस्तयोरर्थभेदात् कर्मणः फलभेदं प्रतिपादयतोरित्यर्थः । यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्वं बहुव्रीहौ तु तस्येन्द्रेण वध्यत्वमिति फलभेद इति भावः । समासयोरेवंविधयोः प्रसक्तयोः सतोरित्यर्थः । भावलक्षणे सप्तमी । शब्दशासनविदः शब्दशास्त्रज्ञाः अन्येषामनधिकारादिति भावः । ते प्रकृता ऋत्विजः स्वरेण तत्तत्समासविहितस्वरवशेन विग्रहं वाक्येन समर्थाभिधानं व्यवससुः निश्चिक्युः । अस्मिन् स्वरेऽयं समासः तत्रायं विग्रह इति अन्यतरपक्षावधारणं चक्रुः । यथेन्द्रशत्रुरित्यत्रैव पूर्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमासनिश्चयः । इन्द्रः शत्रुर्यस्येति विग्रहविभागस्यानिश्चयः । अथपूर्वस्य छतोऽर्धं? आद्युदात्त

लोलहेतिरसनाशतप्रभा-
मण्डलेन लसता हसन्निव ।
प्राज्यमाज्यमसकृद्वषट्कृत-
न्निर्मलीमसमलीढ पावकः ॥ २५ ॥

तत्र मन्त्रपवितं हविः क्रता-
वश्नतो न वपुरेव केवलम् ।
वर्णसम्पदमतिस्फुटान्दध-
न्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥

इत्यात्वे द्विर्वचनादिकार्ये कर्जुशादेशः । अत्र संशयजनकत्वफलभेद-प्रतिपादकपदार्थयोर्विशेषणगत्या सन्दिग्धे न्यायः प्रवर्त्तते इति न्यायेन विप्रहस्य व्यवसायहेतुत्वात्पदार्थहेतुकक्काव्यलिङ्गमलङ्कारः ॥२४॥

लोलेति । लसता प्रकाशमानेन लोलाश्चला हेतयो ज्वाला एव रसना रसज्ञाः । वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियामिति, रसज्ञा रसना जिह्वेति चामरः । तासां शतानि तेषां प्रभामण्डलेन हसन्निवेति रूपकसङ्कीर्णोत्प्रेक्षा । पावको वह्निः वषट्कृतं वषट्-कारेण त्यक्तं हुतमित्यर्थः । हुतं त्रिषु वषट्कृतमित्यमरः । निर्म-लीमसमलिनं शुद्धमित्यर्थः । मलीमसं तु मलिनमित्यमरः । ज्योत्स्ना-तमिस्रेत्यादिना मलिनशब्दान्मत्वर्थे इमनिच्प्रत्ययान्तो निपातः । प्राज्यं प्रभूतमाज्यमसकृदलीढ आस्वादयत् । लिहेः त्वरितत्वाल्लुङि लीढ इति ढत्वं झषस्तथोर्धोऽध इति धत्वं ष्टुत्वे ढलोपदीर्घौ ॥२५॥

तत्रेति । तत्र क्रतौ । मन्त्रैः पावनादिमन्त्रैः पवितं पवित्रितं शोधितमित्यर्थः । पूङश्चेति विकल्पादिडागमः । हविराज्यादि-कमश्नतो भुञ्जानस्य । अशोर्भोजनार्थाल्लटः शत्रादेशः । हवींषि भुङ्क्ते इति हविर्भुजोऽग्नेः सम्बन्धि । अतिस्फुटाम् अतिविकसितां वर्णस-म्पदं रूपसमृद्धिं दधत् केवलमेकम् । केवलं त्वेककृत्स्नयोरिति शाश्वतः । वपुरेवोज्ज्वलमोजिष्ठं नाभवत् । किन्तु अतिस्फुटाम-

स्पर्शमुष्णमुचितन्दधच्छिखी
यद्ददाह हविरद्भुतन्न तत्।
गन्धतोऽपि हुतहव्यसम्भवा-
द्देहिनामदहदोघमंहसाम् ॥ २७ ॥
उन्नमन् सपदि धूम्रयन्दिशः

तिव्यक्तां वर्णसम्पदमक्षरसमुदायं दधत्। वर्णों, द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु चाक्षर इत्यमरः। नाम हविर्भुगिति नामधेयं चोज्ज्वलं रूढम् अभूत् निरन्तरं हविर्भोजनाद्वपुः पुष्टिमाप नाम चार्थवदासी-दित्यर्थः। अत्र भोजनस्यान्वत इति विशेषणगत्या हेतुत्वात्पदार्थहेतुक-काव्यलिङ्गम् ॥ २६ ॥

स्पर्शमिति। उचितं स्वाभाविकम् उष्णम् उष्णाख्यं स्पर्शं स्पर्शने-न्द्रियमात्रग्राह्यं गुणविशेषं दधत् दधानः शिखी शिखावान् अग्निः। शोङ्गादित्वादिनिः। हविराज्यादिकं ददाह भस्मीचकारेति यत् तद-द्भुतं न उष्णस्पर्शसङ्गतस्याग्नेः पार्थिवद्रव्यदहनशक्तेः स्वाभावि-कत्वादिति भावः। कुतः हुतहव्यसम्भवात् हुतहवनीयहविर्जन्यात् गन्धतो गन्धात् अपि संक्रामकगुणादपीत्यर्थः देहिनां गन्धं जिघ्रतां प्राणिनामित्यर्थः अंहसां पापानामोघमपीति भावः अदहत् भस्मी-कृतवान् नाशितवानित्यर्थः। अदाह्यदहनं त्वाश्चर्यमिति भावः। अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात् पदार्थहेतुकं तावदेकङ्काव्यलिङ्गम्। उत्तरार्द्धे त्वंहसां भस्मीकरणा-भावलक्षणदाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासे लब्धस्य वाच्याभेदाध्यवसायमूलातिशयोक्तिप्रतिभोत्थापितः स एवादाह्यदाहक-त्वरूपवाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिङ्गसहकृतो हविर्दहनाद्भु-तत्वहेतुरिति वाक्यार्थहेतुककाव्यलिङ्गमन्यैः प्राधान्येन सङ्कीर्-र्यते ॥ २७ ॥

उन्नमन्निति। सपदि शीघ्रमूर्ध्वमुन्नमन् उद्गच्छन् दिशो धूम्र-

सान्द्रतां दधदधःकृताम्बुदः ।
द्यामियाय दहनस्य केतनः
कीर्त्तयन्निव दिवौकसां प्रियम् ॥ २८ ॥
निर्जिताखिलमहार्णवौषधि-
स्यन्दसारममृतं ववल्गिरे ।
नाकिनः कथमपि प्रतीक्षितुं
ह्यमानमनले विषेहिरे ॥ २९ ॥

यन् धूम्रवर्णः कुर्वन् सान्द्रतां नीरन्ध्रतां दधत् अतएवाधःकृताम्बुदः शोभयावधीरितमेघो मेघोपरिगतश्च दहनस्याग्नेः केतनः केतुर्धूम इत्यर्थः द्यौरोको येषां दिवौकसां देवानाम् । पृषोदरादित्वात्साधुः । अथवा दिवसो को येषामिति विग्रहः । दिवं स्वर्गान्तरिक्षयोरिति विश्वः । तेषां प्रियमिष्टं कीर्त्तयन् कथयन्निव कीर्त्तनहेतोरिव कीर्त्त-नार्थमिवेत्यर्थः अतएव फलोत्प्रेक्षा । कीर्त्तयन्निति लक्षणहेत्वोः क्रियाया इति हेत्वर्थे लटः शत्रादेशः । द्यामन्तरिक्षमियाय प्राप । इणो लिट् ॥ २८ ॥

निर्जितेति । नाकः स्वर्ग एषामस्तीति नाकिनो देवा अखिलानां महार्णवौषधीनां महार्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां स्यन्दो मन्थनाधिःसृतो रसस्तस्य सारो श्रेष्ठांशोऽमृतमिति यावत् स निर्जितो येन तत् अमृतादपि स्वाद्वित्यर्थः । अमृतं हविराख्या-कृतम् । अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृत इति मेदिनी । ववल्गिरे अभ्यवजह्रुः । वल्ग भोजने कर्त्तरि लिट् । वल्गश्चाभ्यवहारं प्रत्यवसानञ्च भोजनं जग्धिरिति हलायुधः । तस्यामृताधिक्यं व्यनक्ति, अनले ह्यमानं दीयमानममृतमिति भावः प्रतीक्षितुं कथमपि विषेहिरे सोढ़वन्तः होमविलम्बं कथञ्चिदसहन्तेत्यर्थः तृष्णातु प्रायेव जिघ्रतीति रसातिशयोक्तिः । अत्र हविषोऽमृतमित्यभेदोक्त्याभेद-रूपातिशयोक्तस्तद्विशेषणपदार्थस्य वल्गनहेतुत्वात् काव्यलिङ्गभेदः

तत्र नित्यविहितोपहूतिषु
प्रोषितेषु पतिषु द्युयोषिताम् ।
गुम्फिताः शिरसि वेणयोऽभवन्
न प्रफुल्लसुरपादपस्रजः ॥ ३० ॥

प्राशुराशु हवनीयमत्र यत्
तेन दीर्घममरत्वमध्यगुः ।
उद्धतानधिकमेधितौजसो
दानवांश्च विबुधा विजिग्यिरे ॥ ३१ ॥

तया सङ्कीर्यते । परिनिविभ्यः सेवसितसयसिवुसहेत्यादिना षत्वम् ॥ २९ ॥

तत्रेति । तत्र क्रतौ नित्यं विहितोपहूतिषु कृताह्वानेषु पतिषु भर्तृषु इन्द्रादिषु प्रोषितेषु प्रवासं गतेषु । वसेः कर्त्तरि क्तः, वसतिक्षुधोरितीडागमः । द्युयोषितां स्वर्गस्त्रीणाम् इन्द्राण्यादीनां शिरसि वेणयो जटा एव गुम्फिता ग्रथिताः अभवन् प्रफुल्लाः विकसिताः सुरपादपस्रजो मन्दारमालाः न गुम्फिता अभवन् । अत्र सुरयोषितां वेण्यसम्बन्धेऽपि सम्बन्धोक्तेः स्रक्सम्बन्धेऽप्यसम्बन्धोक्तेश्च सम्बन्धेऽसम्बन्धरूपा असम्बन्धे सम्बन्धरूपा चातिशयोक्तिः ताभ्याञ्च क्रतोरजस्रत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ३० ॥

प्राशुरिति । विबुधाः सुराः अत्र क्रतौ आशु क्षिप्रं हूयत इति हवनीयं हविः यत् प्राशुः प्राशितवन्तः । अश भोजने लिट् । द्विर्वचनादिकार्यं अत आदेरित्यभ्यासदीर्घः । तेन हविःप्राशनेन दीर्घं चिरभोग्यममरत्वं देवत्वमध्यगुः प्रापुः । इणो गा लुङीति गादेशः । किञ्च अधिकमत्यन्तमेधितौजसो वर्द्धितबलाः सन्तः उद्धतानुद्दृप्तान् दानवान् असुरांश्च विजिग्यिरे जितवन्तः । विपूर्वाज्जयतेः कर्त्तरि लिट्, विपराभ्यां जेरित्यात्मनेपदम् । अत्र विबुधानां दीर्घामरत्वासुरविजयित्वासम्बन्धेऽपि सम्बन्धातिशयोक्तिः, एधितौजस्त्वस्य विशे-

नापचारमगमन् क्वचित् क्रियाः
सर्वमत्र समपादि साधनम् ।
अत्यशेरत परस्परं त्विषः
सत्त्विणां नरपतेश्च सम्पदः ॥ ३२ ॥
दक्षिणीयमवगम्य पङ्क्तिशः
पङ्क्तिपावनमथ द्विजव्रजम् ।

यथागत्या विजयहेतुत्वात् काव्यलिङ्गं तदुत्थापितश्चासरत्वासुरविजयक्रियासमुच्चय इति सङ्करः । गुणक्रिया योगपद्यसमुच्चयः ॥ ३१ ॥

नापचारमिति । अत्र क्रतौ क्वचित् कुत्रापि क्रियाः कर्माणि अपचारं लोपविघ्नविपर्यासादिदोषं नागमन् । गमेर्लुङि पुषादिना च्लेरङादेशः । अनपचारे हेतुमाह । अत्र सर्वं साधनं समपादि सम्पन्नम् । पद्यतेः कर्त्तरि लुङ्, चिण्ते पद इति चिण्प्रत्ययः कर्मणि वा । सम्पादितमित्यर्थः चिण् भावकर्मणोरिति चिण्प्रत्ययः । साधनसम्पत्तिमेव व्यनक्ति । अतीति । सत्त्वं यज्ञनन्त्वं येषामस्तीति सत्त्विणाम् ऋत्विजाम् । सत्त्वमाच्छादनं यज्ञमित्यमरः । त्विष उत्तरोत्तरप्रयोगविज्ञानानि । तदुक्तम्, आचतुर्थात् कर्मणोऽन्ते समीचैतेदं करिष्यामीति । तथा नरपतेराज्ञः सम्पदः पदार्थसमृद्धयश्च परस्परम् अत्यशेरत अतिशयितवत्यः उभयेऽप्यतिसमया इत्यर्थः ज्ञानद्रव्ये हि क्रियासाधनतत्सम्पन्नस्य कुतः क्रियापचार इति भावः । अत्रानपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं तस्य परस्परातिशयक्रिया रूपधर्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्बद्धोचरया तुल्ययोगितयोज्जीवितत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३२ ॥

दक्षिणीयमिति । अथानन्तरं दक्षिण औदार्यवान् । दक्षिणः सरलोदारावित्यमरः । क्षितिपतिः राजा । दक्षिणामर्हतीति दक्षिणीयः । दक्षिणीयो दक्षिणार्हः तत्र दाक्षिणय इत्यपीत्यमरः । कड-

दक्षिणः क्षितिपतिर्व्यशिश्रण-
द्दक्षिणाः सदसि राजसूयकीः ॥ ३३ ॥
वारिपूर्वमखिलासु सत्क्रिया-
लब्धशुद्धिषु धनानि बीजवत् ।
भावि बिभ्रति फलम्महद् द्विज-
क्षेत्रभूमिषु नराधिपोऽवपत् ॥ ३४ ॥
किं नु चित्रमधिवेदि भूपति-
र्दक्षयन्द्विजगणानपूयत ।

क्वरदक्षिणाच्छ चेति छप्रत्ययः । तं पङ्क्तेः स्वाधिष्ठितायाः पावनं पाव-यितारं पङ्क्तिपावनम् । पावयतेः कर्त्तरि ल्युट् । द्विजव्रजम् ऋत्विग्वर्ग-मित्यर्थः पङ्क्तिशः पङ्क्त्यनुसारेण अधिगम्य प्राप्य सदसि राजसूयकीः राजसूयकाण्डोक्ता इत्यर्थः । दक्षिणाशब्दः स्फुटार्थः । राजसूयेत्यत्र दक्षिणार्थ एव ढको विधानात् । व्यशिश्रणत् विश्राणयति स्म वितीर्णवानित्यर्थः । विश्राणनं वितरणमित्यमरः । श्रण दाने इति धातोर्लुङि णौ चङ्युपधाया ह्रस्वः । वृत्त्यनुप्रासोऽलङ्कारः ॥ ३३ ॥

वारीति । नराधिपो राजा सत्क्रियाभिरभिषेकसंस्कारैर्लब्धा शुद्धिर्निर्दोषता याभिस्तासु अखिलासु । द्विजा एव क्षेत्रभूमयः केदारभूमयः तासु । क्षेत्रं गेहे पुरे देहे केदारे योनिभार्य्ययोरिति वैजयन्ती । भावि भविष्यत् महत् फलं स्वर्गादिकं धान्यादिकं च बिभ्रति बिभ्राणानीत्यर्थः । वा नपुंसकस्येति विकल्पान्नुमागमप्रतिषेधः । धनानि बीजवत् बीजैस्तुल्यं वारिपूर्वमुदकदानपूर्वकमवपत् उप्तवान् दत्तवानित्यर्थः । अत्र बीजवत् इत्युपमानम् । तेन तुल्यमिति तुल्यार्थे वतेर्विधानात् तथापि वापक्रियायोगात् द्विजक्षेत्रेति रूपकसमासो नोपमितसमासः किन्तु रूपकस्याङ्गमुपमा तदुत्थापितत्वादिति सङ्करः ॥ ३४ ॥

किमिति । भूपतिरधिवेदि वेद्यां सप्तवेदानित्यर्थः । अत्र

राजतः पुपुविरे निरेनसः
प्राप्य तेऽपि विमलम्प्रतिग्रहम् ॥ २५ ॥
स स्वहस्तकृतचिह्नशासनः
पाकशासनसमानशासनः ।
आश्रमाद्धतपनार्णवस्थिते-
र्विप्रसादकृत भूयसीर्भुवः ॥ २६ ॥

यथाक्रमर्थेऽव्ययीभावः । द्विजगणान्त्विग्गणान् दक्षयन् हर्षयन् दक्षिणाप्रतिग्रहेण सदक्षिणान् कुर्वन् प्रतिग्राहयन्नित्यर्थः तदृक्षणे दाक्षिणां प्रतिग्रह्णेति स्मृतिदर्शनात् । दक्ष नैपुण्य इति धातोर्ण्यन्ताल्लटः शत्रादेशः । अतएव निष्णाते दक्षिणे वापि नैपुण्ये निपुणेऽपि चेति भट्टः । अपूयत पूतोऽभवदिति । कर्मकर्त्तरि लङ् । किञ्चित् दाता पूत इति न चित्रमित्यर्थः किन्तु प्रतिग्रहीतापि पूत इति चित्रमाह । ते द्विजगणा अपि निरेनसो निष्पापात् राजतो राज्ञः । पञ्चम्यास्तसिल् । विमलं शुद्धं प्रतिग्रहं प्राप्य पुपुविरे पूताबभूवुः । विशुद्धात् प्रतिग्रहं इत्यभिधानादिति भावः । अत्रापि पूजः कर्म-कर्त्तरि लिट् । प्रतिग्रहीतापि शुद्ध इति विरोधः स एव वाक्यार्थ-भूतस्खिलत्वनिरोधहेतुरिति विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः ॥ २५ ॥

स इति । पाको नाम कोऽपि राक्षसस्तस्य शासनः शासको हन्ता पाकशासनः इन्द्रस्तेन समानं शासनं तुल्याज्ञा यस्य स इत्यर्थः स राजा स्वहस्तेन कृतं लिखितं चिह्नं स्वनामलेखनादिलाञ्छनं येषु तानि शासनाः नियमपत्राणि यस्य सः दत्तस्वहस्तलेखाङ्कितशासनः सन्नित्यर्थः । आश्रमाद्धतपनार्णवस्थितेः अश्माद्धतपनार्णवामभिव्याप्य आकल्पमित्यर्थः । अभिविधावाङ् । आङ्मर्यादाभिविध्योरिति विकल्पादसमासः । भूयसीर्बह्वी देयभूमीः विप्रसात् विप्राधीनाः । देये त्रा चेति चकारात्सातिप्रत्ययः । अकृत कृतवान् दत्तवानित्यर्थः ।

शुद्धमश्रुतिविरोधि बिभ्रतं
शास्त्रमुज्ज्वलमवर्णसङ्करैः ।
पुस्तकैः सममसौ गणमस्तु-
र्वाच्यमानमशृणोद् द्विजन्मनाम् ॥ २७ ॥

अञ्जो लुङि तङ् उश्चेति सिचः कित्त्वात् ह्रस्वादङ्गादिति सकार-लोपो गुणाभावश्च । पाकशासनसमानशासन इत्युपमानुप्रासयोः संसृष्टिः ॥ २६ ॥

शुद्धमिति । असौ नृपः शुद्धमाचारपूतम् । अन्यत्र विभक्ति-विपरिणामेन शुद्धैरकलङ्कैः । श्रुतिवरोधि वेदविरुद्धं न भवतीत्यश्रुति-विरोधि शास्त्रं बिभ्रतम् आत्मनि धारयन्तं सकलवैदिकशास्त्राभिज्ञ-मित्यर्थः । नाभ्यस्ताच्छतुरिति नुमप्रतिषेधः । अन्यत्र श्रुत्यविरोधिभिः पुराणादिभिः वाच्यमानम् अन्वयगुणादिक्रमेण प्रस्तूयमानमन्यत्र वाच्यमानैर्द्विजगणेन व्याख्यायमानैरित्यर्थः । वचेश्चौरादिकात् कर्मणि लटः शानजादेशः । द्विजन्मनां ब्राह्मणानां गणम् अवर्ण-सङ्करैरसङ्कीर्णाचरैः अन्यत्र जातिसङ्कररहितमिति विपरिणामः । पुस्तकैः समं पुस्तकाचरैर्वाक्यैः सह अशृणोत् दानकाले प्रत्येकं ब्राह्म-णानां गुणान् गोष्ठीश्च श्रुतवानित्यर्थः । तुल्यस्य विद्यानामपि पुस्त-कधारणविलक्षणत्वेनोक्तमित्यदोषः अन्यत्र पुस्तकैः समं द्विजगुणम् अशृणोदिति । सम्बन्धिभेदे भिन्नयोः श्रवणयोरभेदाध्यवसायभेदे अभेदरूपातिशयोक्तिबलात् कारिणी द्विजानां प्रस्तुतत्वात् पुस्तकानीव द्विजानिति वैवक्षिकोपमानोपमेयभावपर्यवसायिनी सेयमसङ्कीर्णसहो-क्तिरलङ्कारः । सहार्थे नान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौ-पम्यपर्यन्ता सा सहोक्तिरिहेष्यते इति लक्षणात् । कचित् पुस्तकैः समं वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान् । लेख्येष्वाद-तमानामिति व्याचक्षते । तैः पुस्तकेषु शास्त्रभरणासम्भयादवर्ण-सङ्करेति लिङ्गविशेषणात्प्रत्ययमुक्तिसम्भवः पुस्तकानां वाचनकरण-

तत्प्रणीतमनसामुपेयुषा-
न्द्रष्टुमाह्वनमग्रजन्मनाम् ।
आतिथेयमनिवारितातिथिः
कर्तुमाश्रमगुरुः स नाश्रमत् ॥ २८ ॥

मृग्यमाणमपि यद् दुरासदं
भूरिसारमुपनीय तत् स्वयम् ।
आसतावसरकाङ्क्षिणो वहि-
स्तस्य रत्नमुपदीकृतं नृपाः ॥ २९ ॥

त्वाल्लुनादिशब्दवैयर्थ्यं छन्दसश्चोल्लालङ्कारभ्रंशश्चेति एवमादयो दोषा दुस्तरा इत्यलं विस्तरेण ॥ २७ ॥

तदिति । अनिवारिताः अप्रत्याख्याता अतिथयो येन सः आश्रमाणां ब्रह्मचर्यादीनां गुरुर्नियन्ता स राजा । आ समन्ताज्जुहो-त्यस्मिन्नित्याह्वनं यागम् । जुहोतेर्ल्युट् । द्रष्टुमुपेयुषामागतानाम् । अतएव प्रणीतमनसां सत्कर्मदर्शनात् हृष्टचित्तानाम् अग्रजन्मनाम् । अतिथिषु साध्वातिथेयमतिथिसत्कारम् । पथ्यतिथीत्यादिना ढञ्-प्रत्ययः । कर्त्तुं नाश्रमत् न श्रान्तः । श्रम्यतेः पुषादित्वाल्लुङि च्लेरङादेशः । अत्रानिवारितातिथित्वस्य विशेषणगत्या श्रमनिषेध-हेतुत्वात् काव्यलिङ्गं तदनुप्रासेन संसृज्यते ॥ २८ ॥

मृग्यमाणमिति । यत् रत्नं मृग्यमाणम् अन्विष्यमाणमपि दुरासदं दुर्लभम् । भूरिसारं महासारम् उपदीकृतमुपायनीकृतं मनसा यथासङ्कल्पितमित्यर्थः । उपायनमुपग्राह्यमुपहारस्तथोपदे-त्यमरः । तद्रत्नं श्रेष्ठवस्तु । रत्नं श्रेष्ठे मणावपीति विश्वः । नृपाः स्वयमुपनीय तस्य राज्ञोऽवसरकाङ्क्षिणः सेवावसरं प्रतीक्षमाणाः वहिरासत स्थिता इत्यैश्वर्यातिशयोक्तिः । अत्र रत्ने उपदात्वस्या-रोपणस्य प्रकृतोपयोगात्परिणामालङ्कारः ॥ २९ ॥

एक एव वसु यद्ददौ नृप-
स्तत्समापकमतर्क्यत क्रतोः ।
त्यागशालिनि तपःसुते ययुः
सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥

प्रीतिरस्य ददतोऽभवत्तथा
येन तत्प्रियचिकीर्षवो नृपाः ।
स्वार्पितैरधिकमागन् मुदं
नाधिवेश्म निहितैरुपायनैः ॥ ४१ ॥

एक इति । एक एव नृपो यद्वसु धनं ददौ उपायनमिति भावः । तद्धनमेव क्रतोः समापकं सम्पूरकम् अतर्क्यत दक्षिणादाना-दिसर्वक्रतुव्ययपर्य्याप्ततया तर्कितमित्यर्थः । तपःसुते धर्मपुत्रे त्याग-शालिनि सति सर्वपार्थिवधनान्यपि क्षयं व्ययं ययुः । अत्रैकपार्थि-वधनस्य क्रतुसमापकत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तयोश्च सापेक्षत्वात्सजातीयसङ्करः ॥ ४० ॥

प्रीतिरिति । ददतो दानं कुर्वतोऽस्य राज्ञस्तथा तेनैव प्रकारेण राजोपायनानाम् अर्थिसात्करणेनैव प्रीतिरभवदासीत् न तु कोश-गृहार्पणेनेत्यर्थः । कुतः येन प्रकारेण तस्य राज्ञः प्रियं चिकीर्षवः प्रियं कर्त्तुमिच्छवः । मधुपिपासुप्रभृतित्वात् द्वितीयासमासः । नृपाः स्वार्पितैः प्रतिपादितैः । स्पर्शनं प्रतिपादनमित्यमरः । उपायनैरुप-हारैरधिकं यथा तथा मुदमागमन् प्राप्ताः । तथैव प्रभुप्रीतिसिद्धेः सोपायनानां सिद्धनियोगलाभाच्चेति भावः । अधिवेश्म वेश्मनि निहितैरुपायनैर्मुदं नागमन् तथोक्तप्रयोजनासिद्धेरिति भावः । येनैव राज्ञां मोदः स्वस्य च महान् धर्मलाभः तेनोपायनानामर्थिसात्-करणादेव राज्ञः प्रीतिरासीत् न कोशगृहार्पणादित्यर्थः । अतएव दानसंग्रहयोः प्रकृतयोः प्रीतेः संग्रहपरिहारेण दान एव नियम-नात्परिसङ्ख्यालङ्कारः । एकस्यानेकत्र प्राप्तावेकत्र नियमनं

यं लघुन्यपि लघूकृताहितः
शिष्यभूतमशिषत्स कर्मणि-
सस्पृहम् प्रतिभिर्न्पोऽपरै-
र्गौरवेण ददृशेतरामसौ ॥ ४२ ॥

आद्यकोलतुलितामकम्पनैः
कम्पितामुहुरनीदृगात्मनि ।
वाचि रोपितवतामुना महीं
राजकाय विषया विशेजिरे ॥ ४३ ॥

परिसङ्ख्येति लक्षणात् । एतेन सर्वस्वदानं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ४१ ॥

यमिति । लघूकृता अल्पीकृता अहिताः शत्रवो येन सः । स राजा शिष्येण तुल्यं शिष्यभूतम् । भूतं क्ष्मादौ पिशाचादौ व्ययसत्योपमानयोरिति विश्वः । सुप्सुपेति नित्यसमासः । यन्नृपं लघुन्यप्यल्पेऽपि यज्ञीयपशुरक्षणादिकर्मणि अशिषत् आज्ञापितवान् । सर्त्तिशास्त्यर्त्तिभ्यश्चेति लुङि च्लेरङादेशः । शास इदङ्हलोरितीकारः । असौ कर्मकरो नृपः अपरैस्ततोऽन्यैर्नृपतिभिः सस्पृहम् अहो सम्मान इति साभिलाषं गौरवेण ददृशेतराम् अतिशयेन दृष्टः । दृशेः कर्मणि लिट्, तिङश्चेति तरप्प्रत्यये किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यामुप्रत्ययः, तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञा । अत्र कर्मकरनृपस्येतरनृपकर्तृकविशिष्टदर्शनकर्मत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः, तया राज्ञो निरङ्कुशाज्ञत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४२ ॥

आद्येति । आद्यकोलः आदिवराहः । वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिरित्यमरः । तेन तुलितां कल्पादौ उद्धृताम् तथापि प्रकम्पनैः प्रक्षोभकैर्हिरण्याक्षप्रमुखैः कम्पितां क्षोभितां महीम् । अनीदृगात्मनि अनेवंरूपायां केनाप्यकम्पितायामस्खलितायां

आगताद् व्यवसितेन चेतसा
सत्त्वसम्पदविकारिमानसः ।
तत्र नाभवदसौ महाहवे
शात्रवादिव पराङ्मुखोऽर्थिनः ॥ ४४ ॥

वाचि रोपितवता स्थापितवता स्थिरेण रोपणेन स्थिरीकुर्वतेत्यर्थः । अमुना राज्ञा राजकाय राज्ञां समूहाय । गोत्रोऽक्षेत्यादिना वुञ्-प्रत्ययः । विषयाः देशाः । नीवृज्जनपदो देशविषयौ तूपवर्तनमित्यमरः । विभेजिरे अखायमिति विभक्ताः । प्राक् विजयोद्धृतान् राज्ञः पुनः पदेषु स्थापयामासेत्यर्थः । अतादिपराक्षो महीमुद्धृतवानेव वाचैवासौ तु निरातङ्कं स्थापितवांश्चेति उपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ४३ ॥

आगतादिति । सत्त्वसम्पदा गुणाधिक्येन अविकारिमानसो लोभाभिभवाभ्याम् अनुपप्लुपचित्त इत्यर्थः । सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोरिति विश्वः । असौ राजा तत्र तस्मिन् आ समन्तात् जुह्वति अस्मिन्निति आहवो यागः । ऋदोरबिति जुहोतेरप्प्रत्यये गुणावादेशौ । आह्वयन्ते शत्रवो यस्मिन्नित्याहवो युद्धम् । आङि युद्ध इति ह्वयतेराङ्पूर्वादप्प्रत्ययः सम्प्रसारणम् । आहवः यागयुद्धयोरिति विश्वः । महांश्चासौ स च महाहवस्तस्मिन्महाहवे व्यवसितेन निश्चितेन धनलाभं निश्चितवता । अन्यत्र शत्रोर्मे त्युरेयेति निश्चितवतेत्यर्थः । व्यवपूर्वात् स्यतेः सकर्मकत्वादप्यविवक्षिते कर्मकर्त्तरि क्तः, प्रसिद्धेरविवक्षातः कर्मणो कर्मिका क्रियेति वचनात् । चेतसा आगतात् चेतसा स्वयं निश्चित्यागतादित्यर्थः । अर्थिनो याचकात् । शत्रुरेव शात्रवः । स्वार्थेऽण्प्रत्ययो राक्षसवत् । तस्मादिव पराङ्मुखो नाभवत् । आहवेष्वनिवर्तित्वं प्रजानां चैव पालनम् । शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परमिति मनुस्मरणात् इति भावः । श्लेषसङ्कीर्णयमकमलंकृता ॥ ४४ ॥

नैक्षतार्थिनमवज्ञया मुहु-
र्याचितस्तु न च कालमाक्षिपत् ।
नादिताल्पमथ न व्यकत्थयद्
दत्तमिष्टमपि नान्वशेत सः ॥ ४५ ॥

निर्गुणोऽपि विमुखो न भूपते-
र्दानशौण्डमनसः पुरोऽभवत् ।
वर्षुकस्य किमपः कृतोन्नते-
रम्बुदस्य परिहार्यमूषरम् ॥ ४६ ॥

नैक्षतेति । स राजा अर्थिनं याचकं मुहुरवज्ञया अनादरेण नैक्षत । तर्हि विलम्बितं किं नेत्याह । याचितस्तु प्रार्थित एव कालं नाक्षिपत् न यापयामास याचकबहुत्वात्तर्ह्यल्पदाता नेत्याह । अल्पमपि नादित न ददौ किं तु यथार्थिकाममिति भावः । ददाते-र्लुङि तङि स्थाघ्वोरिच्चेतीकारः, ह्रस्वादङ्गादिति सलोपः । तर्हि विकत्थनः किन्नेत्याह । न व्यकत्थयत् आत्मश्लाघां न चकार । कत्थ श्लाघायाम् । किञ्च इष्टं प्रियमपि दत्तं वस्तु नान्वशेत नानुतप्यतान् । दत्तानुतापस्यातिप्रत्यवायहेतुत्वादिति भावः । अत्रार्थिसन्दोहयाच्-ञादिबाहुल्यरूपकारणसामग्र्येऽपि विलम्बादिकार्यानुत्पत्तेर्विशेषो-क्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते इति लक्ष-णात् । तथा दातुः सात्त्विकं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।४५॥

निर्गुण इति । दानशौण्डमनसो दानशूरचित्तस्य बहुप्रदस्ये-त्यर्थः । खुर्वदान्यस्थूललक्ष्यदानशौण्डो बहुप्रदे मत्ते शौण्डोत्कट-क्षीबा इत्यमरः । भूपतेः पुरोऽग्रे निर्गुणस्तपोविद्यादिगुणहीनोऽपि विमुखो निष्फलो नाभवत् किन्तु पूर्णकाम एवाभवत् भूरिदाने सर्वस्यापि पात्रत्वादिति भावः । अतएव तेनापात्रवर्षदोषोऽपि न कल्पयत्त-रित्याशयेन दृष्टान्तमाह । वर्षुकस्येति । अपो जलानि । न लोके-त्यादिना षष्ठीप्रतिषेधः । वर्षुकस्य वर्षणशीलस्य । लषपतेत्यादिना

प्रेम तस्य न गुणेषु नाधिकं
न स्म वेद न गुणान्तरञ्च स: ।
दित्सया तदपि पार्थिवोऽर्थिनं
गुणगुणज्ञ इति न व्यजीगणत् ॥ ४७ ॥
दर्शनानुपदमेव कामत:

उकञ्प्रत्यये लघूपधगुणः । कृतोन्नतेः कृतोदयस्याम्बुदस्य अम्बुदेनेत्यर्थः । कृत्यानां कर्त्तरि वेति षष्ठी । स्यादुषः चारम्मृत्तिकेत्यमरः । तद्वत्क्षेत्र-मूषरम् । ऊषवानूषरो द्वावप्यन्यलिङ्गे स्थलं स्थलीत्यमरः । ऊषशु-षिमुष्कमधुभ्यो र इति रप्रत्ययः । परिहार्य्यं त्याज्यं किं नेत्यर्थः । अत्र पर्य्यन्यभूपालयोर्वाक्यभेदेन विम्बप्रतिविम्बतया समानधर्माभि-धानात् दृष्टान्तालङ्कारः ॥ ४६ ॥

प्रेमेति । तस्य राज्ञो गुणेषु अधिकं प्रेम नेति न किन्तु अस्त्ये-वेत्यर्थः । राजा गुणान्तरं गुणविशेषं न वेद न वेत्ति स्मेति न च किन्तु वेदैवेत्यर्थः । लट् स्मे इति भूतार्थे लट्, विदो लटो वेति णलादेशः । संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ इति वामनः । संभा-वितयोरधिमर्शदेवागुणप्रीतिज्ञानयोर्निषेध इति भावः । तदपि तथापि । पृथिव्या ईश्वरः पार्थिवः । सर्वभूमिपृथिवीभ्यामणञावि-त्यञ्प्रत्ययः । दित्सया दातुमिच्छया सर्वपात्रदानकौतुकेनेत्यर्थः । सनि मीमेत्यादिना इसादेशः, अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । अर्थिनं याचकं गुणी गुणवान् अगुणज्ञो नायं गुणवानिति न व्यजी-गणत् न गणयति स्म । गुणप्रियोऽपि गुणज्ञोऽपि दानशौण्डो-ऽर्थितया गुणान् गणयामासेत्यर्थः । गणेर्णौ चङि ई च गण इत्यभ्यासस्य विकल्पादीकारः । अत्र गुणप्रियत्वगुणज्ञत्वरूपकारण-सामग्र्येऽपि गुणागुणविमर्शरूपकार्यानुत्पत्तेः दित्सयेत्युक्तनिमित्ता विशेषोक्तिरलङ्कारः ॥ ४७ ॥

दर्शनेति । वनीयकजने अर्थिजने । दर्शनानुपदं राजविलो-

स्वं वनीयकजनेऽधिगच्छति ।
प्रार्थनार्थरहितन्तदाभव-
द्दीयतामिति वचोऽतिसर्जने ॥ ४८ ॥

नानवाप्तवसुनार्थकाम्यता
नाचिकित्सितगदेन रोगिणा ।
इच्छताशितुमनाशुषा न च
प्रत्यगामि तदुपेयुषा सदः ॥ ४९ ॥

कथानन्तरमेव प्रार्थनाप्रसक्त्वेत्यर्थः । वनीयको याचनको मार्गणो याचकार्थिनौ इत्यमरः । कामतो यथेच्छं स्वं धनमधिगच्छति लभमाने सति । तदा दीयतामिति वचो दीयतामित्येतत्पदं प्रार्थना याच्ञा तस्याः दीयतामिति वाञ्छा सैवार्थस्तेन रहितं शून्यं सत् तदा अतिसर्जने त्यागेऽभवत् अवर्त्तत तस्य दीयतामिति अर्थिवाक्याभावादस्मै दीयतामिति दातृवाक्यमेवान्वयमभूदित्यर्थः । अर्थिनामागमनमेव याचनमिति विवेकिनां किं याच्ञादैन्यदर्शनचापलेनेति भावः । अत्र दीयतामिति वचः संप्रार्थनार्थवर्जनेन तेनातिसर्जनार्थताकथनादेकस्यानेकत्वप्रसक्तावेकत्र नियमनाख्या परिसङ्ख्या ॥ ४८ ॥

नानेति । अर्थकाम्यता अर्थमात्मन इच्छता धनार्थिना । काम्यच्चेति काम्यच्प्रत्यये सनादिधातुत्वाल्लटि शत्रादेशः । तत्सदः उपेयुषा प्राप्तवता पुरुषेण अनवाप्तवसुना अलब्धधनेन न प्रत्यगामि न प्रत्यावर्त्ति । रोगिणा उपेयुषा अचिकित्सितगदेन अशमितरोगेण । रोगव्याधिगदामया इत्यमरः । न प्रत्यगामि । अशितुं भोक्तुम् इच्छता उपेयुषा अनाशुषा च अनशितेनाभुक्तवतेत्यर्थः । उपेयिवाननाश्वाननूचानश्चेति क्वसुप्रत्ययान्तो निपातितः । न प्रत्यगामि किन्तु सर्वेणापि पूर्णकामेनैव प्रत्यगामीत्यर्थः । गमेर्भावे लुङ् । अत्रार्थिरोगिक्षुधितानां प्रकृतानामेव पूर्णकामत्वसाम्या-

स्वादयन् रसमनेकसंस्कृत-
प्राकृतैरकृतपात्रसङ्करैः ।
भावशुद्धिसहितैर्मुदञ्जनो
नाटकैरिव बभार भोजनैः ॥ ५० ॥

रचितारमिति तत्र कर्मणि
न्यस्य दुष्टदमनक्षमं हरिम् ।
अक्षतानि निरवर्त्तयत्तदा
दानहोमयजनानि भूपतिः ॥ ५१ ॥

कृष्यौपम्यत्वात् केवलप्रकृतविषया तुल्ययोगिता तथा च यो यत्काल आगतः स तत्फलमेवास्वादलभतेति व्यज्यते ॥ ४९ ॥

स्वादयन्निति । अनेकानि बहूनि संस्कृतानि हिङ्गुमरीचादिना कृतसंस्काराणि प्राकृतानि प्रकृतिसिद्धानि संस्कारं विना स्वादूनि कृतानि फलादीनि च येषु तैः । अन्यत्रानेकविधिचित्रसंस्कृतप्राकृतौ भाषाविशेषौ येषु तैः अकृतः पात्राणां भाजनानाम् अन्यत्र भूमिकानां च सङ्करो व्यतिकरो येषु तैः । भावशुद्धिः पदार्थानां स्पष्टता अथवा भावशुद्धिः गर्हाविरहः तत्सहितैः । अन्यत्र भावाः स्थायिनो रत्यादयः तेषां शुद्धिः सजातीयविजातीयातिरस्कृतरूपकत् । सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् यावद्रसं वर्त्तमानः अनुभवन् जनो भोक्तृजनः समाजिकजनश्च मुदमानन्दं बभार । श्लेषसङ्कीर्णेयमुपमा ॥ ५० ॥

रचितारमिति । तृतीयं भूपतिर्युधिष्ठिरः, तत्र कर्मणि राजसूयाध्वरे दुष्टानां दमने मर्दने क्षमं समर्थं हरिं रचितारं विघ्नेभ्यस्त्रातारं न्यस्य निधाय अक्षतानि अविहतानि दानहोमयजनानि निरवर्त्तयदन्वतिष्ठत् स्वकीयस्य द्रव्यस्य स्वत्वनिवृत्तिपरस्वत्वोत्पादनं दानं, देवतोद्देशेनाग्नौ हविषः प्रक्षेपो होमः, हुतस्य देवतोद्देशेन वाङ्मनसाभ्यां न ममेति त्यागो यागः । अत्र दुष्टदमनक्ष-

एक एव सुसखैष सुन्वतां
शौरिरित्यभिनयादिवोच्चकैः ।
यूपरूपकमनीनमद् भुजं
भूषचालतुलिताङ्गुलीयकम् ॥ ५२ ॥

इत्यमत्र विततक्रमे क्रतौ
वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घ्यदानमनु चोदितो वचः
सभ्यमभ्यधित शन्तनोः सुतः ॥ ५३ ॥

त्वस्य विशेषणगत्या हरेरर्घाधिकारहेतुन्यासहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ५१ ॥

एक इति । सुन्वतां सोमाभिषवं कुर्वतां सोमयाजिनामित्यर्थः । सुनोतेर्लटः शत्रादेशः । सुसखा सत्सहायः । न पूजनादिति समासान्तप्रतिषेधः । एष शौरिरेक एवेत्यभिनयादिव तद्व्यञ्जकचेष्टां कृत्वेवेत्युत्प्रेक्षा । व्यञ्जकाभिनयौ समावित्यमरः । भूर्देवयजनभूमिः । चषालेन यूपकटकेन । चषालो यूपकटक इत्यमरः । तेन तुलितं समीकृतमित्यर्थः । तुलयतेस्तत्करोतिण्यन्तात् कर्मणि क्तः । तदङ्गुलीयकमूर्मिका यस्य तम् अङ्गुलीयकोपमानचषालमित्यर्थः । अङ्गुलीयकमूर्मिकेत्यमरः । जिह्वामूलाङ्गुले छ इति भावे छप्रत्ययः । उच्चैरुन्नतं यूपं पशुबन्धनदारुविशेषो रूपकं स्वरूपं यस्य तं भुजम् अनीनमत् उन्नमितवती । नमेर्णौ चङि सन्वत् कार्य्यम् । अत्र सापेक्षत्वादुपमोत्प्रेक्षयोः सङ्करः ॥ ५२ ॥

इत्थमिति । इत्थमत्र क्रतौ विततक्रमे विस्तृतानुष्ठाने सति अथानन्तरं धर्माज्जन्म यस्य तेन धर्मजन्मना धर्मात्मजेन । जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरण इति वामनः । धर्मं वीक्ष्य धर्मशास्त्रमनुसृत्येत्यर्थः अर्घ्यदानं पूजादानमनु सदस्यपूजार्थमित्यर्थः । मूल्ये पूजाविधावर्घ इत्यमरः । चोदितः कस्मै देयमर्घमिति पृष्टः

आत्मनैव गुणदोषकोविदः
किं न वेत्सि करणीयवस्तुषु ।
यत्तथापि न गुरून् न पृच्छसि
त्वद्क्रमोऽयमिति तत्र कारणम् ॥ ५४ ॥

स्नातकं गुरुमभीष्टमृत्विजं
संयुजा च सह मेदिनीपतिम् ।
अर्घभाज इति कीर्त्तयन्ति षट्
ते च ते युगपदागताः सदः ॥ ५५

शान्तनोः सुतो भीष्मः । सभ्यं सभायां साधु । सभाया य इति यप्रत्ययः । वचो वाक्यमभ्यधित अभिहितवान् । दधातेर्लुङि तङि स्थाध्वोरिच्चेति किच्चे ह्रस्वादङ्गादिति सकारलोपः । वृत्त्यनुप्रासः ॥५३॥

अथासर्गसमाप्तेः भीष्मवचः प्रपञ्चमेव सफलं दर्शयति । आत्मनेति । तत्रात्मनो बहुमानकरणात् प्रीतस्तत्रभवान् भीष्मो राजानं तावत् उत्साहार्थमेकेनोपश्लोकयति । वेत्तीति । विदो ज्ञाता । इगुपधलक्षणः कप्रत्ययः । कसो विद्यास्थानस्य विदः । कोविदः गुणदोषयोः कोविदो विवेक्ता । करणीयवस्तुषु कर्तव्यार्थेषु आत्मनैव स्वयमेव परोपदेशानपेक्षयैवेत्यर्थः । प्रकृत्यादित्वात् तृतीया । किन्न वेत्सि सर्वं जानासीत्यर्थः । तथापि त्वं ज्ञातापि गुरून् पृच्छसीति न किन्तु पृच्छस्येवेति यत् । ज्ञानप्रसक्तं न पृच्छसीति वारणाय नञ्द्वयम् । तत्र गुर्वनुयोगे अयं क्रम इति न्यायः सदाचारपरिपाटीत्येतदेव कारणं न त्वज्ञानमित्यर्थः । अत्र कर्त्तव्यार्थप्रश्नस्याज्ञानहेतुकत्व-वारणेनापरहेतुकत्वे नियमनात् पूर्वोक्तलक्षणपरिसङ्ख्यानम् ॥ ५४ ॥

एवं राजानम् उपश्लोक्य प्रश्नस्योत्तरमाह स्नातकमिति । स्नातको गृहस्थविशेषस्तं गुरुं पितादिकम् अभीष्टबन्धुमृत्विजं याजकं संयुज्यत इति संयुक् सम्बन्धी जामाता तेन सह मेदिनीपतिं राजानं च तं च मेदिनीपतिं चेत्यर्थः । [illegible] पूजार्हा इति । इति

शोभयन्ति परितः प्रतापिनो
मन्त्रशक्तिविनिवारितापदः ।
त्वन्मखम्मुखभुवः स्वयम्भुवो
भूभुजश्च परलोकजिष्णवः ॥ ५६ ॥
आभजन्ति गुणिनः पृथक् पृथक्
पार्थ ! सत्कृतिमकृत्रिमामनी ।

शब्देनाभिहितत्वान्न कर्मणि द्वितीया । यथाह वामनः, निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वादिति । कीर्त्तयन्ति कथयन्ति दृष्ट्वा इति शेषः । न च ते दूरा इत्याह । ते च यद्यपि ते तव सदः सभां युगपदागताः प्राप्ताः । अत्र स्नातकादीनां प्रकृतानामेवाविभक्तसाधर्म्यादौपम्यावगमात् तुल्ययोगिताभेदः ॥ ५५ ॥

शोभयन्तीति । किञ्च प्रतापयितुं शीलं येषां ते प्रतापिनः शत्रुतापकाः । ताच्छील्ये णिनिः । अन्यत्र तेजस्विनः । सप्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्यमरः । अत इनुठनादिति इनुप्रत्ययः । मन्त्रशक्त्या वेदमहिम्ना अन्यत्र विचारसामर्थ्येन विनिवारिताः आपदो दैवमानुषविपत्तयो यैस्ते । वेदभेदे गुप्तवादे मन्त्र इत्यमरः । परलोकस्य लोकान्तरस्य शत्रुजनस्य च जिष्णवो जयशीलाः । स्वयम्भुवो ब्रह्मणो मुखभुवो मुखजाताः ब्राह्मणाः । ब्राह्मणोऽस्य मुखमासीदिति श्रुतेः । भूभुजो राजानश्च । त्वन्मखं तव क्रतुं परितः शोभयन्ति परिष्कुर्वन्ति सर्वेऽप्यागत्य वसन्तीत्यर्थः । अत्र राज्ञां ब्राह्मणानां च प्रकृतानामेव प्रतापादिसाधर्म्योपमानात्तुल्ययोगिताभेदः साधर्म्यं च श्लेषनिबन्धनमिति सङ्करः ॥ ५६ ॥

आभजन्तीति । हे पार्थ ! पृथापुत्र ! तस्येदमित्यण् सामान्यस्य विशेषपर्यवसाननियमादपत्यार्थलाभः अन्यथा स्त्रीभ्यो ढगिति ढक् स्यात् । गुणिनो गुणाढ्या अमी पूर्वोक्तद्वयोक्ताः स्नातकादयः पृथक् पृथक् प्रत्येकमकृत्रिमामकपटां सत्कृतिं सत्कारम् आभजन्ति

एक एव गुणवत्तमोऽथवा
पूज्य इत्ययमपीष्यते विधिः ॥ ५७ ॥

अत्र चैष सकलेऽपि भाति मा-
मत्यशेषगुणबन्धुरर्हति ।
भूमिदेवनरदेवसङ्गमे
पूर्वदेवरिपुरर्हणां हरिः ॥ ५८ ॥

मर्त्यमात्रमवदीधरद्भवान्
मैनमानमितदैत्यदानवम् ।

अर्हन्ति । सममेषां प्रत्येकं पूजा कार्येत्यर्थः । अथ स्वाभिमतं पक्षान्तरमाह अथवेति । अथवा गुणवत्तमोऽतिगुणवानेक एव पूज्य इत्ययमपि विधिः शास्त्रमनुष्ठानं वेष्यते इष्टैरिति शेषः । अत्र स्नातकादीनां पूज्यत्वे गुणो विशेषणगत्या हेतुरिति काव्यलिङ्गभेदः । तदपेक्षया गुणवत्तमत्वमेकस्यैव पूज्यत्वे तथैव हेतुरिति काव्यलिङ्गान्तरमिति सजातीयसङ्करः ॥ ५७ ॥

अत्र कतमः सर्वोत्तरः पुमानस्तीत्याकाङ्क्षायां कोऽन्यो हरिं विनेत्याह । अत्रेति । अत्रास्मिन् कालेऽपि भूमिदेवा ब्राह्मणाः नरदेवा राजानस्तेषां सङ्गमे ब्राह्मणक्षत्रियसमवाये इत्यर्थः । अशेषगुणानां बन्धुः सुहृत् सर्वगुणाढ्य इत्यर्थः । असाधारणगुणानाह । पूर्वेति । पूर्वदेवाः सुरद्विषस्तेषां रिपुर्हन्ता एषः हरिः कृष्णः अर्हणां पूजाम् अर्हति प्राप्नोतीति मामधिकृत्य भाति मम प्रतिभातीत्यर्थः अन्ये तु नार्हन्तीत्यपि सिद्धमिति भावः । अत्र तत्रान्येषु च प्रसक्तायां पूजायां हरावेव नियमात्परिसङ्ख्यालङ्कारः । एकस्य वस्तुनः प्राप्तावनेकत्रैकधा यदा । एकत्र नियमः सा हि परिसङ्ख्या निगद्यत इति लक्षणात् ॥ ५८ ॥

ननु तस्मिन् ब्राह्मणक्षत्रियसमूहे कथमस्यैव पूज्यत्वमित्याशङ्क्य सर्वोत्तमत्वादित्या[illegible]  [illegible]त्यादि । मान-

अंश एष जनतातिवर्त्तिनो
वेधसः प्रतिजनङ्कृतस्थितेः ॥ ५९ ॥
ध्येयमेकमपथे स्थितन्धियः
स्तुत्यमुत्तममतीतवाक्पथम् ।
आमनन्ति यमुपास्यमादराद्
दूरवर्त्तिनमतीव योगिनः ॥ ६० ॥
पद्मभूरिति सृजन् जगद्रजः

मिताः मङ्क्षीकृताः दैत्याः दितिसुताः दानवाः दनुसुताश्च येन तमेनं हरिं भवान् मर्त्त्यमात्रं मनुष्यमात्रं मा ऽवधीधरत् न जानीयात् । अग्रे प्रथम इति प्रथमपुरुषः । कुतः एषः कृष्णोजनतातिवर्त्तिनः सर्वलोकातीतस्य प्रतिजनं कृतस्थितेश्च सर्वभूतान्तर्यामिण इत्यर्थः वेधसः परमात्मनोऽंशः कला अतो न मर्त्त्यमात्रमित्यर्थः । अत एव वाक्यहेतुकङ्काव्यलिङ्गम् ॥ ५९ ॥

पुनरप्यमानुषत्वमेव व्यनक्ति । ध्येयमिति । योगिनो नारदादयः । एकमद्वितीयम् उत्तमं सर्वोत्तमं यमेनं ध्येयं ध्यातव्यम् । एकार्थगोचरात्मधारणं ध्यानन्तदर्हमित्यर्थः । तथापि धियो ज्ञानस्यापथेऽमार्गे स्थितं तदगोचरमित्यर्थः । पथाविभाषेति समासान्तः अपथं नपुंसकमिति नपुंसकम् । आमनन्ति कथयन्ति । पाघ्राध्मादिना म्नाधातोर्मनादेशः । स्तुत्यं स्तोतुमर्हम् । तथापि अतीतो वाक्पथो येन तम् अवाङ्मनसगोचरमित्यर्थः । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति श्रुतेः । आमनन्ति आदरादास्थया उपास्यं सेव्यम् । तथापि अतीवात्यन्तम् । अतीवेति निपातसमुदायोऽत्यन्तार्थेऽव्ययम् । दूरवर्त्तिनम् आमनन्ति यमेनमचिन्त्यरूपमामनन्ति तमेनं मर्त्त्यमात्रं मावधारयेदिति पूर्वेणान्वयः अवाङ्मनसगोचरत्वदूरवर्त्तित्वानां ध्येयत्वस्तुत्यत्वोपास्यत्वैः सह विरोधस्य हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाभासोऽलङ्कारः ॥ ६० ॥

सत्त्वमच्युत इति स्थितिन्नयन्।
संहरन् हर इति श्रितस्तम-
स्त्रैधमेष भजति त्रिभिर्गुणैः॥ ६१॥
सर्ववेदिनमनादिमास्थित-
न्देहिनामनुजिघृक्षया वपुः।
क्लेशकर्मफलभोगवर्जितम्
पुंविशेषममुमीश्वरं विदुः॥ ६२॥

नन्वहरिहरहिरण्यगर्भादयस्त्रयो देवाः सर्वोत्तरमहिमानः अन्ये नं न जानीमः इत्यत आह। पद्मभूरिति। एष हरिः रजः रजोगुणं श्रितः जगत् सृजन् पद्मभूर्ब्रह्मेति। सत्त्वं सत्त्वगुणं श्रितः जगत् स्थितिन्नयन् स्थापयन् अच्युतो विष्णुरिति। तमस्तमोगुणं श्रितः जगत् संहरन् हर इति त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रैविध्यं भजति। द्वित्र्योश्च धमुञिति विधार्थे धमुञ्प्रत्ययः। अस्यैव गुणभिन्नास्तास्तास्तिस्रोऽपि मूर्त्तयः इत्ययमेव सर्वोपास्य इति भावः। अत्र सत्त्वादिगुणयोगस्य सृष्ट्यादिगुणयोगस्य च विशेषणगत्या त्रैविध्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्॥ ६१॥

तर्हि कीदृशमस्य स्वरूपं कुतो वा मानुषविग्रह इत्यपेक्षायामनुं निरूपयन्नाह। सर्वेति। अमुं कृष्णं सर्ववेदिनं सर्वज्ञमित्यर्थः। अत एवानादिमादिरहितम् अनादिनिधनमित्यर्थः। तथापि देहिनां प्राणिनामनुजिघृक्षया अनुग्रहीतुमिच्छया भूभारावतरणार्थमित्यर्थः। ग्रहेः सन्नन्तात् स्त्रियामप्रत्ययादप्रत्यये टाप्। वपुरास्थितं मानुषविग्रहमास्थितं न कर्मारब्धशरीरभाजमित्यर्थः। अत एव क्लेशकर्मफलभोगवर्जितम्। क्लेशाः पञ्च क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाख्याः। कर्माणि पुण्यपापानि तेषां फले सुखदुःखे तयोर्भोगोऽनुभवस्तेन क्लेशैश्च वर्जितं तैरसंस्पृष्टमित्यर्थः। ईश्वरम् ईश्वरशब्दितं पुंविशेषं चेतनविलक्षणं पुरुषविशेषं परमपुरुषं वा विदुर्वेदन्ति सन्त

भक्तिमन्त इह भक्तवत्सले
सन्ततस्मरणरीणकल्मषाः ।
यान्ति निर्वहणमस्य संसृति-
क्लेशनाटकविडम्बनाविधेः ॥ ६३ ॥
ग्राम्यभावमपहातुमिच्छवो
योगमार्गपतितेन चेतसा ।
दुर्गमेकमपुनर्निवृत्तये
यं विशन्ति वशिनं मुमुक्षवः ॥ ६४ ॥
युग्मम् ।

इति शेषः । विदो लटो वेति णलेर्जुसादेशः । अत्राकर्मत्वस्थत्वाविलम्बानत्वादिविरोधसमर्थनाद्विरोधाभासोऽलङ्कारः । तेषामेव गुणानां विशेषणगत्या पुंविशेषहेतुत्वात् काव्यलिङ्गमिति सङ्करः ॥ ६२ ॥

एवं हरेः स्वरूपं निरूप्य तदुपासनात् फलं युग्मेनाह । भक्तिमन्त इति । भक्तवत्सले भक्तप्रिये इहास्मिन् हरौ । भक्तिमन्तोऽनुरागवन्तो जनाः । पूज्येषु अनुरागो भक्तिः । सन्ततं सततं तत्स्मरणेन निरन्तरध्यानेन रीणकल्मषाः क्षीणपापाः सन्तः । रीङ्क्षये ल्वादिभ्य इति निष्ठानत्वम् । अस्य अनुभूयमानस्य कष्टस्य संसृतिः संसारस्तस्य क्लेशः दुःखं तदेव नाटकमिति रूपकम् । तस्य विडम्बनाभिनयस्तस्य निर्वहणं समाप्तिं यान्ति मुच्यन्त इत्यर्थः । तमेव विद्वानमृत इह भवतीति श्रुतेरिति भावः ॥ ६३ ॥

ग्राम्येति । ग्रामे भवाः ग्राम्याः प्राकृता मूढा इति यावत् । ग्रामाद्यखञाविति यञ्प्रत्ययः । तेषां भावस्तम् अपहातुं भोक्तुमिच्छवः मुमुक्षवो मोक्षार्थिनः अपुनर्निवृत्तयेऽपुनरावृत्तये पुनरावृत्त्यभावाय मोक्षाय इत्यर्थः । दुःखेन गम्यते इति दुर्गं दुष्प्रापम् एकमेवाद्वितीयं वशिनं स्वतन्त्रं यं हरिं योगमार्गपतितेन ध्यानमार्गनिविष्टेन । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । चेतसा

आदितामजननाय देहिना-
मन्ततां च दधतेऽनपायिने ।
बिभ्रते भुवमधः सदाथ च
ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥ ६५ ॥
केवलन्दधति कर्तृवाचिनः
प्रत्ययानिह न जातु कर्मणि ।

विशन्ति ध्यायन्तीत्यर्थः यं विशन्ति इह भक्तिमन्तः इति पूर्वेणा-न्वयः ॥ ६४ ॥

अथ भक्त्युद्रेकान्नमस्करोति । आदितामिति । देहिनां प्राणि-नाम् आदितां कारणताम् अन्तोऽन्तकरो नाशहेतुः । तत्करोतीति ण्यन्तादन्तयतेः पचाद्यच् । तस्य भावस्तत्तामन्ततां च दधते । यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेः । स्वयमजननाय जन्मरहि-ताय । अपायोऽस्यास्तीत्यपायी स न भवतीत्यनपायी तस्मै अनपायिने नाशरहिताय च कालतोऽपरिच्छिन्नायेत्यर्थः । देशतोऽपि तथेत्याह सदाऽधः पाताले भुवं बिभ्रते कूर्मरूपेण दधते । अथ च तथैव ब्रह्मणो लोकस्याप्युपरि तिष्ठते सर्वव्यापिने इत्यर्थः तस्मै हरये इति शेषः । नमः नमस्कारः । नमःस्वस्तीत्यादिना चतुर्थी । अत्र हरेरनादिनिधन-त्वेन तद्गतः पुरुषान्तरादाधिक्यवर्णनाद् व्यतिरेकालङ्कारः ॥ ६५ ॥

केवलमिति । सृजतिश्च संहा च शास्तिश्च सृजतिसंहृशास्तयः । सृज् विसर्गे हृञ् हरणे संपूर्वोऽयं शासु अनुशिष्टौ इत्येते त्रय इत्यर्थः इक्श्तिपौ धातुनिर्देशे इति वचनादेवं निर्देशः । धातवो भुवादयो धातव इत्युक्तलक्षणाः शब्दविशेषाः । इहास्मिन् भगवति विषये केवलमनन्ययोगव्यवच्छिन्नं यथा तथा कर्तृवाचिनः कर्तृकारकवाच-कान् दधति । तदन्ता एव भवन्तीत्यर्थः । जातु कदाचित् कर्मणि प्रत्ययान् कर्मार्थविहितान् यगादीन् न दधति न तदन्ता भवन्तीत्यर्थः । सर्वकर्तृत्वान्नियन्तृत्वाच्च सृजति स्रष्टा संहरति हर्ता शास्तीति

धातवः सृजतिसंहृशास्तयः
स्तौतिरत्र विपरीतकारकः ॥ ६६ ॥
पूर्वमेष किल सृष्टवानपः
स्तासु वीर्य्यमनिवार्य्यमादधौ ।
तच्च कारणमभूद्धिरण्मयं
ब्रह्मणोऽसृजदसावदिजगत् ॥ ६७ ॥

शासितेत्यादिभिः कर्तृत्वेन निर्दिश्यते न कदाचित् सृज्यते संह्रियते शिष्यते इत्यादिभिः कर्मत्वेन अनादिनिधनत्वादनियम्यत्वाच्चेति भावः । किञ्च अत्र भगवति स्तौतिः । ष्टुञ् स्तुताविति धातुः । विपरीतं कारकं यस्य सः विपरीतकारकः स्तूयते स्तुत्य इत्यादिकर्मप्रत्ययान्त एव न तु कदाचित् स्तौति स्तोता इत्यादिकर्तृप्रत्ययान्तः । सकललोकस्तुत्यस्य तस्य स्तुत्यन्तराभावादित्यर्थः । अत्र शब्दानां कर्मकर्तृप्रत्ययविधिनिषेधद्वारा विभक्त्यन्तरेण सर्वकर्तृत्वसर्वोपास्यत्वादिसूक्ष्मार्थबोधपरत्वात् सौक्ष्म्याख्यो गुणः । अन्तःसंलक्ष्यरूपत्वं शब्दानां सौक्ष्म्यमुच्यत इति लक्षणात् । अत्र भगवतः सृष्ट्यादिकर्तृकर्मत्वोभयप्राप्तावेकत्रैकनियमात्परिसङ्ख्या । तत्र जातु कर्मणोति शब्दादेव कर्मत्वनिषेधादितरनिवृत्तिः शब्दात् स्तुतौ कर्तृत्वनिवृत्तिरार्थीति भेदद्वयसंसर्गः । अनया च भगवतः पुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकश्च प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ६६ ॥

पूर्वमिति । एष हरिः पूर्वं प्रथममपः सृष्टवान् । किलेत्यैतिह्ये तास्वप्सु अनिवार्य्यं वीर्य्यं रेतः । शुक्रं तेजोरेतसी च बीजं वीर्य्येन्द्रियाणि चेत्यमरः । आदधावाहितवान् तद्वीर्य्यन्तु हिरण्मयस्य स्वर्णस्य विकारः हिरण्मयम् । दाण्डिनायनेत्यादिना निपातः । ब्रह्मणश्चतुर्मुखस्य कारणमभूत् । ब्राह्मण्डं जातमित्यर्थः असौ तदुत्पन्नो ब्रह्मा ब्रह्माण्डमिदञ्जगदसृजत् सर्वस्यापि प्रपञ्चस्यायमेव मूलकारणमिति भावः । अत्र मनुः । अतएव ससर्जादौ तासु बीजमवासृजत् । तद-

मत्कुणाविव पुरा परिप्लवौ
सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥ ६८ ॥
श्रौतमार्गसुखगानकोविद-
ब्रह्मषट्चरणगर्भमुज्ज्वलम् ।
श्रीमुखेन्दुसविधेऽपि शोभते
यस्य नाभिसरसीसरोरुहम् ॥ ६९ ॥

रुक्मभयत्वैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोक-पितामह इति । अत्र वीर्य्यमनिवीर्य्यमिति वृत्त्यनुप्रासः ॥ ६७ ॥

अथैनं त्रिभिर्विशिनष्टि । मत्कुणाविवेत्यादिना । पुरा पूर्वं परि-प्लवौ चञ्चलौ स्फुरितस्ततश्चलन्तावित्यर्थः । चञ्चलञ्चपलं तूर्णं पारि-प्लवपरिप्लवे इत्यमरः । मधुकैटभावसुरविशेषौ मत्कुणौ कुम्भाह्वकृपा-यिनौ मलोद्भवौ कीटविशेषौ ताविवेत्युपमा । सिन्धुनाथः सरित्पतिः स एव शयनं तत्र निषेदुषो निषण्णस्य समुद्रशायिन इत्यर्थः । भाषायां सदवसश्रुव इति क्विटः क्वसुरादेशः । विभोः प्रभोः यस्य हरेः क्षणं निद्रायाः सम्बन्धिनः आगतं वा नैद्रं यत् सुखं तस्य विघ्नतां विधातुं कर्त्तुं गच्छतः स्म गतौ तादृशावपि महासुरौ मत्कुणाविव क्षणमा-त्रेण प्रनष्टाविति भगवतः प्रभावातिशयोक्तिः । एषां त्रयाणां पूर्वे-णान्वयः ॥ ६८ ॥

श्रौतेति । श्रौतमार्गस्य सुखं सुखकरं यद्गानं तस्य कोविदोऽभिज्ञः । कोविदो व्याख्याता । स चासौ ब्रह्मा च स एव षट्चरणः स गर्भे यस्य तत् उज्ज्वलं निर्मलम् । यस्य हरेर्नाभिरेव सरसी सरः कासारः । कासारः सरसी सर इत्यमरः । तस्यां सरोरुहं पद्मं श्रियो मुखमिवे-न्दुस्तस्य सन्निधौ समीपेऽपि शोभत इति विरोधः । स च मुखस्येन्दु-त्वरूपेणायत्त इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ६९ ॥

सत्यवृत्तमपि मायिनञ्जग-
द्‌वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजन्नवम्बुधा
यम्पुराणपुरुषम्प्रचक्षते ॥ ७० ॥

स्कन्धधूननविसारिकेशर-
क्षिप्तसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्त्तमैक्षत
स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥

सत्येति । यं हरिं सत्यवृत्तम् अकपटचरितम् अपि मायिनं मायाविनं कपटवन्तमिति विरोधः । माया नाम शक्तिः तद्वन्तमित्यविरोधः । ब्रीह्यादित्वादिनिप्रत्ययः । जगद्वृद्धं सर्वलोकपितामहत्वात् स्थविरमपि । प्रवयाः स्थविरो वृद्ध इत्यमरः । उचितनिद्रम्परिचितयोगनिद्रम् अर्भकं डिम्भम् । वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामीत्यागमवचनादिति भावः । पोतः पाकोऽर्भको डिम्भ इत्यमरः । न जायत इत्यजो जन्मरहितः । अन्येष्वपि दृश्यते जनेर्डप्रत्ययः । तमपि जन्म बिभ्रतं कालवशात् कृष्णादिजन्मभाजमित्यर्थः । नवं रमणीयत्वादभिनवं तथापि पुराणं प्राचीनमनादिं च पुरुषं प्रचक्षते बुधाः इति वाक्यं सर्वत्र सम्बध्यते । सर्वेऽपि विरोधा हरेरचिन्त्यमहिमत्वेनाभासा इति विरोधाभासचतुष्टयसंसृष्टिः ॥७०॥

अथ षोडशभिरवतारान् वर्णयिष्यन् वराहावतारं तावदेकेनाह । स्कन्धेति । स्थूलनासिकवपुर्वराहमूर्त्तिरयं हरिः स्कन्धस्य कन्धरायाः धूननेन कम्पनेन विसारिभिस्सर्पिभिः केशरैः सटाभिः क्षिप्तोऽवकीर्णः सागरस्य महाप्लवो महापूरः यस्मात्तां जलापसारेण प्रकाशितामित्यर्थः । वसुन्धरां भुवं मुहूर्त्तं क्षणमात्रम् । मुहूर्त्तमल्पकालेऽपीति शब्दार्णवे । उद्धृताम् अनावृतत्वात्सागरादुद्धृतामिव

दिव्यकेशरिवपुः सुरद्विषो
नैव लब्धशममायुधैरपि।
दुर्निवाररणकण्डु कोमलै-
र्वक्ष एष निरदारयन्नखैः ॥ ७२ ॥

वारिधेरिव कराग्रवीचिभि-
र्दिग्गजजमुखान्यभिघ्नतः।
यस्य चारुनखशुक्तयः स्फुर-
न्मौक्तिकप्रकरगर्भतान्दधुः ॥ ७३ ॥

युग्मकम्।

ऐक्षत प्रेक्षितवान् इत्युत्प्रेक्षा। ईक्षतेर्लङ्याडजादीनामाटश्चेति वृद्धिः ॥ ७१ ॥

द्वाभ्यां नृसिंहावतारमाह। दिव्येति। दिव्यकेशरिवपुर्दिव्यसिंहमूर्त्तिः। हरेरायुधैर्वज्रादिभिरपि नैव लब्धशममप्राप्तशान्ति दुर्निवारा दुर्जया रणकण्डूर्यस्य तत् रणव्यसनीत्यर्थः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वः। सुरद्विषो हिरण्यकशिपोर्वक्षः कोमलैर्नखैः निरदारयत् अभिनत्। वज्राद्यभेद्यस्य कोमलनखविदार्यत्वं भगवत्प्रभावादिति विरोधाभासोऽलङ्कारः ॥ ७२ ॥

वारिधेरिति। कराग्राणि वीचय इवेत्युपमितसमासः। वारिधेरिवेति लिङ्गात्। ताभिः कराग्रवीचिभिर्दिगन्तविततामिरिति भावः। अत एव दिग्गजजानां मुखान्यभिघ्नतो रोषातिरेकात्प्रहरतो यस्य सिंहमूर्त्तेर्हरेर्वारिधेरिव चारुनखाः शुक्तय इव। पूर्ववदुपमितसमासः। स्फुरन्मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्रातो गर्भेऽन्तर्गतो यासां तासां भावस्तत्ता तां दधुः एष निरदारयदिति पूर्वेणान्वयः। एतेन नरहरिक्रोधस्य महासुरेऽपि पर्याप्तमिति व्यज्यत इति वस्तुना वस्तुध्वनिः। उपमालङ्कारः ॥ ७३ ॥

दीप्तनिर्जितविरोचनादय-
ङ्गां विरोचनसुतादभीप्सत: ।
आत्मभूरवरजाखिलप्रज:
स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥

किङ्क्रमिष्यति किलैष वामनो
यावदित्थमहसन् नदानवा: ।
तावदस्य न ममौ नभस्तले
लङ्घितार्कशशिमण्डलक्रम: ॥ ७५ ॥

अथ चतुर्भिर्वामनावतारमाह । दीप्तेत्यादि । आत्मना भवतीति आत्मभूः स्वयम्भूरपि । अवरजाश्चरमजा अखिलाः प्रजा जना यस्य सोऽपि सर्वज्येष्ठोऽपीत्यर्थः । अयं हरिः दीप्तिनिर्जितविरोचनात् ज्योतिर्विजितमार्त्तण्डात् । विरोचनः प्रह्लादपुत्रः । विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने इत्युभयत्रापि विश्वः । तस्य सुताद्बलेर्गाम्भुवम् अभीप्सतः प्राप्तुमिच्छतोऽभ्याहर्त्तुमिच्छतः । सन्नन्तादाप्नोतेर्लटः शत्रादेशः । स्वर्पतेरवरजत्वमिन्द्रानुजत्वं ययौ । बलिध्वंसनार्थमिति शेषः । लोकानुग्रहार्थिनः किन्न कुर्वन्तीति भावः । अत्राजत्वावरजत्वसामानाधिकरण्यविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाभासोऽलङ्कारः ॥ ७४ ॥

किमिति । एष वामनः खर्वः । खर्वो ह्रस्वश्च वामन इत्यमरः । किं क्रमिष्यति । इत्थम् अनेन प्रकारेण दानवा यावच्चाहसन् । तावत् ततः प्रागेव लङ्घिते अतिक्रान्ते अर्कशशिमण्डले येन सोऽस्य हरेः क्रमः पादविक्षेपो नभस्तले न ममौ न परिमाणं गतवान् यथा नतिस्तथा ववृधे इत्यर्थः । अत्राधाराद्नभस्तलादाधेयस्य क्रमस्याधिकथनादधिकालङ्कारभेदः । आश्रयाश्रयिणोराधिक्यमधिकमिति लक्षणात् ॥ ७५ ॥

गच्छतापि गगनाग्रमुच्चकै-
र्यस्य भूधरगरीयसाङ्घ्रिणा ।
क्रान्तकन्धर इवाबलो बलिः
स्वर्गभर्त्तुरगमत् सुबन्धताम् ॥ ७६ ॥
क्रामतोऽस्य ददृशुर्दिवौकसो
दूरमूरुमलिनीलमायतम् ।
व्योम्नि दिव्यसरिदम्बुपद्धति-
स्पर्द्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥
यस्य किञ्चिदपकर्त्तुमक्षमः
कायनिग्रहगृहीतविग्रहः ।

गच्छतेति । गगनाग्रं गगनोपरिभागं गच्छतापीति विरोधः । भूधरवद्गरीयसेत्युपमा । यस्य वामनस्योच्चकैरुन्नतेनाङ्घ्रिणा क्रान्तकन्धरोऽवष्टब्धकण्ठ इवाबलो दुर्बलो बलिर्वैरोचनिः स्वर्गभर्त्तुरिन्द्रस्य सुखेन बध्यते इति सुबन्धः । ईषद्दुःसुरित्यादिना खल्प्रत्ययः । तत्तामगमत् । गुरुद्रव्यावष्टब्धकण्ठो हि सुखेन बध्यते इति भावः । न लोकेत्यादिना कृद्योगलक्षणाया एव षष्ठ्या निषेधात् स्वर्गभर्त्तुरिति शेषे षष्ठी । अत्र क्रान्तकन्धर इवेत्युत्प्रेक्षाया भूधरगरीयसेत्युपमासापेक्षत्वात्सङ्करः । विरोधेन त्वनपेक्षिता संसृष्टिः ॥ ७६ ॥

क्रामत इति । क्रामतः पादं विक्षिपतोऽस्य सम्बन्धिनं दूरमायतम् अलिनीलं भृङ्गश्याममूरुं सक्थि दिवौकसो देवा व्योम्नि दिव्यसरितो मन्दाकिन्या अम्बुपद्धत्या जलप्रवाहेण स्पर्द्धया उत्थितमूर्ध्वतः प्रवृत्तं यमुनौघं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेयमुपमासङ्कीर्णा॥७७॥

अवतारान्तरमाह । यस्येति । कायनिग्रहेणामृतविभागकाले देहच्छेदेन गृहीतविग्रहो बद्धवैरः क्षती कुशलो राहुर्यस्य हरेः किञ्चिदपकर्त्तुमक्षमः सुन्न कान्तं रम्यं यदङ्गं चक्रिणं तेन सदृशीं आक्र-

कान्तवक्त्रसदृशाकृतिं कृती
राहुरिन्दुमधुनापि बाधते ॥ ७८ ॥

सम्प्रदायविगमादुपेयुषी-
रेष नाशमविनाशिविग्रहः ।
स्मर्तुमप्रतिहतस्मृतिः श्रुती-
र्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥

रेणुकातनयतामुपागतः
शातितप्रचुरपक्षसंहतिः ।

तिर्यक्च तं तत्सुहृदमित्यर्थः । इन्दुम् अधुनापि बाधते पीडयति उपरागमिषेणेति भावः । अत्र साक्षात्प्रतिपक्षहरिनिग्रहाशक्त्या राहोस्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कारः । तथा च सूत्रम् । प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकमिति ॥ ७८ ॥

दत्तात्रेयावतारमाह । सम्प्रदायेति । अविनाशिविग्रहोऽनपायस्वरूपः अत एव अप्रतिहता स्मृतिः स्मरणशक्तिर्यस्य स एष हरिः सम्प्रदायः उपदेशपरम्परा तस्य विगमादपायात्राशं कालदोषादध्ययनविच्छेदमुपेयुषीः प्राप्ताः । उगितश्चेति ङीप् । श्रुतीर्वेदान् । श्रुतिः स्त्री वेद आम्नाय इत्यमरः । स्मर्तुं श्रुतिसम्प्रदायं प्रवर्तयितुमित्यर्थः दत्त इति विख्यात इति शेषः अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत् दत्तात्रेयोऽभूदित्यर्थः । अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥ ७९ ॥

परशुरामावतारमाह । रेणुकेति । अयं हरिः रेणुकातनयतां परशुरामत्वमुपागतः सन् । अर्जुनः कार्त्तवीर्यार्जुनः । अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोरित्यनेकार्थेऽपि रेणुकेयविरोधित्वान्निश्चयः । तदुक्तं हरिणा, संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति ।

लूनभूरिभुजशाखमुज्झित-
च्छायमर्जुनवनं व्यधादयम् ॥ ८० ॥
एष दाशरथिभूयमेत्य च
ध्वंसितोद्धतदशाननामपि ।
राक्षसीमकृत रक्षितप्रज-
स्तेजसाधिकविभीषणाम्पुरीम् ॥ ८१ ॥
निष्प्रहन्तुममरेशविद्विषा-
मर्थितः स्वयमथ स्वयम्भुवा ।

स एव वनं तत् शातिता छिन्ना प्रचुरा प्रभूता पतसंहतिर्बाहुन-सभूहः पर्णसङ्घातश्च यस्य तत् । पतं स्याद्वाहने पर्णे इति विश्वः ॥ लूनाश्छिन्ना भूरयः प्रचुरा भुजा एव शाखा यस्य तत् । उज्झिता छाया कान्तिरनातपश्च यस्य ततया व्यधात् विहितवान् । दधाते-र्लुङि गातिस्थेत्यादिना सिचो लुक् । छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः । अत समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं तच्च छायेति पत्रेति च श्लेषप्रतिभोत्थापिताभेदातिशयोक्त्यानु-प्राणितमिति सङ्करः ॥ ८० ॥

रामावतारमाह । एष इति । किञ्चेति चार्थः । रक्षित-प्रजः एषः हरिर्दशरथस्यापत्यं पुमान् दाशरथी रामः । अत इञ् । तस्य भावः दाशरथिभूयं रामत्वम् । भुवो भावे इति क्यप् । एत्य प्राप्य । ध्वंसितो हत उद्धतो दृप्तो दशाननो रावणो यस्यां तामपि राक्षसीं रक्षःसम्बन्धिनीं पुरीं लङ्कां तेजसा स्ववीर्य्येण अधिकविभी-षणाम् अत्यन्तभीषणाम् अकृतेति विरोधः । भयहेतोरुद्धतस्य राव-णस्य ध्वंसनात् अधिको महान् विभीषणो रावणानुजो यस्यां तामि-त्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ८१ ॥

अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह । निष्प्रहन्तुमिति । अथ रामावतारानन्तरम् अयं हरिः अमरेशविद्विषां निष्प्रहन्तुं चैद्या-

सम्प्रति श्रयति सूनुतामय-
ङ्कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥

तात ! नोदधिविलोडनम्प्रति
त्वद्विनाथ वयमुत्सहामहे ।
यः सुरैरिति सुरौघवल्लभो
बल्लवैश्च जगदे जगत्पतिः ॥ ८३ ॥

नात्तगन्धमवधूय शत्रुभि-
श्छायया च शमितामरश्रमम् ।

दीन् इन्द्रशत्रून् हन्तुमित्यर्थः। जासिनिप्रहणेत्यादिना कर्मणि षष्ठी। स्वयम्भुवा ब्रह्मणा स्वयमात्मनैवार्थितः प्रार्थितः सन् सम्प्रतीदानीं वसुदेवरूपिणो वसुदेवमूर्त्तिधरस्य कश्यपस्य पुत्रतां श्रयति भजति कृष्णरूपेणेति भावः। अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्तिहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ ८२ ॥

तातेति। सुरौघवल्लभः सुरगणप्रियः जगत्पतिर्यो हरिः सुरैर्देवैर्बल्लवैर्गोपैश्च हे तात ! जनक ! नेति छेदे उदधिविलोडनं समुद्रमथनम्प्रति नो इति छेदे दधिविलोडनं दधिमन्थनं च प्रति त्वद्विना त्वां विहायेत्यर्थः। पृथग्विनेत्यादिना विकल्पात्पञ्चमी। अथ वयं न नोत्सहामहे न क्षमामहे इति जगदे गदितम्। अत्र हरिवर्णनाङ्गत्वेन सुराणां बल्लवानां च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धदध्युदधिविलोडनक्षमत्वकर्मसाम्याद्गम्यौपम्यत्वात्तुल्ययोगिताभेदः तेन च हरेर्दधिमन्थनकलावदुदधिमन्थनमपीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

नात्तगन्धमिति। किञ्चेति चार्थः। यो हरिः शत्रुभिरनभूयाभिभूय नात्तगन्धमनाघ्रातसौरभमनभिभूतञ्च। आत्तगन्धोऽभिभूतः स्यादित्यमरः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। छायया अनातपेन च। छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पाव-

योऽभिमानमिव वृत्रविद्विषः
पारिजातमुदमूलयद्दिवः ॥ ८४ ॥

यं समेत्य च ललाटलेखया
बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपव-
च्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥

यः कोलतां वल्लवतां च बिभ्र-
द्दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ।
मग्नस्य तोयापदि दुस्तरायां
गोमण्डलस्योद्धरणं चकार ॥ ८६ ॥

नोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियामिति विश्वः । अमितामरम्भमं निवारितसुरखेदं पारिजातं वृत्रद्विषः शक्रस्याभिमानमहङ्कारमिव दिवः स्वर्गादुदमूलयत् उन्मूलितवानिति पारिजातहरणोक्तिः । श्लेषसविशेषणोपमेति केचित् श्लेषवज्ञान्ये ॥ ८४ ॥

यमिति । किञ्चेति चार्थः । ललाटमेव लेखा तया ललाटलेखया ललाटदेशेन शम्भोर्विभ्रमं सौन्दर्यं बिभ्रतः ललाटलोचनमित्यर्थः । चेदिपस्य शिशुपालस्य लोचनं तृतीयनेत्रं कर्तृ यं हरिमेव चण्डमारुतं चण्डमारुतमिव समेत्य प्रदीपवत् प्रदीपेन तुल्यम् । तेन तुल्यमिति वतिप्रत्ययः । निरवात् निर्वाति स्म नष्टमित्यर्थः । निर्पूर्वाद्वाधातोर्लङ् । निरवायीति क्वचित्पाठः स न सम्यक् वातेः प्रक्रियाविरोधाद्वातेरसङ्गतार्थत्वाद्वेति अनेकार्थेयमुपमा ॥ ८५ ॥

य इति । यो हरिः कोलतां वराहत्वम् । वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिरित्यमरः । वल्लवतां गोपालत्वं च बिभ्रत् । आशु गुर्वीं दंष्ट्रां भुजां च यथासङ्ख्यमिति भावः । उदस्योद्धृत्य दुस्तरायां तोयापदि जलसङ्कटे एकत्र समुद्रकृतायाम् अन्यत्र वर्षकृतायां च मग्नस्य गोमण्डलस्य भूगोलस्य धेनुवृन्दस्य चोद्-

धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते यः ।
दत्त्वार्घमत्रभवते भुवनेषु यावत्
संसारमण्डलमवाप्नुहि साधुवादम् ॥ ८७ ॥

भीष्मोक्तन्तदिति वचो निशम्य सम्यक्
साम्राज्यश्रियमधिगच्छता नृपेण ।

दर्थं चकार । अत्र कोमलत्ववल्लवत्वयोः प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सतो यथासङ्ख्येन सङ्कीर्यते । इन्द्रवज्रा वृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ गः इति लक्षणात् ॥ ८६ ॥

एवं देवं स्तुत्वानन्तरं कर्त्तव्यमुपदिशति । धन्योऽसीति । धनं लब्धो धन्यः पुण्यवानसि । सुकृती पुण्यवान् धन्य इत्यमरः । धनगणाल्लब्धा इति यत्प्रत्ययः । यस्य ते एषः हरिः समक्ष एव अक्ष्णोः समीपे एव पुरत एवेत्यर्थः स्थित इति शेषः । सामीप्येऽव्ययीभावः अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्त अतएव तृतीयासप्तम्योर्बहुलमिति सप्तम्या अमभावः । अन्यत्र को विशेषः तत्राह । यो हरिर्दूरादपि परोक्षेऽपि क्रतुषु यागेषु यज्वभिर्विधिवदिष्टवद्भिः । यज्वा तु विधिनेष्टवानित्यमरः । सुयजोर्ङ्वनिबिति ङ्वनिप्प्रत्ययः । इज्यते पूज्यते स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थः । फलितमाह । अत्रभवते पूज्यायेत्यर्थः । पूज्यस्तत्रभवानिति सज्जनः । इतरेभ्योऽपि दृश्यते इति सार्वविभक्तिके त्रल्प्रत्यये सुप्सुपेति समासः । अर्घं पूजां दत्त्वा यावत्संसारमण्डलं वर्त्तते तावदिति शेषः । भुवनेषु साधुर्वादः शब्दस्तं साधुवादं ताधुसमाख्याम् अवाप्नुहि लभस्वेत्यर्थः । अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥ ८७ ॥

भीष्मेति । येनेष्टं राजसूयेन मण्डलस्येश्वरस्य यः । शास्ति यश्चा-

दत्तेऽर्घे महति महीभृतां पुरोऽपि
त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ८८ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
कृष्णार्घदानो नाम चतुर्दशः
सर्गः ॥ १४ ॥

---

इया राज्ञः स सम्राडित्यमरः। सम्राजो भावः साम्राज्यं तदेव श्रीस्तां श्रियम् अधिगच्छता भजता नृपेण युधिष्ठिरेण इतीत्थं भीष्मोक्तं तद्वचः सम्यङ्निशम्य श्रुत्वा। महीभृतां राज्ञां पुरोऽग्रे महति अर्घे पूजायां दत्तेऽपि मधुभिद्धरिः त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। तत्र त्रैलोक्ये कृष्णोऽनर्घः पूजारहित एव अभूदिति विरोधः। अमूल्य एवाभूदित्यविरोधः। मूल्ये पूजाविधावर्घ इत्यमरः। अत्रार्घयोरभेदाध्यवसायाद्विरोधः तदध्यवसायाद्विरोधः इति विरोधाभासोऽलङ्कारः। प्रहर्षिणी वृत्तम् ॥ ८८ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
चतुर्दशः सर्गः ॥ १४ ॥

---

# पञ्चदशः सर्गः ।



अथ तत्र पाण्डुतनयेन
सदसि विहितमधुद्विषः ।
मानमसहत न चेदिपतिः
परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥

पुर एव शार्ङ्गिणि सवैर-
मथ पुनरमुष्य तदर्चया ।
मन्युरभजदवगाढतरः
समदोषकाल इव देहिनं ज्वरः ॥ २ ॥

अथेति । अथ हरिपूजानन्तरं चेदिपतिः शिशुपालः तत्र सदसि सभायां पाण्डुसुतेन युधिष्ठिरेण विहितम् मधुद्विषो हरेर्मानं पूजां नासहत ईर्ष्यां चकारेत्यर्थः । परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि चेति लक्षणात् । तथाहि । मानिनामहङ्कारिणां मनः परवृद्धौ मत्सरि हि परशुभद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अस्मिन् सर्गे उद्गता वृत्तम् । सजसादिमे सलघुकौ च नसजगुरुकेष्वथोद्गता । अङ्घ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेदिति लक्षणात् ॥ १ ॥

पुर इति । पुरः पूर्वमेव शार्ङ्गिणि सवैरं सक्रोधममुं चैद्यम् अथ पुनः अनः परं तदर्चया हरिपूजया अवगाढतरो निविडतरो मन्युः क्रोधो रौद्ररसस्य स्थायी भाव इति भावः । देहिनं शरीरिणं समौ तुलितौ दोषोऽपथ्यसेवा कालः कर्मविपाकश्च यस्य स ज्वर इवाभजत् । उपमालङ्कारः ॥ २ ॥

अभितर्जयन्निव समस्त-
नृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि शनै-
रशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥
स वमन् रुषाम्बु घनघर्म-
विगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो
व्यरुचत्प्रभिन्न इव कुञ्जरस्त्रिधा ॥ ४ ॥
स निकामघर्मितमभीक्ष्ण-
मधुवदवधूतराजकः ।

अथाष्टभिरस्य गात्रारब्धक्रोधचेष्टां प्रपञ्चयति । अभीत्यादि । असौ चैद्यः । समस्तनृपगणमभितर्जयन्निवेत्युत्प्रेक्षा । तर्ज भर्त्सने चौरादिकस्यानुदात्तत्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङादेशस्य ख्याञः स्थानिवद्भावानादरेण पुनर्ङित्करणसामर्थ्यादनित्यत्वज्ञापनात् परस्मैपदम् अत एव तर्जयतीत्यपि दृश्यते कविभिरिति भट्टमल्लः । अशनैरतिमात्रं प्रकम्पितं जगत्त्रयं येन तत् त्रैलोक्यभीषणं शिरः शनैर्लोलाश्चपला मुकुटमणिरश्मयो यस्मिन् कर्मणि तद्यथा तथा अकम्पयत् क्रोधातिरेकादिति भावः ॥ ३ ॥

स इति । रुषा रोषेणाम्बु वमन् मुञ्चन् । घनेन सान्द्रेण घर्मेण क्रोधोष्मणा विगलत् स्रवदुरु महत् गण्डमण्डलं यस्य सः खिद्यत्कपोल इत्यर्थः । स्वेदजलकणैः स्वेदबिन्दुभिः करालकरो दन्तुरहस्तः स चैद्यः त्रिधा नेत्रकपोलहस्तदेशैः प्रभिन्नो मदस्रावी मत्तः । प्रभिन्नो मत्तः स्यादिति वैजयन्ती । कुञ्जर इव व्यरुचत् । रुचेर्द्युद्भ्यो लुङीति विकल्पात् परस्मैपदम् । एतेन स्वेदाख्यः सात्त्विकभाव उक्तः । उपमालङ्कारः ॥ ४ ॥

स इति । राज्ञां समूहो राजकम् । गोत्रोक्षेत्यादिना वुञ्प्रत्ययः ।

क्षिप्तबहुलजलबिन्दुवपुः
प्रलयार्णवोत्थित इवादिशूकरः ॥ ५ ॥
क्षणमाश्लिषद्घटितशैल-
शिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसा-
वधिकावधूनितसमस्तसंसदम् ॥ ६ ॥
कनकाङ्गदद्युतिभिरस्य
गमितमरुचत्पिशङ्गताम् ।

तद्वधूतमभिभूतं येन स तथोक्तः स चैद्यो निकामं घर्मितं सञ्जातघर्म-सन्तवत्स्वेदमित्यर्थः। घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्भसोरपीति विश्वः। तारकादित्वादितच्प्रत्ययः। वपुः प्रलये अर्णवस्तस्मादुत्थितः आदिसूकर इव क्षिप्ताः प्रेरिताः बहुलाः सान्द्रजलबिन्दवो यस्मिन् कर्मणि तद्यथा तथा अभीक्ष्णमधुवत् क्रोधाद्धुवति स्म। धूञ् विधूनन इति धातोस्तौदादिकाल्लङ्। अत्रापि स्वेदः सात्विक एवोक्तः। उपमालङ्कारः ॥ ५ ॥

क्षणमिति। घटितं सुसंहितं यच्छैलशिखरन्तद्वत् कठिनमंस-मण्डलं यस्य सोऽसौ चैद्यः उपहितावगाहिता आरोपितेत्यर्थः विधूतिः कम्पो यस्मिंस्तम् अधिकमत्यन्तमवधूनिता कम्पिता समस्ता सकला संसत् सभा येन तं स्तम्भं क्षणम् आश्लिषत् श्लिष्टवान् तमांस-मण्डलेनाहतवानित्यर्थः। अत एव कठिनांसमण्डल इति विशेषणं च। पुषादित्वात् च्लेरङादेशः। आलिङ्गनार्थत्वे तु श्लिष आलिङ्गन इति क्सादेशः स्यात्। क्रोधान्धाः किन्न कुर्वन्तीति भावः। अत्रांसकाठिन्यस्य विशेषणगत्या स्तम्भाश्लेषहेतुत्वात् काव्यलिङ्गं शैल-शिखरोपमया सङ्कीर्यते ॥ ६ ॥

कनकेति। कनकस्याङ्गदयोः केयूरयोः द्युतिभिः पिशङ्गतां पिङ्ग-लवर्णतां गमितं प्रापितमिति तद्गुणालङ्कारः। अस्य चैद्यस्य वाङ्-

क्रोधमयशिखिशिखापटलैः
परितः परीतमिव वाहुमण्डलम् ॥ ७ ॥
कृतसन्निधानमिव तस्य
पुनरपि तृतीयचक्षुषा ।
क्रूरमजनि कुटिलभ्रु गुरु-
भ्रुकुटीकठोरितललाटमाननम् ॥ ८ ॥
अतिरक्तभावमुपगम्य
कृतमतिरमुष्य साहसे ।
दृष्टिरगणितभयासिलता-
मवलम्बते स्म समया सखीमिव ॥ ९ ॥

मण्डलं क्रोधमयशिखिशिखापटलैः क्रोधाग्निज्वालाजालैः परितः परीतं परिवृतमिवाभवत् इत्युत्प्रेक्षा । द्युद्भ्यो लुङीति परस्मैपदम् ॥ ७ ॥

कृतेति । कुटिले भ्रुवौ यस्य तत् कुटिलभ्रु । उपसर्जनस्य ह्रस्वः । गुर्व्या भ्रुकुट्या भ्रूभङ्गेन कठोरितं भीषणीकृतं ललाटं यस्य तत् तस्य चैद्यस्याननं पुनरपि तृतीयचक्षुषा कृतसन्निधानं कृतसंसर्गमिवेत्युत्प्रेक्षा । क्रूरमजनि भयङ्करमभूत् । जनेः कर्त्तरि लुङ्, दीपजनेत्यादिना विकल्पाच्चिण्प्रत्ययः ॥ ८ ॥

अतिरक्तेति । अमुष्य चैद्यस्य दृष्टिः । अतिरक्तस्य भावस्तमतिरक्तभावं रोषातिरेकादत्यरुणतामन्यत्र कर्मातिरेकादत्यनुरागितामुपगम्य प्राप्य साहसे कृष्णादिहननरूपे अन्यत्र युद्धे कृतमतिः । सर्वथा गमिष्यामि हनिष्यामि इति च कृतनिश्चया अर्थनिर्धारणं मतिरिति । अगणितमविचारितं भयं यस्तीगुरुजनाद्व यया सा सती समया समीपे असिलतां सखीमिवावलम्बते स्म साधनत्वेन स्वीचकार क्रोधाज्जिघांसया खड्गमद्राक्षीदित्यर्थः । अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुपमासङ्कीर्णा ॥ ९ ॥

करकुड्मलेन निजमूरु-
मुरुतरनगाश्मकर्कशम् ।
त्रस्तचपलचलमानजन-
श्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥

इति चुक्रुधे भृशमनेन
ननु महदवाप्य विप्रियम् ।
याति विकृतिमपि संवृतिमत्
किमु यन्निसर्गनिरवग्रहम्मनः ॥ ११ ॥

प्रथमं शरीरजविकार-

करेति । अयं चैद्यः उरुतरो महत्तरो नगाश्मवत् शैलशिलेव कर्कश इत्युपमा । तं निजमात्मीयमूरुं सक्थि । सक्थि क्लीवे पुमानूरुरित्यमरः । करः कुड्मल इवेत्युपमितसमासः । तेन संहतप्रसारिताङ्गुलिना पाणितलेनेत्यर्थः । त्रस्तो भीतः अत एव चपलं चञ्चलं चलमानेन जनेन श्रुतो भीमनादो भयङ्करध्वनिर्यस्मिन् कर्मणि तद्यथा तथा उच्चैराहत आहतवान् । खलश्चच्च्याः क्रोधान्धाः स्वात्मानमेव घ्नन्तीति भावः । आङ्पूर्वाद्धन्तेर्लङ् आङोयमहन इति अकर्मकाधिकारेऽपि स्वाङ्गात् सकर्मकाच्चेति वक्तव्यमस्मादात्मनेपदे अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः ॥ १० ॥

इतीति । इतीत्यमनेन प्रकारेण अनेन चैद्येन भृशं चुक्रुधे क्रुद्धम् । भावे लिट् । संवृतिमदपि संवृतिर्विकारगुप्तिः तद्वदपि धीरमपीत्यर्थः । मनो महद्विप्रियम् अप्रियमवाप्य विकृतिं विकारं याति ननु प्राप्नोति खलु । यन्मनो निसर्गात् स्वभावान्निरवग्रहं चपलमित्यर्थः । ग्रहेः खल्प्रत्ययः । तदिति शेषः किमु विकृतिं यातीति किमु वक्तव्यमित्यर्थः । चपलचित्तश्चायं चैद्य इति भावः । अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११ ॥

एवं गात्रारम्भविकारानुक्त्वा वागारम्भान् वक्तुमुपोद्घातयति ।

क्षतमुकुलबन्धमव्यथी ।
भाविकलहफलयोगमसौ
वचनेन कोपकुसुमं व्यचीकसत् ॥ १२ ॥
ध्वनयन् सभामथ सनीर-
घनरवगभीरवागभीः ।
वाचमवददिति रोषवशा-
दतिनिष्ठुरस्फुटतराक्षरामसौ ॥ १३ ॥
यदपूपुजस्त्वमिह पार्थ !
मुरजितमपूजितं सताम् ।

प्रथममिति । न व्यथते बिभेतीति अव्यथी निर्भयः । दिहचीत्यादिना नञ्पूर्वाद्व्यथतेरिनिः । असौ चैद्यः प्रथमं शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः क्षतो मुकुलबन्धो मुकुलप्रादुर्भावो यस्य तत् । भाविकलहस्य रणस्यैव फलस्य योगो यस्य तत् । अस्त्रियां समरानीकरणाः कलहविग्रहावित्यमरः । कोप एव कुसुमन्तत् वचनेन यदपूपुज इत्यादिवक्ष्यमाणवाक्येन व्यचीकसत् विकासयति स्म । कसेर्णौ चङ्युपधाया ह्रस्वः, दीर्घो लघोरित्यभ्यासदीर्घः । अत्र विकारकलहवचनकोपेषु मुकुलफलविकासकुसुमत्वरूपणात्समस्तवस्तुवर्त्ति सावयवरूपकम् ॥ १२ ॥

ध्वनयन्निति । अथ सनीरघनरवगभीरवाक् सजलमेघगर्जितगभीरस्वर इत्यर्थः अभीः निर्भीकः असौ चैद्यः सभामास्थानं ध्वनयन् अतिरोषवशात् अतिनिष्ठुराणि अतिपरुषाणि स्फुटतराणि चाक्षराणि यस्यास्तां वाचमवदत् । घनरवगभीरेत्युपमालङ्कारः ॥ १३ ॥

वाचमवददित्युक्तम् अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भमाह । यदित्यादि । हे पार्थ ! पृथापुत्रेति मातृप्राधान्येनामन्त्रणं मर्मोद्घाटनार्थम् । सतामपूजितं सद्भिरपूज्यमानमित्यर्थः । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तः, क्तस्य च वर्तमाने इति षष्ठी । मुर-

प्रेम विलसति महत्तदहो
दयितञ्जनः खलु गुणीति मन्यते ॥ १४ ॥
यदराज्ञि राजवदिहार्घ्य-
मुपहितमिदम्मुरद्विषि ।
ग्राम्यमृग इव हविस्तदयं
भजते ज्वलत्सु न महीशवह्निषु ॥ १५ ॥
अनृताङ्गिरन्न गदसीति
जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयत-
स्तव कर्मणैव विकसत्यसत्यता ॥ १६ ॥

जितं कृष्णम् इह सदसि यद्यस्मादपूपुजः पूजयसि स्म । यो चङ्क्रप-धाया ह्रस्वः । तत्तस्मात् महत् प्रेम विलसति स्फुरति । अन्यथा कथ-मपूज्ये पूज्यत्वाभिमान इत्यभिप्रेत्याह । जनो लोकः दयितं प्रियं जनं गुणीति मन्यते खलु अगुणिनमपीत्यर्थः अहो आश्चर्यं कृष्णः प्रेम्णा पूजितो न गुणादिति भावः । अत्र प्रेमविलसितस्योत्तर-वाक्यार्थहेतुकत्वाद्वाक्यलिङ्गम् ॥ १४ ॥

यदिति । अराज्ञि अभिषेकादिराजगुणविरहिणीत्यर्थः । नञ-स्तत्पुरुषादिति समासान्तप्रतिषेधः । इहास्मिन् मुरद्विषि कृष्णे । अपात्रद्योतनार्थमसम्प्रदानविभक्तिनिर्देशः । राजानमर्हतीति राज-वत् राजार्हम् । तदर्हमिति वतिप्रत्ययः । तद्धितश्चासर्वविभक्तिरित्य-व्ययत्वम् । यदिदमर्घ्यमर्घ्यार्थं द्रव्यम् अर्हणमित्यर्थः । उपहितमर्पितं तदर्घ्यमयं कृष्णः महीशा अवनीपा वह्नय इव इत्युपमितसमासः । तेषु महीशवह्निषु ज्वलत्सु सत्सु अन्यत्र महीशा इव वह्नयः तेषु ज्वलत्सु सत्स्वित्यर्थः । ग्राम्यमृगः शुनको हविरिव न भजते न प्राप्नोति । उपमालङ्कारः ॥ १५ ॥

अनृतामिति । हे पार्थ ! अनृतामसत्याङ्गिरं न गदसि न वदसीति

तव धर्मराज इति नाम
कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथवा
भृशमप्रशस्तमपि मङ्गलं जनाः ॥ १७ ॥

यदि वार्चनीयतम एष
किमपि भवतां पृथासुताः !
शौरिरवनिपतिभिर्निखिलै-
रवसाननार्थमिह किं निमन्त्रितैः ॥ १८ ॥

जगति लोके पटहैर्वाद्यविशेषैः कर्तृभिर्निघुष्यसे उद्घोष्यसे अथच तथापि । निन्द्यं हरिमर्चयतस्तव कर्मणा अपूज्यपूजाकरणेनैवासत्यता सत्यहीनता विकसति प्रकाशते । अत्रासत्यप्रसिद्धसत्याचरणयोर्विरुद्धयोर्घटनाद्विरूपघटनारूपो विषमालङ्कारः ॥ १६ ॥

तवेति । हे पार्थ ! तवेदं धर्मराज इति नाम कथमपष्ठु असत्यमेव पठ्यते । अपदुःसुभ्यः स्थ इत्यौणादिकः कुप्रत्ययः । अम्बाम्बगोभूमीत्यादिना षत्वम् । यद्वा युक्तमेव तदित्याह । अथवा जनाः भृशमप्रशस्तमपि भौमदिनमङ्गारकवारं मङ्गलम् अभिदधति व्यपदिशन्ति तद्वदिदमपीत्यर्थः । लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते तदुच्चारणदोषात् । तद्वद्धर्मराजत्वापि ते धर्मराजव्यपदेश इति भावः । अत्र धर्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ १७ ॥

यदि वेति । हे पृथासुताः ! कौन्तेयाः ! एष शौरिर्वा शौरिरेवेत्यर्थः । वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चय इति विश्वः । किमपि कथमपि भवतामर्चनीयतमो यदि पूज्यश्चेत् तर्हीति शेषः अवसानस्तिरस्कारः तस्मै तदर्थमेव । अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । क्रियाविशेषणम् । निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरत्र एकं कोऽर्थः साध्य इत्यर्थः । स एव साधनक्रिया–

अथवा न धर्ममसुबोध-
समयमवयात बालिशाः ।
काममयमिह वृथापलितो
हतबुद्धिरप्रणिहितः सरित्सुतः ॥ १९ ॥

स्वयमेव शन्तनुतनूज !
यमपि गुणमर्घ्यमस्यधाः ।
तत्र मुररिपुरयं कतमो
यमनिन्द्यवन्दिवदभिष्टुषे वृथा ॥ २० ॥

पेक्षया करणत्वे तृतीया । अत्र गम्यमानक्रियापेक्षयापि कारकवृत्तिरिति न्यासद्योते । अत्र सकलराजनिषेधस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ १८ ॥

अथ त्रिभिर्भीष्मोपालम्भमाह । अथवेत्यादि । अथवा बालिशाः मूर्खाः यूयमिति शेषः । सुबोधो न भवतीत्यसुबोधो दुर्बोधः समय आचारो यस्य तं धर्ममवयात न जानीत । अवपूर्वाद्याधातोर्लोट् लोटस्तस्थमित्यादिना यस्य तादेशः । किन्तु वृथा निष्फलं पलितं यस्य स वृथापलितः वृथापरिणत इत्यर्थः । पलितं जरसा शौक्ल्यमित्यमरः । वृथात्वे हेतुः हतबुद्धिर्नष्टमतिरयं सरित्सुतो भीष्मोऽपि काममप्रणिहितोऽनवहितः प्रमत्तः बालाः पार्था न जानन्तु हन्त वृद्धोऽपि न जानातीति चित्रमित्यर्थः । अत एव सत्यपि कारणे कार्य्यानुदयाद्विशेषोक्तिरलङ्कारः तथा बालिशत्वधर्मदुर्बोधत्वयोर्विशेषणगत्या धर्माज्ञानाहेतुत्वात् काव्यलिङ्गञ्चेत्यनयोः सापेक्षत्वात्सङ्करः ॥ १९ ॥

स्वयमेवेति । हे शन्तनुतनूज ! भीष्म ! स्वयमेव त्वमेवेत्यर्थः । यमपि गणवर्गमर्घ्यमर्घार्हं पूज्यम् । दण्डादिभ्यो यदिति यत्प्रत्ययः । अस्यधाः अवोचः स्नातकं गुरुमित्यादिश्लोक इति भावः । धाधातोर्लुङि गातिस्थेत्यादिना सिचो लुक् । अत्र स्नातकादिगुणे अयं मुररिपुः कतमः न कोऽपीत्यर्थः । मास्तु अस्तु वा अस्मदुपालम्भे को हेतु-

अवनीभृतां त्वमपहाय
गणमतिजडः समुन्नतम् ।
नीचि नियतमिह यच्चपलो
निरतः स्फुटं भवसि निम्नगासुतः ॥ २१ ॥

प्रतिपत्तुमङ्ग ! घटते च
न तव नृपयोग्यमर्हणम् ।
कृष्ण ! कलय ननु कोऽहमिति
स्फुटमापदाम्पदमनात्मवेदिता ॥ २२ ॥

एत आह यमिति । यं सुररिपुमनिन्द्यवन्दिजनगलभवैतालिकवदिलु-पमा अभिष्टुषे मिथ्या स्तौषि । अतस्त्वमेवोपलभ्यस इति भावः । उपसर्गात् सुनोतीत्यादिना षत्वम् ॥ २० ॥

अवनीति । अतिजडोऽतिमूढोऽतिशीतश्च चपलोऽस्थिरः सत्वरश्च त्वम् । समुन्नतम् उन्नतमवनीभृतां राज्ञां भूधराणां च गणमपहाय । न्यञ्चतीति न्यङ् तस्मिन् नीचि नीचवृत्ते निम्ने च । अन इत्यकारलोपे चाविति दीर्घः । इहास्मिन् कृष्ण ! यद्यस्मान्नियतं नित्यं निरतोऽनुरक्तः प्रवणश्च स इति शेषः । निम्नं नीचं गच्छतीति निम्नगा नदी । डोऽन्यत्रापि दृश्यते इति डप्रत्ययः । तस्याः सुतो भवसि स्फुटं व्यक्तं नीचनिरतत्वादिधर्मसङ्क्रमादिति भावः । उक्तं च । न पित्र्यमनुवर्त्तन्ते मातृकं द्विपदा इति । अत्र चतुर्थपादार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ २१ ॥

अथ सप्तदशभिः कृष्णोपालम्भं करोति । प्रतिपत्तुमिति । हे अङ्ग ! तव नृपयोग्यं राजार्हमर्हणं पूजनं प्रतिपत्तुं स्वीकर्त्तुं न च घटते न युज्यते । नन्वहमपि राजैव कथमर्हणं मे न युक्तं तत्राह कृष्णेति । हे कृष्ण ! अहं क इति कलय अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः । अनालोचनेऽनर्थमाह । अनात्मवेदिता अनात्मज्ञत्वम् आपदां पदं स्थानं स्फुटं खलु सत्यमित्यर्थः । आत्मा च कंस-

असुरस्त्वया न्यवधि कोऽपि
मधुरिति कथम्प्रतीयते ।
दण्डदलितसरघः प्रथसे
मधुसूदनस्त्वमिति सूदयन् मधु ॥ २३ ॥

मुचुकुन्दतल्पशरणस्य
मगधपतिशातितौजसः ।
सिद्धमबल ! सबलत्वमहो
तव रोहिणीतनयसाहचर्य्यतः ॥ २४ ॥

किङ्करस्तस्य पशुपालकत्वादिति भावः । अतो निजस्वरूपं चिन्त्यमिति हेतुमद्भावात् काव्यलिङ्गमिति ॥ २२ ॥

असुर इति । मधुरिति कोऽप्यसुरस्त्वया न्यवधि हतः । आत्मनेपदेष्वन्यतरस्यामिति हन्तेर्लुङि विकल्पाद्वधादेशः । इति कथं प्रतीयते विश्वस्यते न कथञ्चिदित्यर्थः । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः । किन्तु दण्डेन दलिता ध्वस्ता सरघा मधुमक्षिका येनेदृशस्सन् । सरघा मधुमक्षिकेत्यमरः । अत एव मधु क्षौद्रं सूदयन् पीडयन् मधुसूदन इति प्रथसे प्रथितोऽसि । मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः । अत्र मधुसूदनसंज्ञायां प्रसिद्धार्थनिषेधस्योत्तरवाक्यस्यान्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ २३ ॥

मुचुकुन्देति । हे अबल ! बलहीन ! कुतः मुचुकुन्दो नाम कश्चिद्राजा । यस्यासुरविजयश्रान्त्या निद्रायमाणस्य देवतावरप्रसादात् निद्राविघातकारी दृष्टिपाताद्भस्मीभवति । तस्य तल्पं शय्या तदेव शरणं रक्षकं यस्य तस्य कालयवनविद्रावितस्येति भावः । तथा मगधपतिना जरासन्धेन शातितौजसः अष्टादशकृत्वो नष्टवीर्यस्य तव रोहिणीतनयस्य बलापरनाम्नो बलभद्रस्य साहचर्य्यतः साहचर्य्यात् सबलत्वं सिद्धम् । न तु स्वबलसम्पत्त्येत्यर्थः । अहो कारणं विना कार्य्योदयादाश्चर्य्यम् अत-

छलयन् प्रजास्त्वमनृतेन
कपटपटुरैन्द्रजालिकः ।
प्रीतिमनुभवसि नग्नजितः
सुतयेष्टसत्य इति सम्प्रतीयसे ॥ २५ ॥

धृतवान् न चक्रमरिचक्र-
भयचकितमाहवे निजम् ।
चक्रधर इति रथाङ्गमदः
सततं बिभर्षि भुवनेषु रूढये ॥ २६ ॥

जगति श्रिया विरहितोऽपि

एव विभावनालङ्कारः । पुण्यैर्यशो लभ्यते इति भावः ॥ २४ ॥

छलयन्निति । इन्द्रजालं वेत्तीति ऐन्द्रजालिकः । अतएव कपटपटुर्वञ्चनाकुशलस्त्वम् अनृतेनासत्येन प्रजाश्छलयन् वञ्चयन् इष्टं सत्यं यस्य स इष्टसत्यः प्रियसत्यः इति सम्प्रतीयसे सम्यक् ख्यायसे । प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता इत्यमरः । नग्नजितो नग्नजिन्नाम्नो राज्ञः सुतया सत्यभामया सत्यापराख्यया प्रीतिमानन्दम् अनुभवसि सत्यायोगादिष्टसत्यो न तु सत्ययोगादिति भावः । अत्र हरेः सत्यसम्बन्धेऽपि तदसम्बन्धोक्तेः सम्बन्धे असम्बन्धरूपातिशयोक्तिः ॥ २५ ॥

धृतवानिति । आहवे युद्धे अरिचक्रादरिसैन्याद्भयेन चकितं सम्भ्रान्तम् । चकितं भयसम्भ्रान्त इति सज्जनः । निजमात्मीयं चक्रं सैन्यं न धृतवान् नावलम्बितवान् न रक्षितवान् इत्यर्थः । किंतु चक्रधर इति भुवनेषु रूढये प्रसिद्धये । अदः इदं रथाङ्गं चक्रापराख्यं सततं बिभर्षि दधासि वृथाभारमिति भावः । चक्रं सैन्यरथाङ्गयोरिति हेमसज्जनौ । अयोविकारधरः चक्रधरो भयादरिभीतचक्रधरत्वादित्यर्थः । अत्र हरौ भगवति चक्रधारणसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

जगतीति । श्रिया राजलक्ष्म्या विरहितोऽपि । यदूनां ययाति-

यदुदधिसुतामुपायथाः ।
ज्ञातिजनजनितनामपदा-
त्त्वमतः श्रियः पतिरिति प्रथामगाः ॥ २७ ॥
अभिशत्रु संयति कदाचि-
दविहितपराक्रमोऽपि यत् ।
व्योम्नि कथमपि चकर्थ पदं
व्यपदिश्यसे जगति विक्रमीत्यतः ॥ २८ ॥
पृथिवीं बिभर्थ यदि पूर्वं-

शापाद्राज्यानधिकारित्वादिति भावः । ज्ञातिजनेन बन्धुजनेन जनितं प्रवर्त्तितं नामपदं श्रीपतिरिति पारिभाषिकसंज्ञाशब्दो यस्यास्ताम् उदधिसुताम् अब्धिकन्यां यद्यस्मादुपायथाः उदूढवानित्यर्थः । विवाहोपयमौ समावित्यमरः । उपाद्यमः स्वीकरणे इत्यात्मनेपदम् । तनादिभ्यस्तथासोरिति सिचो लुक्, अनुदात्तोपदेश इत्यादिना अनुनासिकलोपः । अतो जगति श्रियः पतिरिति प्रथां ख्यातिमगाः प्राप्तवानसि । इणो गा लुङीति गादेशः । न राजान्तरवद्राज्यलक्ष्मीयोगात्तव श्रीपतित्वम् । किंतु श्रीसंज्ञिकायाः कस्याश्चिद्दाराया: परिग्रहादिति भावः । अतोऽपसेनस्याभिषेकसंस्कारेऽपि त्रैलोक्यप्रतिष्ठापकस्य हरेरेव सकलराज्यश्रीधुरन्धरत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २७ ॥

अभीति । संयति युद्धे कदाचित् कदापि अभिशत्रु शत्रुमभिव्याप्य । आभिमुख्येऽव्ययीभावः । अविहितपराक्रमोऽकृतपौरुषोऽपि यद्यस्मात् कथमपि महता प्रयत्नेन व्योम्नि पदं पादक्षेपं चकर्थ कृतवानसि । अतो भारद्वाजस्येति इट्प्रतिषेधः, पित्त्वाद्गुणः । अतो जगति विक्रमी विक्रमवानिति व्यपदिश्यसे व्यवह्रियसे न तु पराक्रमयोगादित्यर्थः । अत्रापि पराक्रमसम्बन्धेऽपि असम्बन्धोक्तेरतिशयोक्तिः ॥ २८ ॥

मिदमपि गुणाय वर्त्तते ।
भूमिभृदिति परैर्हारितभू-
स्त्वमुदाह्रियस्व कथमन्यथा जनैः ॥ २९ ॥

तव धन्यतेयमपि सर्व-
नृपतितुलितोऽपि यत् क्षणम् ।
क्लान्तकरतलधृताचलकः
पृथिवीतले तुलितभूभृदुच्यसे ॥ ३० ॥

त्वमशक्नुवन्नशुभकर्म-

पृथिवीमिति । पूर्वं प्रागपि सम्पत्सम्भवेऽपीति भावः । पृथिवीं बिभर्थं यदि भृतवांश्चेत् । भृञो लिटि भारद्वाजीयेट्प्रतिषेधः पित्त्वाद्गुणः । इदं भूधारणमपि गुणायोत्कर्षाय वर्त्तते । भूतपूर्वगत्यापि व्यपदेशत्वात्तदपि नास्तीति भावः प्रत्युत परैः शत्रुभिः हारितभूः परहारितभूमिकः जरासन्धेन मथुरानगरान्निष्कासितत्वादिति भावः । अत्र हर्तुरिव हरणक्षमत्वमेव हारयितृत्वमिति निजर्थोपपत्तिः । जनैः कथमन्यथा अर्थवैपरीत्येन भूमिभृदिति उदाह्रियस्व उदाह्रियेथाः । संभावनायां लोट् । असंभावितमेवेत्यर्थः । अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

तवेति । तवेयं धन्यता पुण्यवत्ता कथं सर्वैर्नृपतिभिस्तुलितोऽवधूतोऽपि तिरस्कृतोऽपीत्यर्थः क्षणं क्लान्ते भारवत्तयैव श्रान्ते करतले धृतः अचलकोऽल्पाचलो येन सः सन् पृथिवीतले तुलितभूभृदुन्नतराजकस्त्व उच्यसे इति यत् इयमप्यपरा ते धन्यतेत्यर्थः । गोवर्द्धनाख्यक्षुद्रभूधरतोलनात्तुलितभूभृत्त्वं भवति न साष्टशामिव महावीराणितुलनादिति भावः । अत्र सर्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्योः सङ्करः तेन गोवर्द्धनोद्धरणमपि नातीवाद्भुतं वाङ्मलशालिनामिति वस्तु व्यज्यते ॥ ३० ॥

निरत ! परिपाकदारुणम् ।
जेतुमकुशलमतिर्नरकं
यशसेऽधिलोकमनयः सुतम्भुवः ॥ २१ ॥

सकलैर्वपुः सकलदोष-
समुदितमिदङ्गुणैस्तव ।
त्यक्तमपगुण ! गुणत्रितय-
त्यजनप्रयासमुपयासि किम्मुधा ॥ २२ ॥

त्वयि पूजनञ्जगति जाल्म !

त्वमिति । हे अशुभकर्मनिरत ! पापाचारपर ! अतएवाकुश-लमतिर्दुर्बुद्धिस्त्वं परिपाके फलकाले दारुणं निचितपापयातनाभय-त्वाद्भयङ्करमित्यर्थः नरकं निरयम् । स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामित्यमरः । जेतुमशक्नुवन् पापिष्ठैर्दुर्जयत्वादिति भावः । अधिलोकं लोके । विभक्त्यर्थेऽव्ययीभावः । यशसे नरक-विजयीति प्रसिद्धये भुवः सुतन्नरकाख्यम् असुरं जितवानसि परलोक-प्रतारणमात्रपरो न परलोकबाध्योऽसीति भावः । अत्र निरयापरा-ख्यनरकविजयाशक्तो विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजय-प्रवृत्तिहेतुकत्वात्पदार्थहेतुकङ्काव्यलिङ्गम् । तच्च नरकयोः श्लेषमूला-भेदात्तदुत्थापितमिति सङ्करः ॥ २१ ॥

सकलैरिति । हे अपगुण ! निर्गुण ! सकलैः सर्वैर्दोषैः समु-दितं युक्तं तवेदं वपुः सकलैर्गुणैः शौर्यादिभिस्त्यक्तं सर्वगुणाश्रितमित्यर्थः । एवं च सति गुणत्रयस्य त्यजने त्यागे यः प्रयासः तं मुधा वृथा किं किमर्थमुपयासि समुच्चयेति भावः । अत्र सकलगुणस्य त्याग-स्तत्र गुणत्रयस्य त्यागोऽन्तर्गत्वा सिद्ध एव अन्यथा साकल्यव्याघातादि-त्यर्थः । स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्तेति ध्वनिः । ध्वनिः । गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ २२ ॥

कृतमिदमपाकृते गुणैः।
हासकरमघटते नितरां
शिरसीव कङ्कतमपेतमूर्द्धजे ॥ ३३ ॥
मृगविद्विषामिव यदित्य-
मजनि मिषताम्पृथासुतैः।
अस्य वनशुन इवापचितिः
परिभाव एष भवताम्भुवोऽधिपाः ॥ ३४ ॥
अवधीज्जनङ्गम इवैष

त्वयीति। हे जाल्म! असमीक्ष्यकारिन्! जाल्मोऽसमीक्ष्य-कारी स्यादित्यमरः। गुणैरपाकृते निरस्ते गुणैर्हीने त्वयि पूजनं कृतं जगति हासकरं परिहासजनकम् इदं पूजनम्। अपेतमूर्द्धजे अपगतकेशे शिरसि कङ्कतं दारुदन्तादिमयः केशप्रसाधनविशेषः। प्रसाधनं कङ्कतिकेति विश्वामरौ। कङ्कतमेव कङ्कतिका। कङ्कणमिति पाठे शेखरमित्यर्थः। कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपीति विश्वः। तदिव नितरामघटते न सङ्गच्छते इत्यर्थः। नञो नलोपस्तिङि चेपे इत्युपसङ्ख्यानमिति निन्दायां तिङ्योगेऽपि नलोपः। उपमा-लङ्कारः ॥ ३३ ॥

सम्प्रति राज्ञां रोषमुत्पादयन्नाह। मृगेति। भुवोऽधिपाः राजानः मृगविद्विषां सिंहानामिव भवतां मिषतां पश्यतां भवत्सु मिषत्सु मिषतो युष्मान् अनादृत्येत्यर्थः। षष्ठी चानादरे इति विकल्पाद्भावलक्षणे षष्ठी। इत्यम्पृथासुतैः कौन्तेयैः पितरमेतेषां न वेद्मीति भावः। अस्य कृष्णस्य वनशुनो वनशुनकस्येव जम्बुकस्येवेति यावत् अपचितिः पूजा अजनि जनिता कृतेति यत्। जनेर्ण्यन्ताव् कर्मणि लुङ्। एष भवतां परिभावः परिभवः। परौ भुवोऽवज्ञाने इति विभाषया घञ्प्रत्ययः ॥ ३४ ॥

अवधीदिति। हतवृषो हतसुकृतः। सुकृतं वृषभे वृषे इति

यदि हतवृषो वृषघ्ननु ।
स्पर्शमशुचिवपुरर्हति न
प्रतिमाननान्तु नितरान्नृपोचिताम् ॥ ३५ ॥
यदि नाजनिष्ट मतिरस्य
मृदुरजनि पूतनाम्प्रति ।
स्तन्यमघृणमनसः पिबतः
किल धर्मतो भवति सा जनन्यपि ॥ ३६ ॥
शकटव्युदासतरुभङ्ग-
धरणिधरधारणादिकम् ः ।

चिश्वः । एष कृष्णो जनङ्गमश्चाण्डाल इव । चाण्डालप्लवमातङ्गदिवा-कीर्त्तिजनङ्गमा इत्यमरः । गमेश्चेति संज्ञायां जनपूर्वाद्गमधातोः खच्-प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः । वृषं वृषभरूपिणम् अरिष्टा-ख्यमसुरमबधीद्यदि हतवांश्चेत् । लुङि चेति हनो बधादेशः । अत-एव अशुचिवपुरशुद्धात्मा स्पर्शमप्यर्हति नृपोचितां राजार्हां प्रतिमाननां पूजां तु नितरां नार्हति स्पर्शायोग्यो गोघ्नः कथं पूज्य इत्यर्थः । उपमा ॥ ३५ ॥

यदीति । अस्य कृष्णस्य मतिः पूतना नाम बालग्रहविशेषः तां प्रति व्यञ्जना इति हेतोर्मृदुः कृपा दया नाजनि यदि न जाता चेत् मास्त्विति शेषः । जनेः कर्त्तरि लुङ्, दीपजनेत्यादिना चिण्प्रत्ययः । अघृणमनसो निर्घृणचित्तस्य । स्तने भवं स्तन्यं पयः । शरीरावयवा-च्चेति यत्प्रत्ययः । पिबतोऽस्य सा पूतना धर्मतः शास्त्रतो जनन्यपि माता च भवति खलु स्त्रीति कृपाऽभावेऽपि मातेति जुगुप्साप्यस्य नास्तीत्यहो न केवलं स्त्रीहन्ता किंतु मातृहन्ता चायं स्तनप्रदायाः उपमातृत्वादिति भावः । अत्र स्तनपानस्य विशेषणगत्या जननीत्व-हेतुत्वात् काव्यलिङ्गम् ॥ ३६ ॥

शकटेति । तरलस्वभावोऽयं कृष्णः शकटव्युदासः शकटासुरमर्दनं

कर्म यदयमकरोत्तरलः
स्थिरचेतसाङ्क इव तेन विस्मयः॥ ३७॥

अयमुग्रसेनतनयस्य
नृपपशुरपरः पशूनवन्।
स्वामिवधमसुकरम्पुरुषैः
कुरुते स्म यत्परममेतदद्भुतम्॥ ३८॥

तरुभङ्गो यमलार्जुनभञ्जनं धरणिधरधारणं गोवर्द्धनोद्धरणमित्याद्दि-र्बस्य तरुयोन्नं यत् कर्म चकरोत्। तेन कर्मणा स्थिरचेतसां धीर-चित्तानां क इव विस्मयो न कोऽपीत्यर्थः। अत्र स्थिरचेतस्त्वातया विशेषणगत्या विस्मयनिषेधहेतुत्वात् काव्यलिङ्गं वृत्त्यनुप्रासेन संसृ-ज्यते॥ ३७॥

अयमिति। अपरोऽन्यः ना पशुरिवेति नृपपशुरित्युपमित-समासः। कार्य्याकार्य्यविवेकशून्यत्वादेवेत्यर्थः। अयं कृष्णः। उग्र-सेनतनयस्य कंसस्य पशून् अवन् गाः पालयन् पुरुषैरसुकरं लोक-वेदविगीतत्वात् दुष्करं स्वामिवधं यत् कुरुते स्म चकारेति यत्। एतत्परमसद्भुतम् अभूतपूर्वादिति भावः। अत्र पश्ववनस्य विशेषण-गत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात् काव्यलिङ्गम्॥ ३८॥

एते प्रक्षिप्ताः।

ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम्।
सर्वगुणविरहितस्य हरेः परिपूजया कुरु नरेन्द्र! को गुणः॥१॥
न महानयञ्च विभर्त्ति गुणससतया प्रधानताम्।
स्वस्य कथयति चिराय पृथग्जनताञ्जगत्यनभिमानतान्दधत्॥ २॥
रहितञ्चलाभिरखिलाभिरक्षतरसभावसंविदम्।
अलविदमुपदिशन्ति जनाः पुरवाह्यसेनजगतं विदग्धताम्॥ ३॥
अतिभूयसापि सुकृतेन दुरुपचर एष शक्यते।
भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्न्टभिः॥ ४॥

व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ।
नित्यमपरिचितचित्ततयापर एव सर्वजगतस्तथाप्ययम् ॥ ५ ॥
उपकारिणमिह्यपकारमनरिमरिमप्रियम्प्रियम् ।
साधुमितरमबुधम्बुधमित्यविशेषतः सततमेष पश्यति ॥ ६ ॥
उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम् ।
दुःखमनिशमयशाश्नुवतो न परस्य किञ्चिदुपकर्त्तुमिच्छति ॥ ७ ॥
स्वयमक्रियः कुटिलमेष क्षणमपि विधातुमक्षमः ।
श्रोतृमनविरतमज्ञतया फलमीहते परकृतस्य कर्मणः ॥ ८ ॥
य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम् ।
तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमीयुषः ॥ ९ ॥
गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ।
याति रुचिरमतिबालतया घृतिमेक एव परिवारितो जनैः ॥ १० ॥
सुहृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ।
सर्वजननिहितनिर्विदयं सहदेव दर्शनमुपैति कस्यचित् ॥ ११ ॥
स्वजने सखिष्वसुगमेषु नियतमनुरागवत्स्वपि ।
स्नेहमसद्वृहृदयः क्षणमनिरपेक्ष एव समुपैति निर्वृतिम् ॥ १२ ॥
क्षणमेष राजसतयैव जगदुदयदर्शितात्मकः ।
सत्त्वहितमतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥ १३ ॥
अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते ।
नास्य भवति वचनीयमिदञ्ज्वलितेव प्रकृतिरेव कौष्टयो ॥ १४ ॥
अतिसत्त्वयुक्त इति पुष्करयमतिशयेन वर्ण्यते ।
सूक्ष्ममतिभिरय चापगते समुपैति नाल्पमपि सत्त्वसङ्करम् ॥ १५ ॥
प्रलयस्मरस्य महतोऽपि नियतमिह निःसुखे गुणाः ।
यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान् द्विपन्नयम् ॥ १६ ॥
क्षितिपीठमम्बुधिनिमग्नमुदहरत यः परः पुमान् ।
एष किल स इति कैरबुधैरभिधीयमानमपि तन्नतीयते ॥ १७ ॥
नरसिंहमूर्त्तिरयमेव दितिसुतमदारयन्नखैः ।
आप्तजनवचनमेतदपि प्रतिपन्नमोभिति जनोऽयमर्हति ॥ १८ ॥

अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् ।
स्वार्थकरणपटुरेष पुरा बलिना परेण सह सम्प्रयुज्यते ॥ १९ ॥
क्रमते नभो रभसयैव विरचयति विश्वरूपताम् ।
सर्वमतिशयगतङ्कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥ २० ॥
किल रावणारिरयमेव किमिदमियदेवमिष्यते ।
सत्वमधिबलमधिद्युति यत्तदशेषमेष इति दृष्टमुच्यताम् ॥ २१ ॥
चलतैष पादयुगलेन गुरुशकटमोघदस्पृशत् ।
दैवकलितमथ चोदलसद्दलितोरुभाण्डचयमात्मनैव तत् ॥ २२ ॥
स्नुतवत्यसुना स्तनयुगेन जनितजननीजनादरा ।
स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघाति पूतना ॥ २३ ॥
अभिनत्तरून् कथमिवैष कलधरणिरिङ्गणः क्षणात् ।
बाढमिदमपि न बालकनन्तु देवताविधिरयं विजृम्भते ॥ २४ ॥
विहरन् वने विजन एव महति दधदेष गोपताम् ।
नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥ २५ ॥
अवलम्ब्य गोवधसमुत्थमघमयममीलरद्रुषा ।
रिष्टसुपशु समुपोढमदं यदसौ किलासुर इति प्रमार्ष्टि तत् ॥ २६ ॥
मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना ।
नास्य सपदि यदखादि भुजस्तदहो तिरश्चि सहजैव मूढता ॥२७॥
किमिवात्र चित्रमयमल्पमचलमहकल्पितं यदि ।
प्राश निखिलमखिलेऽपि जागत्युदरस्थिते बहुभुजोऽस्य न व्यथा ॥२८॥
यदुदस्य बाहुभयमेकमधृत गिरिमङ्गुलौ न तत् ।
भूरिसलिलमविपह्यमियज्जलदे विमुञ्चति गवां सभाग्यता ॥ २९ ॥
अमुना करेण पृथुदन्तमुसलमुदखानि दन्तिनः ।
तेन यदवधि स एव पुनर्बलशालिनाङ्क इव तत्र विस्मयः ॥ ३० ॥
शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ।
मल्लमलघुकठिनांसतटं न्यवधीद्यदेष तददृष्टकारितम् ॥ ३१ ॥
यदयुध्यमानमपि सन्तमुपहितसुरौघसाध्वसम् ।
कंसमभयमवशम्यहवल्मुदा जनेन तदपि प्रशस्यते ॥ ३२ ॥

इति वाचमुद्धतमुदीर्य
सपदि सह वेणुदारिणा ।
सोढरिपुबलभरोऽसहनः
स जहास दत्तकरतालमुच्चकैः ॥ ३९ ॥

कटुनापि चैद्यवचनेन
विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा
सुजनञ्जनाश्चलयितुं क ईशते ॥ ४० ॥

न च तन्त्रदेति अपमान-

इति निन्दितङ्कृतधियापि वचनमसनावदाददे ।
स्तोत्रमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत् ॥२३॥
यदुवाच दुष्टमतिरेव परिविवदिषुर्मुरद्विषम् ।
श्रेयमपि सदसि चेदिपतेस्तदतोऽपराधगणनालगाद्वचः ॥ २४ ॥

इतीति । सोढः क्षान्तो रिपूणां बलभरो वीर्यातिशयो येन सः न सहत इति असहनः असहिष्णुः स चैद्यः इतीत्थम् उद्धतं निष्ठुरं यथा तथा वाचम् उदीर्य सपदि वेणुदारिणा नरकात्मजेन सह दत्तः करतालः परस्परपाणिताडनं यस्मिन् कर्मणि तद्यथा तथा उच्चैस्तारं जहास । कृष्णदोषोद्घाटनहर्षादट्टहासं चकारेत्यर्थः । स्वभावोक्तिः ॥ ३९ ॥

कटुनेति । माधवः कटुनापि चैद्यवचनेन विकृतिं नागमत् । गमेर्लुङि पुषादित्वात् च्लेरङादेशः । तथाहि, सत्ये नियतवचसम् अस्खलितवचसं सत्यसन्धं सुजनं के जनाः वचसा तीव्रेणापीति भावः । चलयितुमीशते शक्नुवन्ति न केऽपीत्यर्थः । सहिष्ये शतमागांसीति प्रतिज्ञाभङ्गभयादसहतेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४० ॥

अपि यदुनृपाः प्रचुक्रुधुः।
शौरिसमयनिगृहीतधियः
प्रभुचित्तमेव हि जनोऽनुवर्त्तते॥ ४१॥
विहितागसो मुहुरलङ्घ्य-
निजवचनदामसंयतः।
तस्य कतिथ इति तत्प्रथमं
मनसा समाख्यदपराधमच्युतः॥ ४२॥
स्मृतिवर्त्म तस्य न समस्त-
मपकृतमियाय विद्विषः।

न चेति। किञ्चेति चार्थः। तदा तत्काले इतीत्थं शपमानमाक्रोशन्तमपि। शपतेराक्रोश इति भट्टमल्लः। तं चैद्यम्। यदुनृपाः यादवाः शौरेः कृष्णस्य समयेन सङ्केतेन निगृहीतधियो निरुद्धबुद्धयः सन्तो न प्रचुक्रुधुः। क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मत्वम्। तथाहि, जनो लोकः प्रभुचित्तमेव अनुवर्त्तते। शौरिसङ्केतनिरुद्धबुद्धेर्यदुविशेषणगत्या क्रोधाभावहेतुत्वात् काव्यलिङ्गमर्थान्तरन्यासेन संकीर्य्यते॥ ४१॥

विहितेति। अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन संयतो बद्धोऽच्युतः मुहुर्विहितागसः पूर्वं सहस्रशः कृतापराधस्यापि तस्य चैद्यस्यापराधं स एव प्रथमो यस्मिन् कर्मणि तत्प्रथमं यथा तथा कतिथः। कतीनां पूरण इति तस्य पूरणे डडिति डट्प्रत्ययः, षट्कतिपयचतुरां थुगिति थुगागमः। मनसा समाख्यत् गणनां चकार। अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः। अत्र प्रतिज्ञापाशबन्धनस्य विशेषणगत्या प्राचीनापराधानन्त्येऽपि तात्कालिकापराधगणनाहेतुत्वात् काव्यलिङ्गभेदः॥ ४२॥

स्मृतीति। विद्विषश्चैद्यस्य सम्बन्धि समस्तमपकृतमपकारजातम्। नपुंसके भावे क्तः। तस्य हरेः कृष्णस्य स्मृतिपथं नेयाय न प्राप॥

स्मर्तुमधिगतगुणस्मरणाः
पटवो न दोषमखिलङ्खलूत्तमाः ॥ ४३ ॥
नृपतावधिक्षिपति शौरि-
मथ सुरसरित्सुतो वचः ।
आह चलयति भुवम्मरुति
क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥ ४४ ॥
अथ गौरवेण परिवाद-
मपरिगणयंस्तमात्मनः ।
प्राह सुररिपुतिरस्करण-
क्षुभितः स्म वाचमिति जाह्नवीसुतः ॥ ४५ ॥

न तमपकारं स्मारेत्यर्थः । अर्थान्तरं न्यस्यति । अधिगतगुणस्मरणाः परिचितोपकारस्मृतयः उत्तमाः सज्जनाः अखिलं दोषमपकारं स्मर्तुं न पटवो खलु नालम्भवन्तीत्यर्थः । पर्य्याप्तिवचनेष्वलमर्थेष्विति तुमुन्प्रत्ययः । उपकारमेव स्मरन्ति साधवो नापकारमित्यर्थः ॥ ४३ ॥

नृपताविति । अथ नृपतौ चेदिपे शौरिं हरिम् अधिक्षिपति सति सुरसरित्सुतो भीष्मः मरुति प्रलयमारुते भुवं चलयति कम्पयति सति क्षुभितस्योद्वेलस्याम्बुधेर्नादमनुकुर्वत्तद्वद्गम्भीरं वचः आह स उवाच । लटः स्मेति भूतार्थे लट्, ब्रुवः पञ्चानामादित आहो ब्रुव इति आह्वादेशः । यद्यपि न पादादौ खल्वादय इत्याह वामनः तथापि कविप्रौढ्या अथवदस्य पादादौ प्रयोगः । उपमालङ्कारः ॥ ४४ ॥

उक्तमेवार्थं वक्तुराशयाविष्कारार्थमाह । अथेति । अथ शिशुपालप्रलापानन्तरं सुररिपुतिरस्करणेन हरिनिन्दया क्षुभितः कलुषमनाः जाह्नवीसुतो गाङ्गेयः गौरवेण धैर्य्येण तमात्मनः परिवादं काम-

विहितम्मयाद्य सदसीद-
मपमृषितमच्युतार्चनम्।
यस्य नमयतु स चापमय-
श्चरणः कृतः शिरसि सर्वभूभृताम्॥ ४६॥

इति भीष्मभाषितवचोऽर्थ-
मधिगतवतामिव चणात्।
चोभमगमदतिमात्रमथो
शिशुपालपचपृथिवीभृतांगणः॥ ४७॥

अयं पृथापत्रित इत्यादि स्वनिन्दामपरिगणयन् इति वक्ष्यमाणप्रकारेण वाचं प्राह स प्रोक्तवान् गतमेतत्। धीराः स्वनिन्दामेव सहन्ते न गुरुदेवादिनिन्दामिति भावः। अत्र चोभस्य विशेषणगत्या वचनहेतुत्वात् काव्यलिङ्गभेदः॥ ४५॥

विहितमिति। मया अद्य सदसि सभायां विहितं कृतम् इदम् अच्युतार्चनं यस्यापमृषितमतितिक्षितमसोढ़मित्यर्थः। मृष तितिचायामिति धातोः कर्मणि क्तः, उपसर्गवशाद्विपरीतार्थता। अतएव मृष तितिक्षायामेव क्त्वनिषेधादतितिक्षार्थत्वान्न गुणः, मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्वर्त्तमानार्थता क्तस्य च वर्त्तमाने इति षष्ठी। सोऽपमृष्टा पुरुषस्थापं नमयतु आरोपयतु सर्वभूभृतां भूपतीनामिति भावः। शिरस्ययञ्चरणः कृतः न्यस्तः। अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः। अयं कोपामर्ष इत्यनुसन्धेयम्॥४६॥

इतीति। इतीत्थं भीष्मेण भाषितस्योक्तस्य वचसोऽर्थमभिधेयं शिरसि पादन्यासरूपं चणात् अधिगतवतां प्राप्तवतामिव सतामित्यर्थः शिशुपालस्य पचा ये पृथिवीभृतो राजानः तेषामसौ गणोऽतिमात्रं चोभं क्रोधं विकारमगमत्। एतेनैषाम् आत्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम्। उत्प्रेचा॥ ४७॥

शितितारकानुमितताम्र-
नयनमरुणीकृतं क्रुधा ।
बाणवदनमुददीपि भिये
जगतः सकीलमिव सूर्य्यमण्डलम् ॥ ४८ ॥

प्रविदारितारुणतरोग्र-
नयनकुसुमोज्ज्वलः स्फुरन् ।
प्रातरहिमकरताम्रतनु-
र्विषजद्रुमोऽपर इवाभवद्द्रुमः ॥ ४९ ॥

अनिशान्तवैरदहनेन
विरहितवतान्तरार्द्रताम् ।

अथैषां दशभिर्गीर्भिरस्थान् क्रोधानुभवानाह । शितीत्यादि । क्रुधा क्रोधेन अरुणीकृतमत एव शिती श्यामे ये तारके कनीनिके ताभ्याम् अनुमिते अनुमापिते ताम्रे नयने यस्य तत् । तारकाक्ष्णः कनीनिकेत्यमरः । सर्वमुखस्य रक्तत्वादिति भावः । बाणो नृपस्तस्य वदनम् । सकीलं कीलाकारच्छायासहितं परिधियुक्तमिति यावत् । सूर्य्यमण्डलमिव जगतो भिये भयाय उददीपि प्रजज्वाल । दीप्यतेः कर्त्तरि लुङीति दीपजनेत्यादिना चिण्प्रत्यये तलुक् । अत्र नयनयोः स्वभावव्यत्यागेनारुण्यस्वीकारात्तद्गुणः, तत्सापेक्षत्वादौत्पातिकसूर्य्यमण्डलोपमासङ्करः ॥ ४८ ॥

प्रवीति । प्रविदारिते अतिविकासिते अरुणतरे क्रोधादतिरक्ततरे अत एवोग्रे भयङ्करे ये नयने ते एव कुसुमे ताभ्यामुज्ज्वलो दीप्तः स्फुरन् स्वतेजसा दीप्यमानः प्रातरहिमकरताम्रतनुः प्रभातार्कारुणविग्रहः प्रसिद्धो द्रुमो द्रुमाख्यो नृपः अपरो विषजद्रुम इवाभवत् इत्युत्प्रेक्षा रूपकसङ्कीर्णा ॥ ४९ ॥

अनिशान्तेति । अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य

कोपमरुदभिहतेन भृशं
नरकात्मजेन तरुणेव जज्वले ॥ ५० ॥

अभिधित्सतः किमपि राहु-
वदनविकृतं व्यभाव्यत ।
ग्रस्तशशधरमिवोपलस-
त्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ ५१ ॥

कुपिताकृतिप्रथममेव
हसितमशनैरसूचयत् ।
क्रुद्धमशनिदलिताद्रितट-
ध्वनि दन्तवक्त्रमरिचक्रभीषणम् ॥ ५२ ॥

तेन अत एवान्तरभ्यन्तरे आर्द्रतां सारस्यं विरहितवता त्यक्तवता । रहयतेः क्तवतुप्रत्ययः । कोपो मरुदिव तेनाभिहतः प्रज्वलितः तेन नरकात्मजेन वेणुदारिणा तरुणा वृक्षेणेव भृशं जज्वले ज्वलितम् । भावे लिट् । उपमालङ्कारः ॥ ५० ॥

अभीति । किमप्यभिधित्सतोऽभिधातुमिच्छतः । दधातेः सन्नन्ताल्लटः शत्रादेशः । उत्तमौजसो नाम राज्ञः सम्बन्धि राहुवदनविकृतं व्यात्तत्वाद्राहुवक्त्रवत् करालम् उपलसन्ती लक्ष्यमाणासिता दन्तपङ्क्तिर्यस्य तन्मुखं ग्रस्तशशधरमिव सन्दष्टचन्द्रमिव व्यभाव्यतातर्क्यत । इत्युत्प्रेक्षा ॥ ५१ ॥

कुपितेति । प्रथमं प्रागेवाकुपितावस्थायामपीत्यर्थः । कुपितस्येवाकृतिर्मुखरागो यस्येत्युपमा । अरिचक्रभीषणं परबलभयङ्करं दन्तवक्त्रं दन्तवक्त्रनामानं राजानम् । अशनिदलितस्य वज्राहतस्याद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तदित्युपमा । न शनैरशनैः उच्चैर्हसितमट्टहासः क्रुद्धमसूचयत् । सर्वदा मुखरागस्य विशेषाभावादनुभावान्तरवेद्यः

प्रतिघः कुतोऽपि समुपेत्य
नरपतिगणं समाश्रयत् ।
यामिहरणजनिताऽनुशयः
समुदाचचार निज एव रुक्मिणः ॥ ५३ ॥

चरणेन हन्ति सुबलः स्म
शिथिलितमहीध्रबन्धनाम् ।
तीरतरलजलराशिजला-
मवभुग्नभोगिफणमण्डलां भुवम् ॥ ५४ ॥

क्रुद्ध इत्यर्थः । अत्र कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरुप-मासङ्कीर्णा ॥ ५२ ॥

प्रतिघ इति । प्रतिघः कोपः । कोपक्रोधामर्षरोषप्रतिघा इत्यमरः । कुतोऽपि समुपेत्यागत्य नरपतिगणं राजमण्डलं समाश्रयत् समाविशत् । रुक्मिणस्तु यामिः स्वसा । यामिः स्वकुलस्त्रियोरित्यमरः । तस्या रुक्मिण्या हरणेन जनितोऽनुशयो हा कष्टमापन्नं कदा निर्यातयामीति अनुतापो यस्मिन् सः । अथानुशयो दीर्घद्वेषानुतापयोरित्यमरः । निजो नित्य एव प्रतिघः । निजमात्मीयनित्ययोरिति विश्वः । समुदाचचार सम्यगुद्दीपे । भीष्मवाक्यमन्येषां कोपोत्पादकमासीत् रुक्मिणस्तु प्रागेवारूढकोपस्योद्दीपकमासीदित्यर्थः । अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात् काव्यलिङ्गभेदः ॥ ५३ ॥

चरणेनेति । सुबलो नाम राजा महीं धारयन्तीति महीध्राः पर्वताः । कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानमिति कप्रत्ययः । शिथिलितानि विश्लेषितानि महीध्राणां बन्धनानि सन्धयो यस्यास्ताम् । तीरेषु तरलानि भूकम्पाच्चलितानि जलराशेरम्बुधेर्जलानि यस्यास्ताम् । अवभुग्नं कुटिलम् अतिभारादित्यर्थः भोगिनां फणिनां फणमण्डलं फणसमूहो यस्यास्तां भुवं चरणेन हन्ति स्म जघान । लट्

कुपितेषु राजसु तथापि
रथचरणपाणिपूजया।
चित्तकलितकलहागमनो
मुदमाहुकिः सुहृदिवाधिकान्दधौ ॥ ५५ ॥
गुरुकोपरुद्धपदमाप-
दसितयवनस्य रौद्रताम्।
व्यात्तमशितुमिव सर्वजग-
द्विकरालमास्यकुहरं विवक्षतः ॥ ५६ ॥
विवृतोरुबाहुपरिघेण
सरभसपदन्निर्धिलक्षता।

श्रेति भूतार्थे लट्। अत्र पादाघाताद् भुवः कम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५४ ॥

कुपितेष्विति। रथचरणपाणेश्चक्रपाणेः पूजया राजसु तथा कुपितेष्वपि चित्ते कलितं निश्चितं कलहागमनं युद्धलाभो येन सः आहुकिः आहुकिर्नाम राजा शोभनं हृदयं यस्य स सुहृत् मित्रमिव कृष्णपक्षपातो वेत्यर्थः। सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः। अधिकां मुदन्दधौ सन्तोषं धृतवान्। सुदुःसहोऽपि कृष्णोत्कर्षः कलहकण्डूलबाहोराहुकेर्मोदहेतुरासीदित्यर्थः। उपमालङ्कारः ॥ ५५ ॥

गुर्विति। विवक्षतः किमपि वक्तुमिच्छतः। वचेः सन्नन्ताल्लटः शत्रादेशः। असितयवनस्य कालयवनस्य राज्ञः सम्बन्धि सर्वजगदशितुमत्तुमिव व्यात्तं विवृतम् अत एव विकरालम् अतिविकृतम्। करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि चेति वैजयन्ती। गुरुणा कोपेन रुद्धपदं प्रतिबद्धवचनम् आस्यकुहरं वक्त्रविवरं रौद्रताम्भयङ्करतामापत्। अत्राशितुमिवेति फलोत्प्रेक्षा व्यादानक्रिया निमित्ता ॥ ५६ ॥

विवृतेति। अखिलन्टपतीन् हन्तुं विवृतः प्रसारितः उरुबाहुरेव

हन्तुमखिलनृपतीन् वसुना
वसने विलम्बिनि निजे विचस्खले ॥ ५७ ॥
इति तत्तदा विकृतरूप-
मभजत्तदभिन्नचेतसम् ।
मारबलमिव भयङ्करतां
हरिबोधिसत्त्वमभि राजमण्डलम् ॥ ५८ ॥
रभसादुदस्थुरथ युद्ध-
मनुचितभियोऽभिलाषुकाः ।

परिघ आयुधविशेषो येन तेन । परिघः प्रतिघातेऽस्त्रेऽपीति हेमः । सरभसं सत्वरं यत् पदं तन्निधित्सता निधातुमिच्छता । दधातेः सन्नन्ताल्लटः शत्रादेशः । वसुना तन्नाम्ना राज्ञा विलम्बिनि उत्पातवेगात् विस्रंसिनि निजे वसने स्वाम्बरे विचस्खले स्खलितं तद्वधस्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वस्त्रस्रंसनस्य विशेषणगत्या स्खलनहेतुत्वात् काव्यलिङ्गं तद्बाहुपरिघेति रूपकेण संसृज्यते ॥ ५७ ॥

इतीति । इतीत्यन्तदा तस्मिन् काले विकृतरूपं रोषभीषणाकारन्तद्राजमण्डलं मारबलमिव मदनसैन्यमिव । मदनो मन्मथो मार इत्यमरः । अभिन्नचेतसमविकृतचित्तं बोधिसत्त्वो बुद्धः । बुद्धस्तु श्रीघनः शास्ता । बोधिसत्त्वो विनायक इति वैजयन्ती । स हरिरिवेत्युपमितसमासः । तं हरिबोधिसत्त्वमभि तल्लक्षणमित्यर्थः । अभिरभागे इत्यभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । भयङ्करोतीति भयङ्करः । मेघर्तिभयेषु कृञ इति खच्प्रत्यये मुमागमः । तस्य भावस्तत्तामभजत् । उपमालङ्कारः । तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा तेन भग्नं तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ५८ ॥

रभसादिति । अथानन्तरम् अनुचितभियोऽनभ्यस्तसाध्वसाः । अभ्यस्तेऽप्युचितमिति यादवः । अत एव युद्धमभिलाषुकाः युद्धार्थिनः ।

सान्द्रमुकुटकिरणोच्छलित-
स्फटिकांशवः सदसि मेदिनीभृतः ॥ ५९ ॥
स्फुरमाणनेत्रकुसुमोष्ठ-
दलमभृत भूभृदङ्घ्रिपैः ।
धूतपृथुभुजलतञ्चलितै-
र्द्रुतवातपातवनविभ्रमं सदः ॥ ६० ॥
हरिमप्यमंसत तृणाय
कुरुपतिमजीगणन्न वा ।

लषपतेत्यादिना उकञ्प्रत्यये न लोकेत्यादिना षष्ठीप्रतिषेधः । सदसि मेदनीभृतः सदसि स्थिताः चैद्यपक्षीया राजानः । सान्द्रैर्मुकुटकिरणैरुच्छलिताः स्फटिकांशवः सभाभित्तिस्फटिकमणिमयूखाः यैस्ते तथोक्ताः सन्तो रभसाद्वेगात् । उदस्थुरुत्थिताः । उदोऽनूर्ध्वकर्मणीत्यस्य प्रत्युदाहरणमेतत् । अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात् काव्यलिङ्गभेदः ॥ ५९ ॥

स्फुरमाणेति । स्फुरमाणानि नेत्राण्येव कुसुमान्योष्ठा एव दलानि च यस्मिन् कर्मणि तद्यथा तथा धूताः कम्पिताः पृथवो भुजा एव लताः शाखा यस्मिन् कर्मणि तद् यथा तथा चलितैः भूभृतो राजानस्त एवाङ्घ्रिपाः पादपास्तैः सदः सभामण्डपं द्रुतः शीघ्रो वातपातो वायुप्रचारो यस्य तस्य वनस्य विभ्रमं शोभाम् । विभ्रमः संशये भ्रान्तौ शोभायां चेति वैजयन्ती । अभृत बभार । भृञो लुङि तङ्, उश्चेति लिचः कित्त्वाद्गुणाभावः, ह्रस्वादङ्गादिति सलोपः । अत्र वनविभ्रममिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना नेत्रकुसुमेत्यादिरूपकोत्थापितेति सङ्करः ॥ ६० ॥

हरिमिति । तानवलितभुवनत्रितया अहङ्कारात् धारितजगत्त्रयाः भूभृतश्चैद्यपक्ष्या राजानः । हरिमपि तृणायामंसत तृणसममन्यन्त । तथा लघुं मेनिरे इति अनादरोक्तिः । मन्यतेः कर्तरि

मानतुलितभुवनत्रितयाः
सरितः सुतादबिभयुर्न भूभृतः ॥ ६१ ॥

गुरु निःश्वसन्नथ विलोल-
सदवथुवपुर्वचोविषम् ।
कीर्णदशनकिरणाग्निकणः
फणवानिवैष विससर्ज चेदिपः ॥ ६२ ॥

किमहो नृपाः सममभीभि-
रुपपतिसुतैर्न पञ्चभिः ।

लुङि च्लेः सिच्, अनुदात्तत्वादिट्प्रतिषेधः, मन्यकर्मणि इति चतुर्थी । कुरुपतिं च नाजीगणन् धर्मराजं गणयन्ति स्मेत्यर्थः । गणेर्णौ चङि ई च गणः इत्यभ्यासस्येकारः । सरितः सुताद्भीष्मादपि नाबिभयुर्न भीताः । बिभेतेर्लङि श्लाविति द्विर्भावे सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशः, जुसि चेति गुणः । अत्र राजसु हर्यवमानाद्यनेकक्रियायौगपद्यात्समुच्चयः इति सर्वस्वकारः ॥ ६१ ॥

गुर्विति । अथैष चेदिपः फणवान् फणीव । गुर्वधिकं निःश्वसन् फूत्कुर्वन् विलोलं सदवथु ससन्तापम् । सन्तापो दवथुरित्यनेकार्थादिति सज्जनः । तद्वपुर्यस्य स विलोलसदवथुवपुः । ट्वितोऽथुच् । कीर्णा विक्षिप्ता दशनकिरणा अग्निकणा इव यस्य सः तथा सन् वचो विषमिव तद्वचोविषं विससर्ज विषप्रायं वच उज्जगारेत्यर्थः । अतः फणवानिवेति व्यस्तोपमालिङ्गात्पूर्वत्रोपमितसमासाश्रयणम् ॥ ६२ ॥

अथैतद्वचोविषमेव चतुर्भिराह । किमित्यादि । हे नृपाः ! अमीभिः पञ्चभिरुपपतिसुतैः समं जारजैः सह पाण्डवानां क्षेत्रजत्वादित्थं प्रलापः । अनया स्थविरराजकन्यया क्षत्रियाङ्गनया च सह । कन्या कुमारिकानार्योरिति विश्वः । भीष्मस्योर्ध्वरेतस्त्वेन निन्दा । वध्यस्वधार्हस् । अराज्ञो राजार्हणग्रहणापराधादिति भावः । अराजत्वं व्यनक्ति । असुं भुजिष्यं किङ्करं कंसपशुपालनादिति भावः ।

बध्यमभिहत भुजिष्यममुं
सह चानया स्थविरराजकन्यया ॥ ६३ ॥

अथवाध्वमेव खलु यूय-
मगणितमरुद्गणौजसः ।
वस्तु कियदिदमयन्न मृधे
मम केवलस्य सुखमोचितुं क्षमः ॥ ६४ ॥

विदतुर्यमुत्तममशेष-
परिषदि नदीजधर्मजौ ।
यातु निकषमधियुद्धमसौ
वचनेन किम्भवतु साध्वसाधु वा ॥ ६५ ॥

भुजिष्यः किङ्करो मत इति हलायुधः । किं नाभिहत किमिति न मारयत किन्तु अभिहतेत्यर्थः । हन्तेर्वधार्थे लोट् लोटो लङ्वदिति थस्य तादेशः, अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अहो अतिवध्योऽपि न हन्यत इत्याश्चर्य्यं । अत्रामर्षानुभावो वागारम्भः । क्रोधः कृतापराधेषु स्थिरोऽमर्ष इतीर्य्यते ॥ ६३ ॥

अथवेति । अथवा अगणितमरुद्गणौजसः अवधीरितसुरसङ्घसत्त्वाः यूयमाध्वमेव तूष्णीं तिष्ठतैव खलु । आस्ते र्लोटि धि चेति सकारलोपः । इदं कृष्णहननं कियद्वस्तु कियत्कार्य्यम् अल्पमित्यर्थः । कुतः अयं कृष्णो मृधे युद्धे । मृधमास्कन्दनं सङ्ख्यमिति युद्धपर्यायेष्वमरः । केवलस्यैकाकिनो ममैव सुखमोचितुं न क्षमः युष्माकं का वार्त्तेति भावः । एतेनास्य बलगर्वो व्यज्यते आत्मनोत्कर्षोऽन्यन्यक्कारो लावण्यविभूतिभिरिति लक्षणात् ॥ ६४ ॥

विदतुरिति । किञ्च नदीजधर्मजौ भीष्मयुधिष्ठिरौ । अशेषपरिषदि समग्रसंसदि । परिषत्संसदिति विश्वः । यं कृष्णमुत्तमं विदतुर्विदितवन्तावित्यर्थः । विदो लटो वेति तसोऽतुसादेशः । असौ कृष्णः

अचिरान्मया सह गतस्य
समरमुरगारिलक्ष्मणः ।
तीक्ष्णविशिखमुखपीतमसृक्
पततां गणैः पिबतु सार्द्धमुर्वरा ॥ ६६ ॥

अभिधाय रूक्षमिति मा स्म
गम इति पृथासुतेरिताम् ।
वाचमनुनयपरां स ततः
सहसावकर्ण्य निरियाय संसदः ॥ ६७ ॥

गृहमागताय कृपया च
कथमपि निसर्गदक्षिणाः ।

अधियुद्धं युद्धे । विभक्त्यर्थेऽव्ययीभावः । निकषं निरूपणं परीक्ष्यतामित्यर्थः यातु । ततः साभूत्कर्षोऽसाध्वनुत्कर्षो वा भवतु व्यक्तमस्त्वित्यर्थः । वचनेन किं वृथा वाग्वीर्यैरलमित्यर्थः । अत्रापि गर्वामर्षौ व्यज्येते ॥ ६५ ॥

अचिरादिति । किञ्च मया सह समरं गतस्योरगारिलक्ष्मणः गरुड़ध्वजस्य सम्बन्धि तीक्ष्णैर्विशिखमुखैः पीतं सद्वाणोच्छिष्टमित्यर्थः । असृक् रक्तमुर्वरा भूमिः । उर्वरा सर्वशस्याढ्यभूमौ स्याद्भूमिमात्रक इति विश्वः । पततां गणैः पक्षिसमूहैः । पतत्पत्ररथाण्डजा इत्यमरः । सार्द्धमचिरात् पिबतु । अद्यैवाहमेनं हनिष्यामीत्यर्थः अत्रापि अमर्ष एवेति भावः ॥ ६६ ॥

अभिधायेति । स चैद्य इतीत्थं रूक्षं परुषमभिधाय ततः पृथासुतैः पार्थैरीरितामुक्तामनुनयपरां मास्म गमो न गच्छेति वाचम् । स्मोत्तरे लङ् चेति चकाराद्माङ्योगे लुङि पुषादित्वात् च्लेरङादेशः । न माङ्योगे इत्यडभावः । अवकर्ण्य अनादरेण श्रुत्वा सहसा संसदः सदसो निरियाय निर्ययौ अमर्षादेवेति भावः ॥ ६७ ॥

गृहमिति । निसर्गदक्षिणाः स्वभावतो दाक्षिण्यसम्पन्नाः पर-

क्षान्तिमहितमनसो जननी-

श्वशुरात्मजाय चुकुपुर्न पाण्डवाः ॥ ६८ ॥

चलितस्ततोऽनभिहतेच्छ-

मवनिपतियज्ञभूमितः ।

तूर्णमथ ययुमिवानुययु-

र्दमघोषसूनुमवनीशसूनवः ॥ ६९ ॥

विशिखान्तराण्यतिपपात

च्छन्दानुवर्त्तिन इत्यर्थः । त्रिषु वाक्कुशलावामपरच्छन्दानुवर्त्तिषु दक्षिणा इति वैजयन्ती । किञ्च क्षान्त्या क्षमया महितमनसः पूजितचित्ताः क्षमावन्तः पाण्डवाः किञ्च गृहमागतायाभ्यागतायेत्यर्थः । किञ्च जननीश्वशुरात्श्वशुरात्मजाय शिशुपालाय कृपया च कथमपि अपराधेऽपीत्यर्थः न चुकुपुः न चुक्रुधुः । वध्योवध्यस्यापि तस्याभ्यागतत्वात् मातृबन्धुत्वात् स्वयं क्षान्तत्वात् दाक्षिण्यात् कृपया च कथमपि जिघांसां न चक्रुरित्यर्थः । क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी । अत्राभ्यागतत्वादिविशेषणानां साभिप्रायत्वादकोपहेतुत्वाच्च परिकरः काव्यलिङ्गे सति सापेक्षत्वात् संकीर्यते ॥ ६८ ॥

चलितमिति । अथ चैद्यनिर्याणानन्तरम् अवनीशसूनवः तदनुगुणराजपुत्रास्ततस्तस्याः अवनिपतेर्युधिष्ठिरस्य यज्ञभूमितो यज्ञभूमेर्देवयजनात् । पञ्चम्यास्तसिल् । अनभिहतेच्छमप्रतिहतमनोरथं यथा तथा चलितं प्रस्थितं दमघोषसूनुं शिशुपालम् । याति परलोकमिति ययुः परलोकप्रापकोऽश्वमेधीयोऽश्वः । ययुरश्वोऽश्वमेधीय इत्यमरः । योद्दे चेति यातेरौणादिक डुक् द्वित्वञ्च । तं ययुमिव तूर्णमनुययुः ययुरपि राजकैराजपुत्रैरन्वीयत । शतःशता रक्षन्तीति श्रुतेः अश्वमेधाश्वोपमया चैद्यस्य बध्यत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ६९ ॥

विशिखान्तराणीति । स चैद्यः सपदि जवनैर्वेगशालिभिर्वाजिभ

सपदि नवनैः स वाजिभिः ।
दृष्टमलघुरभसापतिता
वनिताश्चकार न सकामचेतसः ॥ ७० ॥
क्षणमीक्षितः पथि जनेन
किमिदमिति जल्पता मिथः ।
प्राप्य शिविरमविशङ्किमनाः
समनीनहद्द्रुतमनीकिनीमसौ ॥ ७१ ॥
त्वरमाणशाङ्किकसवेग
वदनपवनाभिपूरितः ।

भिरश्वैर्विशिखान्तराणि रथ्यान्तराणि । रथ्या प्रतोली विशिखेत्यमरः । अतिपपात अतिचक्राम । अत एव दृष्टमलघुरभसेनातिवेगेनापतिता आधावन्तीर्वनिताः सकामानि साभिलाषाणि चेतांसि चित्तवृत्तयो यासां ताः सकामचेतसः सफलमनोरथा इत्यर्थः । न चकार अतिशीघ्रलङ्घनान्न दर्शनावकाशस्तासामासीदित्यर्थः । अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ७० ॥

क्षणमिति । असौ चैद्यः पथि किमिदमिति मिथः जल्पता कोऽयमनर्थः संवृत्त इति परस्परमालपता जनेन क्षणमीक्षितः सन् शिविरं स्वकटकं प्राप्याविशङ्कितमना निःशङ्कचित्तः द्रुतं शीघ्रम् अनीकिनीं सेनां समनीनहत् सन्नाहयति स्म । नह्यतेः सम्पूर्वकात् णौ लुङि चङ्युपधाया ह्रस्वः अभ्यासदीर्घश्च । शिविरं शकटमिति केचित् । एतेनास्य रौद्रस्थायिनः कोपस्य प्रकृष्टत्वं वेदितव्यम् ॥ ७१ ॥

त्वरमाणेति । शङ्खः शिल्पमस्येति शाङ्खिकः । तदस्य शिल्पमिति ठक् । त्वरमाणस्य जवमानस्य शाङ्खिकस्य यः सवेगो वदनपवनो मुखमारुतः तेनाभिपूरितः प्रध्मातः शैलानां कटकतटेषु नितम्बप्रदेशेषु भिन्नरवोमूर्च्छितप्रतिध्वनिरस्य चैद्यस्य सम्बन्धि सन्नहनं प्रयोजन-

शैलकटकतटभिन्नरवः
प्रणनाद सान्नहनिकोऽस्य वारिजः ॥ ७२ ॥
जगदन्तकालसमवेत-
विषदविषमेरितारवम्।
धीरनिजरवविलीनगुरु-
प्रतिशब्दमस्य रणतूर्य्यमाबधि ॥ ७३ ॥
सहसा ससम्भ्रमविलोल-
सकलजनतासमाकुलम्।
स्थानमगमदथ तत्परित-
स्खलितोडुमण्डलनभःस्थलोपमाम् ॥ ७४ ॥

अस्येति सान्नहनिको योधानां रणसन्नाहप्रवर्त्तक इत्यर्थः। तदस्य प्रयोजनमिति ठक्। वारिजः शङ्खः। वारिजः शङ्खपद्मयोरिति विश्वः। प्रणनाद दध्वान सन्नहनशङ्खं दध्माविनत्यर्थः। उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम्। एतेनास्य महानुत्साहो वीररसस्थायी व्यज्यते ॥ ७२ ॥

जगदिति। जगदन्तकाले कल्पान्ते समवेता मिलिता ये विषदास्तोयदाः पुष्करावर्त्तकादयो मेघाः। विषं तु गरले तोये इति विश्वः। तैर्विषमं दारुणं यथा तथेरित उत्पादितो य आरवः स इवारवो यस्य तत्। धीरे गम्भीरे निजरवे विलीना अन्तर्गता गुरवः प्रतिशब्दाः शब्दान्तराणि यस्य तत् अस्य चैद्यस्य रणतूर्य्यं रणदुन्दुभिरावधि आहतम्। आहन्तेः कर्मणि लुङ्, आत्मनेपदेष्वन्यतरस्यामिति हनो वधादेशः। अत्राप्युत्साहो व्यज्यते। उपमालङ्कारः ॥ ७३ ॥

सहसेति। अथ रणदुन्दुभिताडनानन्तरं सहसा झटिति ससम्भ्रमं सव्यग्रं यथा तथा विलोलया चञ्चलया सकलया समग्रया

दधती भयानकतरत्व-

मुपगतवतः समानताम् ।

धूमपटलपिहितस्य गिरेः

समवर्मयन् सपदि मेदिनीभृतः ॥ ७५ ॥

परिमोहिणा परिजनेन

कथमपि चिरादुपाहृतम् ।

वर्म करतलयुगेन महत्

तनुचूर्णपेषमपिषद्रुषापरः ॥ ७६ ॥

जनतया जनसमूहेन समाकुलं सङ्कीर्णं तत् स्थानं परितस्खलितं प्रस्थितम् उडुमण्डलं ज्योतिश्चक्रं यस्मिन् तस्य नभःस्थलस्योपमां सादृश्यमगमत् । अत्रोडुमण्डलस्य चलनासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिः उपमा तु तदुज्जीविता प्रतीतिमात्रसारा तदङ्गं तत्रैव चमत्कारस्फुरणात् । पुष्पं प्रवालोपहितं यदि स्यादित्यादिवत् ॥ ७४ ॥

दधत इति । मेदिनीभृतो राजानः । धूमपटलेन पिहितस्य छादितस्य अत एव भयानकतरत्वम् अतिभयङ्करत्वम् उपगतवतो गिरेः समानतां सादृश्यं दधतो दधानाः सपदि समवर्मयन् संवर्मयन्ति स्म । सत्यापपाशेत्यादिना णिच् । उपमालङ्कारः ॥ ७५ ॥

परिमोहिणेति । परोऽन्यो नृपः परिमुह्यतीति परिमोही । सम्पृचानुरुधेत्यादिना घिनुण्प्रत्ययः । तेन खेदयुक्तेनेत्यर्थः । परिजनेन सेवकजनेन कथमपि विलम्बेन कष्टसृष्ट्या चिरादुपाहृतम् आनीतं महद्वर्म सन्नाहं करतलयुगेन पाणितलद्वयेन तनुचूर्णपेषं तनुचूर्णं पिष्ट्वा । शुष्कचूर्णरूक्षेषु पिष इति णमुल्प्रत्ययः । अपिषत् चूर्णितवान् रुषा जिगीषोर्दुर्निमित्तमिति भावः । कषादिषु यथाविध्यनुप्रयोग इत्यनुप्रयोगः । पिषेर्लुङि पुषादिना च्लेरङादेशः । अत्र

रणसम्मदोदयविकाशि-
बलकलकलाकुलीकृते ।
शारिमशकदभिरोपयितु-
न्द्विरदे मदच्युति जनः कथञ्चन ॥ ७७ ॥
परितश्च धौतसुखरुक्म-
विलसदहिमांशुमण्डलाः ।
तेनुरतनुवपुषः पृथिवीं
स्फुटलक्ष्यतेजस इवात्मजाः श्रियः ॥ ७८ ॥

वर्मणः पेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तया च अमानुषं वीर्य्यमस्य व्यज्यते ॥ ७६ ॥

रणेति । रणेन रणारम्भेण यः सम्मदो हर्षः । प्रमदसम्मदौ हर्षे इति निपातः । तस्योदयेन जन्मना विकाशिभिर्विस्तारिभिर्बल-कलकलैः सैन्यकोलाहलैराकुलीकृते संक्षोभिते । अत एव मदं च्योत-तीति मदच्युति मदस्राविणि । क्विप् । द्विरदे गजे । जनः परिजनः शारिं पर्य्याणम् । ना पर्य्याये विहङ्गे स्त्री शारिर्धूतगुडे न पुमिति वैजयन्ती । शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थे गजपर्य्याणे व्यवहारान्तरे क्वचिदिति विश्वप्रकाशश्च । अधि-रोपयितुम् आरोपयितुं कथञ्चन कृच्छ्रादशकत् शशाक । शकेर्लुङि पुषादिना च्लेरङादेशः । अत्र विशेषणगत्या सेनाकलकलस्य मदहेतु-त्वान्मदस्य शारिदुरारोपत्वहेतुत्वाच्च काव्यलिङ्गद्वयं तस्यापेक्षत्वात् सङ्कीर्य्यते ॥ ७७ ॥

परित इति । किंचेति । चार्थः धौतेषु शोभितेषु सुखरुक्मेषु सुखस्य रुक्माभरणेषु विलसत्प्रत्येकं प्रतिफलदहिमांशुमण्डलमर्क-विम्बं येषां ते तथोक्ताः । अत एव स्फुटलक्ष्यमन्तर्गत्वा वहिःस्फुरि-तन्तेजोऽन्तःसारो येषां ते इव स्थिता इत्युत्प्रेक्षा । तेजो व्याख्यातं प्रथमे तेजो निरोधेत्यत्र । अतनुवपुषो महाकायाः श्रियः आत्मजाः

प्रधिमण्डलोद्धतपराग-
घनवलयमध्यवर्त्तिनः ।
पेतुरशनय इवाशनकै-
र्गुरुनिस्वनव्यथितजन्तवो रथाः ॥ ७९ ॥

दधतः शशाङ्कितशशाङ्क-
रुचि लसदुरश्छदं वपुः ।
चक्रुरथ सह पुरन्ध्रिजनै-
रयथार्थसिद्धि सरकं महीभृतः ॥ ८० ॥

दयिताय सासवमुदस्त-

अश्वाः । लक्ष्मीपुत्रोऽश्व आढ्ये चेति वैजयन्ती । परितः सर्वाभ्यो दिग्भ्यः तेनुः व्याप्नवन्तः ॥ ७८ ॥

प्रधीति । चक्रधारा प्रधिर्नेमिरिति हलायुधः । प्रधिमण्डलैर्नेमिवलयैरुद्धता उत्थापिताः परागाः पांसव एव घना मेघास्तेषां वलयानि मण्डलानि तेषां मध्यवर्त्तिनः गुरुभिर्निस्वनैः स्वघोषैः व्यथिता भीषिता जन्तवः प्राणिनो यैस्ते रथा अशनयः वज्रा इवाशनकैः पेतुस्तीव्रमधावन् । अत्र रथानामशनित्वेनोत्प्रेक्षा परागाणां घनत्वरूपणसापेक्षेति सङ्करः ॥ ७९ ॥

दधत इति । लसदुरश्छदः कवचो यस्मिन् कर्मणि तद्यथा तथा । उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियामित्यमरः । अत एव शशाङ्कितो मृगलाञ्छितो यः शशाङ्कः इन्दुस्तस्य रुचिरिव रुचिर्यस्येत्युपमा । तद्वपुर्दधतो दधाना महीभृतो राजानः पुरन्ध्रिजनैरङ्गनाजनैः सह । अयथार्था असत्या सिद्धिर्मदकार्योत्पत्तिर्यस्मिन् तदयथार्थसिद्धिरहितम् अनिष्टचित्तत्वादुन्मादकमित्यर्थः । सरकं मधुपानं चक्रुः । उत्साहवर्द्धनार्थमिति भावः । मधौ सीधौ सीधुपाने सरकं मधुभाजनमिति वैजयन्ती ॥ ८० ॥

अथासर्गसमाप्तेः मायाधिकामन्त्रणाय प्रियासङ्गतानां भटा-

मपतदवसादिन: करात्।
कांस्यमुपहितसरोजपतद्-
भ्रमरौघभारगुरु राजयोषित: ॥ ८१ ॥
भृशमङ्गसादमरुणत्व-
मविशदृशः कपोलयो:।
वाक्यमसकलमपास्य मदं
विदधुस्तदीयगुणमात्मना शुच: ॥ ८२।

नामागामिशुच: सूचिकास्तात्कालिकचेष्टा: वर्णयति। दयितायेत्यादि। दयिताय प्रेयसे उदस्तं पानार्थमुत्क्षिप्तं सासवं समद्यम् अतएवोपहिते वासनार्थं निहिते सरोजे पतन् भ्रमरौघ एव भारस्तेन गुरु दुर्भरम्। गुरुस्तु वाक्पतौ श्रेष्ठे तुङ्गे पितरि दुर्भर इति शब्दार्णवे। कांस्यं पानभाजनम्। कांस्योऽस्त्री पानभाजनमित्यमर:। वृतवदिहनिकमिकषिभ्य: स इति कमेर्धातोरौणादिक: सप्रत्यय:। तस्मै हितं कंसीयं लोहविशेष:। प्राक्क्रीताच्छ इति छप्रत्यय:। तस्य विकार: कांस्यं पानपात्रम्। कंसीयपरशव्ययोर्यञञौ लुक् चेति यञ्प्रत्यये छस्य लुक्। राजयोषित: कस्याश्चिद्राजबध्वा: सम्बन्धिन: अवसादिन: शैथिल्यभाज: करादपतत् तच्च दुर्निमित्तमिति भाव:। एतेनास्याभाविविरहशोकादेवाप्रसन्नदृष्टे: काचिच्चिन्ता व्यज्यते। अत्रावसादभारगौरवयोर्विशेषणगत्या पात्रपातहेतुत्वात् काव्यलिङ्गम् ॥ ८१ ॥

भृशमिति। शुचो भाविविरहभावनाप्रसूता: शोका: अविशदृश: शोकादेवाप्रसन्नदृष्टे: कस्याश्चिदिति शेष:। मदमपास्य तदुत्पत्तिं प्रतिरुध्य तदीयं गुणं तद्धर्मं मदकार्य्यभूतमित्यर्थ:। अङ्गसादमङ्गशैथिल्यं कपोलयोररुणत्वम् असकलमसमाप्तं वाक्यं चात्मना स्वयम्। प्रकृत्यादिभ्य उपसङ्ख्यानात् तृतीया। भृशं विदधु: करुणेन शृङ्गारस्तिर-

सुहृदः समीकगमनाय
युवभिरथ सम्बभाषिरे ।
शोकपिहितगलरुद्धगिर-
स्तरसागताश्रुजलकेवलोत्तराः ॥ ८३ ॥
विपुलाचलस्थलघनेन
जगमिषुभिरङ्गनाः प्रियैः ।
पीनकुचतटनिपीडदल-
द्वरवारवाणमुरसा लिलिङ्गिरे ॥ ८४ ॥

क्त इत्यर्थः । अत्र मदाभावेऽपि तत्कार्योदयात्तद्भावलोकननिमित्त-कलोक्ता उक्तनिमित्ताख्यो विभावनाभेदः ॥ ८२ ॥

सुहृद इति । अथास्मिन्नवसरे युवभिः समीकगमनाय युद्धगम-नाय । समीकं साम्परायिकमित्यमरः । सुहृदः शोकपिहिते शोका-वृते गले कण्ठे रुद्धगिरः प्रतिबद्धोत्तरवाचस्तथापि तरसा वेगेनागत-मश्रुजलमेव केवलं निर्णीतमुत्तरं यासां ताः । निर्णीतं केवलं चोक्त-मिति विश्वः । सम्बभाषिरे संभाषिताः । योद्धुं गच्छाम इत्यामन्त्रि-ता हा कष्टमिदमेवान्तिमदर्शनमिति वाक्यभेदेऽप्यश्रुपातेनैवानन्तरं दत्तो-त्तरास्तास्तिष्ठन्नित्यर्थः अत्राप्यश्रुपातो दुर्निमित्तमिति भावः एतेन गन्तव्यं चेत् गम्यतां वयञ्च युष्मत्त्वालोक्यकामा इत्यनिष्टविध्याभासरूपाक्षेपा-लङ्कारो व्यज्यते । अनिष्टविध्याभासश्चेति सूत्रे चेष्टनिषेधाभासवदस्यापि लक्षणात् ॥ ८३ ॥

विपुलेति । जिगमिषुभिर्युद्धाय गन्तुमिच्छुभिः प्रियैः कर्तृभिः अङ्गनाः विपुलं यदचलस्य स्थलं तद्वद्घनेन दृढेन उरसा निजवक्षसा कर्त्रेन पीने कुचतटे निपीडो नितरां पीडनं तेन दलन्तो विदीर्य-माणा वराः श्रेष्ठा वारवाणाः कञ्चुका यस्मिन् कर्मणि तद्यथा तथा । कञ्चुको वारवाणोऽस्त्रीत्यमरः । आलिलिङ्गिरे आलिङ्गिताः । अत्र वारवाणानां दलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ८४ ॥

न मुमोच लोचनजलानि
दयितजयमङ्गलैषिणी ।
यातमवनिमवसन्नभुजा-
न्न गलद्विवेद वलयं विलासिनी ॥ ८५ ॥

प्रविवत्सतः प्रियतमस्य
निगडमिव चक्षुरक्षिपत् ।
नीलनलिनदलदामरुचि
प्रतिपादयुग्ममचिरोढसुन्दरी ॥ ८६ ॥

व्रजतः क्व तात ! वजसीति
परिचयगतार्थमस्फुटम् ।

नेति । दयितस्य जयमङ्गलं तदर्थमङ्गलमित्यर्थः । अश्वघासादिवत्तदर्थे षष्ठीसमासः । तदिच्छतीति तदेषिणी विलासिनी काचिदङ्गना लोचनजलान्यश्रूणि न मुमोच अश्रुपातस्यामङ्गलत्वादिति भावः । अमङ्गलं तदन्यतः प्रवृत्तमेवेत्याह, यातमिति । अवसन्नभुजाच्छोकशिथिलात् करात् गलद्भ्रश्यदेवावनिं भुवं यातं प्राप्तं वलयं कङ्कणं न विवेद । अवश्यभाविनां को निवारक इति भावः । एषा च दैवचिन्तिकेति । अत्रावसादस्य विशेषणगत्या वलयपातहेतुत्वात् काव्यलिङ्गम् ॥ ८५ ॥

प्रेति । अचिरोढसुन्दरी काचिन्नवोढा स्त्री प्रविवत्सतः प्रवासं कर्तुमिच्छतः । वसेः सन्नन्तात्सटः शत्रादेशः । प्रियतमस्य प्रतिपादयुग्मं पादयुग्मे । विभक्त्यर्थेऽव्ययीभावः । नीलनलिनदलदामरुचि नीलोत्पलमालासच्छायमित्युपमा । निगडमिव शृङ्खलमिव चक्षुर्नेत्रमक्षिपत् प्रेरयदित्यर्थः । चक्षुषो दूरे पदमपि गन्तुं न शशाकेत्यर्थः तच्च दुर्निमित्तमिति भावः प्रयाणे स्त्र्यवलोकनिषेधात् । उक्तोपमासापेक्षा चक्षुषो निगडत्वोत्प्रेक्षेति सङ्करः ॥ ८६ ॥

धैर्यमभिनदुदितं शिशुना
जननीनिर्भर्त्सनविवृद्धमन्युना ॥ ८७ ॥

शठ ! नाकलोकललनाभि-
रविरतरतं रिरंससे ।
तेन वहसि मुदमित्यवद-
द्रणरागिणं रमणमीर्ष्ययाऽपरा ॥ ८८ ॥

व्रजत इति । जनन्याः अपशकुनभीतायाः मातुर्निर्भर्त्सनाद्वि-वृद्धमन्युना प्रवृद्धकोपेन शिशुना बालकेन, हे तात ! जनक ! तातस्तु जनकः पितेत्यमरः । क्व व्रजसि कुत्र वजसि इत्यस्फुटम् उदितमुक्तम् । वदेः कर्मणि क्तः, वचिस्वपीत्यादिना सम्प्रसारणम् । व्रजसीति सरेफ-पदस्यपाटवाद्रेफलुप्तोच्चारितमित्यर्थः । तथापि परिचयादभ्यासपाटवा-द्गतार्थम् । पितृभ्यां केवलावगताविधेयं वचनमिति शेषः । व्रजतः प्रस्थातुः धैर्यं प्रयाणोत्साहमभिनत् गमनकारिणो दुर्निमित्तत्वा-दिति भावः । उक्तं च योगयात्रायाम् । यानात् पुरानिपतनं वृहतीव काचित् गर्भेण भारवहनी स्वपुरः स्थिता स्त्री । आगच्छ तिष्ठ कुत इत्यलमर्थवाचिशब्दाश्च राजगमने प्रतिषेधकाः स्युरिति । अत्र दम्प-त्योर्दैन्यविषादचिन्ताशङ्कादयः सञ्चारिणोऽनुसन्धेयाः ॥ ८७ ॥

शठेति । अपरा स्त्री रणरागिणं युद्धोत्साहिनं रमणं, हे शठ ! वञ्चक ! नाकलोकललनाभिरप्सरोभिः सहेत्यर्थः । सह युक्तेऽप्रधान इति सहार्थे तृतीया वृद्धो यूनेतिवत् । अविरतरतमविच्छिन्नसुरतं यथा भवति तथा रिरंससे रन्तुमिच्छसि । रमेः सन्नन्ताल्लट् पूर्ववत् सन इत्यात्मनेपदम् । तेनाप्सरोरिरंसाकारणेन मुदं वहसीति ईर्ष्यया सापत्न्याक्षमया अवदत् अर्थाद्विरहासहनया प्रस्थानप्रतिषेधपरया व्याहृतमिदमेवास्य मरणमिति भावः ईर्ष्यात्र कण्ठोक्त एव संचारी ॥ ८८ ॥

ध्रियमाणमप्यगलदस्रु
चलति दयिते नतभ्रुवः।
स्नेहमकृतकरसन्दधता-
मिदमेव युक्तमतिमुग्धचेतसाम्॥ ८९॥

सह कज्जलेन विरराज
नयनकमलाम्बुसन्ततिः।
गण्डफलकमभितः सुतनोः
पदवीव शोकमयकृष्णवर्त्मनः॥ ९०॥

क्षणमात्ररोधि चलितेन
कतिपयपदन्नतस्य वः।

ध्रियमाणमिति। दयिते चलति प्रतिष्ठमाने सति नतभ्रुवः वध्वाः अस्रु ध्रियमाणममङ्गलभिया धार्य्यमाणमपि। धरतेः कर्मणि लटः शानजादेशः। अगलदस्रवत् शोकातिरेकाद्धारयितुमशक्यमासी-दित्यर्थः। तथाहि, अकृतकरसमकृत्रिमरागं स्नेहं प्रेम दधताम् अत एव अतिमुग्धचेतसाम् अत्यन्ताकपटबुद्धीनाम् इदमेवासंवरणं युक्तम्। अन्यथा स्नेहव्याघातेन तत्कालविरुद्धमस्रुमोचनं नानुचितमिति भावः। रसस्नेहयोरागप्रेमापरनाम्नोरवस्थाभेदात् भेदः रागस्तत्-सम्बन्धी प्रेम तद्वियोगासहिष्णुतेति रससागरे। सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः॥ ८९॥

सहेति। सुतनोः शुभाङ्गयाः गण्डफलकमभितो गण्डस्थलयो-रित्यर्थः। अभितः परित इत्यादिना द्वितीया। नयनकमलाम्बुसन्त-तिरस्रुधारा कज्जलेनाञ्जनेन सह शोक एव शोकमयस्तस्य कृष्णवर्त्मनः शोकाग्नेः पदवी निःसरणमार्ग इव विरराज शुशुभे। येन वर्त्मना अग्निर्गच्छति तत् कृष्णं भवतीति कृष्णवर्त्मा। अतोऽयमस्रुपात एव दुर्निमित्तमिति भावः॥ ९०॥

क्षणेति। कतिपयं च तत् पदं च तस्य। जातावेकवचनम्। कति-

स्रस्तभुजयुगगलद्वलय-
स्वनितम्प्रति च्युतमिवोपशुश्रुवे ॥ ८१ ॥
अभिवल्लभं वल्लभतमस्य
विगलदमलायतांशुका ।
भूमिनभसि रभसेन यती
विरराज काचन समम्महोल्कया ॥ ८२ ॥
समरोन्मुखे नृपगणेऽपि
तदनुमरणोद्यतैकधीः ।

चित्यदानीत्यर्थः । मद्यवद्स्य तदवच्छिन्नदेशवाचित्वादत्यन्तसंयोगे द्वितीया । चलितेन प्रस्थितेन केनचिदिति शेषः क्षणमात्ररोधि क्षण-मात्रप्रतिबन्धकम् । प्राणदातुकजीविनाशवसरे सर्वाधिकं स्यात्तमनौ-चित्यादिति भावः । नतभ्रुवः स्रस्तानासङ्गवादेन झटिति प्रकोष्ठाग्रे पतितानां भुजयुगगलद्वलयानां हस्तद्वयचलत्कङ्कणानां स्वनितं रणत्-कारं प्रति प्रतिमुखं च्युतमिव उपशुश्रुवे उपश्रुतम् । स्त्री च्युत् च्युतं क्षवः पुंसीत्यमरः । रणत्कारे च्युतभ्रान्त्या निवृत्तं क्षणमात्रं स्थित-मित्यर्थः । अच्युते च्युतभ्रान्त्या भ्रान्तिमदलङ्कारः, दैन्यविषादाख्याः सञ्चारिणः ॥ ८१ ॥

अभीति । वल्लभतमस्य प्रियतमस्याभिवल्लभिमार्गं विगलदङ्ग-सादात् संसमानममलमायतं चांशुकं वस्त्रं यस्याः अन्यत्र विगलन्तो विशीर्य्यमाणा अमला उज्ज्वलाः आयता दीर्घीभूता अंशवो रश्मयो यस्याः सा । शैषिकः कप्रत्ययः । भूमिर्नभ इव तस्मिन् भूमिनभसि रभसेन वेगेन यती यान्ती । इणः शतर्य्युगितश्चेति ङीप् । काचना-ङ्गना महोल्कया समं सदृशं विरराज । अत्र प्रस्थातुरग्रे स्वकान्ताया महोल्कासादृश्यभवनमेव दुर्निमित्तमिति भावः । उपमालङ्कारः ॥ ८२॥

समरेति । नृपगणे समरोन्मुखेऽपि तस्य नृपगणस्यानुमरणे सहमरणे उद्यतोद्युक्ता अत एकैका मुख्या धीर्यस्य सः । दीनेनाल्प-

शोकपरिजनहृताम्बुजलो
न भटीजनः स्थिरमना विचक्रमे ॥ ९३ ॥

विदुषीव दर्शनममुष्य
युवतिरतिदुर्लभम्पुनः ।
यान्तमनिमिषमविल्पमनाः
पतिमीक्षते स्म भृशमादृशः पथः ॥ ९४ ॥

सम्प्रत्युपेयाः कुशली पुनर्युधः
सस्नेहमाशीरिति भर्त्तुरीरिता ।
सद्यः प्रसह्य द्वितयेन नेत्रयोः
प्रत्याचचक्षे गलता भटस्त्रियाः ॥ ९५ ॥

शोचेन परिजनेन हृताम्बुजलो सुतवाष्पो दासीसुतकाम्बुबिन्दुरित्यर्थः । तथापि स्वयं स्थिरमना अचलितचित्तो भटीजनो भटस्त्रीलोकः । जातावेकवचनं पुंयोगादाख्यायामिति ङीपोऽलुक् । न विचक्रमे न तत्रास सहमृत्युप्रियाणां कुतः संत्रास इति भावः । अत मरणोद्योगस्य विशेषणगत्या अश्रुव्यहेतुत्वात् काव्यलिङ्गभेदः ॥ ९३ ॥

विदुषीति । युवतिः काचिदङ्गना अमुष्य पत्युर्दर्शनं पुनः पश्चादतिदुर्लभं तस्यापुनरावृत्तेरिति भावः । विदुषी जानतीवेत्युत्प्रेक्षा । विदेः शतुर्वसुरिति वस्वादेशः, उगितश्चेति ङीप् । अविल्पमना अविल्पचित्ता सती यान्तं योद्धुं गच्छन्तं पतिं भर्त्तारम् आदृशः पथः आदृष्टिपथात् दृष्टिपथातिक्रमपर्य्यन्तमित्यर्थः । आङ्मर्य्यादाभिविध्योरिति विकल्पादाङो न समासः । भृशमनिमिषं निमेषरहितं यथा तथा ईक्षते स्म ॥ ९४ ॥

सम्प्रतीति । सम्प्रतीदानीमेव कुशली अक्षतः सन् युधो युद्धात् पुनः उपेयाः प्रत्यावर्त्तस्वेति सस्नेहं भर्त्तुरीरिता भर्त्रा प्रयुक्ता आशीराशीर्वादः सद्यः प्रसह्य बलात् गलदश्रुसा स्रवदश्रुणा तस्या भटस्त्रिया-

काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमापुः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥ ९६ ॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
पञ्चदशः सर्गः ॥ १५ ॥

---

स्तस्य वध्या एव। अस्तीति प्रतिषेधाच्छदीत्वादडागमः। नेत्रयोर्हितं नेत्र्येन प्रत्याचचक्षे प्रत्याख्याता निराकृतेत्यर्थः अमङ्गलेनास्रुपातेन निष्फलीकृतेत्यवश्यं भवितव्यं भवत्येवेति भावः। वा लिटीति विकल्पाच्च चक्षिङः ख्याञादेशः। अत्रास्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्याने हेतुत्वात् काव्यलिङ्गभेदः ॥ ९५ ॥

काचिदिति। काचित् स्त्री रजोभिरार्त्तवैरङ्गसंस्कारत्यागात् पांशुभिर्वा कीर्णा। स्याद्रजः पुष्पमार्त्तवमिति। पांशुर्ना न द्वयो रज इति चामरः। दिवस्त्वौत्पातिकपांशुवर्षणाद्रजःकीर्णता। वक्त्रमिन्दुरिव अन्यत्र वक्त्रमिवेन्दुर्भिन्नास्तस्य लक्ष्मीर्यस्याः सा भिन्नवक्त्रेन्दुलक्ष्मीः। बहुवचनान्तो बहुव्रीहिः। एवमपि एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठाच्च तन्निमित्तः कप्रत्ययः शैषिकस्तु वैभाषिक इत्यविरोधः। काचिन्नारी दिवमनुविदधे अनुचकार। काश्चिन्नार्यः दिश इवाश्रीका वीतशोभाः। उद्भ्रान्तसत्त्वा उद्भ्रान्तचित्ता उद्भ्रान्तजन्तुकाश्च सत्यः। अन्तरात्मनि मध्ये च दाहं सन्तापम्। अन्यत्रौत्पातिकं प्रज्वलनं दधिरे दधुः अन्या नार्यो वात्या इव वातसमूहा इव। पाशादिभ्यो यदिति यत्प्रत्ययः। प्रतिदिशं दिशि दिशि। अव्ययीभावे शरत्प्रभृतिभ्यः टच् इति समासान्तः टच्प्रत्ययः। भ्रेमुर्बभ्रमुः। वा जृभ्रमुत्रसामिति विकल्पादेत्वाभ्यासलोपौ। अपरा नार्यो भूम्या तुल्यं भूमिवत् कम्पमापुः इतीत्थं पार्थिवानां प्रस्थाने

# षोडशः सर्गः ।

---

दमघोषसुतेन कश्चन
प्रतिशिष्टः प्रतिभानवानथ ।
उपगम्य हरिं सदस्यदः
स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥

प्रयाणे नार्यो भाव्यशुभं पुरः पूर्वं शशंसुः सूचयामासुरित्यर्थः । अत्र नारीणां भाव्यशुभसूचनस्य रजोदाहादिवाक्यार्थहेतुकं काव्यलिङ्गं तत्र नारीणां द्युदिगाद्युपमाभिस्तद्रजोदाहादिवन्नारीरजोदाहादीनाम् अशुभसूचकत्वमित्युपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः । सञ्चारिणश्च पूर्ववद्विषादादयः सुगमाः । अत्र काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्भिन्नवक्त्रेन्दुलक्ष्म्यो निश्रीकाः काश्चिदिति पाठे काचीत् कीर्णेत्येकवचनप्रक्रमभङ्गे दोषो नास्ति न चैवमुपमानोपमेययोर्भिन्नवचनत्वदोषः लोकेषु चन्द्रादिष्वेकत्र नियतेषु दोषबुद्ध्यनुदयात् । यथाह दण्डी । न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमतामिति । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ॥ ८६ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
पञ्चदशः सर्गः ॥ १५ ॥

---

अथानन्तरसर्गे हरेश्चैद्यदूतसंवादं वर्णयति । दमघोषेत्यादि । अथ सन्नाहानन्तरं दमघोषसुतेन शिशुपालेन प्रतिशिष्टः प्रहितः प्रतिभानमस्यास्तीति [illegible] सद [illegible] दोक्तोत्तरस्फुरणशक्तिमा-

अभिधाय तदा तदप्रियं
शिशुपालोऽनुशयम्परङ्गतः ।
भवतोऽभिमनाः समीहते
सरुषः कर्त्तुमुपेत्य माननाम् ॥ २ ॥

नित्यर्थः । कश्चन कश्चिद् दूतः हरिं कृष्णमुपगम्य प्राप्य सदसि सभायां स्फुटौ भिन्नाऽर्थौ पृथगर्थौ प्रियाप्रियरूपौ यस्मिंस्तत् स्फुटभिन्नार्थं-युगपदुभयार्थाभिधायकमित्यर्थः तथैव वक्ष्यति उभयं युगपन्मयोदित-त्वरया सान्त्वयेतरञ्च ते इति । अदः इदं वक्ष्यमाणं वचः उदाहरत् व्याहरत् । अस्मिन् सर्गे वैतालीयाख्यं मात्रावृत्तम् । षड्विषमेऽष्टौ समे कलास्ताश्च समस्युर्नोनिरन्तराः । न समात्र पराश्रिता कला वैतालीये-ऽन्ते रलौ गुरुरिति लक्षणात् ॥ १ ॥

स्फुटभिन्नार्थमुदाहरद्वच इत्युक्तं तदेव चतुर्दशभिः श्लोकैरभि-धत्ते । अभिधायेत्यादि । शिशुपालस्तदा यर्घस्वीकारकाले तत्तादृश-मप्रियमभिधाय परमनुशयम् अनुतापङ्गतः अभिमनाः उत्कण्ठित-चित्तः सन् उपेत्यागत्य सरुषः समन्योर्भवतस्तत्र माननां पूजां कर्त्तुं समीहते अनुनेतुमिच्छतीत्यर्थः अयं मधुरोऽर्थः । परुषस्तु । तदा तदप्रियमभिधाय परम् अनुशयं केवलं न शम्यः किन्तु हन्तव्यश्चेति दीर्घद्वेषङ्गतः प्राप्तः । रत्ने शब्देऽथानुशयो दीर्घद्वेषानुतापयोरित्यु-भयत्राप्यमरः । अत एव नास्ति भीर्यस्येत्यभि निर्भीकं मनो यस्य सो-ऽभिमनाः निःशङ्कचित्तः सन् उपेत्य स्वयमागत्य सरुषः सकोपस्य भवतो माननां हननं कर्त्तुं समीहते । मानना हनने माने इत्यु-भयत्रापि केशवः । भवन्तं हन्तुमिच्छतीत्यर्थः । मनस्तम्भे इति धातोश्चौरादिकात् ल्युट् णिचो लुक् । अत्र चतुर्दशश्लोक्यां परहृदय-परीक्षापराणां दूतानामप्रियाप्रिये द्वे अपि वक्तव्ये चमत्काराय तु श्लेषभङ्ग्याभिधीयेते इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वादभिधेयत्वा-च्छब्दमात्रसाधर्म्याच्च केवलप्रकृतगोचरः श्लेषः । प्रकृताप्रकृतोभयगत-

त्वाच्च शब्दमात्रसाधर्म्यमेवेति लक्षणात् । न चोभयगतः

विपुलेन निपीड्य निर्दयं
मुदमायातु नितान्तमुन्मनाः ।
प्रचुराधिगताङ्गनिर्वृति-
र्परितस्त्वां खलु विग्रहेण सः ॥ ३ ॥

प्रणतः शिरसा करिष्यते
सकलैरेत्य समं धराधिपैः ।
तव शासनमाशु भूपतिः
परवानद्य यतस्त्वयैव सः ॥ ४ ॥

निन्दास्तुत्योरन्यतरगम्यतया तद्‌व्यापनात् इह उभयं युगपन्मयोदितं त्वरया सान्त्वयेतरच्च ते इति वक्ष्यमाणलिङ्गादुभयोर्वाच्यत्वावगमा- दित्यलं प्रपञ्चेन ॥ २ ॥

विपुलेनेति । उन्मनाः उत्सुकचेताः स चैद्यः परितः प्रचुरं प्रभूतं यथा तथा अधिगता प्राप्ता अङ्गनिर्वृतिः सुहृत्सर्गकृतमङ्ग- सुखं येन तं त्वां विपुलेन विशिष्टपुलकेन । पुलः स्यात् पुलके नापि पुलन्तु विपुलेऽन्यवदिति विश्वः । विग्रहेण वपुषा निर्दयं गाढं निपी- ड्यालिङ्ग्य नितान्तं मुदमायातु खलु । परुषस्तु । उन्मना मनस्वी स चैद्यः प्रचुरेणाधिना मनोव्यथया गताङ्गनिर्वृतिं विगतशरीरसौख्यं त्वां विपुलेन महता विग्रहेण समरेण । विग्रहः समरे काये इति विश्वः । निर्दयं निष्कृपं निपीड्य हत्वा मुदमायातु ॥ ३ ॥

प्रणत इति । भूपतिः चैद्यः सकलैर्धराधिपैः समं सह एत्या- गत्य शिरसा प्रणतः प्रणामं कृतवान् । कर्त्तरि क्तः । आशु तव शासनमाज्ञां करिष्यते त्वदाज्ञाकरो भविष्यति । कुतः यतः स चैद्यो- ऽस्मिन् अवसरे त्वयैव परवान् त्वदेकपरतन्त्रः । परुषस्तु । शिरसा प्रणतो नमस्कृतो नराधिपैरिति भावः । कर्मणि क्तः । भूपतिस्तव शासनं शास्तिं शिरसा करिष्यते यतस्त्वयैव परवान् मतिमान् त्वमेव

अधिवह्निपतङ्गतेजसो
नियतस्वान्तसमर्थकर्मणः ।
तव सर्वविधेयवर्त्तिनः
प्रणतिस्त्विभ्रति केन भूभृतः ॥ ५ ॥

जनताम्भयशून्यधीः परै-
रभिभूतामवलम्बसे यतः ।
तव कृष्ण ! गुणास्ततो नरै-
रसमानस्य दधत्यगण्यताम् ॥ ६ ॥

एवास्य शत्रुरवशिष्ट इति भावः । अन्यत् समम् । शासनं राजदत्तोर्व्यां लेखाज्ञायास्त्वयास्त्रिष्विति विश्वः ॥ ४ ॥

प्रणामे हेतुमाह । अधीति । अधिगतं वह्निपतङ्गयोरग्निभान्वोरिव तेजो येन तस्य तत्तुल्यतेजस इत्यर्थः नियतस्वान्तो नियतचित्तः स चासौ समर्थकर्मा च । खञ्जकुब्जवद्विशेषणसमासः । तस्य यथोक्तस्य सर्वे विधेयवर्त्तिनो वशवर्त्तिनः कर्मकरा यस्य तस्य तव के भूभृतः प्रणतिं नतिं न बिभ्रति सर्वेऽपि बिभ्रतीत्यर्थः । परुषस्तु । प्रणामे हेतुमाह । अधिवह्नि अग्नौ पतङ्गस्य शलभस्येव तेजः पौरुषं यस्य तस्य । पतङ्गः शलभे भानाविति विश्वः । नियते अव्यभिचारे स्वान्ते स्वविनाशे समर्थं हेतुभूतं कर्म यस्य तस्य सर्वेषां विधेये वर्त्तते विधेयं वर्त्तयति वा सर्वविधेयवर्त्तिनः सर्वकिङ्करस्य निष्पौरुषस्य तव केन गुणेन भूभृतः प्रणतिस्त्विभ्रति न केनापीत्यर्थः ॥ ५ ॥

जनतामिति । हे कृष्ण ! हे हरे ! भयशून्यधीर्निर्भीकचित्तः सन् परैः शत्रुभिरभिभूतां जनतां जनसमूहम् । ग्रामजनेत्यादिना समूहे तल्प्रत्ययः । यतोऽवलम्बसे परिगृह्णासि रक्षसीत्यर्थः । ततो हेतोर्नरैरसमानस्य सर्वोत्कृष्टस्य तव गुणाः आर्त्तभूभरणादयः अगण्यतामसङ्ख्येयतां दधति । परुषस्तु । हे मलिनात्मक ! भयशून्यधीर्मूढबुद्धिः परैस्त्वदन्यैः [illegible] वयोऽभिरसमात्मनोरित्युभय-

अहितादनपत्रपस्त्वस-
त्वतिमात्रोज्झितभीरनास्तिकः।
विनयोपहितस्त्वया कुतः
सदृशोऽन्यो गुणवानविस्मयः॥ ७॥
कृतगोपवधूरतेर्घ्नतो
वृषमुग्रे नरकेऽपि सम्प्रति।

त्वापि वैजयन्ती। अभिभूताम् अवधीरितां जनताम्भ्युपालनपार-
तन्त्र्यादिना पृथग्जनत्वम्। भावेऽर्थे तल्प्रत्ययः। यतोऽवलम्बसे
आश्रयसि। ततो नरैरसमानस्य ततोऽपि हीनस्येत्यर्थः। तत्र गुणाः
लेशतः स्वभावतोऽपीति भावः अगण्यतामनादरणीयतान्दधति॥ ६॥
अहितादिति। त्वया सदृशोऽन्यो गुणवान् गुणाढ्यः कुतः न
कुत्रापीत्यर्थः। कुतस्त्वम् अहितादनर्थात्त्रसनं अधर्मभीरुरित्यर्थः।
अपत्रपो निस्त्रपो न भवतीति अनपत्रपस्त्रपावान् अकार्य्यजुगुप्सु-
रित्यर्थः। अतिमात्रमत्यन्तमुज्झितभीस्त्यक्तारिभय इत्यर्थः। न
अस्ति मतिरस्येति नास्तिकः नास्तिपरलोकः। अस्तिनास्तिमतिरिति
ठक्। स न भवतीत्यनास्तिकः आस्तिक इत्यर्थः। विनयेनानौद्धत्ये-
नोपहितो विशिष्टः विनयवानित्यर्थः। विस्मयो विशिष्टगर्वो न भव-
तीति अविस्मयोऽगर्वः। परत्र तु। त्वया सदृशोऽन्यो गुणवान्न भव-
तीत्यगुणवान् निर्गुणः कुतः कुत्र न कुत्रापीत्यर्थः। त्वमहिताच्छत्रो-
स्त्रसन् भीरुः। नास्ति अपत्रपा लज्जाविशेषो यस्येत्यनपत्रपः
निर्लज्जः। लज्जा सापत्रपान्यत इत्यमरः। नतिमात्रेण प्रणामे-
नैवोज्झितभीरपाकृतारिभयः न तु पराक्रमेणेति भावः। अस्ति
मतिरस्येत्यस्तिकोऽस्तिपरलोकः। पूर्ववत् ठक्। स न भवतीत्य-
नास्तिकः नास्तिक इत्यर्थः विनयो नयातीतः अपहितो हितादपेतः
विस्मयो विगर्वो न भवतीति अविस्मयो गर्वी गर्वयुक्त इत्यर्थः।
अत्राहितादित्यर्थश्लेषः अन्यत्र शब्दश्लेष इत्यनयोः सङ्करः॥ ७॥

प्रतिपत्तिरधःकृतैनसो
जनताभिस्तव साधु वर्ण्यते ॥ ८ ॥
विहितापचितिर्महीभृता
द्विषतामाहितसाध्वसो बलैः ।
भव सानुचरस्त्वमुच्चकै-
र्महतामप्युपरि क्षमाभृताम् ॥ ९ ॥

कृतेति । गोप्य एव बध्वो गोपवध्वः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । तासु रतिः कृता येन तस्य गोपीजनवल्लभस्येत्यर्थः । वृषं वृषभरूपिणम् अरिष्टाख्यम् असुरं घ्नतो मारयतः । हन्तेर्लटः शत्रादेशः । अधःकृतैनसो निरस्तकल्मषस्य तवाधो भयङ्करे नरके नरकासुरे प्रतिपत्तिः प्रवृत्तिः पुरुषकार इति यावत् सम्प्रति जनताभि-र्जनसमूहैः साधु वर्ण्यते, अहो महद्दुष्करं कृतमित्युपश्लोक्यते । परत्र तु । गोपानां बधूषु रतिः कृता येन तस्य पारदारिकस्य वृषं धर्मं वृषभं वा घ्नतः । सुकृते वृषभे वृष इति विश्वः । अत एव कृतैनसः पापकृतः तेन अप्युदारुणे नरके निरये अधःप्रतिपत्तिरधः-प्राप्तिः । प्रतिपत्तिः पदप्राप्तौ पौरुषे गौरवेऽपि चेति विश्वः । जन-ताभिः साधु वर्ण्यते दुस्तरोऽस्य पापिष्ठस्य नरकपात इत्युद्घुष्यते इत्यर्थः । अत्र गोपपरदारिकोऽप्यधःकृतैना इति विरोधाभासः श्लेषेण सङ्कीर्यते ॥ ८ ॥

विहितेति । सहानुचरः सानुचरः सभृत्यो महीभृता चैद्येन विहितापचितिः कृतपूजः । लोकवेदयोः सानुचरस्यैव राज्ञः पूज्य-त्वप्रसिद्धेरिति भावः । अत एव बलैः सैन्यैर्द्विषतां शत्रूणामाहित-साध्वसो जनितभयः सन् महतामपि क्षमाभृतां राज्ञामुपरि उच्चकै-रुन्नतस्त्वं भव सर्वोत्कर्षेण वर्तस्व । परत्र तु । महीभृता चैद्येन विहिताप्रचितिः कृतहानिः । अवेदप्रचितिः पूजाव्ययहानिषु निष्कृ-तिति विश्वः । अत एव द्विषतां बलैराहितसाध्वसो भीषितः सन्

घनजालनिभैर्दुरासदाः
परितो नागकदम्बकैस्तव ।
नगरेषु भवन्तु वीथयः
परिकीर्णा वनजैर्मृगादिभिः ॥ १० ॥

सकलापिहितस्वपौरुषो
नियतव्यापदवर्द्धितोदयः ।
रिपुरुन्नतधीरचेतसः
सततव्याधिरनीतिरस्तु ते ॥ ११ ॥

महतां क्षमाभृतामथ धरायामुपरि सानुषु चरतीति सानुचरः स भय । चरेष्टः। अत्रापि शब्दार्थश्लेषसङ्करः ॥ ९ ॥

घनेति। तव नगरेषु वीथयो रथ्याः घनजालनिभैर्घनसमूहकल्पैः वनजैर्वनभवैर्मृगादिभिः मृगप्रभृतिभिर्भद्रो मन्द्रो मृगश्चेत्येवं त्रिविधैरपीत्यर्थः। नागकदम्बकैर्गजवृन्दैः परितः परिकीर्णाः व्याप्ताः अत एव दुरासदाः दुष्प्रवेशा भवन्तु। राज्ञां सम्पाने महैश्वर्यं च ते भविष्यतीत्यर्थः। परपक्षस्तु। घनजालनिभैः सान्द्रानायतुल्यैः। आनायः पुंसि जालं स्यादित्यमरः। नागकदम्बकैः सर्पसङ्घैर्वनगजैर्मृगादिभिर्मृगव्यालपुलिन्दप्रभृतिभिः। अथवा मृगादिभिः मृगभक्षकैः शार्दूलादिभिः दुरासदा भवन्तु राजविग्रहादरण्यप्रायं गता भवन्त्वित्यर्थः ॥ १० ॥

सकलेति। उन्नतमुदारं धीरमविकारं चेतो यस्य तस्य ते तव रिपुः सकलैरपिहितं तिरस्कृतं स्वपौरुषं यस्य सः। नियता नित्या व्यापदो विशिष्टापदो यस्य सः। अवर्द्धितोदयः असम्पूरिताभ्युदयः सततव्याधिः सततरोगः। अनीतिर्नीतिरहितः एवंविधोऽस्तु। परपक्षस्तु। अचेतसः अमनस्विनः ते रिपुश्चैद्यः सकलैरपिहितस्वपौरुषः अतिरस्कृतात्मविक्रमः। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यल्लोपे नञ्समासः। नियतं नित्यं व्यापद्वर्जितं यथा स्यात्तथा वर्द्धितोदयः अच्छिन्नो-

विकचोत्पलचारुलोचन-
स्तव चैद्येन घटामुपेयुषः ।
यदुपुङ्गव ! बन्धुसौहृदात्
त्वयि पाता ससुरो नवासवः ॥ १२ ॥

दयः । छिदुच्छेदने इत्यस्मादिति धातोः कर्मणि क्तः । उन्नतधीरुदार-बुद्धिः सततव्याधिविगताधिर्मनोव्यथारहितः । अनीतिरीतिबाधर-हितोऽस्तु । अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्या-सन्नाश्च राजानः षडेता ईतयः स्मृताः ॥ अत्र सर्वत्र पदभङ्गेनार्थ-द्वयप्रतिपादनाज्जतुकाष्ठवदेकशब्दप्रतीतेः शब्दश्लेषः ॥ ११ ॥

विकचेति । पुमान् गौरिव पुङ्गवः पुरुषर्षभः । उपमित-समासः । गोरतद्धितलुकीति समासान्तष्टच्प्रत्ययः । यदुषु पुङ्गव ! यदुश्रेष्ठ ! श्रेष्ठोत्थाणौ तु पुङ्गवाविति वैजयन्ती । चैद्येन कर्त्रा घटां घनसम्बन्धम् उपेयुषस्तव सम्बन्धीनि विकचोत्पलानि वासनार्थं विहितानि तान्येव चारुलोचनानि यस्य सः । सह सुरया माध्व्या गौड्या वा ससुरः । गौडी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधेति वचनात् । अत्र राजन्यवैश्ययोः पैष्ट्यामेव निषेधः । नवा-सवो नवमद्यं नालिकेरादिकमिति सुरासवयोर्न पौनरुक्त्यम् । बन्धु-सौहृदात् बन्धौ त्वयि स्नेहात् पाता पास्यते त्वद्गृहे सह पानं करिष्यते सम्प्रति ते सप्रतिपक्षत्वादिति भावः । पिबतेः कर्मणि लुट् । परुषस्तु । हे यदुपुङ्गव ! यादवबलीवर्द ! चैद्येन सह घटाम् उपेयुषः समराभियोगङ्गतस्य तव विकचोत्पलचारुलोचनः । ससुरः सदेवो वासवोऽपि बन्धुसौहृदात् उपेन्द्रे त्वयि सौभ्रात्रादित्यर्थः । पाता त्राता न किं पुनर्मशका भीष्मादय इति भावः । पातेस्तृच् । सुहृदयस्य भावः सौहृदमिति विग्रहः युवादित्वादण्प्रत्ययः हृदयस्य हृल्लेखेति हृद्भावविधानसामर्थ्यान्न हृद्भगेत्युभयपदवृद्धिः अत एव सौहृददौर्हृदशब्दाभ्यामणि हृद्भावाविति वामनः सुहृदस्तु सौहार्द-मेव । शब्दार्थश्लेषससुरः ॥ १३ ॥

चलितानकदुन्दुभिः पुरः
सबलस्त्वं सह सारणेन तम् ।
समितौ रभसादुपागतः
सगदः सम्प्रतिपत्तुमर्हसि ॥ १३ ॥

समरेषु रिपून् विनिघ्नता
शिशुपालेन समेत्य सम्प्रति ।
सुचिरं सह सर्वसात्वतै-
र्भव विश्वस्तविलासिनीजनः ॥ १४ ॥

चलितेति । रभसाद्धर्षादुपागतः प्राप्तस्त्वं चैद्यं त्वं पुरश्चलितानकदुन्दुभिः पुरोगतवसुदेवः । वसुदेवोऽस्य जनकः स एवानकदुन्दुभिरित्यमरः । सबलो बलभद्रसहितः । सारणेन सारणाख्येन पुत्रेण सह सगदः गदाख्येन अनुजेन सहितः समितौ सभायां सम्प्रतिपत्तुं सम्भावयितुम् अर्हसि सर्वबन्धुजनेनः प्रत्येतुमर्हसीत्यर्थः । परत्र्तु । समितौ समरे रभसाद्वेगादुपागतः । रभसो वेगहर्षयोः । समितिः समरे साम्ये सभायामपि संगतेत्युभयत्रापि विश्वः । तं चैद्यं पुरतः चलिता आनकाः पटहाः दुन्दुभयो भेर्य्यश्च यस्य सः । आनकः पटहोऽस्त्री स्यात्भेरी स्त्री दुन्दुभिः पुमानित्यमरः । सबलः ससैन्यः । सगदः गदया कौमोदक्या सहितः सन् सहसा झटिति । रणेन युद्धेन सम्प्रतिपत्तुमभियोक्तुमर्हसि । अत्रापि शब्दार्थश्लेषसङ्करः ॥ १३ ॥

समरेष्विति । किञ्च समरेषु रिपून् विनिघ्नता अतिशूरेणेत्यर्थः । शिशुपालेन समेत्यैक्यं प्राप्य सम्प्रति सुचिरं बहुकालं सत्वतः अपत्यानि पुमांसः सात्वताः यादवाः । उत्सादिभ्योऽञ् । तैः सर्वैः सर्वसात्वतैः सह विश्वस्तविलासिनीजनः शिशुपालभयनिवृत्तिविश्रब्धविलासिनीजनो भव । समौ विश्रब्धविश्वस्तावित्यमरः । परत्र्तु । रिपुघातिना शिशुपालेन सह समरेषु समेत्य सङ्गत्य सम्प्रत्येव सर्वसात्वतैः सह विश्वस्तविलासिनीजनो भव । विश्वस्ता विधवा समेत्यमरः । आदित-

विजितक्रुधमीक्षतामसौ
महतान्त्वा महितम्महीभृताम् ।
असकृज्जितसंयतम्पुरो
मुदितः सप्रमदम्महीपतिः ॥ १५ ॥

इति जोषमवस्थितं द्विषः
प्रणिधिङ्गामभिधाय सात्यकिः ।
वदति स्म वचोऽथ चोदितः
स्फुरितैकभ्रु रथाङ्गपाणिना ॥ १६ ॥

स्येति चकारादनुक्तसमुच्चयार्थात्क्लिशेर्निष्ठायामिट्प्रतिषेधः । शिष्टाना-मनुद्धतानामेवायं पालयिता नोद्धतानामिति सर्वथा यादृशानद्यैव हनिष्यतीति भावः ॥ १४ ॥

विजितेति । असौ महीपतिश्चैद्यः मुदितः सन् विजितक्रुधं मैत्रीवशाद्विरस्तक्रोधं महतां महीभृतां राज्ञां महितं पूजितम् । मतिबुद्धीत्यादिना वर्त्तमाने क्तः, तद्योगे षष्ठी । असकृदनेकशो जिताः संयतः आजयो येन स तम् । समुदायः स्त्रियां संयत्समित्याजिसमि-द्युध इत्यमरः । सप्रमदं सहर्षं त्वा त्वाम् । द्वितीयाया इति त्वादेशः । पुरोऽग्रे ईक्षतां पश्यतु । परुषस्तु । विजितक्रुधं संत्यक्तक्रोधं महतां महीभृतां चैद्यादीनामहितमरिमसकृज्जितश्चासौ संय-तश्च । स्नातानुलिप्तवत् पूर्वकालेति समासः । बद्धो नद्धश्च संयत इति वैजयन्ती । सप्रमदं सश्लोकं त्वामिति पदच्छेदः ईक्षताम् ॥१५॥

इतीति । इतीत्थम्भूतां गां वाचम् अर्जुनीनेत्रदिग्बाणभूवाग्वा-रिषु गौर्मतेति विश्वः । अभिधाय जोषमवस्थितम् । तूष्णीं जोषं भवेन्मौन इति वैजयन्ती । द्विषः प्रणिधिं दूतं सात्यकिः शैनेयः अथ दूतवाक्यानन्तरं रथाङ्गं चक्रं पाणौ यस्य तेन रथाङ्गपाणिना हरिणा । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति पाणेः परनिपातः । चलिता प्रेरिता एका भ्रूर्यस्मिन् कर्मणि तत् । गोस्त्रि-

मधुरं बहिरन्तरप्रिय-
कृतिनाऽवाचि वचस्तथा त्वया।
सकलार्थतया विभाव्यते
प्रियमन्तर्बहिरप्रियं यथा ॥ १७ ॥
अतिकोमलमेकतोऽन्यतः
सरसाम्भोरुहवृन्तकर्कशम्।
वहति स्फुटमेकमेव ते
वचनं शाकपलाशदेश्यताम् ॥ १८ ॥

योरुपसर्जनस्येति ह्रस्वः। चोदितः अस्योत्तरं देहीति भूसंज्ञया प्रेरितश्चेत्यर्थः वचो वदति स्माहादीव ॥ १६ ॥

किन्तद्वचस्तदेकविंशतिश्लोकैराह। मधुरमित्यादि। कृतिना कुशलेन त्वया बहिःप्रकाशे मधुरं प्रियम् अन्तर्गर्भे अप्रियं वचस्तथा तेन प्रकारेणावाचि उक्तम्। वचेः कर्मणि लुङि चिणि वृद्धिः। यथा येन प्रकारेण सकलार्थतया सम्पूर्णोभयार्थतया हेतुना अन्तःप्रियं बहिरप्रियं विभाव्यते अवधार्यतेऽप्रियगर्भं प्रियं यदुक्तं तदस्माकं तु प्रियगर्भमप्रियमेव प्रतीयते। दुरवबोधत्वात्तथ्यं तवैवेत्यभिप्रेत्योक्तं कृतिनेति अतो न श्रद्धेयमिदं वच इति भावः ॥ १७ ॥

अथवा बहिरेव प्रियम् अन्तरेवाप्रियं तथापि न ग्राह्यमित्युपमया व्यनक्ति। अतीति। एकतो बहिरतिकोमलम् अन्यतः अन्तः सरसमार्द्रं यदम्भोरुहस्य वृन्तं प्रसवबन्धनं तदिव कर्कशं परुषम् एकमेव ते तव वचनम् ईषदसमाप्तं शाकपलाशं सह पलाशेनरूपत्वं तत्तुल्यम्। शाकः पलाशसारः स्यात् वरटाहः करच्छदः। महापत्रो महाशाकः स्थिरदारुर्हनीटक इत्यभिधानरत्नमालायाम्। ईषदसमाप्तौ कल्पदेश्यदेशीय इति देश्यप्रत्ययः। कल्पदेश्यदेशीयानि सादृश्यवाचकानीति दण्डी। तस्य आवरणत्वं स्फुटं वहति। अन्तःपरुषस्य बहि-

प्रकटम्मृदु नाम जल्पतः
परुषं सूचयतोऽर्थमन्तरा ।
शकुनादिव मार्गवर्त्तिभिः
पुरुषादुद्विजितव्यमीदृशात् ॥ १९ ॥

हरिमर्चितवान् स भूपति-
र्यदि राज्ञस्तव कोऽत्र मत्सरः ।
न्यसनाय ससौरभस्य क-
स्तरुसूनस्य शिरस्यसूयति ॥ २० ॥

र्मधुर्य्यं शाकपलाशवदिति भावः । अत्र शाकदलाशोपमायाः पद्म-
दलोपमासापेक्षत्वात् सङ्करः ॥ १८ ॥

नन्वप्रियगर्भेऽपि वाक्ये गुणग्राहिभिः प्रियमेव ग्राह्यतां हंसैः
क्षीरमिवाम्भसीत्याशङ्क्याह । प्रकटमिति । प्रकटं प्रकाशं मृदु नाम
मृदुकल्पं जल्पतः कथयतः । अन्तरान्तः परुषमनिष्टमर्थं सूचयतः
ईदृशादन्तःशुद्धिशून्यात् पुरुषादीदृशः शकुनादिव वहिः शुभङ्करं
कुर्वतोऽन्तरा परुषं सूचयतः पिङ्गलादिपक्षिण इव मार्गवर्त्तिभिरध्व-
गैश्च उद्विजितव्यं सर्वांशतोऽपि ग्राह्यं विषसंपृक्तान्नवदखिलस्यानर्थ-
हेतुत्वादिति भावः । विज इडितीट्, किन्त्वाच्च गुणः ॥ १९ ॥

एवं दूतं निर्भर्त्स्य अथ चैद्यं तद्दोषोद्घाटनपूर्वकं भर्त्सयते ।
हरिमित्यादि । स भूपतिर्युधिष्ठिरो हरिमर्चितवान् यदि पूजित-
वांश्चेत् । अत्र ह्यर्चनेन तव राज्ञश्चैद्यस्य मत्सरः कः निरर्थक
इत्यर्थः । ससौरभस्य परिमलयुक्तस्य तरुसूनस्य । तरुपदं सूनस्य
साधारणताद्योतनार्थम् । शिरसि न्यसनायार्पणाय कोऽसूयति न
कोऽपीत्यर्थः । क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा । सर्वत्र गुणतरुस्तु
गुणज्ञैर्बहु मन्यते तटस्थानां किमत्र वृथा सन्तापेनेति भावः । अत्र
हरितरुसूनयोर्वाक्यद्वये विम्बप्रतिविम्बभावेनाचार्श्शिरोधारणरूपसमान-
धर्मनिर्देशात् दृष्टान्तालङ्कारः ॥ २० ॥

सुकुमारमहो लघीयसां
हृदयं तद्गतमप्रियं यतः ।
सहसैव समुद्गिरन्त्यमी
क्षपयन्त्येव हि तन्मनीषिणः ॥ २१ ॥

उपकारपरः स्वभावतः
सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाप्यहो
गुरुहृद्रोगकरी तदुन्नतिः ॥ २२ ॥

अथ कथं महान् महतः पूजां सहत इत्याशङ्क्य हरिचैद्ययोर्महदन्तरं मनसि निधाय सामान्यतः सुजनदुर्जनयोरन्तरं चतुर्भिराह । सुकुमारमित्यादि । लघीयसामल्पीयसां हृदयं सुकुमारं तनु कुतः यतोऽमी लघीयांसस्तद्गतं हृदयगतम् अप्रियं सहसैव झटित्येव समुद्गिरन्ति समुच्चारयन्ति मनीषिणस्तु तदप्रियं कथञ्चित् सम्भाव्यमानमपीति शेषः । अन्तरेव क्षपयन्ति जरयन्ति न तूद्गिरन्तीत्यर्थः । अहो इत्याश्चर्ये । चैद्यस्तूद्गिरति नैवं हरिरिति चाहो महदन्तरमनयोरिति भावः । अत एवाप्रस्तुतात् सामान्यात् प्रस्तुतविशेषप्रतिपत्तिरूपोऽयमप्रस्तुतप्रशंसाभेदः । अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रितेति लक्षणात् । आदिशब्दात्सामान्यविशेषसङ्ग्रहः । एवमुत्तरश्लोकत्रयेऽपि द्रष्टव्यं विशेषन्तु वक्ष्यामः ॥ २१ ॥

उपकारेति । किञ्च सज्जनः स्वभावतः सततं सर्वजनस्योपकारपरो भवति न तूपाधिवशात् कदाचित् कस्यचिदेवेति भावः । तथापि सर्वोपकारित्वेऽपि तदुन्नतिस्तस्य सज्जनस्योत्कर्षः असतामसाधूनामनिशं गुरुहृद्रोगकरी अत्यन्तहृदयसन्तापकारिणी अहो आश्चर्यम् । रुजार्थेत्यादिना ताच्छील्ये टप्रत्यये टिड्ढाणञित्यादिना ङीप् । हरिचैद्यावेवम्भूताविति सैवाप्रस्तुतप्रशंसा ॥ २२ ॥

परितप्यत एव नोत्तमः
परितप्तोऽप्यपरः सुसंवृतिः ।
परवृद्धिभिराहितव्यथः
स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥
अनिराकृततापसम्पदम्
फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवासतीं
प्रतिपद्येत कथम्बुधो जनः ॥ २४ ॥

परितप्यत इति । किञ्च उत्तमः परवृद्धिभिर्न परितप्यते न व्यथते एव उत्तमस्यापरशुभद्वेष एव नास्तीत्यर्थः । अपरो मध्यम एवेत्यर्थः परितप्तोऽपि शोभना संवृतिः परितापगोपनं यस्य सः सुसंवृतिः सन्नपि परशुभद्वेषं न प्रकाशयतीत्यर्थः । अधमस्तु परवृद्धिभिराहितव्यथः उत्पादितसन्तापः तथा स्फुटं निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः परशुभद्वेषं प्रकाशयत्येवेत्यर्थः चैद्यस्त्वाधमो हरिस्तूत्तम इति प्रतीतेः पूर्वोक्त एवालङ्कारः ॥२३॥

ननु मानिनां परोत्कर्षे परद्वेषो भूषणमेवेत्याशङ्क्य नेत्याह । अनिराकृतेति । अनिराकृता अनिवारिता तापसम्पत्तापातिशयो यया ताम् एकत्र सन्तापजननैकस्वभावादन्यत्रातपच्छायाविरहाच्चेति भावः । तथा फलहीनाम् एकत्र दृष्टादृष्टोपकारशून्यां प्रत्युतो भयत्वाप्यनर्थकरीं चेति भावः । अन्यत्र सर्वार्थरहितां सुमनोभिर्बुधैरुज्झिताम् अन्यत्र पुष्पैर्वर्जिताम् । सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमानिति वैजयन्ती । असतीं दुष्टाम् अन्यत्र निरुपाख्यां खलस्य भावः खलता तां खलतां दुर्जनत्वम् । खस्य लता तां खलतां गगनलतिकामिव बुधो जनः सदसद्विवेककुशलो जनः कथं प्रतिपद्येताश्रयेत न कथमपीत्यर्थः । इत्था मत्सरो न कस्यापि गुण इति भावः । तथापि न खलतां प्रतिपद्यते न चैवं हरिरिति प्रतीतेः

प्रतिवाचमदत्त केशवः
शपमानाय न चेदिभूभुजे।
अनुहुङ्कुरुते घनध्वनि-
न्नहि गोमायुरुतानि केशरी ॥ २५ ॥

जितरोषरया महाधियः
सपदि क्रोधजितो लघुर्जनः।
विजितेन जितस्य दुर्मते-
र्मतिमद्भिः सह का विरोधिता ॥ २६ ॥

सैवाप्रस्तुतप्रशंसा खलतामित्युपमया सङ्कीर्यते। सत्यं न सत्यपि ध्यानमर्थे शङ्कः करोति हानि न्यायादसत्या अपि खलतिकायाः प्रतीतिसत्यतया खलतोपमत्वप्रसिद्धिः ॥ २४ ॥

नन्वेवं महानुभावो हरिः किमर्थं तथा सदसि राज्ञा निर्भर्त्स्यमानो मौनमास्थित इत्याशङ्क्य सत्यमनादरान्न तु कातर्यादित्याह। प्रतीति। केशवः शपमानाय क्रोशते। स्वरितेत्त्वादात्मनेपदम्। चेदिभूभुजे। क्रियाग्रहणात् सम्प्रदानत्वम्। प्रतिवाचं प्रत्युत्तरं नादत्त। केशरी सिंहो घनध्वनिमनुहुङ्कुरुते प्रतिगर्जति गोमायुरुतानि शिवारुतानि नानुहुङ्कुरुते। स्त्रियां शिवा भूरिमाय गोमायुमृगधूर्तका इत्यमरः। महतामधमेष्ववज्ञैव नीतिरिति भावः। दृष्टान्तालङ्कारः ॥ २५ ॥

किञ्च राज्ञो हरिणा विरोधोऽपि न योग्य इत्याह। जितेति। महाधियः सुधियो जितो रोषरयो यैस्ते तथोक्ताः। लघुरल्पो जनस्तु सपदि क्रोधजितः विजितेन जितक्रोधेन जितस्येत्यर्थः। दुर्मतेर्मूर्खस्य मतिमद्भिः पण्डितैः सह विरोधिता स्पर्द्धा का। मूर्खपण्डितयोर्मैत्रीव स्पर्द्धापि न सङ्गतेत्यर्थः। मूर्खश्चायं चैद्य इति अप्रस्तुतात् सामान्यात् विशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २६ ॥

वचनैरसतां महीयसो
न खलु व्येति गुरुत्वमुद्धतैः ।
किमपैति रजोभिरौर्वरै-
रवकीर्णस्य मणेर्महार्घता ॥ २७ ॥

परितोषयिता न कश्चन
स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः
स्वजनं तोषयितुं किलेच्छति ॥ २८ ॥

सहजान्धदृशः स्वदुर्नये
परदोषेक्षणदिव्यचक्षुषः ।

नापि चैद्यप्रलापैः कृष्णस्य किञ्चिल्लाघवमित्याशयेनाह । वचनै-रिति । उद्धतैर्निष्ठुरैरसतां दुर्जनानां वचनैर्महीयसो महत्तमस्य गुरुत्वं गौरवं न व्येति नापैति खलु । और्वरैर्भौमैः । उर्वरा सर्व-शस्याढ्यभूमौ स्याद्भूमिमात्रक इति विश्वः । रजोभिरवकीर्णस्य छन्नस्य मणेर्महार्घता महामूल्यत्वम् । मूल्ये पूजाविधावर्घ इत्यमरः । अपैति किं नापैत्येवेत्यर्थः । अत्र मणिमहीयसोर्वाक्यभेदेन प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः । महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्र-स्तुतप्रशंसा चेति सङ्करः हरिमण्योरुपमाध्वनिश्च ॥ २७ ॥

युक्तश्चैतत्पारुष्यं दुरात्मनामित्याह । परीति । यस्य देहिनो जन्तोः परितोषयिता परेषामानन्दयिता स्वगतो गुणः कश्चन कश्चि-दपि नास्ति अल्पकः तुच्छः स इति शेषः । यत्तदोर्नित्यसम्बन्धात् । परदोषकथाभिरन्यजनदोषोक्तिभिः स्वजनं न तु मध्यस्थमिति भावः । तोषयितुमिच्छति किल ईहते खलु । चैद्यस्यापि निर्गुणत्वात्पर-दूषणं युक्तमिति अत एवाप्रस्तुतप्रशंसाभेदः ॥ २८ ॥

नन्वात्मनो निर्दोषत्वमभ्यर्थितव्यं किं परदूषणेनेत्याशङ्क्याह ।

स्वगुणोच्चगिरो मुनिव्रताः
परवर्णग्रहणेष्वसाधवः ॥ २९ ॥

प्रकटान्यपि नैपुणम्महत्
परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान्
भृशमाकौशलमार्य्यचेतसाम् ॥ ३० ॥

किमिवाखिललोककीर्त्तित-
ङ्कथयत्यात्मगुणम्महामनाः ।

सहजेति । असाधवः खलाः स्वदुर्नये स्वदोषे सहत्यपीति भावः । सहजा स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते जात्यन्धा इत्यर्थः । परदोषाणां सूक्ष्माणामपीति भावः । ईक्षणे दर्शने दिव्यचक्षुषोऽप्रतिहतदृष्टयः । किञ्च स्वगुणेषूच्चगिरः आत्मप्रशंसायामतिप्रगल्भवाच इत्यर्थः परवर्णग्रहणेषु परस्तुतिवचनेषु । स्तुतौ वर्णन्तु वाचर इत्यमरः । मुनिमव्रता मौनव्रतिनः । अर्शादिभ्योऽच् । चैद्यस्त्वेवंविध इति प्रतीतेरप्रस्तुतप्रशंसा ॥ २९ ॥

साधवस्तु नैवमित्याह । प्रकटानीति । आर्य्यचेतसां सुमनसां प्रकटान्यपि परवाच्यानि परदूषणानि चिराय गोपितुं गोपायितुं संवरितुमित्यर्थः । आयादय आर्द्धधातुके वेति विकल्पादायप्रत्ययाभावः । महन्नैपुणं कौशलम् । अथेति वाक्यारम्भे । अथात्मनो गुणान् विवरीतुं प्रकटयितुम् आत्मप्रशंसां कर्त्तुमित्यर्थः भृशमाकौशलमत्यन्तमकौशलं साधवो न परान्निन्दन्ति न वात्मानं प्रशंसन्ति । आत्मप्रशंसां परगर्हामिव वर्जयेदित्यापस्तम्बीये निषेधस्मरणादिति भावः । नञः शुचिश्वरक्षेत्रज्ञकुशलनिपुणानामिति विकल्पान्नञ्, पूर्वपदस्यापि वृद्धिः । कृष्णस्त्वेवंभूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥ ३० ॥

किमिति । किञ्च महामना महात्मा । अखिललोककीर्त्तितं स्वत एव सर्वलोकप्रख्यातमात्मगुणं किमिव किमर्थं कथयत्येवं स्वत एव

वदिता न लघीयसोऽपरः
स्वगुणं तेन वदत्यसौ स्वयम् ॥ २१ ॥
विसृजन्त्यविकत्थिनः परे
विषमाशीविषवन्नराः क्रुधम् ।
दधतोऽन्तरसाररूपतां
ध्वनिसाराः पटहा इवेतरे ॥ २२ ॥
नरकच्छिदमिच्छतीक्षितुं
विधिना येन स चेदिभूपतिः ।

सर्वैः लोकैः कीर्त्यमानत्वादित्यर्थः । लघीयसस्तुच्छस्य तु स्वगुणं वदिता वक्ता । वदेस्तृच्प्रत्ययः । अत एव न लोकेत्यादिना षष्ठीप्रतिषेधः । अपरोऽन्यो नास्ति तेन कारणेनासौ लघीयान् स्वगुणं स्वयमेव वदति न केवलं निषेधात् किन्तु प्रयोजनाभावादपि महान् आत्मप्रशंसां न करोति तुच्छस्तु वक्त्रन्तरासम्भवात् स्वयमेव तां प्रलपतीत्यर्थः । पूर्वार्द्धे पदार्थहेतुकं काव्यलिङ्गम् उत्तरार्द्धे वाक्यार्थहेतुकं चोन्नेयम् । कृष्णचैद्यौ चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ॥ २१ ॥

किञ्च महात्मानः क्रुद्धाः काले पराक्रमन्ति दुरात्मानस्तु केवलं प्रलपन्तीत्याह । विसृजन्तीति । परे नराः सत्पुरुषाः विषमाशीविषवत् क्रूरसर्पवदित्युपमा । अविकत्थिनो नात्मश्लाघिन एव क्रुधं क्रोधं विसृजन्ति वमन्ति पराक्रमन्तीत्यर्थः । अन्तरभ्यन्तरे असाररूपतां निःसाररूपतां दधतो दधानाः । नाभ्यस्ताच्छतुरिति नुमभावः । इतरे जना दुर्जनाः पटहा इव ध्वनिरेव सारो बलं येषां ते ध्वनिसारा वाक्शूरा एव न तु बाहुबलशालिन इति भावः । अत्रापीदृशौ कृष्णचैद्यावित्यप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २२ ॥

अभिधाय तदा तदप्रियमित्यादि [illegible] युगपत्प्रियाप्रियेऽभि-

हुतमेतु न ह्यापयिष्यते
सदृशन्तस्य विधातुमुत्तरम् ॥ ३३ ॥
समनह्य किमङ्ग! भूपति-
र्यदि सन्धित्सुरसौ सहामुना।
हरिराक्रमणेन सन्नति-
ङ्किल बिभ्रीत भियेत्यसम्भवः॥ ३४ ॥
महतस्तरसा विलङ्घयन्
निजदोषेण कुधीर्विनश्यति।

इति तत्रोत्तरमाह। नरकेति। स मही्पतिश्चेदिभूपतिर्येन विधिना येन प्रकारेण सन्धिना विग्रहेण वा। नरकच्छिदं नरकस्यान्तकं किमन्यैषामशक्तानामिति भावः। ईप्सितम् इच्छति तस्य विधेः सदृशमुत्तरं प्रतिक्रिया स्नेहो विरोधो वा विधातुं न ह्यापयिष्यते अविलम्बेन विधास्यत इत्यर्थः। जहातेर्ण्यन्तात् कर्मणि लृट्, विधानक्रियया अनभिधानेऽपि प्रधानभूतक्रियया अभिहितत्वादुत्तरमिति न कर्मणि द्वितीया। द्रुतं शीघ्रमेतु आगच्छतु आगमने स्वयमेव ज्ञायत इति भावः॥ ३३॥

नन्वभिधायेत्यादौ मया सान्त्वमेव विवक्षितं न विग्रहस्तत् किमुभयाभ्यनुज्ञयेत्याशङ्क्याह। समनह्येति। अङ्गेत्यामन्त्रणे। असौ भूपतिश्चेद्योऽमुना हरिणा सह सन्धित्सुर्यदि सन्धातुमिच्छुश्चेत्। दधातेः सन्नन्तादुप्रत्ययः। किं समनह्य किमर्थं सन्नद्धवान् ततो नायं सन्धित्सुरिति भावः। नह्यतेः स्वरितेत्त्वात् कर्त्तरि लुङि तङ्, झलो झलीति सकारलोपः। कृष्णभीषणार्थं सनाह इत्यत आह। हरिः कृष्णस्य किलाक्रमणेनाभिभवेन या भीस्तया सन्नतिं नम्रतां बिभ्रीत बिभृयादित्यसम्भवः सम्भवो नास्ति खलु इत्यर्थः॥ ३४॥

अथाक्रमणेऽनिष्टमाह। महत इति। कुधीरासन्नविनाशत्वाद्विपरीतबुद्धिमान् महतो महानुभावान् तरसा बलेन। तरसा बल-

कुरुते न खलु स्वयेच्छया
शलभानिन्धनमिद्धदीधितिः ॥ ३५ ॥
यदपूरि पुरा महीपति-
र्न मुखेन स्वयमागसां शतम् ।
अथ सम्प्रति पर्य्यपूपुरत्
तदसौ दूतमुखेन शार्ङ्गिणः ॥ ३६ ॥
यदनर्गलगोपुराननः
स्त्वमितो वक्ष्यसि किञ्चिदप्रियम् ।

रंहसी इति विश्वः । विलङ्घयन्नाक्रामन् निजदोषेण स्वापराधेनैवो-ल्लङ्घनरूपेण विनश्यति । तथाहि, इद्धदीधितिर्दीप्तार्चिरग्निः स्वया निजयेच्छया शलभान् पतङ्गान् । समौ पतङ्गशलभाविल्यमरः । इन्ध-नन्दाह्यञ्च कुरुते खलु किन्तु ते एव निजौद्धत्यान्निपत्य दह्यन्त इत्यर्थः इतः परन्न क्षम्यत इति भावः । दृष्टान्तालङ्कारः ॥ ३५ ॥

नन्वसहने शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गः स्यादित्यताह । यदिति । पुरा पूर्वं महीपतिश्चैद्यो मुखेन स्ववाचा यत् आगसाम् अप-राधानां शतम् । आगोऽपराधो मन्तुश्चेत्यमरः । शार्ङ्गिणः कृष्णस्य स्वयं नापूरि नापूरयदित्यर्थः । पूरयतेः कर्त्तरि लुङ्, दीपजनेत्या-दिना विकल्पाच्चिण्प्रत्यये तलो लुक् । अथ स्वप्रलापानन्तरं सम्प्रती-दानीमसौ चैद्यः दूतमुखेन दूतवाचा तत् आगसां शतं पर्य्यपूपुरत् परिपूरयामास । दूतमुखत्वात् राज्ञां तेन कृष्णक्रोधावसरदानेन मह-दुपकृतमायुष्मतेति भावः । पूरयतेर्लुङि णौ चङ्युपधाया ह्रस्व अभ्या-सदीर्घः ॥ ३६ ॥

निगमयन् फलितमाह । यदिति । अनर्गलमसम्बन्धमसंवृत-मिति यावत् । तद्विष्कम्भोऽर्गलं न नेत्यमरः । यद्गोपुरं पुरद्वारं तदिवाननं यस्य स वाच्यावाच्यविवेकशून्य इत्यर्थः । त्वमितः इतः परं यदप्रियं वक्ष्यसि तदप्रियं चिरस्य चिरात्स्यति । चिराय चिर-

विवरिष्यति तच्चिरस्य नः
समयोद्दीच्छ्यरचितां क्रुधम् ॥ ३७ ॥
निशमय्य तदूर्जितं शिने-
र्वचनवप्नुवनाप्नुरेनसाम् ।
पुनरुज्झितसाध्वसं द्विषा-
मभिधत्ते स्म वचो वचोहरः ॥ ३८ ॥
विविनक्ति न बुद्धिदुर्विधः
स्वयमेव स्वहितम्पृथग्जनः ।
यदुदीरितमप्यदः परै-
र्न विजानाति तदद्भुतम्महत् ॥ ३९ ॥

रात्राय चिरस्याद्याश्चिरार्थका इत्यव्ययेष्वमरः । समयोद्दीच्छ्येन संवित्प्रतीच्छ्येन रचितां कृतामित्यर्थः । समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः । क्रुधं क्रोधं विवरिष्यति । इतो वेति दीर्घविकल्पः । इतः परं त्वमपि दण्ड्य एवेति भावः ॥ ३७ ॥

निशमय्येति । एनसामनाप्नुः अस्पृष्टः सत्यवादिन इति भावः । आप्नोतेस्तृच् । शिनेर्नाम्नः कस्यचिद्यादवस्य नप्तुः पौत्रस्य सात्यकेरिति भावः । तदूर्जितम् अर्थयुक्तं वचनं निशमय्य श्रुत्वा । ल्यपि लघुपूर्वादिति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वसं त्यक्तभयं यथा तथा द्विषाम् । वचो हरतीति वचोहरो दूतः । हरतेरनुद्यमनेऽच् । वचोऽभिधत्ते स्म अभिहितवान् ॥ ३८ ॥

विविनक्तीति । बुद्ध्या दुर्विधो दरिद्रः बुद्धिशून्य इत्यर्थः । निस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतश्च स इत्यमरः । पृथग्जनः पामरजनः स्वयमेव परोपदेशं विनैवात्महितं न विविनक्ति तद्युक्तमेवेति भावः । किन्तु परैरुदीरितम् उपदिष्टमप्यदो हितं न विजानातीति यत् तन्महदद्भुतम् । यतः सूक्तं न गृह्णातीति भावः ॥ ३९ ॥

विदुरेष्यदपायमात्मना
परतः श्रद्दधतेऽथवा बुधाः ।
न परोपहितन्न च स्वतः
प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥

कुशलङ्खलु तुभ्यमेव त-
द्वचनङ्कृष्ण ! यदभ्यधामहम् ।
उपदेशपराः परेष्वपि
स्वविनाशाभिमुखेषु साधवः ॥ ४१ ॥

अथ किमङ्गुतं मूर्खैश्चित्याशयेनाह । विदुरिति । बुधाः बुद्धिमन्तः एष्यन्तमागामिनम् अपायमनर्थमात्मना स्वयमेव । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । विदुर्विदन्ति । विदो लटो वेति विकल्पाज्जुसादेशः । अथवा परतोऽन्यस्मादाप्तात् श्रद्दधते विश्वसन्ति आप्तोक्तं गृह्णन्तीत्यर्थः । श्रदन्तरोपसङ्ख्यानमिति उपसर्गसंज्ञोपसङ्ख्यानाद्धातोः प्राक् प्रयोगः । अल्पधीर्मूढस्तु अनुभवादृते स्वानुभवं विना । अन्यारादितरर्त्ते इति पञ्चमी । न प्रमिमीते न जानाति अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः अधमस्त्वमिति भावः । अतएवाप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ४० ॥

अतः प्रस्तुते किमायातं तत्राह । कुशलमिति । हे कृष्ण ! अहं यद्वचनमभ्यधाम् अभिप्रायेत्यादिना राज्ञां सन्धिर्गुणाय विग्रहस्त्वनर्थायेत्येवमवोचमित्यर्थः । तद्वचनं तुभ्यमेव कुशलं हितम् । चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरिति चतुर्थी । नन्वहितेषु हितोपदेशात्प्रत्ययः कथमित्याशङ्कामर्थान्तरन्यासेन परिहरति । साधवः सुजनाः स्वविनाशाभिमुखेषु प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः । परेषु शत्रुष्वपि उपदेशपराः उपदिशन्त्येव कृपालुतयेति भावः ॥ ४१ ॥

उभयं युगपन्मयोदित-
न्त्वरया सान्त्वमथेतरच्च ते।
प्रविभज्य पृथङ्मनीषया
स्वगुणं यत्किल तत्करिष्यसि ॥ ४२ ॥
अथवाभिनिविष्टबुद्धिषु
व्रजति व्यर्थकतां सुभाषितम्।
रविरागिषु शीतरोचिषः
करजालङ्कमलाकरेष्विव ॥ ४३ ॥
अनपेक्ष्य गुणागुणौ जनः
स्वरुचिन्निश्चयतोऽनुधावति।

तथापि अर्थद्वये त्वद्वाक्ये किङ्ग्राह्यं तत्राह। उभयमिति। मया सान्त्वं सामादि। अथेति पश्चान्तरे इतरदसान्त्वं विग्रहश्चेत्यर्थः। युगपदुदितं त्वन्तु मनीषया बुद्ध्या पृथग्भेदेन प्रविभज्य विविच्य यत् स्वगुणं तत्र द्वयेऽपि त्वरया यच्छुभोदर्कं तत् करिष्यसि किल खलु हंसः क्षीरमिवाम्भसीति भावः ॥ ४२ ॥

अथवा सुजनस्वभावात् कृतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह। अथवेति। अथवा अभिनिविष्टबुद्धिषु दुराग्रहग्रस्तचित्तेषु विषये सुभाषितं हितोपदेशवचनं रविरागिषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां निरर्थकतां व्रजति। तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥ ४३ ॥

नन्वभिनिविष्टोऽपि सुजनैर्बलादपि हिते प्रवर्त्तयितव्य इत्याशङ्क्य न शक्यत इत्याह। अनपेक्ष्येति। जनस्तादृशः पृथग्जनः। गुणागुणौ गुणदोषौ। विप्रतिषिद्धञ्चानधिकरणवाचीति विभाषया न द्वन्द्वैकवद्भावः। अनपेक्ष्याविमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छामनुधावति न तु स्वहितमनुसरतीत्यर्थः। तत्र पार्थ एव

अपहाय महीशमार्चिचत्
सदसि त्वामनु भीमपूर्वजः ॥ ४४ ॥
त्वयि भक्तिमता न सत्कृतः
कुरुराजा गुरुरेव चेदिपः ।
प्रियमांसमृगाधिपोज्झितः
किमवद्यः करिकुम्भजो मणिः ॥ ४५ ॥
क्रियते धवलः खलूच्चकै-
र्धवलैरेव सितेतरैरधः ।
शिरसौघमधत्त शङ्करः
सुरसिन्धोर्मधुजित्पदम्भसा ॥ ४६ ॥

प्रमाणमित्याह । भीमपूर्वजः भीमाग्रजो युधिष्ठिरः मूर्खाग्रणीरिति भावः । महीशं चेदिपम् अपहाय सदसि त्वामार्चिचत् अर्चितवान् खलु । अर्चयतेर्णौ चङि अजादेर्द्वितीयस्य नन्द्राः संयोगादय इति रेफवर्जितस्यैकाचो द्विर्भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४४ ॥

पार्थानादरादेव राज्ञो लाघवं ज्ञेयमित्याशङ्क्य परिहरति । त्वयीति । हे कृष्ण ! त्वयि भक्तिमता प्रेमवता । कुरूणां राट् । सत्सूद्विषेत्यादिना क्विप् । तेन कुरुराजा कुरुराजेन पार्थेन न सत्कृतो नार्चितश्चेदिपो गुरुरेव पूज्य एव । तथाहि, प्रियं मांसं यस्य तेन मांसलुब्धेन मृगाधिपेन सिंहेनोज्झितस्त्यक्तः । करिकुम्भजो मणिर्मुक्तामणिरवद्यो गर्ह्यः किम् अनवद्य एवेत्यर्थः मूर्खानादरान्महतां किञ्चिल्लाघवमित्यर्थः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समा इत्यमरः । अवद्यपण्येत्यादिना निपातः । दृष्टान्तालङ्कारः ॥४५॥

विदुषां तु पूज्य एव चैद्य इत्याशयेनाह । क्रियत इति । धवलो निर्मलो धवलैर्निर्मलैरेव उच्चकैरुच्चतः क्रियते खलु । सितेतरै-

अबुधैः कृतमानसंविद-
स्तव पार्थैः कुत एव योग्यता।
सहसि प्लवगैरुपासित-
न हि गुञ्जाफलमेति सोष्मताम्॥ ४७॥
अपराधशतक्षमं नृपः
क्षमयात्येति भवन्तमेकया।
हृतवत्यपि भीष्मकात्मजा-
न्त्वयि चक्षाम समर्थ एव यत्॥ ४८॥

मलिनैरधः क्रियते। तथाहि, शङ्करः शिवः सुरसिन्धोरोघं मन्दाकिनीपूरं शिरसा अधत्त उभयोर्निर्मलत्वादिति भावः। मधुहा विष्णुस्तु तमोघम् अङ्घ्रिणा अधस्त स्वयं मलिनत्वादिति भावः। अतो विशेषविदुषां राजा पूज्य एवेति भावः। विशेषेणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ४६॥

किञ्च यथा मूर्खानादराद्राज्ञो न किञ्चिल्लाघवं तथा तदादराच्च न किञ्चिद्गौरवमित्याह। अबुधैरिति। अबुधैरज्ञैः पार्थैः कृतमानसंविदो पूजातोषणे यस्य तस्य। संविद् स्त्रियां प्रतिज्ञायां संकेताचारनामसु। सम्भाषणे तोषणे चेति विश्वः। तव योग्यता कुत एव न कुतोऽपीत्यर्थः। तथाहि, सहसि मार्गशीर्षे। मार्गशीर्षे सहामार्ग इत्यमरः। प्लवगैरुपासितं सेवितं गुञ्जाफलं काकफलानि। जातावेकवचनम्। काकचिञ्चीगुञ्जे तु कृष्णलेत्यमरः। सोष्मतामुष्णतामेति न हि पुंसां मूढपरिग्रहापरिग्रहौ गौरवागौरवयोः प्रयोजकावित्यर्थः। अत्र कृष्णगुञ्जाफलयोर्विशेषयोरेव वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः॥ ४७॥

यदपूरीत्यादिना यत्सात्यकिना शतापराधक्षमत्वमुक्तं तत्रोत्तरमाह। अपरामेति। नृपश्चैद्यः अपराधस्य शतक्षमं राज्ञः शतापराधसहिष्णुं भवन्तम्। एकया क्षमया एकापराधसहनेनेत्यर्थः।

गुरुभिः प्रतिपादितां वधू-
मपहृत्य स्वजनस्य भूपतेः ।
जनकोऽसि जनार्दन ! स्फुटं
हृतधर्मार्थतया मनोभुवः ॥ ४९ ॥

अनिरूपितरूपसम्पद-
स्तमसो वान्यभृतच्छदच्छवेः ।

अत्येति अतिक्रामति । अपराधकोटीनामपि तदंशेनापि साम्याभा-वादिति भावः । तामेव क्षमां दर्शयति । त्वयि भीष्मकात्मजां रुक्मि-णीं हरत्यपि समर्थः प्रतीकारक्षम एव सन्नपि चक्षाम क्षाम्यति स्मेति यत् तदा क्षमेत्यर्थः ॥ ४८ ॥

राक्षसः क्षत्रियस्यैवमिति स्मरणात् राक्षसोद्वाहस्य क्षात्रधर्मत्वा-द्रुक्मिणीहरणे कोऽस्माकमपराधः राज्ञो या कापि क्षमेत्याकाङ्क्षाया-माह । गुरुभिरिति । हे जनार्दन ! गुरुभिः पित्रादिभिः प्रति-पादितां राज्ञे दत्ताम् अत एव स्वजनस्य बन्धोर्भूपतेर्महाराजस्य वधूं जायामपहृत्य । हृतौ धर्मार्थौ येन तत्तया हेतुना हृतधर्मार्थ-तया स्फुटं मनोभुवः कामस्य जनकोऽसि हृतधर्मार्थतया काममात्र-निष्ठोऽसीत्यर्थः । नायं राक्षसो विवाहः । हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं तथा । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥ इति कन्याहरणस्य राक्षसत्वलक्षणात् । अयन्तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो पापिष्ठस्य कामान्धस्य ते परमसाहसिक-त्वमिति भावः ॥ ४९ ॥

सत्यमीदृगेवाहं ततः किमित्याशङ्क्य किमन्यद्वधादित्याह । अनि-रूपितेति । अनिरूपितरूपसम्पदः शैलूषवद्बहुरूपधारित्वादत्र त-द्रूपमिदमित्यवाङ्मनसगोचररूपवैभवस्येति च गम्यते । अन्यत्र आरो-पितकृष्णरूपं तमः तेजोविशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणा-न्तरसिद्धरूपसम्पद इत्यर्थः । अन्यभृतच्छदच्छवेः कोकिलपक्षकान्तेस्त

तव सर्वगतस्य सम्प्रति
क्षितिपः क्षिप्नुरभीशुमानिव ॥ ५० ॥
क्षुभितस्य महीभृतस्त्वयि
प्रशमोपन्यसनं वृथा मम।
प्रलयोल्लसितस्य वारिधेः
परिवाहो जगतः करोति किम् ॥ ५१ ॥
प्रहितः प्रधनाय माधवा-
नहमाकारयितुम्महीभृता।
न परेषु महौजसश्छला-
दपकुर्वन्ति मलिम्लुचा इव ॥ ५२ ॥

तमसो वा तिमिरस्येव। वा स्यात् विकल्पोपमयोरिति विश्वः। सर्वगतस्य क्षितिपश्चेदिपोऽभीशुमानंशुमानिव सम्प्रतीदानीमेव क्षिप्नुः क्षेप्ता आच्छन्नेत्यर्थः शास्तासौ दुरात्मनामिति भावः। त्रसिगृधिधृषिक्षिपेः क्नुरिति क्नुप्रत्ययः। न लोकेत्यादिना कृद्योगे षष्ठ्या निषेधे शेषे षष्ठी पर्य्यवसानात्तु कर्मत्वलाभः। अभीशुः प्रग्रहे रश्मा-वित्यमरः। विश्वप्रकाशादयः सर्वेऽप्याभिधानिका मूर्द्धन्यान्तेषु पेठुः लोकवेदयोस्तालव्यान्तो दृश्यते। अभीशूनां सहितमित्यादि ॥ ५० ॥

तर्हि त्वदर्थं त्वया राजा सान्त्वयितव्य इत्याशङ्क्य नेत्याह। क्षुभि-तस्येति। त्वयि विषये क्षुभितस्यातिक्रुद्धस्य महीभृतो राज्ञो मम प्रश-मोपन्यसनं शान्तोपदेशो वृथा निष्फलः। तथाहि, प्रलयोल्लसितस्य कल्पान्तक्षुभितस्य वारिधेः जगतः परिवाहो जगत्कृतो जलनिर्गममार्गः किङ्करोति न किञ्चिदित्यर्थः। दृष्टान्तालङ्कारः ॥ ५१ ॥

तर्हि सन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितस्तत्राह। प्रहित इति। प्रधनाय युद्धाय माधवान् यादवानाकारयितुमाह्वातुम्। युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्। हूतिराकारणाह्वानमिति

तदयं समुपैति भूपतिः
पयसाम्पूर इवानिवारितः ।
अविलम्बितमेधि वेतस-
स्तरुवन्माधव ! मा स्म भज्यथाः ॥ ५३ ॥
परिपाति स केवलं शिशू-
निति तन्नामनि मा स्म विश्वसीः ।
तरुणानपि रक्षति क्षमी
स शरण्यः शरणागतान्द्विषः ॥ ५४ ॥

चामरः । महौजसा राज्ञाहं प्रहितः प्रेरितः ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत्राह । नेति । महौजसो महावीराः परेष्वरिषु मलिम्लुचाः पाटच्चरा इव । पाटच्चरमलिम्लुचा इत्यमरः । छलात् कपटात् नापकुर्वन्ति । तस्मादाह्वानं कर्त्तव्यमिति वाक्यार्थहेतुकङ्काव्यलिङ्गमुपमालङ्कारसङ्कीर्णम् ॥ ५२ ॥

तदेवागमनप्रयोजनमुक्त्वा हितमुपदिशति । तदयमिति । तस्माद्युद्धार्थत्वादयं भूपतिश्चैद्यः पयसाम्पूरः प्रवाह इवानिवारितः समुपैति, हे माधव ! अविलम्बितं शीघ्रं वेतसः एधि भव तद्वत्तस्मादात्मानं रक्षेत्यर्थः । अस्तेर्लोट् सिपि हेर्धिः ध्वसोरेद्धावभ्यासलोपश्चेति एत्वं धि चेति सकारलोपः । माधव ! त्वं तरुवत् महाद्रुमवत् मा स्म भज्यथा मा भज्यस्व अतः आत्मानं विनाशयेत्यर्थः । भञ्जेः कर्मण्याशिषि लिङः स्मोत्तरे लङ् चेति लङ् न माङ्योगे इत्यडभावः । उपमालङ्कारः ॥ ५३ ॥

ननु राज्ञि शिशुपाले यूनामफलमित्याशङ्क्याह । परिपातीति । स शिशुपालः केवलमित्यवधारणे क्रियाविशेषणम् । शिशून् परिपातीति शिशूनेव पालयतीति तन्नामनि तस्य शिशुपालसंज्ञायां मा स्म विश्वसीः मा विश्वासं कुर्वित्यर्थः । श्वसेः स्मोत्तरे लङ् चेति लङि रुदश्च पञ्चभ्य इति ईडागमः । चकाराल्लुङि वा तत्र अस्ति सिचो-

न विदध्यु रशङ्कमप्रिय-
ं महतः स्वार्थपराः परे कथम् ।
भजते कुपितोऽप्यु दारधी-
रनुनीतिं नतिमात्रकेण सः ॥ ५५ ॥
हितमप्रियमिच्छसि श्रुतं
यदि सन्धत्स्व पुरा न नश्यसि ।
अनृतैरथ तुष्यसि प्रिये-
र्जयताज्जीव भवावनीश्वरः ॥ ५६ ॥

ऽष्टत्वे इति इडागमः श्रान्तध्वान्तसंज्ञाम्लिष्टफाण्टेति इडभावनिपातनात् सिद्धम् । किन्तु क्षमी क्षमावान् । व्रीह्यादित्वादिनिः । शरणे रक्षणे साधुः शरण्यः रक्षणक्षमः । तत्र साधुरिति यत्प्रत्ययः । स शिशुपालः शरणं रक्षितारमागतान् प्राप्तान् । शरणं गृहरक्षित्रोः, शरणं रक्षणे गृहे इत्युभयत्रापि विश्वः । द्विषः शत्रून् तरुणान् यूनोऽपि रक्षति अतो निःशङ्कं शरणमागच्छेत्यर्थः ॥ ५४ ॥

ननु वयं द्रोग्धारः सोऽप्यतिक्षुभितः किन्न कथं नः पालनैदित्याशङ्क्याह । नेति । स्वार्थपराः स्वार्थनिष्ठाः परे शत्रवो महतोऽधिकस्य कथम् अप्रियम् अपकारम् अशङ्कं यथा तथा न विदध्युः कुर्य्युरेव कार्य्यवशादित्यर्थः । किन्तु उदारधीर्महामतिः । उदारो दातृमहतोरित्यमरः । स राजा कुपितोऽपि नतिमात्रकेण प्रणतिमात्रकेण अनुनीतिम् अनुनयं भजते अनुप्रक्षीयतीत्यर्थः । प्रणिपातः प्रतीकारः संरम्भो हि महात्मनामिति भावः ॥ ५५ ॥

किं बहुना तवायं हितोपदेशसंग्रह इत्याशङ्क्याह । हितमिति । श्रुतम् अप्रियं हितमिच्छसि यदि अप्रियं हितं श्रुतमाप्ताद्राकर्णितं परिग्रहीतुमिच्छसि चेदित्यर्थः । सन्धत्स्व राज्ञा सन्धेहि पुरा न नश्यसि अन्यथा विनङ्क्ष्यसीत्यर्थः । यावत् पुरानिपातयोर्लडिति भविष्यदर्थे

प्रतिपक्षजिदप्यसंशयं
युधि चैद्येन विजेष्यते भवान् ।
ग्रसते हि तमोऽपहम्मुहु-
र्ननु राहाह्वमहर्पतिन्तमः ॥ ५७ ॥

अचिराज्जितमीनकेतनो
विलसन् वृष्णिगणैर्नमस्कृतः ।
क्षितिपः क्षयितोद्धृतान्धको
हरलीलां स विडम्बयिष्यति ॥ ५८ ॥

स्वट् । अथेति पक्षान्तरे । अन्तैरसत्यैः प्रियैस्तुष्यसि यदि जयतात् जयतु । तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति तोस्तातङादेशः । जीव अवनीश्वरः सार्वभौमो भव । ततः किमेभिः प्रियालापैः अप्रियमपि प्रियमेव स्टहार्थेति भावः ॥ ५६ ॥

ननु कंसाद्यनेकविजयी कृष्णः कथं विजेष्यते राज्ञेत्याशङ्क्याह । प्रतिपक्षेति । प्रतिपक्षजिदनेकारिहन्तापि भवान् असंशयं संशयो नास्ति । अर्थाभावेऽव्ययीभावः । युधि संग्रामे चैद्येन शिशुपालेन विजेष्यते । जयतेः कर्मणि ऌट् शेषे प्रथमः । तमांस्यपहन्तीति तमोपहं सर्वतमोऽपहारिणम् । अपे क्लेशतमसोरिति हन्तेर्डप्रत्ययः । अह्नां पतिम् अहर्पतिं सूर्यम् । अहरादीनां पत्यादिषूपसङ्ख्यानमिति वैकल्पिको रेफादेशः । राहाह्वं राह्वाख्यं तमः । आख्याह्वे अभिधानं चेत्यमरः । मुहुर्ग्रसते ननु गिलति हि । अत्र हरिसूर्ययो राहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥५७॥

किंच न भवानेक एव विजेष्यते किन्तु सर्वैर्यादवैः सहेत्याह । अचिरादिति । स क्षितिपः राजा । अचिरादविलम्बितमेव जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः स्मरश्च येन सः । वृष्णयो यादवभेदास्तेषां गणैरोघैर्नमस्कृतो भीत्या प्रणतः सन् । अत एव विलसन् दीप्यमानः । अन्यत्र वृष्णीति पदच्छेदः वृष्णि उक्षणि विलसन् वृषारूढ़

निहतोन्मदटुष्टकुञ्जरा-
दधतो भूरियशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि
क्षितिपः का गणनास्य वृष्णिषु ॥ ५९ ॥

न तदद्भुतमस्य यन्मुखं
युधि पश्यन्ति भियाच शत्रवः ।
द्रवतामनु पृष्ठमीक्षते
वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥

इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । गणाः प्रमथसङ्घौघा इति वैज-यन्ती । चयिता नाशिता उद्धृता दीप्ता अन्धका यादवभेदाः । अन्य-त्रान्धकासुरो येन सः । हरलीलां शम्भुविभ्रमं विडम्बयिष्यत्यनुकरि-ष्यति । अत्र हरलीलामिति सादृश्याक्षेपान्निदर्शना श्लेषसङ्कीर्णा ॥५८॥

ननु देवासुरैरप्यजय्या यादवाः कथं राज्ञा जेष्यन्त तत्राह । निहतेति । क्षितिपस्तेदिपो निहत उन्मदो दुष्टः कुञ्जरः कुवलया-पीडाख्यो येन तस्मात् । अन्यत्र हतानेकमत्तमातङ्गात् । अत एव क्रमार्जितं भूरि यशः दधतः हरेः कृष्णात् सिंहात् चेति ध्वनिः । रणे न बिभेति । अस्येतादृशस्यैव वृष्णिषु यादवेषु मेषेषु च । वृष्णिस्तु यादवे मेषे इति विश्वः । का गणना कष्यमगणयतो यादवाः के इत्यर्थः । अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेष्वित्यर्थान्तर-प्रतीतिर्ध्वनिरेव न श्लेषः हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वात्प्रकृताप्रकृत-श्लेषे तदनङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥

हरेरपि न बिभेति इत्युक्तं तदेव सम्भावयितुं तस्य पराक्रमाना सर्गसमाप्तेर्वर्णयति । नेति । युधि शत्रवो भियाऽस्य मुखं न पश्यन्तीति यत्तन्नाद्भुतम् अत्र कुतः सोऽपि द्रवतां भयात्पलायमानानां विद्विषां पृष्ठं कायपार्श्वाङ्गम् ईक्षते । जातु कदाचित् वदनं न ईक्षते नह्य खलु द्वयोरन्यतरस्य मुखेष्वन्योन्यस्य मुखविलोकनासम्भवात् स्वयं विद्विषाम्

प्रतनूल्लसिताचिरद्युतः
शरदम्प्राप्य विखण्डितायुधाः ।
दधतेऽरिभिरस्य तुल्यतां
यदि नासारभृतः पयोभृतः ॥ ६१ ॥

मलिनं रणरेणुभिर्मुहु-
र्द्विषताङ्क्षालितमङ्गनाम्बुभिः ।
नृपमौलिमरीचिवर्णकैः
खलु यस्याङ्घ्रियुगं विलिप्यते ॥ ६२ ॥

अभिमुखस्याप्यस्य मुखादर्शनादद्भुतमित्यर्थः अतएव वाक्यार्थहेतुक-काव्यलिङ्गम् ॥ ६० ॥

प्रतन्विति । शरदम् ऋतुं प्राप्य विखण्डितायुधाः खण्डितेन्द्र-चापाः अन्यत्र शरान् ददातीति शरदस्तं शरदं शरवर्षिणं प्राप्य खण्डितशस्त्राः प्रतनूल्लसिताचिरद्युतोऽल्पस्फुरितविद्युतः अन्यत्र प्रतनूल्लसिताः स्वल्पोल्लसितास्ता एवाचिरद्युतोऽस्थिरद्युतः । पयो-भृतो मेघा आसारभृतः वृष्टिमन्तः न यदि शरदि वृष्टिशून्यत्वादिति भावः । सुहृद्बलशून्या इत्यर्थः । आसारः । प्रसरे वेगवृष्टौ सुहृद्बल इति वैजयन्ती । अस्यारिभिस्तुल्यतां दधते । अत्र पयोभृतामुपमा-नानामुपमेयभावोक्तेः प्रतीपालङ्कारः तेषामासारसम्बन्धेऽपि संभाव-नाया तदसम्बन्धोक्तेरतिशयोक्तिभेदश्चेति सङ्करः ॥ ६१ ॥

विशेषकमाह । मलिनमित्यादि । सङ्करसत्त्व । रणरेणुभिर्म-लिनम् अतएव द्विषतामङ्गनाम्बुभिः क्षालितं नाहत्वारीन् रणाच्चिव-र्तिन इति भावः । यस्याङ्घ्रियुगं चरणयुगलम् । अथ रेणुक्षालि-तानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मुकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैश्चन्दनैः । चन्दने चापि वर्णकमिति विश्वः । विलिप्यते विशेष्यते । अत्राङ्घ्रियुगस्य विशेषणमहिम्ना स्नातानुलिप्तपुरुषसा-म्यप्रतीतेः समासोक्तिः ॥ ६२ ॥

समराय निकामकर्कशं
धनमाकृष्टमुपैति यस्य च ।
धनुषा सममाशु विद्विषां
कुलमाशङ्कितभङ्गमानतिम् ॥ ६३ ॥

तुहिनांशुममुं सुहृज्जनाः
कलयन्त्युष्णकरं विरोधिनः ।
कृतिभिः कृतदृष्टिविभ्रमाः
स्रजमेके भुजगं यथापरे ॥ ६४ ॥

दधतोऽसुलभक्षयागमा-
स्तनुमेकान्तरताममानुषीम् ।

समरायेति । क्लिश्नेति चार्थः । निकामकर्कशमतिकठिनं दुष्प्रधर्षमित्यर्थः समराय सङ्ग्रामायाकृष्टमाहृतमावर्जितं च धनम् आशङ्कितभङ्गं मनसोत्प्रेक्षितस्वपराजयम् अन्यथातिकर्षात्सम्भावितभञ्जनं यस्य विद्विषां कुलम् आशु धनुषा सममानतिं नम्रतामुपैति । अत्र धनुर्नमनकार्यस्य द्विषन्नमनस्य तत्सहभावोक्तेः कार्यकारणयोः पौर्वापर्यविपर्ययनिमित्तरूपातिशयोक्तिमूला सहोक्तिरलङ्कारः ॥ ६३ ॥

तुहिनेति । अमुमेवंविधं चैद्यं सुहृज्जनाः तुहिनांशुं कलयन्ति आह्लादकत्वाच्चन्द्रं मन्यन्ते, विरोधिनः उष्णकरं तपनं कलयन्ति । एकस्यानेकप्रतीतिमुपमिमीते । कृतिभिरिति । कृतिभिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमाः जनितदृष्टिविपर्यया एके नराः यथा स्रजं मालां कलयन्ति अपरे तु भुजगं कलयन्ति एकमेव रज्ज्वादिकमिति शेषः । उपमालङ्कारः स चैकस्य निमित्तवशादुल्लेखीतिनेदन्तादस्यानेकधोल्लिखनात्मकेनोल्लेखेन सङ्कीर्यते ॥ ६४ ॥

दधत इति । असुलभक्षयागमाः दुर्लभदक्षप्राप्तयः अन्यत्रामरत्वात् दुर्लभनाशयोगाः । निवयापचयौ क्षयावित्यमरः । एकान्त-

भुवि सम्प्रति न प्रतिष्ठिताः
सदृशा यस्य सुरैररातयः ॥ ६५ ॥

अतिविस्मयनीयकर्मणो
नृपतेर्यस्य विरोधि किञ्चन
यदभुक्तनयो नयत्यसा-
वहितानाङ्कुलमक्षयङ्क्षयम् ॥ ६६ ॥

चलितोर्द्ध्वकबन्धसम्पदो
मकरव्यूहनिरुद्धवर्त्मनः ।

रतां भयाद्विजनस्थाने निरताम् अमानुषीं कार्श्यमालिन्यादिना पिशाचादिवत् प्रतीयमानाम् । अन्यत्रैकान्तरतां नियतसुरतां नित्यभोगाममानुषीं दिव्यां तनुं दधतो दधानाः भुवि सम्प्रति क्वचन न प्रतिष्ठिताः राज्यभ्रंशात् क्वापि स्थितिमप्राप्ताः अन्यत्र च भुवं न स्पृशन्तीत्यर्थः देवत्वात् । यस्यारातयः सुरैः सदृशाः अत्राप्यमुमिति पूर्वेण सम्बन्धः श्लिष्टविशेषणेयमुपमा श्लेष एवेत्यन्ये ॥ ६५ ॥

अतीति । अतिविस्मयनीयकर्मणः अत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयर्प्रत्ययः । यस्य नृपतेश्चैद्यस्य विरोधि चेष्टितं द्वेषि रूपं न किञ्चिदस्तीत्यर्थः यस्मादभुक्तनयोऽत्युक्तनीतिमार्गोऽसौ अक्षयमविनाशि पूर्वं केनापि क्षयं न नीतमित्यर्थः अहितानां कुलं शत्रुजातं क्षयं नाशं नयति । नीतिपौरुषाभ्यां द्विषन्निर्मूलयितुरस्य का विरोधिवार्त्तेति भावः । अक्षयमपि क्षयं नयतीति विरोधस्य नेत्रभेदेन परिहाराद्विरोधाभासोऽलङ्कारः ॥ ६६ ॥

चलितेति । असौ चैद्यश्चलिताः प्रवृत्ता ऊर्द्ध्वा उत्थिताः कबन्धसम्पदः शिरोहीनकलेवरसम्पद एव कबन्धसम्पदः उदकसमृद्धयो येषु तान् । श्लिष्टरूपकम् । कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवर इति वैजयन्ती । मकरव्यूहाः मकराकारसैन्यविन्यासाः त एव मकरव्यूहा इति श्लिष्टरूपकम् । व्यूहौ समूहविन्यासाविति वैजयन्ती । निरुद्ध-

अतरत् स्वभुजौजसा मुहु-
र्महत: सङ्गरसागरानसौ ॥ ६७ ॥
न चिकीर्षति य: स्मयोद्धतो
नृपतिस्त्वच्चरणोपगं शिर: ।
चरणं कुरुते गतस्मय:
स्वमसावेव तदीयमूर्द्धनि ॥ ६८ ॥
स्वभुजद्वयकेवलायुध-
श्चतुरङ्गामपहाय वाहिनीम् ।
बहुश: सह शक्रदन्तिना
स चतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥

वर्त्मनो निरुद्धप्रवेशमार्गान् । अत एव महतो दुस्तरान् सङ्गरसागरान् समरसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मुहुरसकृत् अतरत् भुजे-नाश्रितरणमद्दृष्टचरमत्यङ्कुतमिति भाव: । अत्र कबन्धा एव कबन्धा: मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागर-रूपेण हेतुत्वात् कोमलं श्लिष्टपरम्परितरूपकम् ॥ ६७ ॥

नेति । स्मयोद्धतो गर्वेण दुर्विनीतो नृपति: शिरो निजोत्तमाङ्गं तस्य शिशुपालस्य चरणमुपगच्छतीति तच्चरणोपगन्तत्पादगतं यो न चिकीर्षति कर्त्तुन्नेच्छति तदीये तस्य नृपते: सम्बन्धिनि मूर्द्धनि गत-स्मयो विगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते निधत्त इत्यर्थ: अनम्रान् सद्यो नमयति नम्रानवतीति तात्पर्य्यम् ॥ ६८ ॥

स्वेति । स चैद्यश्चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तां चतुरङ्गां वाहिनीं सेनामपहाय स्वभुजद्वयं केवलमेकमायुधं यस्य स: सन् शक्र-दन्तिना ऐरावतेन सह । चत्वारो दन्ता यस्मिन् तं चतुर्दन्तम् आहवं रणं बहुशोऽगच्छत् चतुर्दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्य: शक्त इति भाव: । दन्तिनोराहवश्चतुर्दन्त इत्युक्तं न तु मनुष्य-

अविचालितचारुचक्रयो-
रनुरागादुपगूढयोः श्रिया ।
युवयोरिदमेव भिद्यते
यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥

श्रुतभूतिरहीनभोगभा-
ग्विजितानेकपुरोऽपि विद्विषाम् ।
रुचिमिन्दुदले करोत्यजः
परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥

दन्तिनोरिति विरोधः स च यक्षदन्तिनेति परिहृतः तस्य चतुर्दन्तत्वादिति विरोधाभासः ॥ ६९ ॥

अविचालितेति । अविचालितं परैरपर्यासितम् अत एव चारु शोभनं चक्रं सुदर्शनं राष्ट्रं च ययोस्तयोः । चक्रं राष्ट्रथाङ्गयोरिति विश्वः । श्रिया कमलया सम्पदा चानुरागादुपगूढयोराश्लिष्टयोर्युवयोस्तव तस्य च । त्यदादीनि सर्वैर्नित्यमित्येकशेषः । इदमेव भिद्यते विशेष्यते । कर्मकर्त्तरि लट् । किं तदित्यत्राह । त्वमिन्द्रमुपगत उपेन्द्र इन्द्रानुजः तदनुचर इति यावत् । स तु इन्द्रमतिक्रान्तः अतीन्द्रः इन्द्रविजयीति यावत् इदमेव भिद्यते इति सम्बन्धः । इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथेति भावः । अत्रोपमानात् कृष्णादुपमेयस्य चैद्यस्याधिक्यादुभेदप्राधान्यसाधर्म्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

किञ्च त्वत्तोऽप्यधिको राजेत्यवाच्योऽयमर्थः यदीश्वरादप्यधिक इत्याह । श्रुतेति । श्रुता भूतिर्भस्म सम्पच्च येन स श्रुतभूतिः । भूतिर्भस्मनि सम्पदीत्यमरः । अहीनां भोगिनामिनोऽहीनः शेषः तस्य भोगं कायं भजतीत्यहीनभोगभाक् शेषभूषण इत्यर्थः । अन्यत्र अहीनमन्यूनं भोगं सुखानुभवं भजतीति अहीनभोगभाक् । भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । विद्विषां विजितानेकपुरः विजितानेकविद्विट्पुर इत्यर्थः एकत्र त्रिपुरविजयादन्यत्र बहुनगर-

नयति द्रुतमुद्धतिश्रित:
प्रसभक्षगमभङ्गुरोदय: ।
गमयत्यवनीतलस्फुर-
द्भुजशाखम्भृशमन्यमुन्नतिम् ॥ ७२ ॥
अधिगम्य च रन्ध्रमन्तरा
जनयन् मण्डलभेदमन्यत: ।
खनति चतसंहति चणा-
दपि मूलानि महान्ति कस्यचित् ॥ ७३ ॥

विजयाश्चेति भाव: । सापेक्षत्वेऽपि गमकत्वात् समास: । एवम्भूतोऽप्यजो हर: । अजा विष्णुहरच्छागा इत्यमर: । इन्दुदले चन्द्रखण्डे विषये रुचिमभिलाषं करोति इन्दुदले या रुचि: शोभा तां करोति दधातीति चार्थ: सामान्यशब्देन विशेषलक्षणा । क्षोणीपतिस्तु परिपूर्णेन्दौ रुचिर्यस्य रुचि: शोभा यस्य स: तस्मिन् रुचिरभिलाषो यस्येति च परिपूर्णेन्दुरुचि: । रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोरिति विश्व: । अत्र हर: खण्डेन्दुरुचि: राजा पूर्णेन्दुरुचिरिति व्यतिरेक: स च वस्त्वोरभेदाध्यवसायादिति श्लेषमूलाभेदातिशयोक्त्या सङ्कीर्ण: ॥ ७१ ॥

अथ कलापकमाह । नयतीत्यादि । य: तटद्रुमै: सरितामुदकस्य पूर इव भूस्तां गर्णै: क्रीड़तीति चतुर्थे वक्ष्यति तत्क्रीड़ाप्रकारं निर्भिर्वर्णयति । अभङ्गुरोदय: स्थिरवृद्धि: य उद्धतिश्रित औद्धत्यभाज: उन्नमानिति यावत् । श्रयते: क्विप् । नृपान् द्रुमांश्चेत्यर्थ: । द्रुतं शीघ्रं प्रसभं प्रसह्य भङ्गं नयति । अवनीतले स्फुरन्तौ भुजौ शाखे इव भुजशाखे यस्य तं भुजौ प्रसार्य भुवि पतितमित्यर्थ: अन्यं नृपं द्रुमं च वेतसादिकं भृशमुन्नतिं गमयति ॥ ७२ ॥

अधिगम्येति । मिश्चेति चार्थ: । अन्तरा मण्डलमध्ये आलवालमध्ये च रन्ध्रमन्तकाणां सुषिरं चाधिगम्य । अन्यत: मण्डलशाखाद्यादिलक्षस्य भेदरूपजापं जनयन् अन्यत्र मण्डलस्याधारदेशस्य भेदं विदारणं

घनपत्रभृतोऽनुगामिन-
स्तरसाकृष्य करोति कांश्चन ।
दृढमप्यपरान्प्रतिष्ठित-
मतिकूलन्नितरान्निरस्यति ॥ ७४ ॥

इति पूर इवोदकस्य यः
सरितामप्रावृषिजस्तटद्रुमैः ।
क्वचनापि महानखण्डित-
प्रसरः क्रीडति भूभृताङ्गणैः ॥ ७५ ॥

कलापकम् ।

कुर्वन्नित्यर्थः । चता संहतिरैकमत्यं कूलानामाश्लेषश्च यस्मिन् कर्मणि तद्यथा तथा च्यणात् कस्यचिद्राज्ञः द्रुमस्य च महान्ति मूलानि मुख्यान् जनानपि खनति तापयति अन्यतलादीनपि खनत्यवदारयति ॥ ७३ ॥

घनेति । घनानि सान्द्राणि पत्राणि वाहनानि पर्णानि च बिभ्रतीति घनपत्रभृतः कांश्चन नृपान् द्रुमांश्च । तरसा बलेन वेगेन च । तरसी बलरंहसी इति विश्वः । आकृष्यानुगामिनोऽनुचरान् करोति । दृढं यथा तथा प्रतिष्ठितं प्रतिष्ठां गतमपि । प्रतिकूलं प्रातिकूल्यभाजम् । अपरं नृपं द्रुमं च नितरां निरस्यति उत्पाट्यान्ततः क्षिपति द्रुमपक्षे प्रतिकूलकूले क्षिपतीति चार्थः ॥ ७४ ॥

इतीति । इतीत्थं क्वचनाप्यखण्डितप्रसरः सर्वत्राखण्डितप्रवृत्तिरित्यर्थः । महान् यः शिशुपालः प्रावृषिजातः प्रावृषिजः । सप्तम्यां जनेर्ड इति डप्रत्ययः । प्रावृट्शरत्कालदिवाञ्ज इत्यलुक् । प्रावृषिक इति पाठे जात इत्यर्थे तत्र प्रावृषः ठगिति ठक्प्रत्ययः ठस्येकः । सरितामुदकानां पूरस्तटद्रुमैरिव भूभृतां राज्ञां गणैः साधनैः क्रीडति । महतः कुक्कुरैरागामिन्लोके स महीपतिरित्यनेनास्य सम्बन्धः ॥ ७५ ॥

अलघूपलपङ्क्तिशालिनीः
परितोरुद्धनिरन्तराम्बराः ।
अधिरूढनितम्बभूमयो
न विमुञ्चन्ति चिराय मेखलाः ॥ ७६ ॥
कटकानि भजन्ति चारुभि-
र्नवमुक्ताफलभूषणैर्भुजैः ।
नियतन्दधते च चित्रकै-
रवियोगम्पृथुगण्डशैलतः ॥ ७७ ॥
इति यस्य ससम्पदः पुरा

अथ विशेषकमाह । अलघ्वित्यादि । यस्यारिस्त्रियः सम्पदनुभूतमापद्यप्यनुभवन्तीति वक्ष्यति तत्प्रकारमेवाह । अधिरूढनितम्बभूमयः उन्नतश्रोणिभागाः अलघुभिः उपलानां मणीनां पाषाणानां च पङ्क्तिभिः शालन्त इति तच्छालिनीः । उपलौ मणिपाषाणाविति विश्वः । परितोरुद्धमावृतं निरन्तरं सान्द्रं सन्निहितं च अम्बरं वस्त्रमाकाशं च याभिस्ताः अधिरूढनितम्बभूमीराक्रान्तश्रोणिभागाः प्राप्तकटकाश्चेति । विभक्तिविपरिणामः । मेखला रशनाः पर्वतमध्यभूमीश्च चिराय न विमुञ्चन्ति । अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीनां वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः ॥ ७६ ॥

कटकानीति । किञ्च नवमुक्ताफलानि नूतनमौक्तिकानि भूषणानि येषां तैश्चारुभिः भुजैः कटकानि वलयानि भजन्ति अन्यत्र नवमुक्तान्यचिरत्यक्तानि अतः अफलानि वैधव्यान्निष्फलानि आभरणानि यैस्तैर्भुजैरुपलक्षिताः कटकानि तटानि भजन्ति । किञ्चेति चार्थः । पृथुगण्डशैलतः पृथुगण्डस्थलेषु चित्रकैः पत्ररचनाभिर्नियतमवियोगं सम्पर्कं दधते अन्यत्र च्युतस्थूलोपलेषु चित्रकैर्मृगविशेषैः सहवासं दधते । अत्रापि प्रकृतगोचरः श्लेषः ॥ ७७ ॥

यदवापुर्भवनेष्वरिस्त्रियः ।
स्फुटमेव समस्तमापदा
तदिदानीमवनीभ्रमूर्द्धसु ॥ ७८ ॥

विशेषकम् ।

महतः कुकुरान्धकद्रुमा-
नतिमात्रन्दववद्दहन्नपि ।
अतिचित्रमिदम्महीपति-
र्यदकृष्णाम्पृथिवीङ्करिष्यति ॥ ७९ ॥

परितः प्रमिताक्षरापि सर्वं
विषयम्प्राप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कुतश्चित्
परिभाषेव गरीयसी यदाज्ञा ॥ ८० ॥

इतीति । यस्यारिस्त्रियः पुरा पूर्वं समस्ताः सशोकाः भवनेषु सदनेषु यदवापुर्लेखनादिकमनुबभूवुः । समस्तमेवं तदीदानीमापदा अवनीभ्रमूर्द्धसु शैलशृङ्गेषु इतीयं स्फुटमेवापुः न ह्यस्य वैरिणां जीवितांशोऽस्तीति भावः । अत्रापि यदर्थस्योत्तरश्लोकेनान्वयः ॥ ७८ ॥

महत इति । यत्तदोर्नित्यसम्बन्धात् । स महीपतिर्महतोऽधिकान् कुकुरांश्चान्धकांश्च यादवभेदांस्तानेव द्रुमानतिमात्रं दववत् दवाग्निवत् । दवदावौ वनारण्यवह्नी इत्यमरः । दहन्नपि अवनीमकृष्णाम् अश्यामां करिष्यति इति यत् इदमतिचित्रं विरुद्धमित्यर्थः कृष्णरहितामित्यविरोधः अत एव विरोधाभासोऽलङ्कारः । कुकुरान्धकैः सह कृष्णं हनिष्यतीति शेषार्थः ॥ ७९ ॥

अथ युग्मेनाह । परित इति । प्रकर्षेण मिताक्षरापि एकत्र मितभाषितत्वादन्यत्र तु सूत्रत्वाच्चाल्पाक्षरापि सर्वं विषयं राष्ट्रकार्यं देशञ्च परितो व्याप्तवती सर्वत्र प्रवृत्तेत्यर्थः । प्रतिष्ठां प्रामाण्यं स्थितिं

यामूढवानूढवराहमूर्त्ति-
र्मुहूर्त्तमादौ पुरुषः पुराणः।
तेनोह्यते साम्प्रतमक्षतैव
क्षतारिणा सम्यगसौ पुनर्भूः॥ ८१॥
भूयांसः क्वचिदपि काममस्खलन्त-
स्तुङ्गत्वन्दधति च यद्यपि द्वयेऽपि।

गता गरीयसी भूयिष्ठार्था यदाज्ञा यस्य राज्ञः शासनं परिभाषा अनियमनिवारको न्यायविशेषः सेव कुतश्चित् कुत्रापि न प्रतिहन्यते खलु न बाध्यते हि। परिभाषा च तद्देकदेशे स्थिता सर्वशास्त्रमभिज्वलयतीति भाष्यकारः। इको गुणवृद्धी इत्यादिका परिभाषा इको वृद्धिरित्यादिविषयः। उपमालङ्कारः। औपच्छन्दसिकं वृत्तम् ॥८०॥

यामिति। यां भुवमादौ पूर्वं पुराणपुरुषो विष्णुः ऊढवराहमूर्त्तिः धृतवराहशरीरः स च न तु स्वरूपेणेति भावः। मुहूर्त्तं क्षणमात्रम् ऊढवान् धृतवान्। क्षतारिणा संहृतसकलविपक्षेण अत एवैनां पुनस्तेन राज्ञा अविक्षतेनेति भावः। अक्षतैव विपक्षैरनुपद्रुतैव असौ भूः साम्प्रतमद्यापि न तु मुहूर्त्तमिति भावः। सम्यक् यथाशास्त्रमुह्यते धार्य्यते। वहेः कर्मणि लट् वचिस्वपीत्यादिना सम्प्रसारणम्। अत्र राज्ञो विष्णोराधिक्यकथनाद् व्यतिरेकः। अत्र ध्वनिः कश्चिद् वृद्धः स चोढवराहमूर्त्तिर्यामक्षतामादौ प्रथमं मुहूर्त्तमूढवान् परिणीतवानिति अत एव अक्षता पूर्वेण अक्षतयोनिका। अत एवासौ भूर्वोढुः। क्षतारिणा शौर्य्यादिगुणाढ्येनेत्यर्थः तेन केनचिद् यूना साम्प्रतं पुनरुह्यते पुनः पुनः परिणीयते। सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हतीति स्मरणादिति भावः। सा पुनर्भूरुच्यते इति योज्यम्। पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिरित्यमरः। अत्राभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतेर्ध्वनिरेव ॥ ८१॥

कल्लोलाः सलिलनिधेरवाप्य पारं
शीर्यन्ते न गुणमहोर्मयस्तदीयाः ॥ ८२ ॥
लोकालोकव्याहतं घर्मरश्मेः
शालीनं वा धाम नालम्प्रसर्त्तुम्।
लोकस्याग्रे पश्यतो धृष्टमाशु
क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८३ ॥

भूयांस इति। द्वयेऽपि समुद्रोर्मयो गुणोर्मयश्चेति द्वितया अप्यूर्मय इति। द्वित्रिभ्यामयजादेशः तस्य द्वित्रिभ्यामित्यनेन अयजादेशः प्रथमचरमेत्यादिना जसि विभाषया सर्वनामसंज्ञा। भूयांसो बहुतराः कचिदप्यस्खलन्तोऽप्रतिहतप्रसरा इत्यर्थः। कामं तुङ्गत्वं दधति यद्यपि दधत्येव। यद्यपीत्यवधारणे इति केशवः। तथापीति शेषः। सलिलनिधेः समुद्रस्य कल्लोला महोर्मयः। अथोर्मिषु महत्सूल्लोलकल्लोलावित्यमरः। पारं तीरमवाप्य शीर्यन्ते विशीयन्ते। शीर्यतेर्दैवादिकात् कर्त्तरि लट्। तदीया गुणमहोर्मयस्तु पारमवाप्य न शीर्यन्ते अत गुणमहोर्मीणां भूयस्त्वादिति साधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद् व्यतिरेकः अनेन राज्ञोऽपि समुद्राधिक्यं व्यज्यते। प्रहर्षिणी वृत्तम् ॥ ८२ ॥

अथ युग्मेनाह। लोकालोकेत्यादि। लोक्यते आलोक्यते च पार्श्वान्तरेणेति लोकालोकः। लोकालोकश्चक्रवाल इत्यमरः। त्रिपदतत्पुरुषसमासः। तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरति। अत एव शालीनमधृष्टतया लज्जया मग्नं धाष्ट्यमित्यर्थः। शालीनकौपीने अधृष्टाकार्ययोरिति निपातः। इवार्थे वाशब्दः तद्वदुत्प्रेक्षा। घर्मरश्मेर्धाम तेजः पश्यतो लोकस्याग्रे उच्चैर्भूभृतः पर्वतान् राज्ञश्च प्रसर्त्तुं व्याप्तुं नालं न समर्थम्। लोकालोकव्याप्तस्य लोकाग्रे सञ्चरत्वादित्यर्थः। यस्य राज्ञस्तु तेजः पश्यतो लोकस्याग्रत एव धृष्टं केनाप्यव्याहतत्वात् प्रगल्भं सत् उच्चैर्भूभृतो

विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकै-
रच्छाच्छे पतिताञ्जने च नयने श्रोण्यो लसन्मेखलाः ।
प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषा-
मित्थन्नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥ ८४ ॥

विनिहत्य भवन्तमूर्जितश्री-
र्युधि सद्यः शिशुपालतां यथार्थाम् ।

राज्ञः पर्वतांश्च क्रामति व्याप्नोति । अत्राप्रतिहतप्रतापत्वेन राज्ञः सूर्य्यादाधिक्याद् व्यतिरेकः स च द्वयोर्लोकालोकयोर्द्वयानां भूभृताम् अभेदाध्यवसायात् श्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया सङ्कीर्य्यते । शालिनीवृत्तमेतत् ॥ ८३ ॥

विच्छित्तिरिति । वपुषो नवचन्दनेन विच्छित्तिर्वियोग आपदि अन्यत्र चन्दनालेपनमिति यावत् । अधरोष्ठः अलक्तकैः लाक्षारागै-र्भिन्नो वियुक्तः अन्यत्र युक्तः । नयने च पतिताञ्जने गलितकज्जले अत एवाच्छाच्छे अच्छप्रकारे । प्रकारे गुणवचनस्येति द्विर्भावः, कर्म-धारयवदिति सुपो लुक् । अन्यत्र अच्छाच्छे नयने पतिताञ्जने प्राप्ता-ञ्जने । श्रोण्यो नितम्बाः लसन्मेखला न भवन्तीत्यलसन्मेखला निर्मे-खला इत्यर्थः । अन्यत्र लसन्मेखला इति पदच्छेदः । उन्नतः कुचा-भोगः कुचविस्तारो मौक्तिकानां हारं हरणं प्राप्तः । अन्यत्र मुक्ता-दाम प्राप्तः । इत्युक्तरीत्या तदीयद्विषां युवतयः सम्पत्सु चापत्-स्वपि नित्यविभूषणाः । अत्रापत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशे-षणद्वारा वर्णनात् श्लेषः । शार्दूलविक्रीड़ितं वृत्तं लक्षणमुक्तम् ॥ ८४ ॥

सत्यमीदृशस्त्वं राजा ततः किमित्याशङ्क्य तर्हि तत्त्वमाकर्णये-त्याह । विनिहत्येति । ऊर्जितश्रीरधिकैश्वर्य्योऽसौ राजा युधि भवन्तं सद्यो विनिहत्य हत्वा रुदतां क्रन्दतां भवदङ्गनागणानां करु-णान्तःकरणः कृपाविष्टचित्तः सन् शिशुपालतां यथार्थां करिष्यते

रुदताभवदङ्गनागणानां
करुणान्तःकरणः करिष्यतेऽसौ ॥ ८५ ॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये
षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ।

---

इतीरिते वचसि वचस्विनाऽमुना
युगान्तचण्डमरुदुग्रतरीयसि ।
प्रचुक्षुभे सपदि तदम्बुराशिना
समं महाप्रलयसमुद्यतं सदः ॥ १ ॥

अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः । अत्र रोदनकरुणापदार्थयोर्विशेषणगत्या क्रमात् करुणाशिशुपालनहेतुकत्वात् काव्यलिङ्गयोः सङ्करः । औपच्छन्दसिकं वृत्तम् ॥ ८५ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये
षोडशः सर्गः ॥ १६ ॥

---

इतीति । इतीत्थम् अमुना वचस्विना वाग्मिना । मनस्विनेति पाठे मनस्विना धीरेण दूतेन युगान्ते कल्पान्ते क्षुभित उद्धतो मरुत्तद्वदुग्रतरीयसि वचसि ईरिते सति । तदम्बुराशिना युगान्तवर्द्धिना समं

सरागया स्नुतघनघर्मतोयया
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे ॥ २ ॥

अलक्ष्यत क्षणदलिताङ्गदे गदे
करोदरप्रहितनिजांसधामनि ।
समुल्लसच्छकलितपाटलोपलैः
स्फुलिङ्गवान् स्फुटमिव कोपपावकः ॥ ३ ॥

तस्य यथा तथा सदो हरेरास्थानं महाप्रलये सर्वसंहारे समुद्यतमुद्युक्तं सत् सपदि प्रचुक्षुभे प्रचुकोप । कल्लोलितमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः । उपमा । रुचिरा वृत्तम् । चतुर्ग्रहैरिह रुचिरा जभसजगा इति लक्षणात् ॥ १ ॥

अथाष्टादशभिः सभाक्षोभं वर्णयति । सरागयेत्यादि । नृपाः राजानः सह रागेण पाटलिम्ना अनुरागेण च सरागया । तेन सहेति तुल्ययोगे बहुव्रीहिः । स्नुतं घनं सान्द्रं घर्मतोयं स्वेदोदकं यस्यां सा तया कराहत्या पाणितलास्फालनेन ध्वनितं पृथु महदूरुः पीठमिव ऊरुपीठं यस्यां तया मुहुर्मुहुर्दशनविखण्डितोष्ठया दन्तदष्टाधरया रुषा प्रियतमयेव भेजिरे । आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः । उपमालङ्कारः ॥ २ ॥

अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह । अलक्ष्यतेत्यादि । करोदरप्रहितं पाणितलास्फालितं निजमंसधाम स्कंधप्रदेशो येन तस्मिन् । अत एव क्षणात् दलिताङ्गदे भग्नकेयूरे । गदे गदाख्ये कृष्णानुजे समुल्लसद्भिरुत्पतद्भिः शकलितैः शकलीकृतैर्दलदङ्गदगलितैः पाटलोपलैः पद्मरागैः कोपपावकः स्फुलिङ्गवानिव स्फुटं व्यक्तमलक्ष्यतेत्युत्प्रेक्षा । विषु स्फुलिङ्गोऽग्निकण इत्यमरः ॥ ३ ॥

अवज्ञया तदहसदुच्चकैर्बलः
समुल्लसद्दशनमयूखमण्डलः ।
रुषारुणीकृतमपि तेन तत्क्षण-
न्निजं वपुः पुनरनयन्निजां रुचिम् ॥ ४ ॥

यदुत्पतत्पृथुतरहारमण्डलं
व्यवर्त्तत द्रुतमभिदूतमुल्मुकः ।
बृहच्छिलातलकठिनांसघट्टित-
स्ततोऽभवद्भ्रमितमिवाखिलं सदः ॥ ५ ॥

प्रकुप्यतः श्वसनसमीरणाहति-
स्फुटोष्मभिस्तनुवसनान्तमारुतैः ।

अवज्ञयेति । बलो बलभद्रः समुल्लसत् समन्ततः प्रसरद्दशनमयूख-मण्डलं दन्तरश्मिपटलं यस्य स सन् अवज्ञया अनादरेण उच्चैः अहस-दिति यत् तेन हासेन रुषारुणीकृतमपि निजं वपुः तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । पुनर्निजां रुचिं धावल्य-मेवानयत् । अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात् तद्गुणालङ्कारः । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयादिति लक्षणात् ॥ ४ ॥

यदिति । उल्मुको नाम राजा उत्पतदुच्छ्रुठत् पृथुतरं हार-मण्डलं मुक्ताकलापो यस्मिन् कर्मणि तद्यथा तथा अभिदूतं दूताभि-मुखं व्यवर्त्तत विष्टत इति द्रुतं यत् ततो निवर्त्तनादखिलं सदः बृहता शिलातलकठिनेनांसेन स्कन्धेन घट्टितं भ्रमितमिवाभवत् । निवर्त्तवेगवशीत्थादंसघट्टनाद्भ्रमितमिवाभूदित्युत्प्रेक्षा ॥ ५ ॥

प्रकुप्यत इति । प्रकुप्यतोऽतिक्रुध्यतो युधाजितो नाम राज्ञो वदनसरोजं श्वसनसमीरणस्य निःश्वासमारुतस्याहतिभिः स्फुटः प्रकटः ऊष्मा उष्णत्वं येषां तैः तनुवसनान्तमारुतैः सूक्ष्मवस्त्राञ्चलवातैः

युधाजितः क्षतपरितूर्णवीजन-
स्पुनस्तरां वदनसरोजमखिदत् ॥ ६ ॥
प्रजापतिक्रतुनिधनार्थमुत्थितं
व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम् ।
समुद्यतं सपदि बधाय विद्विषा-
मतिक्रुधन्निषधमनौषधञ्जनः ॥ ७ ॥
परस्परम्परिकुपितस्य पिंषतः
क्षतोर्मिकाकनकपरागपङ्किलम् ।
करद्वयं सपदि सुधन्वनो निजै-
रनारतस्रुतिभिरधाव्यताम्बुभिः ॥ ८ ॥

क्षतं परितूर्णवीजनं शीघ्रविधूननं यस्य तत् अतिशीघ्रं वीज्यमान-मपीत्यर्थः पुनस्तरां पुनरत्यन्तम् । अव्ययादामुप्रत्ययः । अखिदत् खिद्यति स्म । खिदेर्लुङि पुषादित्वादङ्प्रत्ययः । अतोऽग्निविशेषस-गत्या स्वेदहेतुत्वात् काव्यलिङ्गं वीजनेऽपि स्वेद इति विरोधः । वीजिरयं चुरादिषु अन्वेषणीयः ॥ ६ ॥

प्रजेति । जनः सपदि विद्विषां वधाय समुद्यतमुद्युक्तम् उद्धतं तीव्रम् अतएवातिक्रुधमधिकक्रोधमनौषधमप्रतीकारमित्यर्थः निषधं निषधाख्यं नृपं प्रजापतिक्रतुनिधनार्थं दक्षाध्वरध्वंसनार्थमुत्थितं रुद्र-स्येमं रौद्रं रुद्रसम्बन्धिनं ज्वरमिव वीरभद्ररूपिणमित्यर्थः व्यतर्कयत् । अत्र राज्ञोऽपि प्रजापतित्वात् पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इवायमिति उत्प्रेक्षितवानित्यर्थः । उपमा ॥ ७ ॥

परस्परमिति । परिकुपितस्यातिक्रुद्धस्य अत एव परस्परं पिंषतः पीडयतः करद्वयमित्यर्थः सपदि सुधन्वनो राज्ञः क्षतानां पिष्टा-नामूर्मिकाणामङ्गुलीयकानां कनकपरागेण सुवर्णचूर्णेन पङ्किलं पङ्कवत् ।

निरायतामनलशिखोज्ज्वलां ज्वल-
न्नखप्रभाकृतपरिवेषसम्पदम् ।
अविभ्रमद्भ्रमदनलोल्मुकाकृति-
प्रदेशिनीं जगदिव दग्धुमाहुकिः ॥ ९ ॥

दुरीक्षतामभजत मन्मथस्तथा
यथा पुरा परिचितदाहधाष्टर्यया ।
भ्रुवम्पुनः सशरमसुन्तृतीयया
हरोऽपि न व्यसहत वीक्षितुन्दृशा ॥ १० ॥

पिच्छादित्वान्मत्वर्थीय इलच्प्रत्ययः । अङ्गुलीयकमूर्मिकेत्यमरः । कर-द्वयं पाणियुग्मं निजैः करद्वयजन्यैरेवानारतस्रुतिभिरविरतस्रावैर-म्बुभिः स्वेदोदकैरधाव्यताक्षाल्यत । धावु गतिशुद्ध्योरिति धातोः कर्मणि लङ् । अतोर्मिकाणां करद्वयस्य च परागत्वपङ्किलत्वासम्ब-न्धेऽपि सम्बन्धोक्तेरतिशयोक्ती तयोः सङ्करः ॥ ८ ॥

निरिति । आहुकिर्नाम राजा निरायतां प्रसारिताम् अनल-शिखाग्निज्वाला तद्वत् उज्ज्वलां ज्वलन्तीभिर्नखप्रभाभिः कृता परि-वेषसम्पत् परिधिशोभा यस्यास्ताम् अत एव भ्रमतोऽनलोल्मुकस्याला-तस्येवाकृतिः संस्थानं यस्यास्ताम् । अङ्गारोऽलातमुल्मुकमित्यमरः । प्रदेशिनीं जगद्दग्धुमिवेत्युत्प्रेक्षा । अविभ्रमत् भ्रमयति स्म । भ्रमेर्णौ चङ् । दूतसन्तर्जनाय भ्राम्यमाणनखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणालातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥

दुरीक्षतामिति । मन्मथः प्रद्युम्नावतारः कामस्तथा दुरीक्षतां दुर्दर्शनत्वम् । ईक्षतेः खलन्तात्तल्प्रत्ययः । अभजत यथा हरोऽपि पुरा पूर्वजन्मनि परिचितमभ्यस्तं दाहधार्ष्ट्यं दहनसाहसं यस्या स्तया तृतीयया दृशा । सशरमस्तु मन्मथं भ्रुवं पुनर्वीक्षितुं न व्यसहत न शक्तः । परिणिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जांसिवादीनां

विचिन्तयन्नुपनतमाहवं रसा-
दुरः स्फुरत्तनुरुहमग्रपाणिना ।
परामृषत् कठिनकठोरकामिनी-
कुचस्थलप्रमुषितचन्दनम्पृथुः ॥ ११ ॥

विलङ्घितस्थितिमभिवीक्ष्य रूक्षया
रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ।
जनैस्तदा युगपरिवर्त्तवायुभि-
र्विवर्त्तिता गिरिपतयः प्रतीयिरे ॥ १२ ॥

वाङ्व्यवायेऽपि इति विकल्पान्न षत्वम् । अजय्योऽश्वायां रुद्रस्यापि भीषणः किमुतान्येषामिति वस्तु व्यज्यते ॥ १० ॥

विचिन्तयन्निति । पृथुर्नाम राजा उपनतं प्राप्तम् आहवं युद्धं रसाद्रणरागात् विचिन्तयन् कदेति ध्यायन् कठिनेन कर्कशेन कठोरेण प्रवृद्धेन कामिन्याः कुचस्थलेन प्रमुषितमपहृतं चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते । अत एव स्फुरत्तनुरुह-मुदञ्चत्पुलकमुरः अग्रस्वासौ पाणिश्चेति । समानाधिकरणसमासः । अत एव हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदयोरिति वामनः । तेना-ग्रपाणिना पाणितलेन परामृषत् परामृष्टवान् । रणकण्डूलपा-णित्वादिति भावः । अत एव यदन्येषां रोषजनक दूतवाक्यं तदा-गामिरणकारणतयास्य हर्षे हेतुरिति श्लेषार्थः ॥ ११ ॥

विलङ्घितेति । गुरुं स्वभावतोधीरमपि सन्तं रूक्षया परुषया रिपोर्गिरा दूतवाचा विलङ्घितस्थितिमुल्लङ्घितमर्यादं क्रोधादुन्मर्यादं विकुर्वाणमित्यर्थः गान्दिनीसुतमक्रूरमभिवीक्ष्य जनैस्तदा अक्रूर-विक्रियालोकनसमये युगपरिवर्त्तवायुभिः कल्पान्तवातैर्विवर्त्तिताः स्थानादुच्चालिताः गिरिपतयोऽद्रयः प्रतीयिरे विश्वस्यिरे। अक्रूरवि-क्रियादर्शनाद्गिरिचलनमपि युगान्ते संभावितमेवेति जनैर्विश्वस्तमि-त्यर्थः । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः । प्रतिपूर्वादिणः

विवर्त्तयन् मदकलुषीकृते दृशौ
कराहतक्षितिकृतभैरवारवः
क्रुधा दधत्तनुमतिलोहिनीमभूत्
प्रसेनजिद्गज इव गैरिकारुणः ॥ १३ ॥

सकुङ्कुमैरविरलमम्बुविन्दुभि-
र्गवेषणः परिणतदाडिमारुणैः ।
स मत्सरस्फुटितवपुर्विनिःसृतै-
र्बभौ चिरचिचित इवासृजां लवैः ॥ १४ ॥

कर्मणि लिट् । अत्र कल्पान्ते गिरिचलनविक्रियाकल्पयसक्रूरविक्रियेति वाक्यार्थभेदेन सादृश्याक्षेपान्निदर्शनालङ्कारः । तेनाक्रूरस्य लोकोत्तरं धैर्यं नैसर्गिकमिति वस्तु व्यज्यते ॥ १२ ॥

विवर्त्तयन्निति । मदो मद्यविकारो दानं च । मदो मद्येभदानयोरिति विश्वः । तेन कलुषीकृते व्याकुलीकृते दृशौ विवर्त्तयन् घूर्णयन् करेण पाणिना शुण्डादण्डेन चाहतायां क्षितौ भूमौ कृतो भैरवारवो भयङ्करध्वनिर्येन स क्रोधात् सध्वानं करेण क्षितिताड़ितित्यर्थः । क्रुधा क्रोधेन अतिलोहिनीमतिलोहिताम् । वर्णादनुदात्तात्तोपधात्तो न इति विकल्पात् ङीप् तकारस्य च नकारः । तनुं वपुर्दधत् प्रसेनजिन्नाम राजा गैरिकारुणो धातुरक्तो गज इवाभूत् तद्वदलक्ष्यतेत्यर्थः ॥ १३ ॥

सकुङ्कुमैरिति । स प्रसिद्धो गवेषणो नाम राजा सकुङ्कुमैः ससर्वाङ्गीणकश्मीरजलेपैरित्यर्थः । अत एव परिणतदाडिमारुणैः परिपक्वदाडिमबीजरक्तैरम्बुविन्दुभिः क्रोधसात्विकैः स्वेदविन्दुभिरित्यर्थः । मत्सरेणान्तःसंवृत्तेनात्युत्कटवैरेण स्फुटितान्निर्भिन्नाद् वपुषो विनिःसृतैरसृजां लवैरसृग्विन्दुभिरविरलन्निरन्तरं निचितो व्याप्त इव चिरं बभौ । उत्प्रेक्षा ॥ १४ ॥

ससम्भ्रमञ्चरणतलाभिताडन-
स्फुटन्महीविवरवितीर्णवर्त्मभिः।
रवेः करैरनुचिततापितोरग-
प्रकाशतां शिनिरनयद्रसातलम्॥ १५॥

प्रतिक्षणं विधुवति शारणे शिरः
शिखिद्युतः कनककिरीटरश्मयः।
अशङ्कितं युधमधुना विशन्त्वमी
क्षमापतीनिति निरराजयन्निव॥ १६॥

दधौ चलत्पृथुरसनं विवक्षया
विदारितं विततबृहद्धनुजालतः।

ससम्भ्रमिति। शिनिः सात्यकेः पितामहः ससम्भ्रमं सत्वरं चरणतलाभिताडनेन पादतलाभिघातेन स्फुटन्त्या दलन्त्या मह्या विवरैः छिद्रैः वितीर्णवर्त्मभिर्दत्तमार्गैस्तत्प्रसरणैरित्यर्थः। रवेः करैः अनुचितं पूर्वमपरिचितमिदं यथा तथा तापिताः सन्तापं गमिताः उरगा यस्मिन् तत् रसातलं प्रकाशतां प्रकटत्वमनयत्। अत्र महीर-विवरोरगरसातलानां क्रमेण स्फुटनात्प्रवेशतापप्रकाशनैरसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः पादाहननैरमानुषीं तीव्रतां व्रजति स्मेति ध्वनिः॥ १५॥

प्रतीति। शारणे नाम राज्ञि प्रतिक्षणं शिरो विधुवति क्रोधात् कम्पयति सति। धुवस्तौदादिकात्लटः शत्रादेशः अचि श्नुधात्वित्या-दिना उवङादेशः। शिखिवत् द्योतन्त इति शिखिद्युतोऽग्निप्रभाः। क्विप्। कनककिरीटरश्मयो नीराजनकर्तारः अमी भूपाः अधुना अशङ्कितं निःशङ्कं युधमाजिम्। समित्याजिसमिद्युध इत्यमरः। विशन्त्विति क्षमापतीन्निरराजयन्निव नीराजन्ति स्मेत्युत्प्रेक्षा। नीराजना स्याद्विजय इत्यागमः॥ १६॥

विदूरथः प्रतिभयमास्यकन्दर-
च्चलत्फणाधरमिव कोटरन्तरुः ॥ १७ ॥
समाकुले सदसि तथापि विक्रिया-
मनोऽगमन्न मुरभिदः परोदितैः ।
घनाम्बुभिर्बहुलितनिम्नगाजलै-
र्जलं न हि व्रजति विकारमम्बुधेः ॥ १८ ॥
परानमी यदपवदन्त आत्मनः
स्तुवन्ति च स्थितिरसतामसाविति ।
निनाय नो विकृतिमविस्मितः स्मित-
मुखं शरच्छशधरमुग्धमुद्धवः ॥ १९ ॥

इथाविति । वितते विस्तृते इहत्यौ भुजे लते इव यस्य स विदूरथो नाम राजा । विवक्षया किमपि वक्तुमिच्छया विदारितं व्यात्तम् अत एव चलन्ती पृथुर्संहती रसना जिह्वा यस्मिन् तम् । रसज्ञा रसना जिह्वेत्यमरः । प्रतिभयं भयङ्करमास्यं कन्दर इवास्य-कन्दरस्तम् । दरी तु कन्दरो वा स्त्रीत्यमरः । चलन् फणाधरः फणी यस्मिन् तत् कोटरं तरुरिव । निष्कुहः कोटरं वा नेत्यमरः । इथौ । श्रौती पूर्णोपमा ॥ १७ ॥

समाकुल इति । परोदितैः शत्रुवाक्यैः सदसि आस्थाने तथा समाकुले क्षुभितेऽपि मुरभिदो हरेर्मनो विक्रियां क्षोभं नागमत् । तथाहि बहुलितानि बहुलीकृतानि क्षोभितानि निम्नगाजलानि यैस्तैर्घनाम्बुभिः मेघोदकैरम्बुधेर्जलं विकारं न व्रजति । यथा वर्षो-दकैर्नद्यः क्षुभ्यन्ति न समुद्रस्तद्वदिति भावः । दृष्टान्तालङ्कारः ॥ १८ ॥

परानिति । अमी खलाः परानन्यानपवदन्ते निन्दन्ति । अपा-द्वद इत्यात्मनेपदम् । आत्मनः स्वानि स्तुवन्ति चेति यत् असावसतां खलानां स्थितिः प्रकृतिरिति इति मत्वेत्यर्थः । गम्यमानार्थत्वाद-प्रयोगः अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः । विस्मितो न भवतीति

निराकृते यदुभिरिति प्रकोपिभिः
स्पशे शनैर्गतवति तत्र विद्विषाम् ।
मुरद्विषः स्वनितभयानकानकं
बलञ्चयादथ समनह्यताजये ॥ २० ॥
मुहुः प्रतिस्खलितपरायुधा युधि
स्थवीयसीरचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशना-
स्तनूरयन्नय इति वृष्णिभूभृतः ॥ २१ ॥

अविक्षितो दूतप्रलापैर्विस्मयं न गतः उद्धवः स्मितं स्मेरम् । उभयत्र कर्त्तरि क्तः । अत एव शरच्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा । मुखं विकृतिं न निनाय न प्रापयामास । न हि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥ १९ ॥

निराकृत इति । तत्र सदसि इतीत्थं प्रकोपिभिरतिक्रुद्धैर्यदुभि- विद्विषां स्पशे चरे । अपसर्पश्चरः स्पश इत्यमरः । निराकृते धिकृते शनैर्गतवति गच्छति सति । सागसोऽपि दूतस्यावध्यत्वादिति भावः । अथ दूतागमनानन्तरं स्वनितेन ध्वनिना भयानकाः भयङ्कराः आनकाः पटहा यस्मिन् तत् मुरद्विषो बलं चयादाजये युद्धाय समनह्यत सन्नद्धम् ॥ २० ॥

मुहुरिति । वृष्णिभूभृतो यादवनरेन्द्राः मुहुरसकृद्युधि प्रतिस्ख- लितपरायुधाः भग्नप्रतिपक्षायुधाः स्थवीयसीः स्थूलतराः पराक्रमा- नुरूपप्रकर्षवतीरित्यर्थः । स्थूलदूरेत्यादिना पूर्वस्य गुणलोपौ । अचल- नितम्बनिर्भराः अद्रिकटकनिविडाः अन्तःसारवतीरित्यर्थः । अरहित- मव्यक्तं शौर्य्यमेव दंशनं वर्म यासां तास्तनूर्देहान् अयं नय इति वर्मधारणं नीतिरिति हेतोर्न तु भयादिति भावः । अदंशयन् अवर्म- यन् । दंशेरनुदात्तेत्वात् परस्मैपदं चिन्त्यमित्याहुः अत एव भट्टमल्लः संनर्मयति सन्नह्यत्यात्मने सज्जतीत्यसौ । सन्दंशते दंशयते सन्नाहे

दुरुद्वहाः क्षणमपरैस्तदन्तरे
रणश्रवादुपचयमाशु बिभ्रति ।
महीभुजां महिमभृतां न सम्ममु-
र्मुदोऽन्तरा वपुषि वहिश्च कञ्चुकाः ॥ २२ ॥

सकल्पनं द्विरदगणं वरूथिन-
स्तुरङ्गिणो जयनयुजश्च वाजिनः ।
त्वरायुजः स्वयमपि कुर्वतो नृपाः
पुनः पुनस्तदधिकृतानतत्वरन् ॥ २३ ॥

पदपञ्चकमिति । केचित्तु चुरादिषूभयपदिषु पठन्ति । अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥ २१ ॥

दुरुद्वहा इति । महिमभृतामैश्वर्य्यवतां महीभुजां राज्ञां सम्बन्धिनि रणश्रवात् युद्धश्रवणात् आशु शीघ्रम् उपचयं वृद्धिं बिभ्रति बिभ्राणे वपुषि अपरैरन्यैः क्षणं क्षणमपि दुरुद्वहा दुर्भरा मुदः सन्तोषाः अन्तरा न संमम्रुस्तदन्तरे वहिः कञ्चुकाश्च न संममुः न मान्ति स्म नावर्त्तन्तेत्यर्थः पूर्वत्र आधेयाधिक्यादुत्तरत्राधाराधिक्यादिति विवेकः । अत्र मुदां कञ्चुकानां च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥

सकल्पनमिति । द्विरदगणं सह कल्पनया सकल्पनं यथोचितसन्नाहसहितम् । कल्पना सज्जना समा इत्यमरः । वरूथो रथगुप्तिरेषामस्तीति वरूथिनो रथान् । रथगुप्तिर्वरूथो नेत्यमरः । तुरङ्गिणोऽश्वयुक्तान् । वाजिनोऽश्वान् जयनयुजः पल्ययनादिसन्नाहसंयुक्तान् । सत्सूद्विषेत्यादिभ्यः क्विप् । जयनः स्यात्तुरङ्गादिसन्नाहे विजयेऽपि चेति विश्वः । स्वयं त्वरायुजः त्वरायुक्तान् स्वतः कुर्वतोऽपि स्वत एव त्वरया कुर्वाणानपीत्यर्थः तदधिकृतान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनः पुनरतत्वरन् त्वरयन्ति स्म तेषां तथा रणौत्सुक्यादिति भावः । त्वरेर्णौ चङि अत स्मृदृत्वरप्रथम्रदस्तृस्पशामित्यभ्यासस्याकारः ॥ २३ ॥

युधे परैः सह दृढबद्धकक्षया
कलक्वणन्मधुपकुलोपगीतया ।
अदीयत द्विपघटया सवारिभिः
करोदरैः स्वयमथ दानमच्चयम् ॥ २४ ॥
सुमेखलाः सिततरदन्तचारवः
समुल्लसत्तनुपरिधानसम्पदः ।
रणैषिणाम्पुलकभृतोऽधिकन्धरं
ललम्बिरे सदसिलताः प्रिया इव ॥ २५ ॥
मनोहरैः प्रकृतिमनोरमाकृति-
भयप्रदैः समितिषु भीमदर्शनैः ।

युधेति । अथ परैः सह युधे युद्धाय दृढबद्धा कक्षा मध्यबन्धनं यस्यास्तया । कक्षा बृहतिकायां स्यात् काञ्च्यां मध्येभबन्धने इति विश्वः । अन्यत्र दृढोद्योगयेत्यर्थः । कलं क्वणता मधुपकुलेनालिगणेनोपगीतया बन्दिमागधस्तुतया चेति गम्यते । द्विपघटया करिण्यां स्वयं सवारिभिः सोदकैः करोदरैः पुष्कराग्रैः पाणितलाग्रैश्चाक्षयमपरिमितं दानं मदः अदीयत दानं द्रव्यं चादीयत दत्तम् । अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्तृप्रतीतेः समासोक्तिरलङ्कारः ॥ २४ ॥

सुमेखला इति । शोभना मेखला बन्धनसूत्राणि काञ्चयश्च यासां ताः सुमेखलाः । मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोरिति विश्वः । सिततरैर्दन्तैर्दन्तमयत्सरुभिर्दशनैश्च चारवः उल्लसन्त्यः तनवः सूक्ष्माः परिधानसम्पदः कोशसम्पदो वस्त्रसम्पदश्च यासां ताः पुलकभृतः छायाभृतः रोमाञ्चधारिणश्च सदसिलताः चारुखड्गवल्ल्यः प्रिया इव रणैषिणां रणाकाङ्क्षिणां कन्धरास्वधिकन्धरम् अधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । ललम्बिरे लग्ना इत्यर्थः । श्लेषः श्लिष्टोपमा वा मतभेदात् ॥ २५ ॥

सदैवतैः सततमथानपायिभि-
र्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥ २६ ॥

अवारितक्षतमुभयेषु भूरिशः
क्षमाभृतामथ कटकान्तरेष्वपि ।
मुहुर्युधि क्षतसुरशत्रुशोणित-
प्लुतप्रधिं रथमधिरोहति स्म सः ॥ २७ ॥

उपेत्य च स्वनगुरुपक्षमारुत
न्दिवस्त्विषा कपिशितदूरदिङ्मुखः ।
प्रकम्पितस्थिरतरयष्टि तत्क्षण-
म्पतत्पतिः पदमधिकेतनन्दधौ ॥ २८ ॥

मनोहरैरिति । अथ प्रकृतिमनोरमाकृतिः स्वभावसुन्दरमूर्त्तिः समितिषु युद्धेषु भीमं दर्शनं यस्य सभीमदर्शनो मुरजिद्धरिर्मनोहरैः प्रकृतिमनोहरैः समितिषु भयप्रदैः सदैवतैः अधिदेवतायुक्तैः सततम् अनपायिभिः आयुधैः शार्ङ्गादिभिर्निजाङ्गवत् पृथगवस्थितैः शरीरैरिवेत्युत्प्रेक्षा । असेव्यत सेवितः ॥ २६ ॥

अवारितमिति । अथायुधसन्निधानानन्तरं स हरिरुभयेषु द्वयेषु द्विविधेष्वित्यर्थः । क्षमाभृतां राज्ञां गिरीणां च कटकान्तरेष्वपि शिविराभ्यन्तरेषु नितम्बावकाशेषु च भूरिशः बहुशः अवारितम् अप्रतिहतं गतं प्रस्थितं मुहुरसकृत् युधि क्षतानां सुरशत्रूणामसुराणां शोणितैः प्लुताः सिक्ताः प्रधयो नेमयो यस्य तम् । चक्रधारा प्रधिर्नेमिरिति हलायुधः । रथमधिरोहति स्म आरुरोह ॥ २७ ॥

उपेत्येति । किञ्चेति चार्थः पतत्पतिः अण्डजमण्डलेश्वरः । पतत्पतत्त्रथाण्डजा इत्यमरः । त्विषा कान्त्या कपिशितानि कपिशीकृतानि दूराणि दिङ्मुखानि येन सः । स्वनेन गुरुर्महान् पक्षमारुतो यस्मिन् कर्मणि तत्तथा दिवः स्वर्गादुपेत्यागत्य तत्क्षणं तस्मिन् क्षणे प्रकम्पिता

गभीरताविजितमृदङ्गनादया
स्वनश्रिया हतरिपुहंसहर्षया ।
प्रमोदयन्नथ मुखरान् कलापिनः
प्रतिष्ठते नवघनवद्रथः स्म सः ॥ २९ ॥

निरन्तरस्थगितदिगन्तरन्ततः
समुच्चलद्बलमवलोकयञ्जनः ।
विकौतुकः प्रकृतमहाप्लवेऽभव-
द्विशृङ्खलप्रचलितसिन्धुवारिणि ॥ ३० ॥

स्थिरतरा निश्चला यष्टिरावासस्तम्भो यस्मिन् तत्तथा अधिकेतनं केतने । विभक्त्यर्थेऽव्ययीभावः । पदं दधौ निहितवान् ॥ २८ ॥

गभीरतेति । अथ गरुडागमनानन्तरं स रथो नवघनवत् नवघनेन नवाम्बुदेन तुल्यम् । तेन तुल्यमिति वतिप्रत्ययः । गभीरतया गाम्भीर्येण निर्जितो मृदङ्गनादो यया तया हृतो रिपुहंसानां हंसानामिव रिपूणां हर्षो यया तया स्वनश्रिया ध्वनिसम्पदा मुखरान् कूजतः कलापिनो मयूरान् प्रमोदयन् प्रतिष्ठते स्म प्रतस्थे । समवप्रविभ्यः स्थ इत्यात्मनेपदं, लट् स्मेति भूते लट् । तद्धितगता श्रौती पूर्णोपमा ॥ २९ ॥

निरन्तरेति । ततो रथप्रस्थानानन्तरं निरन्तरं नीरन्ध्रं स्थगितानि आच्छादितानि दिगन्तराणि येन तत् । समुच्चलत् प्रतिष्ठमानं तद्बलं सैन्यम् अवलोकयन् जनो लोकः प्रकृतः प्रक्रान्तो महाप्लवो महापूरो जगत्संप्लवरूपो येन तस्मिन् विशृङ्खलमप्रतिघातं प्रचलितं क्षुभितं यत् सिन्धोरब्धेर्वारि तस्मिन् विकौतुको निवृत्तकौतूहलोऽभवत् । कल्पान्तक्षुभितवारिधेर्वारिवच्च तद्बलं सकलजगत्संहारशङ्कया अलक्ष्यतेत्यर्थः । अत्रान्यदर्शनादन्यादृष्टत्वानिवृत्तेर्बलवारिधिवारिणोरेकत्वाद्योपे बाधात् सादृश्याक्षेपात् वाक्यभेदेन प्रतिबिम्बकरणात् निदर्शनालङ्कारः ॥ ३० ॥

ववृंहिरे गजपतयो महानकाः
प्रदध्वनुर्जयतुरगा जिहेषिरे ।
असम्भवद्गिरिवरगह्वरैरभूत्
तदा रवैर्दलित इव ख आश्रयः ॥ २१ ॥

अनारतं रसति जयाय दुन्दुभौ
मधुद्विषः फलदलघुप्रतिस्वनैः ।
विनिष्पतन्मृगपतिभिर्गुहामुखै-
र्गताः पराम्मुदमहसन्निवाद्रयः ॥ २२ ॥

जडीकृतश्रवणपथे दिवौकसां
चमूरवे विशति सुराद्रिकन्दराः ।

ववृंहिरे इति । गजपतयः ववृंहिरे वृंहितं चक्रु-रित्यर्थः । वृहि वृद्धौ शब्दे चात्मनेपदं चिन्त्यम् । अत एव भट्टमल्लः दिग्दत्ते पतेऽश्वानां हस्तिनां वृंहतीति चेति । महानकाः प्रदध्वनु-र्जयशीलास्तुरगा जयतुरगा जिहेषिरे हेषां चक्रुरित्यर्थः । हेषृ ह्रेषृ अव्यक्ते शब्दे । तदा तस्मिन् काले असम्भवन्त्यनवकाशलाभादपर्याप्नुवन्ति गिरिवरगह्वराणि येषां तैः गिरिवरगह्वरेषु अमाद्भिः अवर्त्तमानै-रित्यर्थः । रवैर्वृंहणादिघोषैः । ख आश्रयः खसमराविव कारण-माकाशो दलित इव विदारित इवाभूदित्युत्प्रेक्षा तया तेषामति-तीव्रत्वं व्यज्यते ॥ २१ ॥

अनारतमिति । मधुद्विषो हरेः दुन्दुभौ रणभेर्यां जयायाना-रतमश्रान्तं रसति ध्वनति सति फलन्तः सङ्क्रमन्तोऽलघवो महान्तः प्रतिस्वनाः प्रतिध्वनयो येषु तैः । विनिष्पतन्तः क्षोभान्निर्गच्छन्तः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव । सिंहानां धावल्याद्धासोत्प्रेक्षा ॥ २२ ॥

जडीकृतेति । दिवमोको येषां तेषां दिवौकसां देवानां कन्द-

अनर्थकैरजनि विदग्धकामिनी-
रतान्तरक्वणितविलासकौशलैः ॥ २३ ॥
अरातिभिर्युधि सहयुध्वनो हता-
ञ्जिघृक्षवः श्रुतरणतूर्यनिस्वनाः ।
अकुर्वत प्रथमसमागमोचित-
ञ्चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥ २४ ॥
प्रचोदिताः परिचितयन्तृकर्मभि-
र्निषादिभिर्विदितयताङ्कुशक्रियैः ।

रान्तर्गतानामित्यर्थः । जडीकृतश्रवणपथे बधिरीकृत श्रोत्रमार्गे । सापेक्षत्वेऽपि गमकत्वात् समासः । चमूरवे सेनाघोषे सुराद्रिकन्दराः मेरुगह्वराणि विशति सति । विदग्धकामिनीनां प्रौढाङ्गनानां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसम्पदस्तासु यानि कौशलानि तैरनर्थकैरजनि जातं प्रेयसां बाधिर्यादिति भावः । अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिङ्गं तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ २३ ॥

अरातिभिरिति । सह युध्यन्त इति तान् सहयुध्वनः । सहे चेति क्वनिप् । अतएवारातिभिर्युधि हतान् जिघृक्षवो ग्रहीतुमिच्छवः स्वयं रणकामाः । ग्रहेः सनन्तादुप्रत्ययः । सुरगणिकाः अप्सरसः श्रुतरणतूर्यनिस्वनाः सत्यश्चिरोज्झितं प्रायेण प्रवीरसंवादाभावादिति भावः । प्रथमसमागमोचितम् अतिमोहनमित्यर्थः । प्राथम्यं च पुंसामिदं प्रथमत्वादिति भावः । प्रसाधनम् अकुर्वत परिष्कृतवत्य इत्यर्थः । प्रतिकर्म प्रसाधनमित्यमरः । अत्र स्वयंवरणतूर्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात् काव्यलिङ्गम् ॥ २४ ॥

प्रचोदिता इति । परिचितं यन्तृकर्म सादित्वं यैस्तैः स्वभ्यस्तगजशास्त्रैरित्यर्थः । अत एव विदिते यताङ्कुशक्रिये यतयाताख्ये

गजाः सकृत्करतललोलनालिका
हता मुहुः प्रणदितघण्टमाययुः ॥ ३५ ॥

सविक्रमक्रमणचलैरितस्ततः
प्रकीर्णकैः क्षिपत इव क्षितेरजः ।
व्यरंसिषुर्न खलु जनस्य दृष्टय-
स्तुरङ्गमादभिनवभाण्डभारिणः ॥ ३६ ॥

चलाङ्गुलीकिसलयमुद्रतैः करै-
रनृत्यत स्फुटकृतकर्णतालया ।
मदोदकद्रवकटभित्तिसङ्गिभिः
कलस्वरम्मधुपगणैरगीयत ॥ ३७ ॥

पदाङ्कुशकर्मणी दैस्तैः । पादकर्म यतं प्रोक्तं यातमङ्कुशवारणमिति हलायुधः । निषादिभिर्यन्तृभिः प्रचोदिताः प्रेरिताः गजाः सकृदेकवारमेव करतललोलाभिः पाणितलचालिताभिर्नालिकाभिरन्तर्नाडिकाभिर्हतास्ताडितास्तथापि मुहुः प्रणदिता असकृत् ध्वनन्ती घण्टा यस्मिन् कर्मणि तत्तथा आययुः प्रस्थातुमागताः । स्वभावोक्तिः ॥३५॥

सविक्रमेति । सविक्रमेण साङ्घ्रिविन्यासविशेषेण क्रमणेन गमनेन चलैः प्रकीर्णकैश्चामरैः । चामरं तु प्रकीर्णकमित्यमरः । क्षितेः रजः खुरोद्धूतमितस्ततः क्षिपतो निरस्यत इव स्थितादित्युत्प्रेक्षा । अभिनवभाण्डभारिणः प्रत्यग्राभरणधारिणः । स्याद्भाण्डमश्वाभरणमित्यमरः । तुरङ्गमात्तुरङ्गमेभ्यः । जातावेकवचनम् । जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानमित्यपादानत्वम् । जनस्य दृष्टयो न व्यरंसिषुर्न विरताः खलु । रमेर्लुङि व्याङ्परिभ्यो रम इति परस्मैपदं, यमरमनमातां सक् चेति सगिडागमौ इटि नेटीति वृद्धिप्रतिषेधः ॥ ३६ ॥

अथ विशेषकेणाह । चलेत्यादि । स्फुटं कृतः कर्णतालः कर्ण-

असिच्यत प्रशमितपांशुभिर्मही
मदाम्बुभिर्धृतनवपूर्णकुम्भया।
अवाद्यत श्रवणसुखं समुन्नम
त्पयोधरध्वनिगुरु तूर्यमाननैः॥ ३८॥
उदासिरे पवनविधूतवासस-
स्ततस्तती गगनलिहश्च केतवः।
यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं
व्यधीयत द्विपघटयेति मङ्गलम् ॥ ३९ ॥

विशेषकम्।

ताड़नं यया तया द्विपघटया कर्त्र्या चलाङ्गुल्य एव किसलया यस्मिन् कर्मणि तत्तयोद्धतैः करैर्हस्तैरन्टत्यत आनर्त्ति । भावे लङ्। तथा मदोदकेन द्रवास्वार्द्रासु कटभित्तिषु गण्डस्थलेषु सङ्गिभिरासक्तैः लघुपगणैर्भ्रमरगणैः कलस्वरं मधुरस्वरमगीयत गीतम्। भावे लङ्॥ ३७॥

असिच्यतेति। धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया द्विपघटया कर्त्र्या। कुम्भौ घटेभमूर्द्धांशावित्यमरः। प्रशमितपांशुभिर्मदाम्बुभिर्मही असिच्यत सिक्ता। आननैर्मुखैः करणैः श्रवणयोः सुखयतीति सुखं सुखकरम्। सुखहेतौ सुखे सुखमिति शब्दार्णवे। समुन्नमत्पयोधरध्वनिगुरु उद्यन्मेघगर्जितगम्भीरं तूर्यम् अवाद्यत वादितम्। स्वमुखैः हयैरेव तूर्यं सम्पादितमित्यर्थः॥ ३८॥

उदासिरे इति। पवनेन विधूतवाससः कम्पितपटाः गगनलिहोऽभ्रङ्कषाः केतवो ध्वजाश्च ततस्तत उदासिरे उत्क्षिप्ता इतीत्थं द्विपघटया प्रतिरिपु रिपून् प्रति। आभिमुख्येऽव्ययीभावः। यतो गच्छतः। इणो लटः शत्रादेशः। शार्ङ्गिणः पुरोऽग्रे स्वयं मङ्गलं व्यधीयत विहितम्। अत्र श्लोकत्रये प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतेः समासोक्तिरलङ्कारः॥ ३९॥

न शून्यतामगमदसौ निवेशभूः
प्रभूततान्दधति बले चलत्यपि ।
पयस्यभिद्रवति भुवं युगावधौ
सरित्पतिर्न हि समुपैति रिक्तताम् ॥ ४० ॥

यियासितामथ मधुभिद्विवस्वता
जनो जरन्महिषविषाणधूसराम् ।
पुरः पतत्परबलरेणुमालिनी-
मलक्षयद्दिशमभिधूमितामिव ॥ ४१ ॥

मनस्विनामुदितगुरुप्रतिश्रुतिः
श्रुतस्तथा न निजमृदङ्गनिस्वनः ।

नेति । प्रभूततां भूमानं दधति दधाने बले सैन्ये चलति प्रतिष्ठमानेऽपि असौ निवेशभूः सेनानिवेशभूमिः शून्यतां रिक्ततां नागमत् । तथाहि, युगावधौ युगान्ते पयसि भुवमभिद्रवत्यभिप्लवमाने सति सरित्पतिः समुद्रो रिक्ततां न समुपैति हि । दृष्टान्तालङ्कारः ॥ ४० ॥

यियासितामिति । अथ मधुभिद्धरिरेव विवस्वान् तेन यियासितां यातुमिष्टां जिगमिषिताम् । यातेः सन्नन्तात् कर्मणि क्तः । पततोऽभिधावतः परबलस्य शत्रुसैन्यस्य रेणून्मलते धारयतीति तन्मालिनी । मलतेर्णिनिप्रत्ययः । अत एव जरतो वृद्धस्य महिषस्य विषाणवद्धूसरां धूम्रां पुरोऽग्रे दिशमभितोधूमोऽस्याः सञ्जातस्तामभिधूमितामिव जनो लोकोऽलक्षयत् । मधुभिद्विवस्वतेति रूपकोत्थापिताधदिशि धूमितत्वोत्प्रेक्षेति सङ्करः । अत्राहुः अङ्गारिणी दिग्विप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युरिति ॥ ४१ ॥

मनस्विनामिति । उदिता उत्पन्ना गुरुर्गभीरा प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः निजमृदङ्गनिस्वनः स्वसेनातूर्यघोषः श्रुतः सन् तथा

यथा पुरः समरसमुद्यतद्विष-
द्बलानकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥
यथा यथा पटहरवः समीपता-
मुपागमत्स हरिवराग्रतःसरः ।
तथा तथा हृषितवपुर्मुदाकुला
द्विषाञ्चमूरजनि जनीव चेतसा ॥ ४३ ॥
प्रसारिणी सपदि नभस्तले ततः
समीरणभ्रमितपरागरूषिता ।

मनस्विनां मनो नोदकर्षयत् नाचकर्ष । क्षपिररं स्थार्यवन्तः । यथा पुरोऽग्रे समरसमुद्यते समरोद्युक्ते द्विषद्बले शत्रुसैन्ये ये आनकाः तेषां ध्वनिरुदकर्षयत् । एतेनैषां वीरस्थायी महोत्साह उक्तः । अत्र भयङ्करस्यापि परसैन्यघोषस्योत्साहजनकत्वं महावीरेषु न विरुध्यत इति विरोधाभासोऽलङ्कारः भीहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्ति-र्विरुद्धकार्य्योत्पत्तेर्विषमभेदश्चेति सङ्करः ॥ ४२ ॥

यथा यथेति । हरिर्वरो जामातेव हरिवरः । वरो जामातृ-वर्य्ययोरिति विश्वः । तस्याग्रतः सरतीत्यग्रतः सरोऽग्रेसरः । पुरो-ऽग्रतोऽग्रेषु सर्त्तेरिति टच्प्रत्ययः । स पूर्वोक्तः पटहरवो यथा यथा यावद्यावत्समीपतामासन्नतामुपागमत् । तथा तथा तावत्ता-वद्द्विषतां चमूर्जनीव वधूरिव । जनी सीमन्तिनी वधूरिति विश्वः । चेतसा मुदाकुला आनन्दाविला हृषितवपुः रोमाञ्चिताङ्गी । हृषेर्लो-म्स्वितीडागमः । अजनि जाता । जने कर्त्तरि लुङ्, दीपजनेत्या-दिना चिण्प्रत्ययः । वधूवरसमागमवत् प्रतिद्वन्द्विसमागमो महोत्साह-वर्द्धनो वीरसेनाया इत्युपमार्थः । तेन सैन्ययोरन्योऽन्यघट्टनवण का-रिणी प्रत्यासत्तिरासीदिति व्यज्यते ॥ ४३ ॥

प्रसारिणीति । ततः श्रवणानन्तरं सपद्यविलम्बेन नभस्तले प्रसारिणी व्याप्ता समीरणेन वायुना भ्रमितेन परागेण रूषिता रूक्षी-

व्यभाव्यत प्रलयजकालिकाकृति-
र्विदूरतः प्रतिबलकेतनावलिः ॥ ४४ ॥

क्षणेन च प्रतिमुखतिग्मदीधिति-
प्रतिप्रभास्फुरदसिदुःखदर्शना ।
भयङ्करा भृशमपि दर्शनीयतां
ययावसावसुरचमूश्च भूभृताम् ॥ ४५ ॥

पयोमुचामभिपततां दिवि द्रुतं
विपर्ययः परित इवातपस्य सः ।
समक्रमः समविषमेष्वथ क्षणात्
क्षमातलं बलजलराशिरानशे ॥ ४६ ॥

कृता अत एव प्रलयजायाः कल्पान्तप्रादुर्भूतायाः कालिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा । प्रतिबले प्रतिपक्षसैन्ये केतनावलिर्ध्वजपङ्क्तिर्विदूरतो दूरादलक्ष्यत । एतावता प्रत्यासत्तिराशीदित्यर्थः । उपमालङ्कारः ॥ ४४ ॥

क्षणेनेति । प्रतिमुखस्याभिमुखस्य तिग्मदीधितेः उष्णांशोः प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः स्फुरद्भिर्देदीप्यमानैरसिभिः खड्गैर्दुःखं दुष्करं दर्शनं यस्याः सा दुर्दर्शेत्यर्थः । असावसुरचमूश्चैद्यसेना क्षणेन च भूभृतां हरिसैनिकानां भृशं भयङ्करोतीति भयङ्करापि । मेघर्त्तिभयेषु कृञ इति खच्प्रत्ययः । दर्शनीयतां मनोहरतामिति विरोधः । दृष्टिविषयतां ययावित्यविरोधः अत एव विरोधाभासोऽलङ्कारः ॥ ४५ ॥

पयोमुचामिति । अथासुरसेनादर्शनानन्तरं समविषमेषु निम्नोन्नतेषु समक्रमस्तुल्यसञ्चारः बलजलराशिः सैन्यसागरः दिवि व्योम्नि द्रुतमभिपततामभिधावतां पयोमुचां सम्बन्धी आतपस्य विपर्ययः छायेव परितः क्षणात् क्षमातलं भूतलम् आनशे । अशू व्याप्तौ अत आदेरित्यभ्यासदीर्घः, अश्नोतेश्चेति नुमागमः । उपमालङ्कारः ॥ ४६ ॥

अमी पुरः चणमिव पश्यतो महत्
तनूदरस्थितभुवनत्रयस्य तत्।
विशालतान्दधति नितान्तमायते
बलं द्विषाम्मधुमथनस्य चक्षुषि॥ ४७॥
भृशंखिदः पुलकविकाशिमूर्त्तयो
रसाधिके मनसि निविष्टसाहसाः।
मुखे युधः सपदि रतेरिवाभवन्
ससम्भ्रमाः क्षितिपचमूवधूगणाः॥ ४८॥
ध्वजांशुकैर्ध्रुवमनुकूलमारुत-
प्रसारितैः प्रसभकृतोपहूतयः।

अमीविति। पुरोऽग्रे चणमिव पश्यतः चणमात्रं विलोकयतः। इवशब्दो वाक्यालङ्कारे तनौ चोदीयस्युदरे कुचौ स्थितं भुवनत्रयं यस्य तस्य मधुमथनस्य हरेः सम्बन्धिनि विशालतां वैपुल्यं दधति दधाने नितान्तमायते दीर्घे द्राघीयसि चक्षुषि महत् द्विषां बलं अमी वर्त्तते। चणमीचणादेव परबले इयत्तां परिचिच्छेदेत्यर्थः। चोदीयस्यपि कुचौ भुवनत्रयं परिच्छिन्दतः हरेरति चक्षुषि ग्रल्पबलपरिच्छेदः कियानिति भावः। अत्र भुवनत्रयापेक्षयाधारस्य कुक्षेरल्पत्वाच्चक्षुरपेक्षयाधेयस्य बलस्याल्पत्वाच्चाधिकालङ्कारौ सङ्कीर्य्येते॥ ४७॥

भृशेति। क्षितिपचम्बो वध्व इवेत्युपमितसमासः रतेरिवेति लिङ्गात्। तासां गणाः युधो मुखे युद्धारम्भे रतेर्मुखे रत्यारम्भ इव सपदि भृशं खिद्यन्तीति भृशखिदः। क्विप्। पुलकविकाशिमूर्त्तयो रोमाञ्चोदञ्चितगात्राः रसः वीरः शृङ्गारश्च तेनाधिके निर्भरे मनसि निविष्टसाहसाः प्रविष्टधार्ष्ट्याः ससम्भ्रमाः सत्वराश्चाभवन्। यादृशी वधूनां सुरतसकर्मण्युत्कण्ठा तादृशी चमूनां समरकर्मणीत्युपमार्थः तेनैतासां समरसुरतयोः समरसत्वं व्यज्यते॥ ४८॥

यदूनभि द्रुततरमुद्यतायुधाः
क्रुधा परं रयमरयः प्रपेदिरे ॥ ४९ ॥

हरेरपि प्रति परकीयवाहिनी-
रधिस्यदम्प्रववृतिरे चमूचराः ।
विलम्बितुन्न खलु सहा मनस्विनो
विधित्सतः कलहमवेक्ष्य विद्विषः ॥ ५० ॥

उपाहितैर्वपुषि निवातवर्म्मभिः
स्फुरन्मणिप्रसृतमरीचिसूचिभिः ।
निरन्तरन्नरपतयो रणाजिरे
रराजिरे शरनिकराचिता इव ॥ ५१ ॥

ध्वजांशुकैरिति । अरयः चैद्यपक्षाः अनुकूलमारुतेन प्रसारितैः ध्वजांशुकैर्ध्रुवं प्रसभेन बलात्कारेण कृतोपहूतयः कृताह्वाना इवेत्यर्थः यदून् अभि यादवान् प्रति द्रुततरमुद्यतायुधाः उत्क्षिप्तायुधाः सन्तः क्रुधा क्रोधेन परम् अधिकं रयं त्वरां प्रपेदिरे । ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्वमुत्प्रेक्ष्यते ध्रुवमिति ॥ ४९ ॥

हरेरिति । हरेरपि चमूषु चरन्तीति चमूचराः सैनिकाः । चरेष्टः । परेषामिमाः परकीयाः वाहिनीः सेनाः प्रति अधिस्यदम् अधिकरयं यथा तथा । रंहस्तरसी तु रयः स्यद इत्यमरः । प्रववृतिरे प्रवृत्ताः । तथाहि, मनस्विनो धीराः कलहं युद्धं विधित्सतः विधातुमिच्छतः । दधातेः सन्नन्ताच्छतृप्रत्ययः शतरि रूपम् । तान् विद्विषः शत्रून् अवेक्ष्य विलम्बितुम् । शकधृषेत्यादिना तुमुन्प्रत्ययः । सहन्त इति सहाः क्षमाः । पचाद्यच् । न खलु । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

उपाहितैरिति । रणाजिरे रणाङ्गने नरपतयो राजानो वपुषि उपाहितैरासक्तैः स्फुरन्तो मणिप्रसृता रत्ननिर्गता मरीचय एव सू-

अथोच्चकैर्जरठकपोतकन्धरा-
तनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चलच्चरणविधूतमुच्चर-
द्घनावलीरुदचरत चमारजः ॥ ५२ ॥

विषङ्गिभिर्भृशमितरेतरं क्वचित्
तुरङ्गमैरुपरि निरुद्धनिर्गमाः ।
चलाचलैरनुपदमाहताः खुरै-
र्विबभ्रमुश्चिरमध एव धूलयः ॥ ५३ ॥

चयो येषां तैः निवातवर्मभिः अच्छिद्रकञ्चुकैः । निवातो दृढसन्नाहे निवाते वाश्रयेऽपि चेति विश्वः । तनुत्रं वर्म कञ्चुकमित्यमरः । निरन्तरं नीरन्ध्रं शरनिकरैराचिताः प्रोता इव रराजिरे । क्षणानां च शूलानामिति निकृत्यादेरव्याप्तत्वोपाभावः । मणिरोचिषः साहश्या-च्छरनिकरत्वोत्प्रेक्षा ॥ ५१ ॥

अथेति । अथानन्तरम् उच्चकैरुन्नतं जरठकपोतकन्धरातनूरुह-प्रकरविपाण्डुरद्युति जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्यु-पमा । पारावतः कलरवः कपोत इत्यमरः । बलैः सैन्यैश्चलद्भिश्चरणै-र्विधूतमुद्धूतं प्रेरितं सदुच्चरदुत्पतत् चमारजो भूरेणुर्घनावलीर्घनपङ्क्ती-रुदचरत प्रचक्रामेत्यर्थः । उदश्चरः सकर्मकाद्ध्यात्मनेपदम् । अस्य प्रत्युदाहरणमुच्चरदिति । अत्र भूरेणोर्मेघमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥ ५२ ॥

विषङ्गिभिरिति । चलाचलैश्चटुलैः खुरैरनुपदं प्रतिपदम् आहताः उद्धताः भृशमितरेतरं परस्परं निरन्तरमिति पाठे अभितो निरन्तरं नीरन्ध्रं विषङ्गिभिर्मिथःश्लिष्टैस्तुरङ्गैरुपरिनिरुद्धो निर्गमो यासां ताः धूलयः क्वचित् चिरमध एव विबभ्रमुर्भ्रेमुरिति भावः । धूलीनामुर्ध्वगमनविरोधस्योपरिनिर्गमरोधेन विशेषणगत्या परि-हारात् काव्यलिङ्गसङ्कीर्णो विरोधाभासोऽलङ्कारः ॥ ५३ ॥

गरीयसः प्रचुरमुखस्य रागिणो
रजोऽभवद् व्यवहितसत्त्वमुत्कटम् ।
सिसृक्षतः सरसिजजन्मनो जगत्
बलस्य तु क्षयमपनेतुमिच्छतः ॥ ५४ ॥

पुरा शरक्षतिजनितानि संयुगे
नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलघिषुराप्तभीतयः
खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

क्वचिल्लसद्घननिकुरम्बकर्बुरः
क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ।

गरीयस इति । गरीयसो सर्वलोकपितामहत्वात् पूज्यतरस्य अन्यत्र महत्तरस्य प्रचुरमुखस्य चतुर्मुखस्येत्यर्थः अन्यत्र बहुप्रवाहस्य रागिणो रक्तवर्णस्य अन्यत्र रणे रागिणोऽनुरागवतः एवम्भूतस्य सरसिजजन्मनो ब्रह्मणो जगत्सिसृक्षतः जगत् स्रष्टुमिच्छतः सतः । सृजेः सन्नन्ताल्लटः शत्रादेशः । व्यवहितसत्त्वं तिरस्कृतसत्त्वगुणकम् अन्यत्र तिरोहितजन्तुकं रजो रजोगुणो रेणुश्चोत्कटमुद्रिक्तमभवत् । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमिच्छतः सतोऽभवत् । अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्देन एकस्य निन्द्योरन्यस्य संनिहार्योरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥ ५४ ॥

पुरेति । संयुगे युद्धे सति शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मान् प्रसभं प्रसह्य पङ्कतां पुरा नयन्ति नेष्यन्ति । यावत् पुरानिपातयोर्लडिति भविष्यदर्थे लट् । इतीत्थमालोक्य ध्रुवमाप्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याग्निमित्रस्य वायोः केतवो रेणवः तन्निकृत्यातङ्केनेति भावः । उच्चैरत्युन्नतं खमाकाशं व्यलघिषुः वियदारूढा इत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥ ५५ ॥

क्वचिदिति । क्वचिल्लसन् घननिकुरम्बवन्नवाभ्रपटलवत् कर्बुरः

क्वचिच्छरच्छशधरखण्डपाण्डुरः
खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५६ ॥

महीयसां महति दिगन्तदन्तिना-
मनीकजे रजसि मुखानुषङ्गिणि ।
विसारितामजिहत कोकिलावली-
मलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥

शिरोरुहैरलिकुलकोमलैरमी
मुधा मृधे मृषत युवान एव मा ।

यमलः । क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः कनकचूर्णराशिकपिशः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरैः क्षतस्य क्षितितलस्य रेणुरुद्ययौ उज्जगाम । अत्रोपमाद्वयस्य संसृष्टिः ॥ ५६ ॥

महीयसामिति । महति अनीकजे सेनासमुत्थे रजसि महीयसां दिगन्ता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानि इति श्लिष्टरूपकम् । तेष्वनुषङ्गिणि लग्ने सति । कोकिलावलीवन्मलीमसा मलिना जलदा दिङ्मुखसङ्गिन एव ये मेघास्त एव मदाम्बुराजयो मदरेखाः विसारितां प्रसरत्वमजिहत अगच्छन् प्राप्ता इत्यर्थः । पांसुपातस्य दन्तिनां मदहेतुत्वादिति भावः । तदुक्तं महाभारते । स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः । कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दयेति । दिगन्तलम्बिनो मेघाः सेनारजोमेलनाद्गण्डलीबभूवुरित्यर्थः । अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात् समस्तवस्तुवर्त्ति सावयवरूपकं मुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः । अजिहतेति ओहाङो लङि श्नाभ्यस्तयोरात इत्याकारलोपः अदभ्यस्तादित्यदादेशः ॥ ५७ ॥

शिरोरुहैरिति । अमी युवानः अलिकुलकोमलैः शिरोरुहैः मुधा मृधे । मृध इति युद्धपर्यायेष्वमरः । मा मृषत न म्रियन्ताम् । म्रियतेर्माङि लुङि न माङ्योगे इत्यडभावः, उश्चेति सिचः

बलोद्धतन्धवलितमूर्द्धजानिति
ध्रुवञ्जनाञ्जरत इवाकरोद्रजः ॥ ५८ ॥

सुसंहतैर्दधदपि धाम नीयते
तिरस्कृतिं बहुभिरसंशयम्परैः ।
यतः क्षितेरवयवसम्पदोऽणव-
स्त्विषान्निधेरपि वपुरावरीषत ॥ ५९ ॥

द्रुतद्रवद्रथचरणक्षतक्षमा-
तलोल्लसद्बहुलरजोऽवगुण्ठितम् ।
युगक्षयक्षणनिरवग्रहे जगत्
पयोनिधेर्जल इव मग्नमाबभौ ॥ ६० ॥

कित्त्वाच्च गुणः । इतीत्थमालोच्येत्यर्थः बलोद्धतं रजः कर्तृ धवलितमूर्द्धजान् धवलीकृतकेशान् जनान् जरत इवाकरोत् वृद्धानिवाकरोदित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् अत एवशब्दस्यानवधारणार्थत्वाच्च तेन पौनरुक्त्यम् । इवौपम्येऽवधारणे इति विश्वः । प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपीत्यमरः । जीर्य्यतेरतृन्निति अतृन्प्रत्ययः ॥ ५८ ॥

सुसंहतैरिति । धाम तेजो दधदपि दधानोऽपि तेजस्व्यपीत्यर्थः । परैरन्यैः सुसंहतैः सुसङ्गतैः परैरैक्यङ्गतैश्च बहुभिः तिरस्कृतिं नीयते । असंशयं निश्चितम् । अर्थाभावेऽव्ययीभावः । कुतः यतः अणवः सूक्ष्माः क्षितेरवयवसम्पदो रेणुसन्दोहाः त्विषां निधेः सूर्य्यस्यापि वपुरावरीषत आच्छादितवन्तः । वृङो लुङि इटो वेति इटो दीर्घः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५९ ॥

द्रुतेति । द्रुतं शीघ्रं द्रवतां धावतां रथानां चरणैश्चक्रैः क्षतात् क्षुण्णात् क्षमातलादुल्लसता प्रतता बहुलेन सान्द्रेण रजसावगुण्ठितमाच्छादितं जगद्युगक्षयक्षणे कल्पान्तकाले निरवग्रहे निष्प्रतिबन्धे पयोनिधेर्जले मग्नमिवाबभावित्युत्प्रेक्षा ॥ ६० ॥

समुल्लसद्दिनकरवक्त्रकान्तयो
रजस्वलाः परिमलिताम्बरश्रियः ।
दिगङ्गनाः क्षणमविलोकनक्षमाः
शरीरिणाम्परिहरणीयतां ययुः ॥ ६१ ॥
निरीक्षितुं वियति समेत्य कौतुकात्
पराक्रमं समरमुखे महीभृताम् ।
रजस्ततावनिमिषलोचनोत्पल-
व्यथाकृति त्रिदशगणैः पलाय्यत ॥ ६२ ॥
विषङ्गिणि प्रतिपदमापिबत्यपो
हताचिरद्युतिनि समीरलक्ष्मणि ।

समुल्लसदिति । समुल्लसन्ती दिनकरस्यैव वक्त्रस्य कान्तिर्यासां ताः रजो रेणुरेव रज आर्त्तवमासामस्तीति रजस्वलाः । रजः कृष्यासुतिपरिषद्भ्यो वलजित्यादिना मत्वर्थीयो वलच्प्रत्ययः । धूलिधूसराः उदक्याश्च । परिमलिताः परितः संजातमला अम्बरस्याकाशस्यैवाम्बरस्य वस्त्रस्य च श्रीर्यासां ताः । अतएवाविलोकनक्षमा विलोकनानर्हाः दिश एवाङ्गनाः शरीरिणां प्राणिनां क्षणमीषत्कालं परिहरणीयतामगम्यतां ययुः । तस्मात् मलवद्वाससं न संविशेदित्यादिनिषेधादिति भावः । श्लिष्टपरम्परितरूपकम् ॥ ६१ ॥

निरीक्षितुमिति । त्रिदशगणैर्देवगणैः समरमुखे रणारम्भे महीभृतां राज्ञां पराक्रमं निरीक्षितुं वियति कौतुकात्समेत्य रजस्ततौ रजस्तोमे न निमिषन्त्यनिमिषाणि पक्ष्मपातरहितानि । निमेः पचाद्यच्, कुटादित्वाद्व गुणः । तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम् । कृञः क्विप् । पलाय्यत अधाव्यत । भावे परापूर्वादयतेर्लङि तङ्, उपसर्गस्यायताविति रेफस्य लत्वम् । अत्र लोचनोत्पलानां व्यथाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥६२॥

शनैः शनैरुपचितपङ्कभारिकाः
पयोमुचः प्रययुरपेतवृष्टयः ॥ ६२ ॥
नभोनदीव्यतिकरधौतमूर्त्तिभि-
र्वियद्गतैरनधिगतानि लेभिरे।
चलच्चमूतुरगखुराहतोत्पत-
न्महीरजःस्नपनसुखानि दिग्गजैः ॥ ६४ ॥
गजव्रजाक्रमणभरावनम्रया
रसातलं यदखिलमानशे भुवा।
नभस्तलं बहुलतरेण रेणुना
ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ ६५ ॥

विषङ्गिणीति। विषङ्गिणि विषक्ते अत एव हताचिरद्युतिनि विरमिताचिरद्युतिनि समीरलक्ष्मणि वातकेतौ रजसि प्रतिपदं प्रतिक्षणम् अपोऽम्भांसि आपिबत्याकर्षति सति अत एव अपेतवृष्टयो निवृत्तवर्षाः पयोमुचः। उपचिताः प्रवर्द्धिताः पङ्कभारिकाः पङ्कभरणानि येषां ते उपचितपङ्कभारिकाः सन्तः। पर्य्यायार्हणोत्पत्तिषु ण्वुजित्यर्हणार्थे ण्वुल्प्रत्ययः। अर्हणञ्च करणसामर्थ्यम्। अत एव भाराक्रान्तैः शनैः प्रययुः प्राप्ताः। अत्र पयोमुचां पङ्कभरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६२ ॥

नभोनदीति। नभोनदीव्यतिकरेणाकाशगङ्गाया अवगाहेन धौतमूर्त्तिभिः क्षालिताङ्गैः वियद्गतैः खेचरैः अत एव दिग्गजैरनधिगतानि अननुभूतचराणि चलद्भिश्चमूतुरगखुरैराहतम् अत एवोत्पतदुद्गच्छद् महीरजस्तेन स्नपनमभिषेचनं तेन यानि सुखानि तानि लेभिरे। कुञ्जराः पांसुवर्षेणेत्युदाहृतम्। अत्रापि दिग्गजानां रजःस्नपनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। ॥ ६४ ॥

गजेति। यद्यस्माद्गजव्रजानाम् आक्रमणभरेण पादक्षेपगौर-

समस्थलीकृतविवरेण पूरिता
महीभृतां सचरजसा महागुहाः ।
रहस्त्रपाविधुरवधूरतार्थिनां
नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥

गते मुखच्छदपटसादृशीन्दृशः
पथस्तिरोदधति घने रजस्यपि ।
मदानिलैरधिमधुचूतगन्धिभि-
र्द्विपा द्विपानभिययुरेव रंहसा ॥ ६७ ॥

शेषावनम्रया भुवाखिलं रसातलं पातालमानशे व्याप्तम् । यद्यस्माच्च नभस्तलं बहुलतरेण रेणुनानशे ततः कारणात् त्रिजगत् जगत्त्रयम् । तद्धितार्थेत्यादिना समाहारे द्विगुरेकवचनम् । एकतां भूलोकतामिवागमत् । स्फुटमित्युत्प्रेक्षायाम् ॥ ६५ ॥

समेति । समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन चमूरजसा पूरिताः महीभृतां भूधराणां महागुहाः । रहो रहसि । अत्यन्तसंयोगे द्वितीया । त्रपया विधुराणां भिन्नानां वधूनां रतं सुरतमर्थयन्त इति तदर्थिनां नभःसदां सुराणाम् उपकरणीयतामुपकारकत्वं ययुः तासां रजःपूरणात् पुंसामन्धकरणत्वादिति भावः । तव्यत्तव्यानीयरः कर्तर्येता । अत्र रजःपूरणस्य विशेषणगत्योपकारकहेतुत्वात् काव्यलिङ्गभेदस्तयोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥ ६६ ॥

गत इति । छाद्यतेऽनेनेति छदः मुखस्य छदो मुखच्छदः । पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः, छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः । स चासौ पटश्च तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्यये षिद्गौरादिभ्यश्चेति ङीष्; स च ष्यञ्षित्करणादीकारो बहुलमिति वामनवचनाद्वैकल्पिकः । गते प्राप्ते । गजानां युद्धपूर्वकाले मुखावरणकारणात् तत्सदृशे घने सान्द्रे रजसि दृशो दृष्टेः पथो मार्गान् तिरो-

मदाम्भसा परिगलितेन सप्तधा
गजाङ्कनः शमितरजस्वयानधः ।
उपर्यवस्थितघनपांशुमण्डला-
नलोकयत्ततपटमण्डपानिव ॥ ६८ ॥

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः ।
वर्षन्तः शममानयन्नुपलसत्शृङ्गारलेखायुधाः
काले कालियकायकालवपुषः पांशून् गजाम्भोमुचः ॥६९॥

इति श्रीमाघकृते शिशुपालवधे महाकाव्ये यदुवंश-
क्षोभणो नाम सप्तदशः सर्गः ॥ १७ ॥

---

दधति छादयति स्मापि । अधिमधोः अधिकमकरन्दस्य चूतस्येव गन्धो येषां तैः । उपमानाच्चेति गन्धस्येत्वे तदेकान्तग्रहणं तु व्यभिचारि । मदानिलैरभिम्रानैर्द्विपा गजा द्विपान् गजान् प्रति रंहसा वेगेनाभिययुरेव । अत्र तिरोहितदृष्टेरभियानविरोधस्य मदानिलैः परिहाराद्विरोधाभासोऽलङ्कारः ॥ ६७ ॥

मदाम्भसेति । सप्तधा । करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिरिति पालकाव्ये । सप्तभिः स्रोतोभिः परिगलितेन स्रुतेन मदाम्भसा अधः शमितो रजस्वयो यैस्तान् उपर्यवस्थितानि तथैव स्थितानि घनानि सान्द्राणि पांशुमण्डलानि पूर्वोक्तरजःपुञ्जा येषां तान् गजान् जनो लोकस्तता उपरि वितताः पटमण्डपाः येषां तानिवेत्युत्प्रेक्षा । अलोकयत् ॥ ६८ ॥

अन्यूनेति । अन्यूनोन्नतयो महोच्छ्रायाः अतिमात्रपृथवोऽत्यन्तविपुलाः अत एव पृथ्वीधरश्रीभृतः शैलशोभाधारिण इति निदर्शनालङ्कारः । कनकावलीभिराभरणहेतुहेमराजिभिः करणैः । सुदाम्ना

# अष्टादशः सर्गः।

संजग्माते तावपायानपेक्षौ
सेनाम्भोधी धीरनादौ रयेण।
पक्षच्छेदात्पूर्वमेकत्र देशे
वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम्॥ १॥

पर्वतेनैकदिशः सौदामिन्यो विद्युतः। तेनैकादिगित्यण्प्रत्यये ङीप्। ताभिर्दीर्नभिरिव सौदामिनीदामभिर्विद्युल्लताभिः उपमां सादृश्यं तन्वन्तः। तडित् सौदामिनी विद्युदित्यमरः। वतुलोपमाभ्यामिति सहयवचनस्यैव निषेधादिह सादृश्यवाचित्वात्तृतीया। उपलसन्तः शृङ्गाराः सिन्दूरादिमण्डलान्येव लेखायुधानि सुरधनूंषि येषां ते तथोक्ताः। शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। लेखालेख्ये सुर इति च विश्वः। कालियस्य कालियनागस्य कायवत् कालवपुषः कृष्णदेहाः। गजा एव अम्भोमुचो मेघाः काले योग्यकाले वर्षन्तो मदाम्बु सृजन्तः पांसून् शर्म शान्तिम् आनयन् प्रापयन्। रूपकालङ्कारः। शार्दूलविक्रीडितं वृत्तमुक्तम्॥ ६८॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते माघकाव्यव्याख्याने सर्वङ्कषाख्ये सप्तदशः सर्गः॥ १७॥

---

अथास्मिन्सर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलनं तावदाह। संजग्माते इति। अपायोऽपगमो युद्धादपसरणं तस्यानपेक्षौ तमनिच्छन्तौ युद्धान्निवर्तिनावित्यर्थः। ईक्षतेः पचाद्यचि नञ्समासः। धीरनादौ गम्भीरघोषौ तौ सेनाम्भोधी सेनासागरौ। पक्षच्छेदात् पूर्वं पक्षाद्दम्भ्रमादिति भावः। एकत्र देशे एकस्थाने निलेतुं वस्तुम्।

पत्तिः पत्तिं वाहमेयाय वाजी
नागन्नागः स्यन्दनस्थो रथस्थम् ।
इत्थं सेना वल्लभस्येव रागा-
दङ्गेनाङ्गम्प्रत्यनीकस्य भेजे ॥ २ ॥
रथ्याघोषैर्बृंहणैर्वारणाना-
मैक्यङ्गच्छन्वाजिनां ह्रेषया च ।

लिङ् गताविति धातोस्तृन्प्रत्यये गुणः । वास्फुरन्तौ विस्फुरन्तौ सह्यविन्ध्यौ वा सह्यविन्ध्याख्यौ पर्वताविव । वा स्याद्विकल्पोपमयो-रिति विश्वः । सञ्जग्माते मिलितवन्तौ । संपूर्वाद्गच्छतेरकर्मकाल्लिटि समो गम्यृच्छीत्यादिना आत्मनेपदम् । अत्र सह्यविन्ध्ययोरप्येकत्र मिलनस्याप्रसिद्धस्य सम्भावनामात्रेणोक्तत्वादुपमानाप्रसिद्धेर्नोपमा किंतूत्प्रेक्षेति सङ्क्षेपः । अस्मिन् सर्गे शालिनी वृत्तम् । शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरिति लक्षणात् ॥ १ ॥

सेनाम्भोधी संजग्माते इत्युक्तं तत्सङ्गतिप्रकारं तावद्दर्शयति । पत्तिरिति । पत्तिः पदातिः पत्तिं पदातिम् । पदातिपत्तिपदगपादातिकपदातय इत्यमरः । एयाय प्राप । आङ्पूर्वादिणो लिट् । वाज्यश्वो वाहमश्वमेयाय । वाजिवाहार्वगन्धर्वा इत्यमरः । नागो गजो नागम् एयाय । स्यन्दनस्थो रथस्थमेयाय न तु व्युत्क्रमेण धर्मयुद्धत्वादिति भावः । इत्थमुक्तरीत्या सेना रागाद्युद्धरागात् रतिरागाच्च अङ्गेन स्वाङ्गेन पत्त्यादिना करचरणादिना च वल्लभस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः । अङ्गं पत्त्यादिकं करचरणादिकं च भेजे । यथा कान्ता कान्तस्योरुमूरुणा करं करेण मुखं मुखेन भजति तथा सेना प्रतिसैन्यस्य पत्तिं पत्तिना अश्वमश्वेनेत्यादिक्रमेण भेजे न तु व्युत्क्रमेणेत्यर्थः । वल्लभस्येवेत्युपमया समरसुरतयोः समरसत्वं व्यज्यते ॥ २ ॥

व्योमव्यापी सन्ततन्दुन्दुभीना-
मव्यक्तोऽभूदीशितेव प्रणादः॥ ३॥
रोषावेशाद्गच्छतां प्रत्यमित्रं
दूरोत्क्षिप्तस्थूलबाहुध्वजानाम्।
दीर्घास्तिर्य्यग्वैजयन्तीसदृक्षः
पादातानां भ्रेजिरे खङ्गलेखाः॥ ४॥

रथ्येति। सततं व्योमव्यापी गगनस्पृक् अन्यत्र सर्वगत इत्यर्थः। दुन्दुभीनां रणभेरीणां प्रणादो महाघोषः। उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम्। रथानां समूहो रथ्या। त्रिषु द्वे पाद्यो रथ्या रथकड्या रथव्रज इत्यमरः। खलगोरथादिति यत्प्रत्ययः समूहार्थे। तासां घोषैः वारणानां बृंहणैः कण्ठघोषैः। बृंहणं गजगर्जितमिति वैजयन्ती। वाजिनामश्वानां हेषया हेषणेन च। हेषा ह्रेषा च निस्वन इत्यमरः। गुरोश्च हल इत्यप्रत्यये टाप्। ऐक्यं मेलनं गच्छन्। अन्यत्र तत्त्वपदार्थशोधनाद्द्वितीयतां गच्छन्। ईशिता ईशयिता ईश्वरत्वोपाधिमान् परमात्मेव। ईशेस्तृच्। अव्यक्तोऽभूत् अयं दुन्दुभिघोष इति दुर्भेदो बभूव। अन्यत्र जीवेश्वरोपाधिविलयादयमीश्वरोऽयं जीव इति भेदरहितोऽभूदित्यर्थः। अत्रैक्यगमनस्य विशेषणगत्या अव्यक्तहेतुत्वात् काव्यलिङ्गमुपमाङ्गमिति सङ्करः॥ ३॥

रोषावेशादिति। रोषावेशात् प्रत्यमित्रमभिशत्रुम्। आभिमुख्येऽव्ययीभावः। गच्छतां धावतां द्रवतां दूरादुत्क्षिप्ताः स्थूलाः पीवराः बाहुध्वजाः ध्वजस्तम्भा इव बाहवो येषां तेषां पादातानां पदातिसमूहानाम्। पादातं पत्तिसंहतिरित्यमरः। भिक्षादिभ्योऽण्। तिर्य्यग्दीर्घास्तिर्य्यगायता इत्यर्थः। लेखा इव खड्गाः खड्गलेखाः वैजयन्तीसदृक्षः पताकासदृक्षः सत्य इत्यर्थः। वैजयन्ती पताका स्यादित्यमरः। दृशेः समानान्ययोश्चेति क्स च वक्तव्य इति समानशब्दो-

वल्गाविद्धा धौरितेन प्रयाता-
मश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्तिभाजो
दर्पस्येव व्याप्तदेहस्य शेषाः ॥ ५ ॥

सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्षा
आङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।
कल्पस्यान्ते मारुतेनोपनुन्ना-
श्चेलुश्चण्डङ्गण्डशैला इवेभाः ॥ ६ ॥

दपदात् दृशेः कञ्प्रत्ययः । दृक्षे चेति वक्तव्य इति समानस्य सभावः । भ्रेजिरे रेजिरे । भ्राजृ दीप्ताविति धातोः कर्त्तरि लिट्, फणानां च षण्णामिति विकल्पादेत्वाभ्यासलोपौ । आर्षीयमुपमा ॥ ४ ॥

वल्गेति । धौरितेन धौरिताख्येन गतिविशेषेण प्रयातां धावताम् । यातेर्लटः शत्रादेशः । अश्वीयानामश्वसमूहानाम् । केशाश्वाभ्यां यञ्छावन्यतरस्यामिति छप्रत्ययः । उच्चकैरुच्चलन्तो गतिवशादूर्ध्वमुत्पतन्तः । वल्गते इति वल्गाणि प्रयाणवल्गनवरत्राः । वल्गु त्वपुवरत्रयोरिति विश्वः । पृथुवर्धिवपिभ्यो रन्निति रन्प्रत्ययः लघूपधगुणो रपरः । तेष्वाविद्धाः स्थापिता रौक्माः सौवर्णाः स्थासकाः बुद्बुदाकारमण्डलानि व्याप्तदेहस्य सर्वाङ्गीणस्य मूर्तिभाजो मूर्तिभृतः दर्पस्यान्तरस्य तेजसः शेषाः अन्तरमानाद्बहिर्निर्गता अतिरेका इव रेजुरित्युत्प्रेक्षा ॥ ५ ॥

सान्द्रेति । सान्द्रत्वक्काः सान्द्रचर्माणः । शैषिकः कप्प्रत्ययः । तल्पलाः पृष्ठवंशाः तेषु श्लिष्टाः कक्षाः मध्यबन्धवरत्रा येषां ते । दूष्या कक्षा वरत्रा स्यादित्यमरः । गजानां विंशत्युत्तरशतायुषां द्वादश दशा भवन्ति तत्र चतुर्दशारूढा प्रौढशोभा । तदेवाह अथ चतुर्थीमाङ्गीं शारीरीं शोभामाप्नुवन्तः चत्वारिंशद्वर्षदेश्या इत्यर्थः । इभाः गजाः

संक्रीडन्ती तेजिताश्वस्य रागा-
दुच्चस्यारामग्रकायोत्थितस्य ।
रंहोभाजामक्षधूः स्यन्दनानां
हाहाकारम्प्राजितुः प्रत्यनन्दत् ॥ ७ ॥

कुर्वाणानां साम्परायान्तराय-
म्भूरेणूनाम्मृत्युना मार्जनाय ।
सम्मार्जन्यो न्यूनमुद्धूयमाना
भान्ति प्रोच्चैः केतनानाम्पताकाः ॥ ८

कल्पस्यान्ते मारुतेनोपनुन्नाः प्रलयमारुतप्रेरिताः गण्डशैलाः स्थूलोपला इव चण्डं तीव्रं चेलुः प्रतस्थिरे इत्युपमा ॥ ६ ॥

संक्रीड्न्तीति । संक्रीड्न्ती संघर्षात् कूजन्ती । समोऽकूजने च वक्तव्यमिति वचनात् कूजने क्रीड़ोऽनुसंपरिभ्यश्चेति नात्मनेपदम् । रंहोभाजां वेगभाजां स्यन्दनानां रथानामक्षस्य चक्राधारकाष्ठस्य धूरग्रमक्षधूः । अक्षं रथाङ्ग आधार इति वैजयन्ती । अनक्षे इति निषेधात् ऋक्पूरित्यादिना न समासान्तः । रागात् आरां प्रतोदमुच्चस्य तेजिता उत्साहिता अश्वा येन तस्य अग्रं चासौ कायश्च स उत्थितो यस्य तस्योत्थितपूर्वकायस्येत्यर्थः । आहिताग्न्यादित्वात् साधुः । प्राजितुः सारथेः । नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिरित्यमरः । हाहाकारमुत्साहवर्द्धनार्थं हाहाशब्दम् । एकवार इत्येतैवग्रहणस्योपलक्षणत्वात् अन्यत्रापि यथादर्शनं शब्दनिर्देशात् कारप्रत्ययः । अथवा हाहाकारं हाहाकरणम् । भावे घञ्प्रत्ययः । प्रत्यनन्दत् साधुसाध्वित्यन्वमोदत । किमित्युत्प्रेक्षा ॥ ७ ॥

कुर्वाणानामिति । उच्चैरुन्नताः केतनानां ध्वजस्तम्भानां पताका जयन्त्यः साम्परायान्तरायं युद्धविघ्नं कुर्वाणानाम् । अनीकं साम्परायिकमित्यमरः । भूरेणूनां मार्जनाय प्रमार्जनार्थं मृत्युना अन्तको-

उच्चनादन्धन्विभिर्निष्ठुराणि
स्थूलान्युच्चैर्मण्डलत्वन्दधन्ति ।
आस्फाल्यन्ते कार्मुकाणि स्म कामं
हस्त्यारोहैः कुञ्जराणां शिरांसि ॥ ९ ॥

घण्टानादो निस्वनो डिण्डिमानां
ग्रैवेयाणामारवो बृंहितानि ।
आसेत्येवम्प्रत्यवोचन् गजाना-
मुत्साहार्थं वाचमाधोरणस्य ॥ १० ॥

नोद्धूयमानाः प्रकम्प्यमानाः संमार्जन्यः शोधिन्य इव भान्ति स्म । सम्मार्जनी शोधिनी स्यादित्यमरः । न्यूनमित्युत्प्रेक्षा ॥ ८ ॥

उच्चनादमिति । धन्विभिर्धनुष्मद्भिः । व्रीह्यादित्वादिनिप्रत्ययः । निष्ठुराणि कर्कशानि स्थूलानि पीवराणि उच्चैरुन्नतानि मण्डलत्वं दधन्ति वर्त्तुलत्वं दधानानि । एकत्राकर्षणादन्यत्र स्वभावाच्चेति भावः । कर्माणि प्रभवन्तीति कार्मुकाणि धनूंषि । उकञ् । उच्चनादमुच्चैः-श्रूयमाणघोषं यथा तथा काममास्फाल्यन्ते स्म पाटवपरीक्षार्थं प्राणि-भिरास्फालितानि । हस्तिनं रोहन्ति इति हस्त्यारोहैर्निषादिभिः । कर्मण्यण् । कुञ्जराणां शिरांसि आस्फाल्यन्ते स्म उत्साहार्थमिति भावः । अत्र कार्मुकाणां कुञ्जरशिरसाञ्च प्रकृतानामेव निष्ठुरत्वा-दिविशेषणसाम्येनौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९ ॥

घण्टानाद इति । घण्टानादः किङ्किण्यादिघोषः डिण्डिमानां वाद्यविशेषाणां निस्वनः । ग्रीवासु भवानां ग्रैवेयाणां कण्ठभूष-णानां ग्रीवाभ्य एवेति ढक्प्रत्ययः । आरवः । बृंहितानि बृंहणानि गजानाम् उत्साहार्थमाधोरणस्य हस्तिपकस्य । आधोरणा हस्तिपका इत्यमरः । वाचं बृंहणादिशब्दम् आसेति प्रत्यवोचन्निवै-वमेवेत्यनुकूलमूचिर इवेत्युत्प्रेक्षा । आसानुगुण्ये स्मरण इत्य-मरः ॥ १० ॥

यातैश्चातुर्विध्यमस्त्रादिभेदा-
दव्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन्दर्शयन्तो
मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥
रोषावेशादाभिमुख्येन काचित्
पाणिग्राहं रंहसैवोपयातौ ।
हित्वा हेतीर्मल्लवन्मुष्टिघातं
घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥ १२ ॥

यातैरिति । आयुधेन जीवन्तीत्यायुधीयाः आयुधजीविनः । शस्त्राजीवे काण्डपृष्ठायुधीयायधिकाः समा इत्यमरः । आयुधाच्छ चेति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः अस्त्रादिभेदादस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः । सुष्ठुभावः सौष्ठवं नैशित्यादिगुणवत्त्वं तस्मात् । उद्गात्रादित्वादञ्प्रत्ययः । लाघवाद्वेगवत्त्वाच्च । इगन्ताच्च लघुपूर्वादित्यण्प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः मुच्यन्त इति मुक्तानि शरादीनि न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैस्तैर्मुक्तामुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् । स्वभावानुप्रासयोः संसृष्टिः ॥ ११ ॥

रोषावेशादिति । कौचिद्योधौ रोषावेशाद्रोषपारवश्यादाभिमुख्येन रंहसा वेगेनैवोपयातौ मिथःप्रत्यासन्नौ अत एव पाणिग्राहमन्योन्यं पाणिं गृहीत्वा । द्वितीयायां चेति णमुल्प्रत्ययः । हेतीः शस्त्राणि हित्वा त्यक्त्वा वैकल्यादिति भावः । हेतिस्तु शस्त्रे द्वयोरिति केशवः । मल्लवन्मल्लाभ्यां तुल्यम् । तेन तुल्यमिति वतिप्रत्ययः । मुष्टिघातं मुष्टिभिर्हत्वा । करणे हन इति णमुल्प्रत्ययः । घ्नन्तौ प्रहरन्तौ । हन्तेर्लटः शत्रादेशः कषादित्वादनुप्रयोगः । मुष्टिभिर्घ्नन्तावित्यर्थः । बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धम् । तत्र तेनेदमिति सरूपे इति बहुव्रीहाविच् कर्मव्यतीहार इतीच्-

शुद्धाः सङ्गन क्वचित्प्राप्नुवन्तो
दूरान्मुक्ताः शीघ्रतान्दर्शयन्तः ।
अन्तःसैनं विद्विषामाविशन्तो
युक्तञ्चक्रुः सायका वाजितायाः ॥ १२ ॥
आक्रम्याजेरग्रिमस्कन्धमुच्चै-
रास्थायाथो वीतशङ्कं शिरश्च ।

प्रत्ययः समासान्तः अन्येषामपि दृश्यत इति दीर्घः तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम् । तत्र व्यत्यस्यजतां व्यासक्तवन्तौ । कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदम् । सङ्गर्यादिति तद्धितगता श्रौती पूर्णोपमा ॥ १२ ॥

शुद्धा इति । शुद्धा निर्विषाः । न फणिभिर्नापि दग्धेर्नाग्निज्वलिततेजनैरिति निषेधादिति भावः । अन्यत्र जात्येत्यर्थः । क्वचित् कुत्रापि सङ्गं प्रतिबन्धं न प्राप्तवन्तः न प्राप्ताः दुर्वारा इत्यर्थः । दूरान्मुक्ता दूरत एव विसृष्टाः । स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति समासः, पञ्चम्याः स्तोकादिभ्य इत्यलुक् । शीघ्रतां जवनत्वं दर्शयन्तः । विद्विषां सेनास्वन्तः अन्तःसैनम् । विभक्त्यर्थेऽव्ययीभावः । आविशन्तः सेनामध्यं प्रविशन्त इत्यर्थः । सायकाः बाणाः । वाजितायाः पक्षवत्तायाः अश्वत्वस्य च । वाजिता स्वनपक्षयोरिति विश्वः । युक्तमनुरूपं कर्म चक्रुः । एवंविधसेनाप्रवेशस्य वाजिनामेव संभवादिति भावः । अत्राभिधायाः प्रकृतपत्रतामात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीतेः ध्वनिरेवेति न श्लेषावकाशः किन्तु शुद्धादिपदार्थपुञ्जविशेषणगत्या शायकानां युक्तकारिताहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ १२ ॥

आक्रम्येति । मानभाजोऽभिमानवन्तः । उच्चैरुन्नतम् आजेर्युद्धस्याग्रिमस्कन्धमग्रभागसंप्रदेशं चाक्रम्यारुह्य वीतशङ्कं शिरःसम्मुखम् उत्तमकायं चास्थायारुह्य हेलासु युद्धक्रीडासु लीलासु च लीला

हेलाखेला वर्त्म गत्वातिमर्त्य-
न्द्यामारोहन्मानभाजः सुखेन ॥ १४ ॥
रोदोरन्ध्रं व्यश्नुवानानि लोलै-
र्देहस्यान्तर्मापितैः स्थावराणि ।
केचिद्गुर्वीमित्य संयन्निषद्यां
क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ १५ ॥
वीर्योत्साहश्लाघि कृत्वावदानं

उत्सुकाः सन्तः अतिमर्त्यं वर्त्म गत्वा अमानुष्यं युद्धं कृत्वेत्यर्थः । अन्य-त्रासानुपगस्यमारोहणमार्गं गत्वा सुखेनानायासेन द्यां स्वर्गमभ्रङ्कषं गिरिशिखरादि क्रीड़ास्थानम् । द्योः स्वर्गसुखवर्त्म गौरिति विश्वः । आरोहन्नारूढ़ाः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखा इति मनुस्मरणादिति भावः । यथा कथञ्चित् कश्चित् स्वस्वमूर्द्धारोहणक्रमेण किञ्चिद्दूरारोहमद्रितटादिकमारोहति तद्वदिति प्रकृत-विशेषणमहिम्नागता समासोक्तिः ॥ १४ ॥

रोदोरन्ध्रमिति । केचिद्वीराः गुर्वीं महतीं संयतो युध एव निषीदन्त्यस्यामिति निषद्याम् आपणम् । आपणस्तु निषद्यायामित्य-मरः । संज्ञायां समजनिषदीत्यादिना क्यप् । एत्य प्राप्य । आङ्-पूर्वादिणः क्त्वो ल्यप् । देहस्यान्तरभ्यन्तरे मापितैः परिच्छिन्नैः । मातेर्माङो वा ण्यन्तात् कर्मणि क्तः । अर्त्तिह्रीत्यादिना पुगागमः । लोलैरस्थिरैः प्राणैरेव मूल्यैः प्राणमूल्यैः रोदसोर्द्यावापृथिव्यो रन्ध्र-मन्तरालं व्यश्नुवानानि व्याप्नुवन्ति । अश्नोतेर्लटः शानजादेशः । स्थावराणि स्थिराणि यशांसि क्रीणन्ति स्म क्रीतवन्त इत्यर्थः । अथ न्यूनैः प्राणैः ततोऽधिकयशःपरिवर्त्तनात् न्यूनपरिवृत्तिरलङ्कारः । समन्यूनाधिकानां च यदा विनिमयो भवेत् । सार्कं समाधिकन्यूनैः परिवृत्तिरसौ मतेति लक्षणात् ॥ १५ ॥

वीर्योत्साहेति । संग्रामाग्रे रणाग्रे वीर्योत्साहाभ्यां श्लाघ्यते

संग्रामाग्रे मानिनां लज्जितानाम्।
अज्ञातानां शत्रुभिर्युक्तमुच्चैः
श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥ १६ ॥
आधावन्तः सम्मुखन्धारितानाः-
मन्यैरन्यै तीक्ष्णकौक्षेयकाणाम्।
वक्षःपीठैरा त्सरोरात्मनैव
क्रोधेनान्धाः प्राविशन् पुष्कराणि ॥ १७ ॥
मिश्रीभूते तत्र सैन्यद्वयेऽपि

इति स्लाघि विक्रमाहङ्कारशोभि। अवदानं महत् कर्म कृत्वा। अवदानं कर्मवृत्तमित्यमरः। लज्जितानां मानित्वात् स्वनामाख्याने सङ्कोचवतामित्यर्थः। शत्रुभिरज्ञातानाम् अज्ञातनामकानां मानिनां मानशालिनां शूराणां सर्वाम्न श्रीमत् शौर्य्यश्रीयुक्तं नाम नग्नाः वन्दिनः। वन्दिनि क्षपणे नग्न इति विश्वः। उच्चैः श्रावयन्ति स्म अयमसाविति कथयामासुरित्यर्थः। युक्तं सर्वमेतदुचितमित्यर्थः। अत्र लज्जमानाज्ञातयोर्विशेषणगत्या वन्दिश्रावणहेतुत्वात् काव्यलिङ्गभेदः ॥ १६ ॥

आधावन्त इति। क्रोधेनान्धाः अपश्यन्तोऽन्ये भटाः आधावन्तोऽभिमुखमापतन्तः सन्तः अन्यैः सैन्यैः प्रतिद्वन्द्वाभिसम्मुखं धारितानां धृतानां तीक्ष्णकौक्षेयकाणां निशितासीनाम्। कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकृप्रत्ययः। पुष्कराणि फलानि खड्गमुखानीत्यर्थः। पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि चेति विश्वः। वक्षांसि पीठानीव वक्षःपीठैः वक्षःस्थलैः आ त्सरोरामुष्टेः। त्सरुः खड्गादिमुष्टौ स्यादित्यमरः। आङ्मर्य्यादभिध्योरिति विकल्पादसमासः। आत्मना स्वयमेव परप्रयत्नं विनेत्यर्थः। प्राविशन् प्रविष्टाः। अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात् काव्यलिङ्गभेदः ॥ १७ ॥

मिश्रीभूत इति। तत्र युद्धे सैन्यद्वयेऽपि मिश्रीभूते मिलिते सति

प्रायेणायं व्यक्तमासीद्विशेषः ।
आत्मीयास्ते ये पराञ्चः पुरस्ता-
दभ्यावर्ती सम्मुखो यः परोऽसौ ॥ १८ ॥
सद्वंशत्वादङ्गसंसङ्गिनीत्वं
नीत्वा कामङ्गौरवेणावबद्धा ।
मौर्वी हस्तं वञ्चयित्वा परेण
द्रोहञ्चक्रे कस्यचित् स्वा कृपाणी ॥ १९ ॥
नीते भेदन्धौतधाराभिघाता-
दम्भोदाभे शात्रवेणापरस्य ।
सास्यग्राजिस्तीक्ष्णमार्गस्य मार्गी
विद्युद्दीप्तः कङ्कटे लक्ष्यते स्म ॥ २० ॥

प्रायेणायं विशेषोऽसाधारणधर्मो व्यक्तमासीत् । क इत्याह । पुरस्ता-दग्रे ये पराञ्चः पराङ्मुखाः परेऽपीति भावः । ते आत्मीया अवध्या इत्यर्थः । न भीतं न परावृत्तमिति वधनिषेधस्मरणात् । यः पुर-स्तादभ्यावर्ती परावर्त्ती सम्मुखोऽभिमुखः स्वकीयोऽपीति भावः । असौ परः शत्रुर्बध्य इत्यर्थः । प्राणलुब्धस्य स्वामिद्रोहित्वादित्यर्थः ॥ १८ ॥

सदिति । सद्वंशत्वाच्छुद्धाकरत्वात् कुलीनत्वाच्चाङ्गसंसङ्गिनीत्वमङ्ग-सम्बन्धित्वं नीत्वा । अगुणत्वविवक्षायां त्वतलोर्गुणवचनस्येति न पुंव-द्भावः । कामं गौरवेणादरेणावबद्धा संयता च कस्यचित् स्वा स्वकीया कृपाणी असिलता । परेणान्येन वञ्चयित्वा प्रतार्य हस्तं नीता स्वायत्तीकृता सती द्रोहं हिंसां व्यभिचारं च चक्रे कृतवती । अत्र प्रकृतकृपाणीविशेषणसाम्यादप्रकृतस्वैरिणीप्रतीतेः समासोक्तिः ॥ १९ ॥

नीत इति । शात्रवेण शत्रुणा । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । धौताया उत्तेजितायाः धारायाः खड्गधारायाः अभिघातात् भेदं नीते विदारिते अम्भोदाभे मेघश्यामे अपरस्य भटस्य कङ्कटे कवचे । उर-

आमूलान्तात् सायकेनायतेन
स्यूते बाहौ मण्डूकश्लिष्टमुष्टिः ।
प्राप्यासह्यां वेदनामस्तधैर्या-
दप्यभ्रश्यच्चर्म नान्यस्य पाणेः ॥ २१ ॥

भित्त्वा घोणामायसेनाधिवक्षः
स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः ।
शिक्षाहेतोर्गाढरज्ज्वेव बद्धो
हर्तुं वक्त्रं नाशकद् दुर्मुखोऽपि ॥ २२ ॥

श्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियामित्यमरः । सहास्त्रप्राज्या धास्त्रप्राजिः सरक्तरेखः तीक्ष्णमार्गस्य खड्गस्य मार्गः प्रहारो विद्युद्दीप्तस्तडिदुज्ज्वलो लक्ष्यते स्म । उपमालङ्कारः ॥ २० ॥

आमूलान्तादिति । अन्यस्य भटस्य बाहौ आयतेन दीर्घेण सायकेन आमूलान्तात् मूलप्रदेशपर्यन्तम् आकक्षमित्यर्थः । विकल्पादसमासः । स्यूते प्रोते सति असह्यां वेदनां व्यथां प्राप्य अत एवास्तधैर्यात् त्यक्तधैर्यादपि धारयितुरक्षमादपि मण्डूके संग्रहे श्लिष्टा संदष्टा मुष्टिर्यस्य तस्मात् पाणेश्चर्मफलकम् । फलकोऽस्त्री फलं चर्मसंग्राहो मुष्टिरस्य य इत्यमरः । नाभ्रश्यन्नापतत् । अत्र सायकप्रोतमुष्टिश्लेषयोर्विशेषणगत्या धैर्यत्यागचर्मभ्रंशौ प्रति हेतुत्वात् काव्यलिङ्गभेदः ॥ २१ ॥

भित्त्वेति । आयसेनायोमयेन गार्ध्रो गृध्रसम्बन्धी पक्षः पत्रं यस्य तेन गार्ध्रपक्षेण बाणविशेषेण घोणां नासां भित्त्वा । घोणा नासा च नासिकेत्यमरः । अधिवक्षो वक्षसि । विभक्त्यर्थेऽव्ययीभावः । विद्धः प्रहृतः । व्यधेः कर्मणि क्तः, ग्रहिज्येत्यादिना सम्प्रसारणम् । स्थूरीपृष्ठो नवारूढोऽश्वः शिक्षैव हेतुः तस्य शिक्षाहेतोः शिक्षया निमित्तेन शिक्षार्थमिति यावत् । षष्ठी हेतुप्रयोगे इति षष्ठी । गाढरज्ज्वा गाढपाशेन [illegible] । दुर्मुखोऽशिक्षितमुखोऽपि

कुन्तेनोच्चैः सादिना हन्तुमिष्टा-
न्नाजानेयो दन्तिनस्त्रस्यति स्म ।
कर्मोदारङ्कीर्त्तये कर्त्तुकामान्
किं वा जात्याः स्वामिनो ह्रेपयन्ति ॥ २३ ॥
जेतुञ्जैत्राः प्रेक्षिरे नारिसैन्यैः
पश्यन्तोऽधो लोकमस्तेषुजालाः ।
नागारूढाः पार्वतानि श्रयन्तो
दुर्गाणीव त्रासहीनास्त्वसानि ॥ २४ ॥

वक्त्रं हर्त्तुमपाकर्त्तुं नाशकत् न शक्तः । शकेर्लुङि पुषादित्वात् च्लेरङादेशः । शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते अशिक्षितस्तु निबद्धोऽपि झटिति सुखमपहरतीति भावः । अपिर्विरोधे । अत एव विरोधाभासोऽलङ्कारः ॥ २२ ॥

कुन्तेनेति । आजानेयः कुलीनाश्वः । आजानेयाः कुलीनाः स्युरित्यमरः । शुभ्रादिभ्यश्चेति ढक्प्रत्ययः । सादिना अश्वारोहेण कर्त्रा । उच्चैरुन्नतेन कुन्तेन प्रासेन करणेन हन्तुं प्रहर्त्तुमिष्टादभिमतात् दन्तिनो न त्रस्यति स्म न त्रस्तः । वा भ्राशेत्यादिना श्यन्प्रत्ययः । तथाहि जात्याः कुलीनाः । भवार्थे यत्प्रत्ययः । कीर्त्तये उदारं कर्म महापौरुषं कर्त्तुं कामो येषां तान् कर्त्तुकामान् । तुं काममनसोरपीति मकारलोपः । स्वमैश्वर्यमस्तीति स्वामिनो भर्तॄन् । स्वामिन्नैश्वर्ये इति निपातः । ह्रेपयन्ति लज्जयन्ति किं न ह्रेपयन्तीत्यर्थः । अर्त्तिह्रीत्यादिना पुगागमः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

जेतुमिति । जेतार एव जैत्राः जयशीलाः । जेतृप्रकृतेः प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । लोकं जनमधः पश्यन्तः स्वयमुपर्यवस्थानात् लोकमधोदेशे पश्यन्तः अधःकृतं मन्यमानाश्च । अस्तेषुजालाः क्षिप्तशरनिकराः त्रासहीना दुर्गस्थत्वान्निर्भीकाः । नागारूढाः गजा-

विष्वद्रीचीर्विक्षिपन् सैन्यवीची-
राजावन्तः क्वापि दूरम्प्रयातम् ।
बभ्रामैको बन्धुमिष्टन्दिदृक्षुः
सिन्धौ वाद्यो मण्डलङ्गोर्वराहः ॥ २५ ॥
यावच्चक्रे नाञ्जनम्बोधनाय
व्युत्थानज्ञो हस्तिचारी मदस्य ।
सैनास्नानाद्दन्तिनामात्मनैव
स्थूलास्तावत्प्रावहन्दानकुल्याः ॥ २६ ॥

रोढ़ाः त्रस्यन्ति गच्छन्तीति त्रसानि जङ्गमानि । चरिष्णुजङ्गमचरत्रसमिङ्गं चराचरमित्यमरः । पार्वतानि पर्वतसम्बन्धीनि दुर्गाणि गिरिदुर्गाणीत्यर्थः । श्रयन्तेऽधितिष्ठन्त इव इति उत्प्रेक्षा । तेऽप्येवंभूता एवेति भावः । अरिसैन्यैः कर्तृभिः जेतुं न शेकिरे अशक्ता बभूवुरित्यर्थः । शकेः कर्मणि लिट् । अत्र मनुः । धन्वदुर्गं महीदुर्गमप्दुर्गं वनमेव च । नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेन्नृपः । सर्वेणैव प्रकारेण गिरिदुर्गं समाश्रयेत् । तेषां हि बहुगुण्येन गिरिदुर्गं विशिष्यते इति ॥ २४ ॥

विष्वगिति । एकः कोऽपि वीरः । विष्वगञ्चतीति विष्वद्रीचीः सर्वव्यापिनीः । विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये इति टेरद्र्यादेशः धातोरञ्चतेरुपसङ्ख्यानादुगितश्चेति ङीप् अच इत्यकारलोपे चाविति दीर्घः । सैन्यानि वीचिरिव सैन्यवीचिरित्युपमितसमासः । सिन्धौ वेति लिङ्गात् विक्षिपन्नपाकुर्वन् । अन्तः आजिमध्ये क्वापि दूरं प्रयातम् इष्टं बन्धुं दिदृक्षुर्द्रष्टुमिच्छुः सन् । दृशेः सन्नन्तादुप्रत्ययः । क्वापि प्रयातं मग्नं भौमं गोर्मण्डलं दिदृक्षुराद्यो वराहः सिन्धौ वा समुद्रे इव । उपमायां विकल्पे वेत्यमरः । आजौ बभ्राम एकवीरस्य कुतो भयमित्यर्थः ॥ २५ ॥

यावदिति । 'व्युत्थानं गजोत्थापनं जानातीति व्युत्थानज्ञः हस्तिनि

क्रुध्यन् गन्धादन्यनागाय दूरा-
दारोढारन्धूतमूर्द्धावमत्य ।
घोरारावध्वानिताशेषदिक्के
विष्के नागः पर्य्यवंसीत् स्व एव ॥ २७ ॥
प्रत्यासन्ने दन्तिनि प्रातिपक्षे
यन्ता नागः प्रास्तवक्त्रच्छदोऽपि ।

चरतीति हस्तिचारो यन्ता । मदश्च बोधनायोत्थापनायाङ्कुशोद्दीपनं कर्म यावन्न चक्रे तावत् प्रागेव । असमाप्ते विधावित्यर्थः । सेनास्थानात् सेनाकलकलश्रवणादित्यर्थः । दन्तिनामात्मना स्वयमेव स्थूला महत्यो दानकुल्या मदसरितः प्रावहन् इति दन्तिनामुत्साहातिरेकोक्तिः । अञ्जनात् प्राग्दानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

क्रुध्यन्निति । दूरात् दूरत एव गन्धात् मदगन्धाघ्राणात् अन्यनागाय प्रतिगजाय क्रुध्यन् तं जिघांसुरित्यर्थः । क्रुधद्रुहेत्यादिना सम्प्रदानत्वम् । नागो धूतमूर्द्धा विधूतमस्तकः सन् । आरोढारं यन्तारम् अवमत्य अवधूय । घोरारावैर्दारुणक्रन्दनैः ध्वानिता अशेषदिशो येन तस्मिन् तथा उच्चैराक्रोशतीत्यर्थः । शैषिकः कप्प्रत्ययः । स्वे स्वकीय एव स्वपुत्र एवेत्यर्थः । पूर्वादिभ्यो नवभ्यो वेति विकल्पान्न स्मिन्नादेशः । अत एव स्वे स्वपुत्रे विष्क इति श्लिष्टगत्या व्याख्याय पुत्रस्यापि ज्ञातित्वान्न सर्वनामसंज्ञेति वल्लभोक्तिः प्रामादिकी । विष्को विंशतिवर्षके डिम्भे । विष्को विंशतिवर्षक इति वैजयन्ती । पर्य्यवंसीत् तिर्य्यक् प्रजहारेत्यर्थः । तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मत इति हलायुधः । यमरमनमातां सक् चेति नमेर्लुङि सगिडागमौ नेटीति वृद्धिप्रतिषेधः ॥ २७ ॥

प्रत्यासन्न इति । प्रातिपक्षे प्रतिपक्षसम्बन्धिनि । तस्येदमित्यण् । दन्तिनि गजे प्रत्यासन्ने सति यन्त्रा सादिना प्रास्तवक्त्रच्छदोऽपि निरस्तमुखपटोऽपि क्रोधाक्रान्तः अत एव क्रूरं घोरं निर्दारिताक्षः

क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः
प्रेक्षाञ्चक्रे नैव किञ्चिन्मदान्धः ॥ २८ ॥

तूर्णं यावन्नापनिन्ये निषादी
वासश्चक्षुर्वारणं वारणस्य ।
तावत्पूगैरन्यनागाधिरूढ़ः
कादम्बानामेकपातैरसीव्यत् ॥ २९ ॥

आस्यदृष्टेराच्छदश्च प्रसक्तो
यन्ता यातुः प्रत्यरीभं द्विपस्य ।
मग्नस्योच्चैर्वंहभारेण भङ्क्‌ो-
रावव्राते वीक्षणे च क्षणेन ॥ ३० ॥

तथापि मदान्धो नागो गजो न किञ्चिदेव प्रेक्षांचक्रे । किमपि पुरोगतं प्रातिपक्षमन्यद्वा न ददर्शेत्यर्थः । आवरणान्तराभावेऽपि मदावरणस्यानपायादिति भावः । दृजादेश्च गुरुमतोऽन्टच्छ इत्यादेश्च इत्याम्प्रत्ययः । अत्रानाहतोन्मीलिताक्षस्याप्यदर्शनविरोधस्य मदान्धेनाविरोधाद्विरोधाभासोऽलङ्कारः ॥ २८ ॥

तूर्णमिति । निषादी यन्ता वारणस्य गजस्य चक्षुर्वारणं नेत्रावरणं वासो मुखपटं यावत्तूर्णं नापनिन्ये नापचकार तावदन्यनागाधिरूढ़ः प्रतिगजाधिरोहः एकः एककालीनः पातो येषान्तैरेकपातैर्युगपत्पतिभिरिति शीघ्रतोक्तिः । कादम्बानां शराणाम् । कादम्बमार्गनशरा इत्यमरः । पूगैर्व्रातैरसीव्यत् । चक्षुषा सह तद्वासः स्यूतवानित्यर्थः । सीव्यतेर्लङ् । अत्र चक्षुषः सीवनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

आस्यादिति । यन्ता प्रमत्तः सन् प्रत्यरीभमरिगजमभिमुखं ऽव्ययीभावः । यातुर्गन्तुः । यातेस्तृच् । द्विपस्य दृष्टेराच्छदमावरणम् । पुंसि संज्ञायां घः । आस्यत निरस्तवान् । असुति-

यत्नाद्रुचन् सुस्थितत्वादनाशं
निश्चित्यान्यस्ते तसा भावितेन।
अन्त्यावस्थाकालयोग्योपयोग-
न्दध्रे ऽभीष्टन्नागमापद्धनं वा॥ २१॥

अन्योन्येषाम्पुष्करैराम्नशन्तो
दानोद्धे दानुच्चकैर्भुग्नबालाः।
उन्मूर्द्धानः सन्निपत्यापरान्तैः
प्रायुध्यन्त स्पष्टदन्तध्वनीभाः॥ २२॥

वक्तिख्यातिभ्योऽङिति क्लेरङादेशः असतेस्थुगिति थुगागमः। मग्नस्य सुखनिमग्नस्य शङ्कोः शल्यायुधस्य। वा पुंसि शल्यं शङ्कुर्नें-मरः। उच्चैर्वंर्हभरेण पिच्छपटलेन वीक्षये चक्षुषी क्षणेनावव्राते छाद्यते। वृणोतेः कर्मणि लिट्। अन्योन्यसमुच्चयचकारास्यास् आवरणनिरासे पुनरावरणयोरेककाले सम्बन्धोक्तेरतिशयोक्तिः॥२०॥

यत्नादिति। अन्यः गजारोहः भावितेनाबोचितेन चेतसा सुस्थितत्वादनपायिदेशत्वादनाशमनपायं निश्चित्य यत्नाद्रुचन् वच्चके-भ्यस्त्रायन् सन्। अन्त्यावस्थाकाले साधनान्तरकाले नाशकाले योग्योप-योगम् अतएवाभीष्टं नागं गजमापद्धनं वापद्धनमिव दध्रे अन्यतो-पसार्य्य धारयामास। धरतेः स्वरितेत्त्वात् कर्त्तरि लिट् तङ्॥२१॥

अन्योन्येषामिति। इभा गजाः अन्योन्येषां परस्परेषाम्। कर्म-व्यतीहारे सर्वनाम्नो द्वे भवत इति वक्तव्यात् द्वित्वम्। समासश्च बहुलमिति विकल्पादसमासत्वपक्षे पूर्वपदस्य प्रथमैकवचनं वक्तव्यम्। उद्धिद्यन्ते एष्वति उद्भेदाः। अकर्त्तरि च कारके संज्ञायामित्य-करणार्थे घञ्प्रत्ययः। दानोद्भेदान् कटादिमदस्थानानि पुष्करै-र्हस्ताग्रैः। पुष्करं करिहस्ताग्रमित्यमरः। आम्नशन्तो जिघ्रन्त उच्चकैरुन्नता भुग्नबालाः प्रह्वीकृतपुच्छाः। बालः केशे शिशौ मूर्खे बालो वाजीभपुच्छयोरित्यमरः। उन्मूर्द्धानः उन्नतमस्तकाः सन्तः स्पष्टदन्तध्वनि

द्राघीयांसः संहताः स्थेमभाज-
श्चारूदग्रास्तीक्ष्णतामत्यजन्तः ।
दन्ता दन्तैराहताः सामजाना-
म्भङ्गञ्जग्मुर्नं स्वयं सामजाताः ॥ २३ ॥

मातङ्गानान्दन्तसङ्घट्टजन्मा
हेमच्छेदच्छायचञ्चच्छिखाग्रः ।
लग्नोऽप्यग्निश्चामरेषु प्रकाम-
म्माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ २४ ॥

यथा तथा सन्निपत्यापरान्तैः सह प्रायुध्यन्त । दिवादियुध्यतेः कर्त्तरि लङ् । स्वभावोक्तिः ॥ २२ ॥

द्राघीयांस इति । द्राघीयांसो दीर्घतराः । प्रियस्थिरेत्यादिना दीर्घस्य द्रयसुनि द्राघादेशः । संहताः सुघटिताः अत एव स्थेमभाजः स्थैर्यभाजः । प्रियस्थिरेत्यादिना स्थिरशब्दस्येमनि स्थादेशः । चारवो रम्या उदग्रा उन्नताः ते चारूदग्राः । विशेषणसमासः । तीक्ष्णतां नैशित्यम् अत्यजन्तः सामजानां गजानां दन्ता दन्तैः प्रतिगज-विषाणैराहताः सन्तो भङ्गं भेदं जग्मुः बभञ्जुः । सामजाताः दन्ति-नस्तु स्वयं भङ्गं पराजयं न जग्मुः दन्तभङ्गेऽपि स्वयं न परावर्त्तन्त इत्यर्थः । अत्रापरावर्त्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयानां दन्तिना-मुपमानदन्तापेक्षया अभग्नत्वेनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगितायाः बाधक इति गमयितव्यम् ॥ २३ ॥

मातङ्गानामिति । मातङ्गानां दन्तिनां दन्तसङ्घट्टजन्मा दन्तसङ्घ-र्षोत्थः हेमच्छेदच्छायानि कनकपरागवर्णानि चञ्चन्ति चलन्ति च शिखा-ग्राणि ज्वालाग्राणि यस्य सोऽग्निः मञ्जिष्ठया ओषधिविशेषेण रक्तेषु माञ्जिष्ठेषु । तेन रक्तं रागादित्यण्प्रत्ययः । मञ्जिष्ठा विकसा जिङ्गी-त्यमरः । चामरेषु लग्नोऽपि सैन्यैः प्रकामं न व्यज्यते न विविच्यते स्म सावर्ण्यादिति भावः । अतः सामान्यालङ्कारः । सामान्यं गुण-

शोषामासे मत्सरोत्पातवाता-
श्लिष्यद्दन्तक्ष्मारुहाङ्घर्षणोत्थैः ।
यौगान्तैर्वा वह्निभिर्वारणाना-
मुच्चैर्मूर्द्धव्योम्नि नक्षत्रमाला ॥ २५ ॥
सान्द्राम्भोदश्यामले सामजानां
वृन्दे नीताः शोणितैः शोणिमानम् ।
दन्ताः शोभामापुरम्भोनिधीनां
कन्दोद्भेदा वैद्रुमा वारिणीव ॥ २६ ॥
आक्रम्याग्रैः केतुभिः सन्निपात-
त्वारोदीर्णग्रैवनादं व्रजन्तः ।

साम्येन यत्र वस्त्वन्तरैकतेति लक्षणात् । स च विशेषणोत्थकाव्यलिङ्ग-सङ्कीर्णः ॥ २४ ॥

शोषामासे इति । मत्सरो वैरमेवोत्पातवातः आकस्मिकवायुस्तेनाश्लिष्यतां संयुज्यमानानां दन्तानामेव क्ष्मारुहां वृक्षाणां घर्षणेनोत्थाजन्म येषां तैर्वह्निभिर्यौगान्तैर्वा युगान्तभवैर्वह्निभिरिव वारणानामुच्चैरुन्नतैः मूर्द्धा व्योमेव तस्मिन्मूर्द्धव्योम्नि नक्षत्रमाला हारविशेषः । सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैरित्यमरः । ज्योतिर्मण्डलञ्च शोषामासे उवोष दग्धेत्यर्थः । उष दाहे इति धातोः कर्मणि लिट् । उषविदजागृभ्योऽन्यतरस्यामित्याम्प्रत्ययः लघूपधगुणः अस्त्यनुप्रयुज्यते लिटीत्यस्तेश्चानुप्रयोगः । अत्र नक्षत्रमालयोरभेदाध्यवसायेन निर्देशात् रूपकश्लेषसङ्कीर्णेयमुपमा ॥ २५ ॥

सान्द्राम्भोदेति । सान्द्रं च तदम्भोदश्यामलं च तस्मिन् सामजानां गजानां वृन्दे शोणितैः शोणिमानमारुण्यं नीताः दन्ताः अम्भोनिधीनां वारिनिधीनां वारिणीव विद्रुमाणां प्रवालानाम् इमे वैद्रुमाः । विद्रुमः पुंसि प्रवालं पुं नपुंसकमित्यमरः । कन्दो मूलपिण्डः तस्योद्भेदाः प्ररोहा इव शोभामापुरित्युपमा ॥ २६ ॥

मग्नानङ्गे गाढमन्यद्विपाना-
न्दन्तान्दुःखादुत्खनन्ति स्म नागाः ॥ २७ ॥
उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्या-
मीषादन्तः कुञ्जरं शातवीयम् ।
शृङ्गप्रोतप्रावृषेण्याम्बुदस्य
स्पष्टम्रापत्साम्यमुर्वीधरस्य ॥ २८ ॥
भग्नेऽपीभे स्वे परावर्त्य देहं
योद्धा सार्धं व्रीडया मुञ्चतिभून् ।

आक्रम्यैरिति । आक्रम्याणि दन्तोत्खननसंक्षोभाद्भृशं कम्प्राण्यम्पाणि येषां तैः केतुभिर्ध्वजैः सन्निपातं सङ्घर्षं व्रजन्त इति दुःखहेतूक्तिः । नागाः गजास्तारमुच्चैरुदीर्णः उत्पन्नः ग्रैवाणां ग्रीवासूत्पन्नानां शृङ्खलभूषणादीनां नादो यस्मिन् कर्मणि तत्तया अन्यद्विपानां प्रतिगजानाम् अङ्गे गाढं मग्नान् अन्तःप्रविष्टान् दन्तान् दुःखादुत्खनन्ति स्म तेषां गाढमग्नत्वात् स्वयं केतुभाराक्रान्तत्वाच्च कृच्छ्रादुज्जह्रुरित्यर्थः । अत्रोक्तभारसज्जनयोर्विशेषणगत्या दुःखोत्खननहेतुत्वात् काव्यलिङ्गम् ॥ २७ ॥

उत्क्षिप्येति । ईषे लाङ्गलदण्डाविव दन्तौ यस्य स ईषादन्तो महादन्तो दन्ती । ईषा लाङ्गलदण्डः स्यादित्यमरः । प्रस्फुरन्तं प्राणोत्क्रमणदुःखादुल्लसन्तं शातवस्येदं शातवीयं कुञ्जरं रदाभ्यां दन्ताभ्याम् उच्चैरुत्क्षिप्योत्क्षिप्तवतः शृङ्गे शिखरे प्रोतः स्यूतः प्रावृषेण्यः प्रावृषि भवोऽम्बुदो यस्य तस्य । प्रावृष एण्य इत्येण्यप्रत्ययः । उर्वीधरस्य गिरेः साम्यं सादृश्यं स्पष्टं प्रापत् । आप्नोतेर्लुङि पुषादित्वात् च्लेरङादेशः । उपमा ॥ २८ ॥

भग्नेऽपीति । स्वे स्वकीये इभे गजे भग्नेऽपि देहं स्वाङ्गं परावर्त्य प्रतिपक्षाभिमुखमावर्त्य । वृतेर्ण्यन्ताल्ल्यप् । अण्यन्तल्यप पाठः अकर्मकस्य कर्मानन्वयात् । व्रीडया सार्धमिषून् मुञ्चता इषुमोक्षणेन

साकं यन्तुः सम्मदेनानुबन्धी
दूनोऽभीक्ष्णं वारणः प्रत्यरोधि ॥ ३९ ॥
व्याप्तं लोकैर्दुःखलभ्यापसारं
संरम्भित्वादेत्य धीरो महीयः ।
सेनामध्यं गाहते वारणः स्म
ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४० ॥
भङ्क्त्वेषीश्यामभासां समूहै-
र्नाराचानां विघ्नीरन्ध्रदेहः ।

स्वगजभङ्गव्रीडां निरस्यतेत्यर्थः । योद्धा भग्नेभस्थेन भटेन कर्त्रा अभीक्ष्णं दूनः इषुभिस्तप्तः । स्वादिभ्य इति निष्ठानत्वम् । अनुबध्नातीत्यनुबन्धी वारणो यन्तुः प्रतिगजारोहस्य सम्मदेन साकं स्वेभजयजन्येन हर्षेण सह । प्रमदसम्मदौ हर्षे इति निपातः । प्रत्यरोधि प्रतिरुद्धः तत्प्रतिरोधेन तत्सम्मदस्यापि प्रतिरोधव्याप्तेरिति भावः । साकं सार्द्धं समं सहेत्यमरः । अत्र व्रीडितेषुमोचयोः सम्मदयन्तृप्रतिरोधयोश्च कार्य्यकारणयोस्तत्पौर्वापर्य्यविपर्य्ययरूपातिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्य्यते ॥ २९ ॥

व्याप्तमिति । वारणः कश्चिद्दन्ती संरम्भित्वात् क्रोधित्वात् । संरम्भः संभ्रमे कोपे इति विश्वः । धीरो निर्भीकः सन् एत्यागत्य महीयो विपुलं लोकैः जनैः अन्यत्र भुवनैश्च व्याप्तम् । लोकस्तु भुवने जने इत्यमरः । अतो दुःखलभ्योऽपसारोऽपसरणं यत्र तत्सेनामध्यं प्राक् पुरा आदिदेवस्य उदरान्तरुदराभ्यन्तरं ब्रह्मा स्रष्टेव गाहते स्म प्रविवेश । पुरा किल यथा वाह्यं सिसृक्षुः ब्रह्मा पूर्वसृष्टिदिदृक्षया विष्णोः कुक्षिं प्राविशदिति पौराणिकी कथा । केचित् ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते सोऽपि भगवन्महिमावलोकनकौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः । ब्रह्मा विप्रः प्रजापतिरित्यमरः । उपमालङ्कारः ॥ ४० ॥

निर्भीकत्वादाहवेनाहतेच्छो
हृष्यन् हस्ती हृष्टरोमेव रेजे ॥ ४१ ॥

आताम्राभा रोषभाजः कटान्ता-
दाभूत्खाते मार्गणे धूर्गतेन ।
निश्चोतन्ती नागराजस्य जज्ञे
दानस्याहो लोहितस्येव धारा ॥ ४२ ॥

क्रामन्दन्तौ दन्तिनः साहसिक्या-
दीषादण्डौ मृत्युशय्यातलस्य ।
सैन्यैरन्यस्तत्क्षणादाशशङ्के
स्वर्गस्योच्चैरर्धमार्गाधिरूढः ॥ ४३ ॥

शङ्केति । शङ्कुश्रेणीव श्यामभासां कृष्णवर्णानां नाराचानामयोमयेषुविशेषाणां समूहैः विद्धो नीरन्ध्रो निर्विवरो देहो यस्य सः तथापि निर्भीकत्वादाहवेनाहतेच्छः अव्याहतोत्साहः अत एव हृष्यन् मोदमानो हस्ती हृष्टरोमेव हर्षात् पुलकित इवेत्युत्प्रेक्षा । हृषेर्लोमसु इति विकल्पादिडभावः । रेजे शुशुभे । फणाञ्च सप्तानां विकल्पादेत्वाभ्यासलोपौ ॥ ४१ ॥

आताम्रेति । रोषभाजः क्रुद्धस्य नागराजस्य महेभस्य कटान्तात् गण्डस्थलान्निश्चोतन्ती प्रागेव स्रवन्ती दानस्य मदस्य धारा आताम्राभा क्रोधादरुणवर्णा जज्ञे जाता अहो धूर्गतेन पुरोगतेन यन्त्रा मार्गणे शरे आभूत्खाते लोहितस्य क्षतजस्येव धारा जज्ञे । जनेः कर्तरि लिट् । किमियं क्रोधारुणा मदधारा शरोद्धरणजन्मा रक्तधारा वेत्युभयकारणसम्भवात् सादृश्याच्च संशयः स च विकल्पितसादृश्यमूल इत्यलङ्कारः ॥ ४२ ॥

क्रामन्निति । मृत्युशय्यातलस्यान्तकपर्यङ्करूपस्य । अधः स्वरूपयोरस्त्री तलमित्यमरः । ईषादण्डौ दारुविशेषौ तत्सदृशौ आयताविं-

कुर्वन् ज्योत्स्नाविप्रुषान्तुल्यरूप-
स्तारस्ताराजालसारामिव द्याम् ।
खड्गाघातैर्दारिताद्दन्तिकुम्भा-
दाभाति स्म प्रोच्छलन्मौक्तिकौघः ॥ ४४ ॥

दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्त-
न्मत्तो हस्तं हस्तिराजः स्वमेव ।
भीमं भूमौ लोलमानं सरोषः
पादेनासृक्पङ्कपेषम्पिपेष ॥ ४५ ॥

र्थः हन्तिनो दन्तौ सहसा वर्त्तेत इति साहसिकः । ओजःसहो-ऽम्भसो वर्त्तते इति ठक्प्रत्ययः । तस्य भावात् साहसिक्यात् क्रामन् साहसवानित्यर्थः । अन्यस्तत्क्षणादुच्चैरूर्ध्वंस्थ स्वर्गस्य अर्द्धमासौ भाग-श्चेति तदर्धमार्गाधिरूढ इति सैन्यैराशङ्क्य उत्प्रेक्षित इत्युत्प्रेक्षा ॥४३॥

कुर्वन्निति । ज्योत्स्नाविप्रुषां तुल्यरूपः चन्द्रिकाबिन्दुस्वरूपः तारः शुद्धः । तारो मुक्तादिसंशुद्धाविति विश्वः । खड्गाघातैर्दारिता-द्दन्तिकुम्भात् प्रोच्छलन्नुत्पतन् मौक्तिकौघो मुक्तापुञ्जो द्यामाकाशं तारा-जालसारां नक्षत्रशबलितां तारकितां कुर्वन्निवेत्युत्प्रेक्षा । सारः शबल-नीतयोरिति विश्वः । आभाति स्म बभौ ॥ ४४ ॥

दूरोत्क्षिप्तेति । मत्तो हस्तिराजः करीन्द्रः दूरादुत्क्षिप्तेन प्रास्तेन अत एव क्षिप्रेण सत्वरेण चक्रेण कृत्तम् अत एव भूमौ लोलमानं लुठमानम् । लोलतेरनात्मनेपदित्वात्ताच्छील्यवयोवचनश-क्तिषु चानशिति ताच्छील्ये चानश्प्रत्ययः अत एव लोलमानादयस्ता-च्छीलिकं वामनः । भीमं भयङ्करं स्वं स्वकीयमेव हस्तं सरोषः सन् पादेनाङ्घ्रिणा असृक्पङ्केन पङ्कीभूतेनासृजा पिनष्टीति असृक्पङ्क-पेषम् । स्नेहने पिष इति णमुल् । पिपेष । कषादित्वादनुप्रयोगः । रक्तपङ्केन स्नेहद्रव्येण ममर्देत्यर्थः । क्रुद्धमत्तयोः कुतो विवेक इति भावः । अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

आपस्काराल्लूनगात्रस्य भूमि-
न्निःसाधारङ्गच्छतोऽवाङ्मुखस्य ।
लब्धायामन्दन्तयोर्युग्ममेव
स्वन्नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६ ॥

लब्धस्पर्शम्भूव्यधादव्यथेन
स्थित्वा किञ्चिद्दन्तयोरन्तराले ।
ऊर्द्ध्वोर्द्ध्वासिच्छिन्नदन्तप्रवेष्टं
जित्वोत्तस्थे नागमन्येन सद्यः ॥ ४७ ॥

हस्तेनाग्रे वीतभीतिर्गृहीत्वा
कश्चिद्व्यालः क्षिप्तवानूर्द्ध्वमुच्चैः ।

आपस्कारादिति । गात्रमूलमापस्कारम् आपस्कारादामूलात् । आङो विकल्पादसमासः । लूनगात्रस्य छिन्नजङ्घस्य । द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्राऽवरे क्रमादित्यमरः । अत एवावाङ्मुखस्य सतः साधारं सावलम्बनं न भवतीति निःसाधारं यथा तथा भूमिं गच्छतः पतत इत्यर्थः । नागस्य लब्धायामं प्राप्तदैर्घ्यम् आयतमित्यर्थः । स्वं स्वकीयं दन्तयोर्युग्ममेवोत्तम्भनत्वमवलम्बनत्वं प्रापत् । जङ्घाच्छेदेऽपि दन्तावष्टम्भादायततेत्यर्थः । अत्र स्वभावातिशयोक्त्योः संसृष्टिः ॥ ४६ ॥

लब्धस्पर्शमिति । भूव्यधाद्दन्ताभ्यां भुवो विद्धत्वादित्यर्थः । व्यध-जपोरनुपसर्गे इत्यप्प्रत्ययः । अव्यथेन स्वयमविद्धत्वादव्यथेन सताऽन्येन केनचिद्भटेन दन्तयोरन्तराले किञ्चित् लब्धः स्पर्शो यस्मिन् कर्मणि तद्दन्ताभ्यां भटस्पर्शं यथा तथा स्थित्वा ऊर्द्ध्वं प्रसारितेनार्द्धासिना खड्गैकदेशेन छिन्नः चूर्णितो दन्तप्रवेष्टो दन्तवेष्टनं यस्य तं नागं जित्वा सद्य एव उत्तस्थे उत्थितम् । भावे लिट् । अत्रापि तयोरुत्थानाद्य-सम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४७ ॥



हस्तेनेति । व्यालो दुष्टदन्ती । व्यालो दुष्टगजे सर्पे इति विश्वः ।

आसीनानां व्योम्नि तस्यैव हेतो-
र्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ४८ ॥

कश्चिद्दूरादायतेन द्रढीयः-
प्रासप्रोतस्त्रोतसान्तःक्षतेन ।
हस्ताग्रेण प्राप्तमेवाग्रतोऽभू-
दानैश्वर्यं वारणस्य ग्रहीतुम् ॥ ४९ ॥

तन्वाः पुंसो नन्दगोपात्मजायाः
कंसेनेव स्फोटितायाः गजेन ।
दिव्या मूर्त्तिर्व्योमगैरुत्पतन्ती
वीचामासे विस्मितैश्चण्डिकेव ॥ ५० ॥

अस्य वीतभीतिं निर्भीकं भीरोः स्वर्गाभावादिति भावः । कश्चिद्वीरं हस्तेन गृहीत्वा उद्धुरुपर्युच्चैः क्षिप्तवान् । उत्प्रेक्ष्यते तस्यैव हेतो-स्तेनैव हेतुना तदुद्धरणार्थमेवेत्यर्थः । सर्वनाम्नस्तृतीया चेति चकाराद् षष्ठी । व्योम्नि आसीनानामवस्थितानाम् । ईदासः इति आनच ईकारः । स्वर्गस्त्रीणामप्सरनारीणामर्पयामास नूनम् ॥ ४८ ॥

कश्चिदिति । दूरादायतेनान्तःक्षतेन विक्षतेन क्षत एव द्रढीयसा प्रासेन प्रोतं स्रोतो यस्य तेन हस्ताग्रेण करेण अग्रतः प्राप्तमपि कश्चिद्भटं ग्रहीतुम् आदातुं वारणस्य अनीश्वरस्य भावः आनैश्वर्यम् असामर्थ्यमभूत् । नञः शुचीश्वरेत्यादिना नञ्पूर्वपदोभयपदवृद्धिः । अत्रापि आनैश्वर्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ४९ ॥

तन्वा इति । गजेन स्फोटितायाः विदारितायाः पुंसः कस्यचि-द्वीरस्य तन्वाः शरीरात् कंसेन स्फोटितायाः नन्दगोपात्मजाया नन्द-कन्याया इवोत्पतन्ती दिव्या मूर्त्तिः चण्डिकेव नन्दकन्याशरीरादाविर्भ-वन्ती कालिकेव विस्मितैर्व्योमगैः खेचरैः वीचामासे वीक्षिता । ईक्षतेः कर्मणि लिट्, इजादेश्च गुरुमतोऽनृच्छ इत्याम्प्रत्ययः । मनुष्यभावमु-

आक्रम्यैकामग्रपादेन जङ्घा-
मन्यामुच्चैराददानः करेण ।
सास्थिस्वानं दारुवद् दारुणात्मा
कश्चिन्मध्यात्पाटयामास दन्ती ॥ ५१ ॥

शोचित्वाग्रे भृत्ययोर्मृत्युभाजो-
रर्य्यः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसाद-
मपश्चात्तापाद्दाप दाहं यथान्तः ॥ ५२ ॥

उत्प्लुत्याराद्र्धचन्द्रेण लूने

वृत्तस्य देवभावङ्गतेत्यर्थः । उपमा व्यक्ता । पुरा किल दुरात्मनः कंसस्य प्रतारणाय भगवदाज्ञया तन्मायाशक्तिर्नन्दगोपाज्जाता कंसेन हिंसितेति पौराणिकाः ॥ ५० ॥

आक्रम्येति । दारुणात्मा क्रुद्धचित्तो दन्ती एकां जङ्घामग्रपादेनाक्रम्यान्यां जङ्घामुच्चैरुन्नतेन करेणाददानः आकर्षयन् । सास्थिस्वानं भज्यमानास्थिपटकारशब्दयुक्तं यथा तथा कञ्चिद्वीरं दारुवत् काष्ठवत् मध्यात् पाटयामास विभज्य पाटयामासेत्यर्थः । ल्यब्लोपे पञ्चमी । उपमा ॥ ५१ ॥

शोचित्वेति । शुच्यतीत्यर्थः । अर्य्यः स्वामिवैश्ययोरिति यत्-प्रत्ययान्तो निपातः । अग्रे समक्षमेव मृत्युभाजोर्मरणं गतयोर्भृत्ययोः शोचित्वा वल्लभस्यैतयोर्मध्ये प्रियभृत्यस्य सर्व्वात्मना प्रेम्णा तद्गतप्रेम्णेत्यर्थः । तथा तेन प्रकारेणान्तर्दाहं सन्तापं नो आप । यथा येन प्रकारेण इतरस्यावल्लभस्य पूर्वं जीवनकाले प्रसादं प्रीतिदानाद्यनुग्रहं न कृत्वा पश्चात्तापाद्धतोऽयमस्माभिरप्रीणित एव प्राणान् प्रादादित्यनुशयात् दाहमाप । प्रियभृत्यमरणादप्यसम्मानितमरणेनैव स्वामिनो दुःसहदुःखहेतुरासीदित्यर्थः । स्वभावोक्तिः ॥ ५२ ॥

वक्त्रेऽन्यस्य क्रोधदष्टौष्ठदन्ते ।
सैन्यैः कण्ठच्छेदलीने कबन्धा-
द्भूयो बिभ्ये वल्गतः सासिपाणेः ॥ ५३ ॥
तूर्य्यारावैराहितोत्तालताले-
र्गायन्तीभिः काहलं काहलाभिः ।
नृत्ते चक्षुःशून्यहस्तप्रयोगं
काये कूजन् कम्बुरुच्चैर्जहास ॥ ५४ ॥

वक्त्र इति । अर्द्धचन्द्रेण बाणेन लूने छिन्ने तथापि क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन् अन्यस्य योधस्य वक्त्रे आरादनतिदूरस्थवल्गुत्य । आराद् दूरसमीपयोरित्यमरः । भूयः पुनरपि कण्ठस्य छेदः छिन्नदेशः तत्र लीने स्थिते सति वल्गतो नृत्यतः सासिः पाणिर्यस्य तस्मात् कबन्धादपमूर्द्धकलेवरात् । भीत्रार्थानां भयहेतुरिति पञ्चमी । सैन्यैर्बिभ्ये भीतम् । भावे लिट् । लूनस्यापि वक्त्रस्य पुनः स्वस्थानपातित्वाद्वल्गनासिधारणाभ्यां चावन्धादप्यकवन्धभ्रान्त्या सर्वे बिभ्युरित्यर्थः । अत एव भ्रान्तिमदलङ्कारः ॥ ५३ ॥

तूर्य्यारावैरिति । आहिताः सम्पादिताः उत्तालाः प्रस्फुटाः तालाः करपुटादिक्रियामानानि येषु तैः । तालः कालक्रियामानमित्यमरः । तूर्य्यारावैर्ढक्कादिवाद्यघोषैस्तथा काहलं भृशं गायन्तीभिः ध्वनन्तीभिः काहलाभिः शुष्कैर्वाद्यविशेषैश्च करणैः । काहलं भृशशुष्कयोः । वाद्यभाण्डविशेषे तु काहला: काहलः खल इति विश्वः । काये अपमूर्ध्नि कलेवरे । अत एव चक्षुःशून्यो दृष्टिरहितः हस्तप्रयोगो यस्मिन् कर्मणि तत्तथा नृत्ते नृत्यति सति । कर्त्तरि क्तः । कूजन् ध्वनन् कम्बुः शङ्खस्तटस्थ इवेत्यर्थः । उच्चैस्तरां जहास । दृष्टिशून्याभिनयस्य नाट्यशास्त्रविरोधात् अट्टहासमकरोदित्यर्थः । व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । अङ्गैरालापयेद्गीतं हस्तेनार्थं प्रदर्शयेत् । दृष्टिभ्यां भावयेद्भावं पादाभ्यां तालनिर्णय इति नाट्यविदः ॥ ५४ ॥

प्रत्यावृत्तम्भङ्गभाजि स्वसैन्ये
तुल्यम्मुक्तैराकिरन्ति स्म कश्चित् ।
एकौघेन स्वर्णपुङ्खैर्द्विषन्तः
सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥ ५५ ॥

बाणाक्षिप्तारोहशून्यासनाना-
मक्रान्तानामन्यसैन्यैर्ग्रहीतुम् ।
संरब्धानाम्भ्राम्यतामाजिभूमौ
वारौ वारैः सस्मरे वारणानाम् ॥ ५६ ॥

पौनःपुन्यादस्त्रगन्धेन मत्तो

प्रत्यावृत्तमिति । स्वसैन्ये भङ्गभाजि सति प्रत्यावृत्तमभ्यमित्रं कश्चिद्वीरं तुल्यमेककालं मुक्तैः स्वर्णपुङ्खैः शरविशेषैः एकौघेन एकप्रहारेण द्विषन्तः आकिरन्ति स्म । सिद्धाः खेचराः माल्यैर्दिव्यमालाभिः । चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । आकिरन्ति स्म । द्वयेऽपि द्विषन्तः सिद्धाश्च साधुवादैः साधु साध्विति वाक्यैराकिरन्ति स्म । एतत्त्रितयमपि युगपत् प्रवृत्तमित्यर्थः । अत्र स्वर्णपुङ्खशरमाल्यसाधुवादानां प्रकृतानामेव तुल्यकालैकौघप्रवृत्तिसाम्यादौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ५५ ॥

बाणेति । बाणैराक्षिप्ताः पातिताश्च आरोहाः सादिनो येभ्यस्तानि अत एव शून्यानि रिक्तान्यासनानि आस्तरणानि येषाम् । अत एवान्यैः सैन्यैः परसैनिकैर्ग्रहीतुं प्रक्रान्तानामारब्धानां समन्तादवरुध्यमानानामित्यर्थः । अत एव संरब्धानां क्षुभितानाम् अत एव आजिभूमौ भ्राम्यताम् अनवतिष्ठमानानां वारणानां वारैर्वृन्दैः वारीबन्धनस्थानम् । वारः सूर्यादिदिवसे वारो वरणवृन्दयोः वारी कटीभबन्धन्योरिति विश्वः । सस्मरे स्मृता तद्धर्मयोगादिति भावः । कर्मणि लिट् । अत्र शून्यासनत्वादीनां विशेषणगत्या वारीस्मरणहेतुत्वात् काव्यलिङ्गम् ॥ ५६ ॥

क्षुन्दन् कोपाल्लोकमायोधनोर्व्याम्।
पादे लग्नामच मालामिभेन्द्रः
पाशीकल्पामायतामाचकर्ष ॥ ५७ ॥
कश्चिन्मूर्च्छामेत्य गाढ़प्रहारः
सिक्तः शीतैः शीकरैर्वारणस्य।
उच्छ्वास प्रस्थिता तज्जिहीर्षु-
र्व्यर्थाकूता नाकनारी मुमूर्च्छ ॥ ५८ ॥
लूनग्रीवात्सायकेनापरस्य
द्यामत्युच्चैराननादुत्पतिष्णोः।

पौनःपुन्यादिति। अत्र आयोधनोर्व्यां युद्धभूमौ पौनःपुन्यात् पुनःपुनरावृत्तेरित्यर्थः। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः, अव्ययानां भमात्रे टिलोपस्य प्रातिपदिकाद्यर्थं उपसङ्ख्यानमिति टिलोपः। असृगम्भेन रक्तगन्धाघ्राणादित्यर्थः। मत्त इभेन्द्रो महागजः कोपाल्लोकं जनं क्षुन्दन् क्षुभ्णन् पादे लग्नाम् ईषदसमाप्तां पाशीकल्पां पाशबन्धनसदृशीम्। पाशस्त्वस्त्रादिबन्धनमिति विश्वः। बह्वादिभ्यश्चेति विकल्पादीकारः, अभाषितपुंस्कत्वात् घरूपेत्यादिना ह्रस्वो न भवति। आयतां दीर्घां मालामाचकर्ष। पाशीकल्पेत्यत्र तद्धितगता पूर्णोपमा ॥ ५७ ॥

कश्चिदिति। गाढ़ः प्रहारो यस्य सः कश्चिद्वीरो मूर्च्छामेत्य वारणस्य शीतैः शीकरैः पुष्करतुषारैः सिक्तः सन् उच्छ्वास उज्जीवति स्म किन्तु तं मूर्च्छामागतं जिहीर्षुर्हर्तुमिच्छुः। हरतेः सन्नन्तादुप्रत्ययः। प्रस्थिता तं वरीतुमागतेत्यर्थः। नाकनारी व्यर्थाकूता तदुज्जीवनाद्विफलमनोरथा सती मुमूर्च्छ। अत्राकूतवैयर्थ्यस्य विशेषणगत्या नाकनारीमूर्च्छाहेतुत्वात् काव्यलिङ्गं मूर्च्छासम्बन्धातिशयोक्त्या सङ्कीर्यते ॥ ५८ ॥

लूनग्रीवादिति। अपरस्य सायकेन लूनग्रीवाच्छिन्नकण्ठात् अत एव द्यामाकाशं प्रति अत्युच्चैरुत्पतिष्णोरुत्पतनशीलात्। अलङ्क-

र्वेसे मुग्धैः सैंहिकेयानुकारा-
द्रौद्राकारादप्सरोवक्त्रचन्द्रैः ॥ ५९ ॥

वृत्तं युद्धे शूरमाश्लिष्य काचि-
द्रन्तुं तूर्णं मेरुकुञ्जं जगाम ।
त्यक्त्वा नाग्नौ देहमेति स्म यावत्
पत्नी सद्यस्तद्वियोगासमर्था ॥ ६० ॥

त्यक्तप्राणं संयुगे हस्तिनीस्था
वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।
प्राप्याखण्डं देवभूयं सतीत्वा-
दाशिश्लेष स्वैव कञ्चित् पुरन्ध्री ॥ ६१ ॥

ञित्यादिना इष्णुच्प्रत्ययः । अत एव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः । तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद इत्यमरः । स्त्रीभ्यो ढक् । तमनुकरोतीति तदनुकारात्तत्सदृशादित्यर्थः । कर्मण्यण्प्रत्ययः । रौद्राकारात् भीषणाकृतेरस्य वीरस्य आननात् मुग्धैः सुन्दरैः अप्सरसां वक्त्रैरेव चन्द्रैस्त्रेसे त्रस्तम् । भावे लिट् । तत्र राहुहेतुकत्रासस्य चन्द्र एव सम्भवाद्वक्त्रचन्द्रैरिति रूपकं सिद्धं तच्च सैंहिकेयानुकारादिति लुप्तोपमापेक्षत्वात् सङ्करः ॥ ५९ ॥

वृत्तमिति । काचिदमरनारी युद्धे वृत्तं मृतम् । वृत्तेऽतीते दृढे ख्याते वर्तुलेऽपि वृत्तं मृते इति विश्वः । शूरमाश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जङ्कुञ्जञ्जगाम । यावत्तद्वियोगासमर्था तद्विरहासहा पत्नी सद्योऽग्नौ देहं त्यक्त्वा नैति स्म नाजगाम । अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६० ॥

त्यक्तेति । संयुगे युद्धे त्यक्तप्राणं कञ्चिद्वीरं हस्तिन्यां तिष्ठतीति हस्तिनीस्था करिणीमारूढा सती वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुर्गत-प्राणा । स्वैव पुरन्ध्री स्वभार्यैव सतीत्वात्पतिव्रतात्वादखण्डमक्षयं देव-भूयं देवत्वम् । भुवो भावे इति क्यप् । प्राप्याशिश्लेष । स्त्रीणां

स्वर्गे वासं कारयन्त्या चिराय
प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।
कश्चिद्भेजे दिव्यनार्या परस्मिन्
लोके लोकम्प्रीणयन्त्येह कीर्त्या ॥ ६२ ॥

गत्वा नूनं वैबुधं सद्म रम्यं
मूर्च्छाभाजामाजगामान्तरात्मा ।
भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः
साधीयस्ते यद्रणायाद्रियन्ते ॥ ६३ ॥

पातिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः । अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वाभुक्तेन काव्यलिङ्गमतिशयोक्त्यादिकं तु यथासम्भवमूह्यम् ॥ ६१ ॥

स्वर्ग इति । कश्चिद्वीरश्चिराय चिरकालं स्वर्गे वासम् । शयवासवासिष्वकालादिति विकल्पादलुक् । कारयन्त्या अनुभावयन्त्या अहन्यहनि प्रत्यहम् । नपुंसकादन्यतरस्यामित्यव्ययीभावे समासान्तष्टच्प्रत्ययः, अव्ययानां भमात्रे टिलोप इत्युक्तम् । प्रत्यग्रत्वं नूतनत्वं धारयन्त्या परप्रेमास्पदत्वादिति भावः । लोकं प्रीणयन्त्या अद्भुतत्वं प्रापयन्त्या । प्रीञो ण्यन्ताल्लटः शतरि ङीप्, धूञ्प्रीञोर्नुग्वक्तव्य इति नुगागमः । दिव्यनार्या परस्मिंल्लोके इहलोके कीर्त्या च भेजे प्राप्तः । भजेः कर्मणि लिट् । रणमरणाल्लोकद्वयमपि जिगायेत्यर्थः । अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्मसम्बन्धात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ६२ ॥

गत्वेति । मूर्च्छाभाजामन्तरात्मा जीवः रम्यं वैबुधं सद्म दिव्यभवनं गत्वा आजगाम । मूर्च्छासमये सुरलोकरामणीयकं दृष्ट्वा आजगाम । नूनमित्युत्प्रेक्षायाम् । कुतः यद्यस्मात् प्राप्तसंज्ञाः लब्धबोधाः सन्तः दृष्टप्रत्ययाः दृढविश्वासाः भूयः पुनरपि साधीयो गाढतरम् । बाढादीयसुनि अन्तिकबाढयोर्नेदसाधाविति साधादेशः । रणाय रणं

कश्चिच्छस्त्रापातमूढोऽपवोढु-
र्लब्ध्वा भूयश्चेतनामाहवाय ।
व्यावर्त्तिष्ट क्रोशतः सख्युरुच्चै-
स्त्यक्तश्चात्मा का च लोकानुवृत्तिः ॥ ६४ ॥
भिन्नोरस्कौ भृत्युणाक्रम्य दूरा-
दासन्नत्वात्कौचिदेकेषुणैव ।
अन्योऽन्यावष्टम्भसामर्थ्ययोगा-
दूर्द्धाविव स्वर्गतावप्यभूताम् ॥ ६५ ॥
भिन्नानस्त्रैर्मोहभाजोऽभिजातान्
हन्तुं लोलं वारयन्तः स्ववर्गम् ।

कर्तुमादियन्ते उद्योहिरे इत्यर्थः । कर्तरि लट्, श्यन्प्रत्ययः । कथञ्चिदुज्जीवितानां पुनर्मृत्युप्राप्तिः श्रेयोदर्शनहेतुकेति भावः ॥६३॥

कश्चिदिति । शस्त्रापातमूढः प्रहारमूर्च्छितः कश्चिद्वीरश्चेतनां संज्ञां लब्ध्वा अपवोढुर्मूर्च्छासमये युद्धभूमेरपनेतुः सख्युर्मित्रस्योच्चैः क्रोशतः आगच्छागच्छेत्याक्रोशति । षष्ठी चानादरे इति षष्ठी । क्रोशन्तमनादृत्येत्यर्थः । भूयः पुनरपि आहवाय रणाय व्यावर्त्तिष्ट । आत्मा देहस्त्यक्तश्च तथाहि लोकानुवृत्तिश्च का नैवेत्यर्थः सुहृज्जनानुरोधस्तु हितानर्थिनः परिच्छेत्तुं दृष्टेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

भिन्नोरस्काविति । भृत्युणा दूरादाक्रम्यासन्नत्वात्तयोरित्यर्थः । सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ कौचिद्वीरावन्योऽन्यावष्टम्भ एव सामर्थ्यं तस्य योगात् स्वभावादूर्ध्वाविव ऊर्द्ध्वं तिष्ठन्तावेव स्वर्गतावपि मृतावभूताम् अपिश्चार्थः । तत्र मृतयोरूर्द्ध्वावस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

भिन्नानिति । अन्ये वीरा अस्त्रैर्भिन्नान् विदारितान् अत एव

जीवग्राहं ग्राहयामासुरन्ये
योग्येनार्थः कस्य न स्याज्जनेन ॥ ६६ ॥
भग्नैर्दण्डैरातपत्राणि भूमौ
पर्य्यस्तानि प्रौढचन्द्रद्युतीनि ।
आहाराय प्रेतराजस्य रौप्य-
स्थालीनीव स्थापितानि स्म भान्ति ॥ ६७ ॥
रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का
मुक्ताहाराः पार्थिवानां व्यसूनाम् ।
हासाल्लक्ष्म्याः पूर्णकामस्य मन्ये
मृत्योर्दन्ताः पीतरक्तासवस्य ॥ ६८ ॥

मोहभाजो मूर्च्छाभाजो मूर्च्छागतानभिजातान् कुलीनान् । अभिजातः स्थितौ न्याय्ये कुलीनप्राज्ञयोरपीति विश्वः । हन्तुं लोलम् उत्सुकं स्ववर्गं वारयन्तः जीवं गृहीत्वा जीवग्राहं ग्राहयामासुः जीवमेव ग्राहयामासुरित्यर्थः । समूलाकृतजीवेषु हन्कृञ्ग्रह इति णमुल्प्रत्ययः कषादित्वादनुप्रयोगः । जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाह तथाहि योग्येन जनेन हेतुना कस्य पुंसोऽर्थः कीर्त्यादिप्रयोजनं न स्यात् स्यादेव सर्वस्यापीत्यर्थः अतो वीराणां रणेष्वपि अतिपरिक्षतरक्षणमेव श्रेयः । नार्त्तं नातिपरिक्षतमिति हननिषेधादिति भावः ॥ ६६ ॥

भग्नैरिति । भग्नैर्दण्डैर्हेतुना भग्नदण्डत्वादिति भावः ; भूमौ पर्यस्तानि उत्तानपतितानि प्रौढचन्द्रद्युतीनि पूर्णेन्दुप्रभाणि आतपत्राणि श्वेतच्छत्राणीत्यर्थः प्रेतराजस्यान्तकस्य आहाराय भोजनाय स्थापितानि विहितानि रौप्यस्थालीनि राजतभाजनानीव भान्ति इत्युत्प्रेक्षा । ६७ ॥

रेजुरिति । व्यसूनां मृतानां पार्थिवानां वक्षसो भ्रष्टाः पतिताः

निम्नेष्वोघीभूतमस्रक्षताना-
मस्रं भूमौ यच्चकासाञ्चकार।
रागार्थं तत्किन्नु कौसुम्भमम्भः
संव्यानानामन्तकान्तःपुरस्य॥ ६९॥

रामेण त्रिःसप्तकृत्वो ह्रदाना-
यश्चक्रे पञ्चकङ्क्षत्रियास्रैः।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्
सङ्ख्येऽसङ्ख्याः प्रावहन्द्वीपवत्यः॥ ७०॥

कुङ्कुमाङ्काः कुङ्कुमाङ्किता इत्यर्थः। मुक्ताहाराः पूर्णकामस्य सकल-राजकसंहारात्सफलमनोरथस्य अत एव पीतं रक्तमेवासवं येन तस्य मृत्योः हासादट्टहासाच्छुभ्रा इव दन्ता रेजुरिति मन्ये इत्युत्प्रेक्षा॥ ६८॥

निम्नेष्विति। भूमौ निम्नेषु निम्नस्थलेषु ओघीभूतं राशीभूतम् अस्रक्षतानां सम्बन्धि यदस्रं रक्तं चकासाञ्चकार दिदीपे। चकास्तु दीप्ताविति धातोर्लिट् वानेकाच आम् वक्तव्यमित्याम्प्रत्यये कृञोऽनुप्र-योगः। तदन्तकान्तःपुरस्य कृतान्तावरोधस्य संव्यानानामुत्तरीयाणां रागार्थं रञ्जनार्थं कुसुम्भस्येदं कौसुम्भं अम्भः किं नु कुसुम्भद्रवो नु वेत्युत्प्रेक्षा॥ ६९॥

रामेणेति। रामेण भार्गवेण सामर्थ्यात् त्रीन् वारान् त्रिः। द्वित्रिचतुर्भ्यः सुजिति सुच् प्रत्ययः। त्रिरावृत्ताः सप्त त्रिःसप्तकृत्वः एकविंशतिवारानित्यर्थः। सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः। क्षत्रियास्रैः राजन्यरक्तैः चितमद्भुतं ह्रदानां पञ्च-परिमाणमस्य पञ्चकम्। सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति सङ्ख्यार्थे कन्प्रत्ययः। चक्रे कृतं तस्मिन् सङ्ख्ये युद्धे। मृधमास्कन्दनं सङ्ख्य-मित्यमरः। क्षणादेव रक्तैरेवाम्भोभिः असङ्ख्या द्वीपवत्यो नद्यः प्राव-हन् प्रासरन् रामेण [illegible] काख्यं ह्रदपञ्चकमेव

सन्दानान्तादस्त्रिभिः शिच्चितास्त्रै-
रांविश्याधः शातशस्त्रावलूनाः।
कूर्मौपम्यं व्यक्तमन्तर्नदीना-
मैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीणाम् ॥ ७१ ॥
पद्माकारैर्योधवक्त्रै रिभानां
कर्णभ्रष्टै श्चामरैरेव हंसैः।
सोपस्काराः प्रावहन्नस्रतोयाः
स्रोतस्विन्यो वीचिषूच्चैस्तरङ्गैः ॥ ७२ ॥
उत्क्रान्तानामामिषायोपरिष्टा-
दध्याकाशम्बभ्रमुः पत्रवाहाः।

कथञ्चित् कृतम्। अत्र तु क्षणमात्रेणासङ्ख्या नद्यः प्रवृत्ता इत्युप-मानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

सन्दानान्तादिति। शिक्षितास्त्रैरभ्यस्तास्त्रविद्यैरस्त्रिभिरायुधीयैः अधः रथानामधस्तादाविश्य प्रविश्य सन्दानान्तात् बन्धनप्रदेशात् गुल्फ-देशमभिकृत्येत्यर्थः। शातं शीतम्। शाच्छोरन्यतरस्यामिति विक-ल्पादीत्वाभावः। तेन शस्त्रेणावलूनाः छिन्नाः। इभानामिमे ऐभाः अङ्घ्रयश्चरणाः असृङ्मयीणां नदीनामन्तरभ्यन्तरे व्यक्तं कूर्मौपम्यं कमठोपमाम्। स्वार्थे ष्यञ्प्रत्ययः। अत एवौपम्यादयः चातुर्वर्ण्यव-दिति वामनः। प्रापन् प्राप्ताः। आपो लुङि पुषादित्वात् च्लेरङा-देशः। उपमा ॥ ७१ ॥

पद्माकारैरिति। उच्चैर्वीचिषु तरङ्गैः प्लवमानैः पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भटमुखैरिभानां कर्णभ्यो भ्रष्टैश्चामरैर्हंसैः सोप-स्काराः सपरिकराः। सम्पर्युपेभ्यः करोतौ भूषणे इति सुडागमः। अस्रतोयाः रक्तजलाः स्रोतस्विन्यो नद्यः प्रावहन्। अत्र रूपको-पमयोः सङ्करः सुगमः ॥ ७२ ॥

मूर्त्ताः प्राणा नूनमद्याप्यवेक्षा-
मासुः कायन्त्याजिता दारुणास्त्रैः ॥ ७३ ॥

आतन्वद्भिर्दिक्षु पत्राग्रनाद-
म्प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः ।
आदौ रक्तं सैनिकानामजीवै-
र्जीवैः पश्चात्पत्त्रिपूगैरपायि ॥ ७४ ॥

श्रोणीभाजां यद्रणे संस्थितानां-
मादत्तौष्ठं साङ्गसङ्गेन नूनम् ।

उत्क्रान्तानामिति । पत्राणि वहन्तीति पत्रवाहाः पत्रिणः आमिषाय आमिषमत्तुम् । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । उत्क्रान्तानां मृतानाम् उपरिष्टादध्याकाशमाकाशे । विभक्त्यर्थेऽव्ययीभावः । बभ्रुः भ्रेमुः । वा जृभ्रमुत्रसामिति विकल्पादेत्वाभ्यासलोपाभावः । अतोऽत्प्रेक्ष्यते । दारुणास्त्रैः घोरास्त्रैः कायं त्याजिता विसर्जिताः । त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः । ण्यन्ते कर्त्तुश्च कर्मणामिति वचनात् । मूर्त्ताः मूर्त्तिमन्तः । प्राणा अद्येदानीमपि कायमवेक्षामासुः पूर्वाभिमानात् पुनः कायप्रवेशापेक्षिणो मूर्त्ताः प्राणा एव नूनमाराद् भ्रमन्तीत्युत्प्रेक्षार्थः । इजादेश्च गुरुमतोऽनृच्छ इत्याम्प्रत्ययः कृञ्चानुप्रयुज्यते लिटीत्यस्तेरनुप्रयोगः आम्प्रत्ययवदित्यत्र कृञ एवेति नियमादस्तेर्नात्मनेपदम् ॥ ७३ ॥

आतन्वद्भिरिति । दिक्षु पत्राग्रनादं पत्राग्रघोषम् आतन्वद्भिर्विस्तारयद्भिर्दूरादाशु प्राप्तैरागतैरजीवत्त्यजीवैरचेतनैः । पचाद्यजन्तेन नञ्समासः । पत्त्रिपूगैर्बाणव्रातैरित्यर्थः । तीक्ष्णैर्मुखाग्रैः करणैः सैनिकानां रक्तमपायि पीतम् । पिबतेः कर्मणि लुङ् आतो युक् चिण्कृतोरिति युगागमः । पश्चाज्जीवैश्चेतनैः पत्त्रिपूगैः पक्षिसङ्घैः कर्तृभिस्तीक्ष्णैर्मुखाग्रैश्चञ्चुपुटैः करणैरपायि । अतोऽभेदोऽयं पत्त्रिणां प्रकृतत्वात् केवलप्रकृतविषयः श्लेषः ॥ ७४ ॥

ज्वालाव्याजादुद्वमन्ती तदन्त-
स्तेजस्तारन्दीप्तजिह्वा ववाशे ॥ ७५ ॥
नैरन्तर्य्यच्छिन्नदेहान्तरालं
दुर्भक्षस्य ज्वालिना वाशितेन ।
योद्धुर्बाणप्रोतमादीप्य मांस-
म्पाकापूर्वस्वादमादे शिवाभिः ॥ ७६ ॥
ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा

ओजोभाजामिति । दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा । रणे संस्थितानां मृतानामोजोभाजामोजस्विनाम् । अङ्गेन गात्रेण सार्द्धं यत्तीव्रं तिग्मं तेज आददभक्षयत् । आदेर्लुङ् अदः सर्वेषामित्यडागमेऽघ्लृकाद्य आडजादीनामित्याडागमोऽङ्गस्य आटश्चेति वृद्धिः । तदनन्तरमन्तरितं तेजो ज्वालाव्याजान्मुखोल्काच्छलादुद्वमन्ती तारमुच्चैर्ववाशे रौति स्म । तिरश्चां वाशितं रुतमित्यमरः । नूनमित्युत्प्रेक्षायाम् । अत्र व्याजशब्देन ज्वालालापह्नवेन तेजस्त्वोत्प्रेक्षणे सापह्नवोत्प्रेक्षेति सर्वस्वकारः ॥ ७५ ॥

नैरन्तर्य्येति । नैरन्तर्य्येणाविच्छेदेन छिन्नं देहस्यान्तरालं यस्मिन् कर्मणि तद्यथा तथा बाणैः प्रोतं स्यूतम् अत एव दुर्भक्षस्य भक्षितुमशक्यस्य । कृच्छ्रार्थे खल्प्रत्ययः । योद्धुर्योधस्य सम्बन्धि मांसं ज्वालिना ज्वालावता वाशितेन रुतेन शिवानां वाशेन जिह्वा ज्वलतीति प्रसिद्धिः । आदीप्य प्रज्वाल्य । बाणदाहाय मांसपाकाय चेति भावः । अत एव पाकेनापूर्वोऽभिनवः स्वादो रुचिर्यस्य तत्तथा शिवाभिर्गोमायुभिः । स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तका इत्यमरः । आदे जघसे भक्षितमित्यर्थः । लिट्यन्यतरस्यामिति विकल्पाददेर्घस्लादेशः । वाशितेच्छया जिह्वाज्वालादग्धेषु बाणतिबन्धन पाकरुचिरं जघस इत्यर्थः । अत्र पाकापूर्वास्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ७६ ॥

रक्तारिष्टं शोषिताजीर्णशेषम् ।
स्वादुङ्कारङ्कालखण्डोपदंशं
क्रोष्टा डिम्बं व्यष्वणद् व्यस्वनच्च ॥ ७७ ॥

क्रव्यात्पूगैः पुष्कराण्यानकाना-
मत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राश्निनः प्रत्यवस्यन्
कालो नूनं व्याददावाननानि ॥ ७८ ॥

स्नातीति । क्रोष्टा जम्बुकः क्षुत्प्रबाधाय ग्लानिच्छेदी खेदच्छारी शोषितो जारितः आजीर्णशेषो येन तद्रक्तमेवारिष्टं पानविशेष इति रूपकम् । तत्पीत्वा स्वादुङ्कार स्वादूकृत्य । स्वादुमीति णमुल् । कालखण्डेन यकृता उपदंशं कालखण्डउपदंशं कृत्वेत्यर्थः । कालखण्ड-यकृती तु समे इत्यमरः । उपदंशस्तृतीयायामिति णमुल् । कालखण्डस्य दंशनक्रियाकर्मत्वेऽपि भुजिक्रियाकरणत्वात् तृतीयोपपदतया तृतीयाप्रभृतीन्यन्यतरस्यामिति विकल्पेनोपपदसमासः । डिम्बं कलेवरं व्यष्वणत् भुक्तवानित्यर्थः । वेः स्वनभोजन इति षत्वम् । व्यस्वनद्वादयच्चेति समुच्चयः । अभोजनार्थत्वात् षत्वं न ॥ ७७ ॥

क्रव्यादिति । क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः कङ्कगृध्रादयः । क्रव्ये चेति विट्प्रत्ययः । तेषां पूगैः कदम्बैः मेदसो वशायाः । मेदस्तु वपा वशेत्यमरः । प्रत्याशाभिस्तृष्णाभिर्दारितानि मेदस्वित्वभ्रान्त्या पाटितान्यानकानां तूर्याणां पुष्कराणि मुखानि । पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले इत्यमरः । प्राश्निनः करितुरगादीन् प्रत्यवस्यन् अभ्यवहरन् । अभ्यवहारः प्रत्यवसानं भोजनं जग्धिरिति हलायुधः । कालोऽन्तकः आभीलानि भयङ्कराणि । आभीलं भीमकृच्छ्रयोरिति विश्वः । आननानि व्याददौ विजहार । आङो दोऽनास्यविहरण इत्यस्य प्रत्युदाहरणमेतत् । यानि विदारितानि पुष्कराणि तान्येवाननानि । नूनमित्युत्प्रेक्षायाम् ॥ ७८ ॥

कीर्णा रेजे साजिभूमिः समन्ता-
दप्राणद्भिः प्राणभाजां प्रतीकैः ।
बह्वारम्भैर्द्वसंयोजितैर्वा
रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥ ७९ ॥

आयन्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः ।
आसीदोघैर्मुहुरिव महद्वारिधेरापगाना-
न्दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ ८० ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सङ्कुल-
युद्धवर्णनो नामाष्टादशः सर्गः ॥ १८ ॥

---

कीर्णेति । अप्राणद्भिरजीवद्भिः छिन्नत्वान्निष्प्राणैरित्यर्थः । अन प्राणने इति धातोर्लटः शत्रादेशः । प्राणभाजां प्राणिनां प्रतीकैरवयवैः । अङ्गं प्रतीकोऽवयव इत्यमरः । समन्तात् कीर्णा सा आजिभूमिः ईषदसमाप्तारम्भैरिति बह्वारम्भैः किं च दुर्दृष्टैरित्यर्थः । विभाषा सुपो बहुच् पुरस्तात्तु इति बहुच्प्रत्ययः । तथाद्व संयोजितैरर्द्धस्पृष्टैश्च रूपैः आकारैः । रूपं स्वभावे सौन्दर्ये आकारश्लोकयोरपीति विश्वः । कीर्णा स्रष्टुः धातुः सृष्टिकर्मान्तशाला वा । सृष्टिकर्मणो नियतागारमिव रेजे इत्युत्प्रेक्षा ॥ ७९ ॥

आयन्तीनामिति । इत्थमुक्तरीत्या अविरतरयमविच्छिन्नवेगं यथा तथा आयन्तीनामभिधावन्तीनामौद्धत्यभाजां प्रागल्भ्यभाजां राज्ञां समूहा राजकानि । गोत्रोक्षेत्यादिना वुञ्प्रत्ययः । तेषामनीकिन्यः सेनास्तासां राजकानीकिनीनाम् अलघुभिर्महद्भिरूर्मिमद्भिस्तरङ्गवद्भिः श्रीपतेः कृष्णस्य सैन्यैः समं सेनाभिः सह अपां समूहः आपम् । भिक्षादिभ्योऽण् इत्यण् प्रत्ययः । ... समानाधिकरणविशेषणविश्-

# ऊनविंशः सर्गः ।

अथोत्तस्थे रणाटव्यामसुहृद्वेणुदारिणा ।
नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥ १ ॥

घानां वारिधेरोघैः प्रवाहैरिव ततो गुरुतरध्वानिर्मज्ञाध्वनिर्यस्मिन् तन्महद्दोलायुद्धम् अनियतजयपराजययुद्धं सञ्जरासीत् । उपमा । मन्दाक्रान्ता वृत्तमेतत् ॥ ८० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये-
ऽष्टादशः सर्गः ॥ १८ ॥

तदेवमष्टादशसर्गे तुमुलं युद्धमभिधायेदानीमेकोनविंशतिसर्गे द्वन्द्वयुद्धमनुष्टुभेन छन्दसा चित्रवन्धेन वर्णयितुमारभते । अथेत्यादि । अथैवं तुमुलयुद्धानन्तरम् । रणोऽटवीवेत्युपमितसमासः । अग्निवदिति तद्धितोपस्यलिङ्गात् । एवमुत्तरत्रापि द्रष्टव्यम् । तस्यां रणाटव्याम् असुहृदः शत्रवो वेणवो वंशा इव । वेणुस्त्करतेजना इति सर्वपर्यायेष्वमरः । तां दारयति यस्तेनासुहृद्वेणुदारिणा वेणुदारिणा बाणात्मजेन । नृपा अङ्घ्रिपाः पादपा इव तेषामोघाः सङ्घास्तेषां संघर्षात् सम्मरात् श्लेषाच्च अग्निवदग्नितुल्यम् । तेन तुल्यमिति तुल्यार्थे वतिप्रत्ययः । उत्तस्थे उत्थितम् । भावे लिट् । अत्राग्निवदिति तुल्यार्थेन वतिना धर्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्छ्रौती तद्धितगता पूर्णोपमा । सा च रणाटव्यादिसमासगतोपमासापेक्षेति सङ्करः । सर्गेऽस्मिन् अनुष्टुप् वृत्तम् । पञ्चमं लघु सर्वेषु सप्तमं द्वि-

आपतन्तममुं दूरादूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥
जजौजोजाजिजिज्जाजी तन्ततोऽतिततातितुत्।
भाभोऽभीभाभिभूभाभूरारारिररिरीररः ॥ ३ ॥
एकाक्षरपादः।

चतुर्थयोः। गुरु षष्ठं च सर्वेषामेतत् श्लोकस्य लक्षणमिति लक्षणात्। अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दालङ्कारनियमः सर्वत्र यथासम्भव-मर्थालङ्कारश्च तत्र यमकलक्षणमुक्तं दण्डिना। अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम्। एक-द्वित्रिचतुष्पादयमकानां विकल्पना। आदिमध्यान्तमध्यान्तमध्याद्या-द्यान्त सर्वत इति। अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः ॥१॥

आपतन्तमिति। आपतन्तमाधावन्तम् अमुं वेणुदारिणं दूरात् ऊरीकृतपराक्रमोऽङ्गीकृतपौरुषस्तेन सह्यानुगतसंप्रहार इत्यर्थः। बलो बलभद्रः केसरी सिंहो मातङ्गं गजमिवावलोकयामास अनयो-रिव तदन्तरमिति भावः। अतोऽलङ्कारेण वस्तुध्वनिः ॥ २ ॥

जजाविति। ततोऽवलोकनानन्तरं जजन्तीति जजाः योधाः। जज युद्धे पचाद्यच्। जजानामोजसा जाता जजौजोजा तामाजिं जयतीति जजौजोजाजिजित्। जयतेः क्विप्। जजतीति जाजी योधी। ताच्छील्ये णिनिः। अतितताननुद्धतान् अतितुदति अति-व्यथयतीति अतितुत्। तुदतेः क्विप्। भस्याभेवाभा यस्य स भाभो नक्षत्रकान्तिः। नक्षत्रमृक्षं भं तारेत्यमरः। नास्ति भीर्येषां तेऽभियो निर्भीकाः तानिभान् गजान् अभिभवतीति अभीभाभिभूः। क्विप्। तस्याः भासस्तेजसो भूः स्थानम् अभीभाभिभूभाभूः। अराः सन्त्येषा-मित्यरीणि चक्राणि तैः रीयन्ति गच्छन्तीति अरिर्यो रथाः। री गतिरेषणयोरितिधातोः क्विप्। तेषाम् ईरं प्रेरणं राति आरिरीररो-ऽधिकः। आतोऽनुपसर्गे कः। [illegible] बलभद्रः तं वेणुदारिणम्

भवन् भयाय लोकानामाकम्पितमहीतलः ।
निर्घात इव निर्घोषभीमस्तस्यापतद्रथः ॥ ४ ॥
रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
कोपादथैनं शितया महेष्वा स विचक्षणे ॥ ५ ॥
दिशमर्कमिवावाचीं मूर्च्छागतमपाहरत् ।
मन्दप्रतापन्तं सूतः शीघ्रमाजिविहायसः ॥ ६ ॥

आर याङ्कुमासदारेत्यर्थः । ऋ गताविति धातोर्लिट् द्विर्भावतोपाल्लि वृद्धिः अभ्यासस्योरदत्वे अत आदेरिति दीर्घे पुनः सवर्णदीर्घः । भिन्नै-काक्षरपादाख्योऽनुप्रासभेदः भास इत्युपमानुप्रासयोरेकवाचकानु-प्रवेशलक्षणसङ्करः ॥ ३ ॥

भवन्निति । लोकानां जनानां जगतां च । लोकस्तु भुवने जने इत्यमरः । भयाय भवन् सम्पद्यमानः भयं जनयन्नित्यर्थः । क्लृपेः सम्पद्यमाने चतुर्थी च वक्तव्येति क्लृपेरर्थनिर्देशाच्चतुर्थी । आकम्पित-महीतलो भूकम्पं कुर्वन्नित्यर्थः । निर्घोषेण भीमो भयङ्करः तस्य बलभद्रस्य रथो निर्घात इवापतत् आधावत् । श्रौती पूर्णोपमा ॥ ४ ॥

राम इति । रिपुर्वेणुदारी आजिमहेषु रणोत्सवेष्विति रूपकम् । मह उद्धव उत्सव इत्यमरः । विचक्षणे प्रगल्भे । विचष्ट इति कर्त्तरि ल्युडिति न्यासकारः अनयोश्च प्रतिषेधो वक्तव्य इति चक्षिङः ख्य आदेशाभावः । रामे बलभद्रे शरान् आस चिक्षेप । अस्यते-र्लिट् अत आदेरित्यभ्यासदीर्घे सवर्णदीर्घः । कोपाद्य राम एनं वेणु-दारिणं शितया शातया । शाच्छोरन्यतरस्यामितीत्वम् । महेष्वा महेषुणा । पत्नी राप इषद्वयोरित्यमरः । विचक्षणे जघान । क्षणु हिंसायामिति धातोः कर्त्तरि लिट् । अभिन्नसमपादो नाम पादाभ्यासयमकभेदः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५ ॥

दिशमिति । मूर्च्छागतं रामेषुपातान्मोहमुपगतम् । अत एव मन्दप्रतापमल्पप्रकाशं तं वेणुदारिणम् अवाचीं दक्षिणां दिशं प्राप्तम् ।

कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम् ।
ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम् ॥ ७ ॥

उल्मुकेन द्रुमम्प्राप्य सङ्कुचत्परसञ्चयम् ।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥ ८ ॥

पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ।
तयैव वाचाऽपगमं ययाचापमुदा युधः ॥ ९ ॥

अत एव मन्दप्रतापमर्कमिव सूतः सारथिरनूरुश्च आजेर्विहायसः व्याकाशादिवाजिनिहायस इत्युपमितसमासः । शाम्रमपाहरत् अप-सारितवान् । उपमा ॥ ६ ॥

कृत्वेति । प्रभावेन सह वर्त्तत इति सप्रभावा महानुभावा शिनेः सात्यकिपितामहस्य चमूः सेना । शाल्वो नाम चैद्यपक्षो राजा तस्य चमूं सेनां जितां कृत्वा जित्वेत्यर्थः । अत एव वक्त्रैर्मुखैः । येनाङ्ग-विकार इति तृतीया विकारस्यापि विकारत्वात् । फुल्लाब्जस्य प्रफु-ल्लारविन्दस्य सप्रभा समानप्रभा हर्षेण विकासितवतीत्यर्थः । ऊर्जि-तामुदारां वाचं ससर्ज के यूयमस्मदग्र इत्याद्युच्चैर्जगर्ज जगादेत्यर्थः । उपमायमकयोः संसृष्टिः ॥ ७ ॥

उल्मुकेनेति । दिक्षु तेजः प्रभावं प्रकाशञ्च प्रकिरता विक्षिपता उल्मुकेन भागवतेन राज्ञा अलातेन च । सङ्कुचन्तो परसम्पद्वाहन-सम्पत्संस्कृतिश्च यस्य तम् । सप्रतापं सपराक्रमं प्रकटतापनहितं च । द्रुमं द्रुमाख्यं राजानं वृक्षञ्च प्राप्यादीप्यत प्रजज्वले । भावे लङ् । अत्राभिधायाः प्रकृतार्थे नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव न श्लेषः ॥ ८ ॥

पृथोरिति । रुक्मी भीष्मकात्मजो रुक्मिणीभ्राता उदायुधः उद्यतायुधः सन् यया वाचा पृथोराज्ञश्चापमध्यक्षिपत् धिगिदं वृथा कृष्टमिति निनिन्द । अपगता मुद्यस्यास्तया अपमुदा निरुत्सा-हया तयैव वाचा युधो युद्धादपगममपसरणं ययाच । मां त्राहि

समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥ १० ॥

दधानैर्घनसादृश्यं लसदायसदंशनैः ।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥ ११ ॥

निरोष्ठ्यः ।

नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ।
बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥ १२ ॥

प्राप्य भीममसौ जन्यं सौजन्यन्दधदानते ।
विध्यन् मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥

पलायमानं शरणागतोऽस्मीति प्रार्थयामासेत्यर्थः । याचिः उभयपदी ॥ ९ ॥

समसिति । समं युगपत्समन्तत आपतन्तीरागच्छन्तीराज्ञां चैद्यपक्षाणामनीकिनीः सेनाः । कृष्णस्यापत्यं पुमान् कार्ष्णिः प्रद्युम्नः । अत इञ् । निम्नगाः नदीः सरस्वान् समुद्र इवैकोऽसहायः प्रत्यग्रहीत् प्रत्यवरुरोध ॥ १० ॥

दधानैरिति । लसन्ति आयसानि अयोमयानि दंशनानि वर्माणि येषां तैः । तनुत्रं वर्म दंशनमित्यमरः । अत एव घनसादृश्यं कार्ष्ण्यान्मेघसाम्यं दधानैस्तैः सैनिकैः तत्र कार्ष्णौ काञ्चनसच्छाया सुवर्णवर्णा शर एवाशनिः विद्युत्ससृजे उत्सृष्टा । उपमारूपकयोः संसृष्टिः । ओष्ठ्यवर्णविरहान्निरौष्ठ्यं चित्रभेदः शब्दालङ्कारः ॥ ११ ॥

नखेति । नखांशवो मञ्जर्य इव ताभिः कीर्णां व्याप्ताम् अधिरूढाः शिलीमुखा बाणा अलयश्च यस्यां ताम् । अलिबाणौ शिलीमुखावित्यमरः । धनुः शाखेव तां बिभ्रदसौ कार्ष्णिरुच्चकैरुन्नतस्तरुरिव बभौ । तरुरिवेति लिङ्गात्सर्वत्रोपमितसमासः । शिलीमुखेति श्लिष्टविशेषणेयमुपमा ॥ १२ ॥

प्राप्येति । अभिमुखानां शत्रुसङ्घानामन्तकः अरिपूगान्तकोऽसौ

कृतस्य पूर्वचितिपैर्विजयासंशया पुरः।
अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनम् ॥ १४ ॥
या बभार कृतानेकमाया सेना ससारताम्।
धनुः स कर्षन्नहितमायासेनाससार ताम् ॥ १५ ॥
ओजो महौजाः कृत्वाधस्तत्क्षणादुत्तमौजसः।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥ १६ ॥
दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः।

कार्ष्णिः भीमं भयङ्करं जन्यं युद्धं प्राप्य। युद्धमायोधनं जन्यमित्यमरः। आनते नम्रे सौजन्यं सौहार्दं दधत् न तु विध्यन्। न क्लीबं न कृताञ्जलिमिति निषेधादिति भावः। रिपून् प्रतिपन्थान् शरैर्विध्यन् प्रहरन् न मुमोच न ररक्षेत्यर्थः। संदंशयमकभेदः ॥ १३ ॥

कृतस्येति। असौ कार्ष्णिः पूर्वचितिपैर्विजयासंशया विजयाशङ्कया पुरोऽग्रे कृतस्य नियुक्तस्य प्रयुक्तस्य वा अनेकस्यानेकाकिनः ससहायस्येत्यर्थः। अन्यत्रानेकस्य बहुसङ्ख्यस्य बाणस्य बाणासुरस्य शरजातस्य च बाणैः खण्डनं छेदं चकार। अत्र बाणयोर्द्वयोरपि प्रकृतत्वात् केवलप्रकृतयोः श्लेषः ॥ १४ ॥

येति। या सेना कृतानेकमाया कृतबहुकपटा सती ससारतां सारवत्तां बभार तां सेनां स कार्ष्णिः धनुः कर्षन् धनुषा विध्यन्नित्यर्थः। आयासेन रहितमनायासं यथा तथा आससार अभियुक्तवानित्यर्थः बाणं भङ्क्त्वा तत्सेनां बभञ्जेत्यर्थः ॥ १५ ॥

ओज इति। महौजा महाबलः प्रद्युम्नः उत्तमौजसो नाम राज्ञः ओजस्तत्क्षणादेवाधः कृत्वाभिभूय आजौ युद्धे अमुख्यत्वमप्रधानत्वं कुर्वन् अथवा अमुख्यत्वम् अमुख्यार्थत्वं तन्नाम्नः कुर्वन् नाम निजं प्रद्युम्ननामधेयं मुख्यतां प्रधानतां प्रसिद्धार्थताञ्चानयत्। प्रकृष्टं द्युम्नं बलं यस्येति प्रद्युम्न इति स्वामी ॥ १६ ॥

दूरादिति। स कुमारः प्रद्युम्नः ससम्भ्राः सगर्वाः यास्चमूर्दूरादेव

न पुनः सांयुगीन्ताः स्म कुमारीर्हन्ति सम्मयाः ॥ १७ ॥
निपीड्य तरसा तेन मुक्ताः काममनास्थया ।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥ १८ ॥
तस्यावदानैः समरे सहसा रोमहर्षिभिः ।
सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥ १९ ॥
सुगन्धयद्दिशः शुभ्रमम्लानि कुसुमन्दिवः ।
भूरि तत्रापतत्तस्मादुत्पपात दिवं यशः ॥ २० ॥

भल्लैर्बाणविशेषैर्हन्ति स्म जघान तास्त्वः पुनर्भूयः संयुगस्तेमां सांयुगीं पृथ्वीं रणभुवमित्यर्थः । गोत्रा कुः पृथिवी पृथ्वीत्यमरः । न आरोहन्ति स्म नारूढाः ॥ १७ ॥

निपीड्येति । तेन प्रद्युम्नेन तरसा बलेन कामं निपीड्य अनास्थया अनादरेण मुक्ताः । आर्त्ता न परिहन्तव्या इति निषेधेनावध्या इति जीवन्तो मुक्ता इत्यर्थः । अन्यत्र क्षिप्ताः विद्विषो विलक्षत्वं सत्रपत्वमाययुः । विलक्षस्तु त्रपान्वित इत्यमरः । शिलीमुखा बाणास्तु विलक्षत्वं लक्ष्यभ्रष्टत्वं नाययुः । अत्र द्वयोरपि विलक्षत्वयोरभेदाध्यवसायादयं व्यतिरेको विद्विषां शिलीमुखानां च प्रकृतत्वात्तुल्ययोगितोदस्याश्रित इति सङ्करः ॥ १८ ॥

तस्येति । समरे तस्य प्रद्युम्नस्यावदानैरत्युग्रकर्मभिः करणैः सहसा सद्यः रोमहर्षिभिः रोमाञ्चवद्भिः व्योमस्थैः सुरैः महर्षिभिः सह सार्द्धं सारो बलमशंसि शंसितः ॥ १९ ॥

सुगन्धयदिति । दिशः सुगन्धयत् सुगन्धाः कुर्वत् । सुगन्धात्तत्करोतीति णयन्ताल्लटः शत्रादेशः । शुभ्रं धवलम् अम्लानि म्लानिरहितं भूरि प्रभूतं कुसुमं दिवोऽन्तरीक्षात्तत्र प्रद्युम्ने अपतत् तस्मात्प्रद्युम्नाद्यशः पूर्वोक्तगुणयुक्तं दिवमन्तरिक्षं प्रति उत्पपात । अत्र द्युप्रद्युम्नयोः कुसुमयशोभ्यामन्योऽन्योपस्कारजननादन्योऽन्यालङ्कारः । परस्परं क्रियाजननेऽन्योऽन्यमिति लक्षणात् ॥ २० ॥

सोढुन्तस्य द्विषो नालमपयोधरवारणम्।
अर्णुनाव यशस्च द्यामपयोधरवारणम् ॥ २१॥

केशप्रचुरलोकस्य पर्य्यस्कारि विकासिना।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥

सादरं युध्यमानापि तेनान्यनरसादरम्।
सा दरम्पृतना निन्ये हीयमाना रसादरम् ॥ २३ ॥

सोढुमिति। अपगता भयाद्धीरत्ता योधानां रवाः सिंहनादा येषां ते अपयोधरवाः द्विषः शत्रवः तस्य कार्ष्णेः रणं सोढुं नालमशक्ताः। अत एव यशस्च अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् अपयोधरवारणं सत् द्यामूर्णुनाव मेघमण्डलं व्यतिक्रम्य स्वर्गमाच्छादयामासेत्यर्थः। ऊर्णोतेर्लिट्। अजादेर्द्वितीयस्येति द्वितीयस्याचो द्विर्भावः। नुवङ्भावादाम्प्रतिषेधः। यमकवाक्यार्थहेतुककाव्यलिङ्गयोः संसृष्टिः ॥ २१ ॥

केशेति। विकासिना विविधमार्गचारिणा विकस्वरेण च कुसुमलक्ष्मणा पुष्पकेतुना प्रद्युम्नेन अन्यत्र कुसुमचिह्नेन तन्मयेनेत्यर्थः। केशवत्प्रचुराः प्रभूताः लोकाः जना यस्मिन् तस्य युद्धस्य शिरोऽग्रभूमिः अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरः मूर्द्धा शेखरेणापीड़ेनेव शिखामाल्येनेवेत्यर्थः। शिखास्वापीड़शेखरावित्यमरः। पर्य्यस्कारि परिष्कृतं भूषितमित्यर्थः। परिपूर्वात् करोतेः कर्मणि लिट् सम्पर्य्युपेभ्यः करोतौ भूषणे इति सुडागमः अड्भ्यासव्यवायेऽपीति नियमात्परिनिविभ्य इत्यादिना षत्वे सिचादीनां वाड्व्यवायेऽपीति विकल्पः। उपमा ॥ २२ ॥

सादरमिति। सादरं साभिनिवेशं युध्यमानापि सम्प्रहरन्त्यपि अरं द्रुतं हठादिति यावत् रसात् रणे रागात् हीयमाना अपकृष्यमाणा प्रद्युम्नमहिम्नेति भावः। अत एवात्र विरोधाभासोऽलङ्कारः। जहातेः कर्मणि लटः शानजादेशः। सा पृतना चैद्यसेना तेन प्रद्यु-

इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।
क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥

अहितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गत्कलभसमानीचतुरङ्गया ॥ २५ ॥

ततस्तत धनुर्मौर्वीविस्फारस्फारनिस्वनैः ।
तूर्यैर्युगक्षये क्षुभ्यदकूपारानुकारिणी ॥ २६ ॥

नेन अन्येषां तटस्थानामपि नराणां सादं निश्चेष्टतां राति ददातीति अन्यनरसादरम् । आतोऽनुपसर्गे कः इति कप्रत्ययः । दरं भयं दरोऽस्त्रियां भये श्वभ्रे इत्यमरः । निन्ये नीता । नयतेः प्रधाने कर्मणि लिट् । प्रधानकर्मण्याख्येये लादीन्याहुर्द्विकर्मणामिति वचनात् । विरोधाभासयमकयोः संसृष्टिः ॥ २३ ॥

इतीति । इतीत्थं जयलक्ष्म्या आलिङ्गितं झषध्वजं मत्स्यकेतुं प्रद्युम्नम् । पृथुरोमा झषो मत्स्य इत्यमरः । आलोक्य सद्यः क्रुद्धया सपत्न्यामसात् कोपितयेवेत्युत्प्रेक्षा । क्रुधा प्रद्युम्नाश्रितया रुषा कर्त्र्या चेदिभूपतिः प्रपेदे प्राप्तः तं विहायेति शेषः । कामिन्यः प्राग्रेव साहसिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्त इति भावः । विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यस्य कोप इत्यर्थः ॥ २४ ॥

अहितानिति । मानी अभिमानवान् स क्रुद्धश्चैद्यः वल्गन्तः प्लवमानाः कलभसमाः कलभप्रमाणाः अत एवानीचा उच्चास्तुरङ्गा यस्यां तया वल्गत्कलभसमानीचतुरङ्गया । चत्वार्यङ्गानि हस्त्यादीनि यस्यास्तया चतुरङ्गया वाहिन्या करणेन अहितानभि शत्रून् प्रति चचाल । कलभसमेत्युपमा यमकेन संसृज्यते ॥ २५ ॥

अथ कलापकेन सेनां वर्णयति । ततस्ततेत्यादि । ततश्चैद्यचलनान्तरं ततानामाकृष्टानां धनुर्मौर्वीणां विस्फारैः स्फाराः प्रभूताः निस्वना येषां तैस्तूर्यैः युगक्षये कल्पान्ते क्षुभ्यन्तमुद्वेलन्तमकूपारं समुद्रमनुकरोतीति तदनुकारिणी सा सेनेत्युत्तरेणान्वयः । उपमा ॥ २६ ॥

स का र ना ना र का स

का य सा द द सा य का ।

र सा ह वा वा ह सा र

ना द वा द द वा द ना ॥ २७ ॥

सर्वतोभद्रः ।

लीलासिकालियकुला यमस्यैव स्वसा स्वयम् ।
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥ २८ ॥

सकारेति पुनः कीदृशी । कारो बधे निश्चये च बले यत्ने रतावपीति विश्वः । सकाराः सयत्नाः सोत्साहाः नाना नानाविधाश्च ये आरा अरीणां समूहाः । भिक्षादिभ्योऽण् । तेषां कासा गतिभेदाः काया विग्रहाश्च तेषां सादं ददतीति साददाः नाशकारकाः सायका यस्यां सा तथोक्ता । रसेन रागेणाहवो यस्याः सा रसाहवा रणरागिणीत्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा हेषादिघोषास्तेषां वादं कलहं ददतीति वाददानि तैः सह कलहायमानानि वादनानि वाद्यानि यस्यां सा वाहसारनादवाददवादना । अत एव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्वतो भ्रमणात्सर्वतोभद्राख्यश्चित्रबन्धः । अत एव दण्डी । तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वत इति । उद्धारस्तु । चतुःषष्टिकोष्ठे चतुरङ्गबन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्वतो वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि २७ ॥

लीलेति । लीलान्यसीनामेव कालियानां कृष्णसर्पविशेषाणां कुलानि यस्यां सा उल्लसद्भिर्लोहवर्मभिरयःकञ्चुकैः श्यामा अत एव यमस्यान्तकस्य सहायतां भ्रातृस्नेहादस्मिन् सेनासंहारे साहाय्यं चिकीर्षुः स्वयं साक्षात् स्वसा तस्यैव भगिनी यमुनैव स्थितेत्युत्प्रेक्षा ॥ २८ ॥

सा से ना ग म ना र म्भे
र से ना सी द ना र ता ।
ता र ना द ज ना म त्त
धी र ना ग म ना म या ॥ २९ ॥

मुरजबन्धः । कालापकम् ।

धूतधौतासयः प्रष्ठाः प्रातिष्ठन्त क्षमाभृताम् ।

सा सेनेति । तारोऽत्युच्चैर्नादः सिंहनादो येषां ते जना यस्यां सा तारनादजना अनामया अव्यग्रा सा पूर्वोक्ता सेना मत्ताधीरा अद्दृष्टाश्च नागा गजा यस्मिन् कर्मणि तत्तथा गमनारम्भे रसेन रागेण अनारता अविरता आसीत् अविच्छिन्नरणरागाभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु । तिर्यग्रेखा लिखेत्पञ्च नवोर्द्धास्तत्र पङ्क्तयः । अष्टकोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् । तत्राद्यद्वित्रितुर्यासु तुर्यत्रिद्व्याद्यपङ्क्तिषु । आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः । दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि । चतुर्थपङ्क्तिप्रायस्यात्प्रथमावधिवीक्षणात् । द्वितीयादावाद्यद्वित्र्योर्द्वितुर्ये त्रितुरीयके । तुर्यत्रिद्योस्तृतीयाद्ये द्रष्टव्योऽङ्घ्रिर्द्वितीयकः । तृतीयोऽङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः । द्वित्रिपञ्चमयोस्तुर्ये षष्ठसप्तमयोः क्रमात् । तृतीयान्त्ये च लक्ष्योऽयमथान्यः क्रम उच्यते । आद्यान्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः । कृत्वैकं द्वितीयं द्वे च द्वयमेकमिति क्रमात् । यद्वा द्वितीयमेकं च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेव विन्यासद्वितीयं भवेत् । यद्वा प्रथमतुर्याङ्घ्री स्वपङ्क्त्योस्तदनुक्रमात् । द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये । व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये । व्युत्क्रमेण द्वितीयस्या तृतीयस्यां क्रमेण च । द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये । विन्यासभेदास्त्वन्येऽपि सन्त्येव बहवोऽत्र हि । विस्तारात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः ॥ २९ ॥

धूतेति । क्षमाभृतां राज्ञां प्रतिष्ठन्त इति प्रष्ठाः अग्रेसराः ।

शौर्यानुरागनिकषः सा हि वेलानुजीविनाम् ॥ २० ॥
दिवमिच्छन् युधा गन्तुं कोमलामलसम्पदम् ।
दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ॥ २१ ॥
कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ २२ ॥
वाहनाजनि मानासे साराजावनमा ततः ।

सुपि स्थ इति कप्रत्ययः प्रष्ठोऽग्रगामिनीति षत्वे ष्टुत्वम् । धूताः कम्पिताः शौता उत्तेजिताः असयो यैस्ते धूतशौतासयः सन्तः प्रातिष्ठन्त प्रस्थिताः । समवप्रविभ्यः स्थ इति तङ् । सा वेला अनुजीविनां शस्त्रजीविनां शौर्यानुरागयोः पुरुषकारस्वामिभक्त्योर्निकषः परीक्षास्थानं हि अतोऽत्र स्थातव्यम् अन्यथा भीरुत्वं स्वामिद्रोहश्च स्यातामिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २० ॥

दिवमिति । युधा युद्धेन कोमलाश्चारवः अमलाः शीतोष्णादिदोषरहिताः सम्पदो यस्यास्तां कोमलामलसम्पदं दिवं स्वर्गं गन्तुमिच्छन् कः पुमान् अमलां शौताम् असिलतां दधानः अलसं पदं दधौ सर्वोऽपि निःशङ्कमाक्रमत इत्यर्थः । अत्र स्वर्गेच्छाविशेषणगत्या निःशङ्कप्रस्थानहेतुत्वात् काव्यलिङ्गं तद्यमकेन संसृज्यते ॥ २१ ॥

कृतेति । सेनायां समवेताः सैनिकाः सैन्याः । सेनायाः पाक्षिकष्ठक् । बाहुभिः परिघैरिव बाहुपरिघैः बाहुदण्डैः विपक्षं शत्रुं जङ्घाभिः प्रसृताभिः । जङ्घा तु प्रसृतेत्यमरः । इतरेतरमन्योऽन्यं सयूथीयमेव कृत उरुर्महान् जवोश्च वेगो यस्मिन् कर्मणि तद्यथा तथा युगपद्व्यजिगीषन्त विजेतुमैच्छन् अहमहमिकया योद्धुमधावन्नित्यर्थः । विपूर्वाज्जयतेः सन्नन्तात् लङि पूर्ववत्सन इत्यात्मनेपदम् । अत्र विपक्षसयूथ्ययोर्बाहुजङ्घयोश्च प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥

वाहनेति । ततोऽनन्तरं मानमभिमानम् अस्यति क्षिपतीति

मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥
निध्वनज्जवहारीभा भेजे रागरसात्तमः ।
ततमानवजारासा सेना मानिजनाहवा ॥ ३४ ॥
श्लोकप्रतिलोमयमकम् ।
अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।
चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥

तस्मिन् मानासे पराहङ्कारहारिणि । कर्मण्यण् । मत्ताः सारगाः बलभाजश्च राजेभा नृपगजा यस्मिन् मत्तसारगराजेभे साराजौ श्रेष्ठयुद्धे । आजेः पुंलिङ्गता ज्ञेया । भारी भारवान् पूर्णं हुङ्कावतामुत्साहवतां जनानां ध्वनिर्यस्मिन् तत् भारीहावज्जनध्वनि यथा तथा न नमतीत्यनमा अभङ्गुरा । पचाद्यजन्तेन नञ्समासः । वाहना निर्वाहयितृत्वम् । ण्यासश्रन्थो युच् । अजनि जाता सैनिकानामित्यर्थात् सिद्धम् । जनेः कर्त्तरि लुङि दीपजनेत्यादिना चिण् ॥३३॥

एतत्प्रातिलोम्येन श्लोकान्तरमाह । निध्वनदिति । निध्वनन्तो बृंहन्तो जवा जवनाः हारिणो मनोहरास्तेभा यस्यां सा निध्वनज्जवहारीभा । ततो विस्तृतो मानवजो मनुष्यजातः आरासः कलकलो यस्यां सा तत मानवजारासा मानिनां मानवतां जनानामाहवो यस्यां सा मानिजनाहवा सेना रज्यतेऽनेनेति रागः क्रोधः स एव रसस्तस्मात् रागरसात् तमो मोहं भेजे क्रोधान्धाजनीत्यर्थः । अत्र प्रातिलोम्येन पूर्वश्लोकावृत्तेः श्लोकप्रतिलोमयमकम् । तदुक्तं दण्डिना । आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा । यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतमिति ॥ ३४ ॥

अभग्नेति । अभग्ना अभङ्गुरा वृत्ता वर्त्तुलाश्चास्च यास्ताम् अभग्नवृत्ताः । विशेषणसमासः । अन्यत्राचलितचरित्राः । बहुव्रीहिः । मुष्टिग्राह्यं मुष्टिधार्य्यं मध्यं यासां ताः धनुर्लताः अन्यत्र मुष्टिमेयमध्याः यौवनेनोद्धतैर्भटैः प्रसभात् बलादाकृष्टाः सत्यः एकत्र गुणे-

करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सह स्वनः।
करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ॥ २६॥
धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः।
सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे रसः॥ २७॥
न तस्थौ भर्तृतः प्राप्तमानसम्प्रतिपत्तिषु।

अन्यत्र कचेषु चेति भावः। उच्चैस्तरां चकन्दुष्टङ्कारध्वनिं चक्रुर्धनु-र्लता अन्यत्र चुक्रुशुश्च। अत्र प्रस्तुतधनुर्लताविशेषणादप्रस्तुतधूर्त्ताक्र-न्दितपतिव्रताप्रतीतेः समासोक्तिः तया च आकर्षणस्य विशेषणगत्या क्रन्दनहेतुत्वात् काव्यलिङ्गमङ्गाङ्गिभावेन सङ्कीर्यते॥ २५॥

करेणुरिति। अनेको बहुः करेणुः करेणवः प्रस्थितः। जाता-वेकवचनम्। असङ्ख्याताः करिणो योद्धुं चलुरित्यर्थः। करेणुरिभ्यां स्त्री नेभे इत्यमरः। सहस्वनो घण्टाः करिकण्ठस्था रेणुर्दध्वनुः। अत एक इल्मध्येऽनादेशादेर्लिटीत्येत्वाभ्यासलोपौ। करे पुष्करे अणुरल्पः शीकरोऽम्बुकणो जज्ञे। जातावेकवचनम्। करेष्वणवः शीकरा जाता इत्यर्थः। जनेः कर्त्तरि लिट्। तेनाणुना शीकरेण रेणुः रजः शमं ययौ। एतेन करिणां बाहुल्यं व्यज्यते॥ २६॥

धृतेति। धृतः प्रत्यग्रः शृङ्गाररस एव रागो यैस्तैरपीति वि-रोधः। रौद्रशृङ्गारयोर्विरोधित्वात् धृतसिन्दूररञ्जनैरित्यविरोधः। अत एव विरोधाभासोऽलङ्कारः। शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेऽपि चेति विश्वः। सरोषसम्भ्रमैः द्विपैः रणे रौद्ररस एव क्रोधरस एव बभ्रे धृतः। कर्मणि लिट्॥ २७॥

नेति। भर्त्तृतः स्वामिभ्यः प्राप्ते मानसम्प्रतिपत्ती पूजासौमनस्ये यैस्तेषु प्राप्तमानसम्प्रतिपत्तिषु रणे एकसर्गेषु नियतोत्साहेषु नियत-निश्चयेषु वा। सर्गास्तु सज्जनाध्यायस्वभावोत्साहनिश्चया इति वैज-यन्ती। पत्तिषु पदातिषु मानसम्प्रतिपत्तीनां मानसेष्वित्यर्थः। कर्-

रणैकसर्गेषु भयं मानसं प्रति पत्तिषु ॥ ३८ ॥
बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः ।
गोधाश्लिष्टभुजाशाखैरभूद्भीमा रणाटवी ॥ ३९ ॥
नानाजाववजानाना सा जनौघघनौजसा ।
परानिहाऽह्वानिराप तान्वियाततयाऽन्विता ॥ ४० ॥
प्रतिलोमानुलोमपादः ।

प्रवचनीययुक्ते द्वितीया । भयं न तस्थौ पूर्वोपकारस्मारिणो रणाय निर्भीकाः प्रातिष्ठन्तेत्यर्थः । अन्यथा यस्तु भीतिपरावृत्तः संग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते । यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्ता तत्सर्वमादत्ते परावृत्तहतस्य त्विति निषेधस्मरणादिति भावः । अत्र मानसप्रतिपत्त्योर्विशेषण-गत्या भयानवस्थानहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥ ३८ ॥

बाणेति । रणमेवाटवी रणाटवी बाणैरेवाहिभिः पूर्णा तूणीरा निषङ्गा एव कोटराः कुहरा येषान्तैः गोधास्तलानि निहाकाश्च । गोधा तले निहाकायामिति विश्वः । तलं ज्याघातवारणम् । ततो गोधा एव गोधा इति श्लिष्टरूपकम् । ताभिराश्लिष्टाः भुजा एव शाखा येषां तैर्धन्विभिर्धानुष्कैरेव शाखिभिर्वृक्षैर्भीमा भयङ्करा अभूत् । समस्तवस्तुवर्णनात् सावयवरूपकम् ॥ ३९ ॥

नानेति । इहास्यां नानाविधायाम् आजौ चित्रयुद्धे ओजसा तेजसा अवजानाना अवज्ञां कुर्वती । अकर्मकाच्चेत्यात्मनेपदम् । जनौ-घैर्घना सान्द्रा जनौघघना बहुजनेत्यर्थः । अह्वानिरभया वियाततया वैयात्येन धार्ष्ट्येनान्विता धृष्टेत्यर्थः । धृष्टो धृष्णुर्वियातश्चेत्यमरः । सा चैद्यसेना तान् परान् शत्रून् आप प्राप । अत्र प्रतिपादं पादार्द्धस्या-वृत्तेरर्द्धपादप्रतिलोमयमकम् ॥ ४० ॥

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ ४१ ॥
संहत्या सात्वतांश्चैद्यम्प्रति भास्वरसेनया ।
ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥
विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम् ॥ ४३ ॥
वारणागगभीरा सा साराऽभोगगणारवा ।

विषमसिति । तद्बलं चैद्यसेना सर्वतोभद्रचक्रगोमूत्रिकादिभिः आदिग्रहणान्मुरजबन्धादिसंग्रहः श्लोकैर्महाकाव्यं शिशुपालवधादिकमिव व्यूहैः सर्वतोभद्रादिभिरेव बलविन्यासैः । व्यूहस्तु बलविन्यास इत्यमरः । विषमं दुरवग्रहमभवत् । नगनगरादिवर्णनयुक्तलक्षणं महाकाव्यम् ॥ ४१ ॥

संहत्येति । भास्वरा तेजिष्ठा सेना यस्यास्तया भास्वरसेनया सात्वतां यदूनां संहत्या सङ्घेन चैद्यं प्रति ववले प्रचेले । बलचलने इति धातोर्भावे लिट् न शसददवादीति वकारादित्वादेत्वाभ्यासलोपयोः प्रतिषेधः । या यदूनां संहतिः स्वरसेन स्वभावेन योद्धुमुत्पन्नप्रतिभा सञ्जातप्रतिभा या स्वयं रणकण्डूला सा पराहूता कथं निवर्त्तेत इति भावः ॥ ४२ ॥

अथ यदुसेनायाः प्रतिबलाभियोगं युग्मेनाह । विस्तीर्णमित्यादि । आयामवती द्राघीयसी लोललोकनिरन्तरा चलज्जनसङ्कुला सा सेनेत्युत्तरश्लोकेनान्वयः । सा यदुसेना विस्तीर्णं द्विषतां बलं नरेन्द्रमार्गं राजपथं रथ्या विशिखेव पपात सङ्गगाम । उपमानेऽपि विशेषणं योज्यम् ॥ ४३ ॥

वारणेति । कीदृशी सेना वारणैरवागैरचलैर्गभीरा दुरवगाहा वारणागगभीरा सा साराणां श्रेष्ठानां न भियं गच्छतीत्यभीगानां निर्भीकाणां गणानां जनसङ्घानामारवो यस्यां सा साराऽभोगगणा-

कारितारिवधा सेना नासेधा वारितारिका ॥ ४४ ॥

युग्मम् ।

अधिनागमजविनो विकचत्पिच्छचारवः ।

पेतुर्बर्हिणदेशीयाः शङ्कवः प्राणहारिणः ॥ ४५ ॥

प्र वृ त्ते वि क स द्वा नं सा ध ने प्य वि षा दि भिः ।

य वृ षे वि क स द्वा नं यु ध मा प्य वि षा णि भिः ॥ ४६ ॥

गोमूत्रिकाबन्धः ।

एवा कारितारिवधा क्षतशत्रुवधा । रामो राज्यमकारयदितिवदत्र स्वार्थे णिच् । नास्त्यासेधः प्रतिषेधो यस्यां सा नासेधा नञर्थेन नशब्देन बहुव्रीहिः । अनासेधा वा वारितारिका दैशितशत्रुका अनेनाहं योद्धव्य इति स्वयं वृतप्रतिभटेत्यर्थः । शैषिकः कप्प्रत्ययः । सा सेना पपातेति पूर्वेणान्वयः । अत्र प्रातिलोम्येन अर्द्धावृत्तेः अर्द्धप्रतिलोमयमकमेतत् लक्षणन्तूक्तं निध्वनदित्यादिश्लोकप्रतिलोमयमके । ४४ ॥

अधीति । प्रजवन्तीति प्रजविनोऽतिजवनाः । प्रजोरिनिरिति इनिप्रत्ययः । विकचद्भिः पिच्छैः कलापैश्चारवः । अत एव ईषदसमाप्तबर्हिणदेशीया मयूरकल्पाः । ईषदसमाप्ताविल्यादिना देशीयर्प्रत्ययः । प्राणहारिणः शङ्कवः शल्यायुधानि । वा पुंसि शल्यं शङ्कुर्ना इत्यमरः । नागेष्वधिनागम् । विभक्त्यर्थेऽव्ययीभावः । गजेषु सर्पेषु च निपेतुः सर्पेषु बर्हिणा इवेत्यर्थः । अत एवोपमालङ्कारः । अहो याहिगजा नागा इति वैजयन्ती ॥ ४५ ॥

प्रवृत्तेति । विकसन् जृम्भमाणो ध्वानो ध्वनिर्यस्मिन् तद्यथा तथा साधने सम्प्रहारे प्रवृत्तेऽप्यविषादिभिर्विषादरहितैर्विषाणिभिर्दन्तिभिर्युधम् आप्य प्राप्य विकसज्जभूतं दानं मदो वदृषे । युद्धारम्भे धनदानञ्च ध्वन्यते सत्वसम्पन्नत्वात् साधनेऽपि अविषादत्वाविरोधाद्विरोधाभासः । गोमूत्रिकाचित्रबन्धोऽयम् । वर्णानामेकरूपत्वं

पुरःप्रयुक्तैर्युद्धान्तश्चलितैर्लब्धशुद्धिभिः।
आलापैरिव गान्धर्वमदीप्यत पदातिभिः॥ ४७॥
केनचित् स्वासिनान्येषां मण्डलाग्रानऽवद्यता।
प्रापे कीर्त्तिप्लुतमहीमण्डलाग्राऽनवद्यता॥ ४८॥
विहन्तुं विद्विषस्तीक्ष्णः सममेव सुसंहतेः।
परिवारात् पृथक् चक्रे खड्गश्चात्मा च केनचित्॥ ४९॥

यद्येकान्तरमर्द्धयोः। गोमूत्रिकेति तल्लक्षणं कुर्वन्तद्विदो विदुरिति लक्षणात्। षोड़शकोष्ठद्वये पङ्क्तिद्वयेऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः॥ ४६॥

पुर इति। तद्युद्धं पुरःप्रयुक्तैः गजादिभ्यः प्राक्प्रवर्त्तितैः। अन्यत्र गानात् पूर्वमुच्चारितैः चलितैः मण्डलचारिभिः अन्यत्र सञ्चारावर्त्तितैरित्यर्थः लब्धशुद्धिभिः कातर्यकपटादिदोषरहितैरित्यर्थः अन्यत्राष्टत्तैरागानुगुणैरित्यर्थः पदातिभिः पत्तिभिः करणैः गान्धर्वं गानमालापैरालापिभिरिवाक्षरविशेषैरिवादीप्यताशोभत॥ ४७॥

केनचिदिति। स्वासिना स्वखड्गेन अन्येषां मण्डलाग्रान् अवद्यता खण्डयता। द्यतेर्लटः शत्रादेशः। केनचिद्वीरेण कीर्त्तिप्लुतं यशोव्याप्तं महीमण्डलाग्रं भूपृष्ठं यस्याः सा कीर्त्तिप्लुतमहीमण्डलाग्रा अनवद्यता अनिन्द्यता प्रापे प्राप्ता॥ ४८॥

विहन्तुमिति। केनचिद्वीरेण विद्विषो विहन्तुन्तीक्ष्णो निशितः परिच्छेत्ता च खड्गः सुसंहतेः सुघटितात् सुष्ठु सङ्घीभूताच्च परिवारात् कोशात् परिजनाच्च। परिवारः परिजने खड्गकोशे परिच्छेद इति विश्वः। सममेव पृथक् चक्रे उद्धृतः। आत्मा च पृथक् चक्रे विभक्तः। खड्गस्तुत्रस्य स्वसैन्याद्विर्गत्वारिमध्ये पपातेत्यर्थः। अत्र खड्गात्मनोः प्रकृतयोः समानक्रियायोगात् केवलप्रकृतास्पदा तुल्ययोगिता॥ ४९॥

अन्येन विदधेऽरीणामतिमात्रा विलासिना ।
उद्गूर्णेन चमूस्तूर्णमतिमात्राविलाऽसिना ॥ ५० ॥
सहस्रपूरणः कश्चिल्लूनमूर्द्धाऽसिना द्विषः ।
तथोर्द्ध्व एव काबन्धीमभजन्नर्त्तनक्रियाम् ॥ ५१ ॥
शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ।
ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥

अन्येनेति । अन्येन वीरेण विलासिना विलसनशीलेन उद्गूर्णेन उद्यतेन असिना खड्गेन मात्रं मानमतिक्रान्तातिमात्रा अपरिमिता अरीणां चमूः सेना तूर्णं शीघ्रम् अतिमात्रमत्यन्तमाविला कलुषा अतिमात्राविला अत्याविला विदधे कृता ॥ ५० ॥

सहस्रेति । पृणातीति पूरणः । पॄ पालनपूरणयोः कर्त्तरि ल्युट् । सहस्राणां पूरणः पालयिता पूरयिता वा सहस्रपूरणः सहस्ररक्षी सहस्रहन्ता वा कश्चिद्भटः कबन्धस्तु सहस्रपूरणः सहस्रसङ्ख्यापूरकः सहस्राद्देकः कबन्धो नृत्यतीति प्रसिद्धिः । असिना खासिना द्विषो लूनमूर्द्धा लूनशत्रुमूर्द्धा । सापेक्षत्वेऽपि गमकत्वात्समासः । कबन्धस्तु द्विषोऽसिना लूनमूर्द्धा तथा कबन्धवदेवोर्द्ध्व एव तिष्ठते । कबन्धस्येमां काबन्धीं नर्त्तनक्रियामभजत् । विजयहर्षात् स्वयमपि कबन्धवन्ननर्त्तेत्यर्थः । अत एव सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धाख्यो निदर्शनाभेदः । कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरमित्यमरः ॥५१॥

शस्त्रेति । शस्त्रव्रणमयानि तद्रूपाणि । स्वार्थे मयट् । तैरेव श्रीमद्भिः शोभावद्भिरलङ्करणैरलङ्कारैर्भूषितोऽलङ्कृतः शस्त्रव्रणालङ्कृत इत्यर्थः । अन्यः कश्चित् अविद्यमाना लङ्का यस्याः सा अलङ्केति बहुव्रीहिः । अत एव स्त्रियाः पुंवदित्यादिना पुंवद्भावः । सा रणभूश्च तस्यामुषितः स्थितोऽलङ्करणभूषितः । वसेर्निवासार्थात् कर्त्तरि क्तः, वचिस्वपीत्यादिना सम्प्रसारणम् । रावणवद् ददृशे दृष्टः ।

द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
सिक्तस्रास्त्रैरुभयथा बभूवारुणविग्रहः ॥ ५३ ॥
भीमतामपरोऽम्भोधिसमेऽधित महाहवे ।
दाक्षे कोपः शिवस्येव समेधितमहा हवे ॥ ५४ ॥
दन्तैश्चिच्छिदिरे कोपात्प्रतिपक्षगजा इव ।
परनिस्त्रिंशनिर्लूनकरवालाः पदातयः ॥ ५५ ॥

सर्वाङ्गीनव्रणभूषणत्वेन राजत एवायं लक्ष्मासम्बन्धविरहात्तु व्यतिरेक इत्यर्थः । उपमाव्यतिरेकयमकानां सङ्करः ॥ ५२ ॥

द्विषदिति । द्विषद्विशसनम् । निर्शपणं विशसनं मरणं प्रतिघातनमित्यमरः । तस्मिंश्छेदेनारिशस्त्रप्रहारेण निरस्तमूरुयुगं यस्य सः अत एवास्त्रैरसृग्भिश्च सिक्तोऽपरो वीरः उभयथा उभाभ्यां प्रकाराभ्याम् । प्रकारे गुणवचनस्येति थाल् । अरुणस्यानूरोरिव अरुणोऽरुणवर्णश्च विग्रहो यस्य सोऽरुणविग्रहो बभूव । अरुणोऽर्कसारथ्योररुणो लोहितेऽन्यवदिति विश्वः । अतोरुच्छेदास्रसिक्तयोर्विशेषणगत्योभयथारुणविग्रहभावहेतुत्वात् काव्यलिङ्गमुपमालेषाभ्यां सङ्कीर्यते ॥ ५३ ॥

भीमेति । अम्भोधिसमे सागरसदृशे महान् आहवस्तस्मिन् महाहवे समेधितमहाः संवर्द्धिततेजाः अपरो वीरः दक्षप्रजापतेरयं दाक्षस्तस्मिन्दाक्षे हवे यज्ञे । हवो यज्ञे तथाह्वान इति विश्वः । समेधितमहाः सन्दीपिततेजाः शिवस्य कोप इव वीरभद्र इवेत्यर्थः । भीमतां भयङ्करताम् । अधित धृतवान् । बिभ्यत्यस्मादिति भीमः । भियः षुग्वेत्यौणादिके मप्रत्यये भीमो भीष्मश्च । भीमादयोऽपादान इति निपातनादपादानार्थता । उपमायमकयोः संसृष्टिः ॥ ५४ ॥

दन्तैरिति । परेषां निस्त्रिंशैः खड्गैर्निर्लूनकरवालाः छिन्नखड्गाः पादाभ्यामतन्तीति पदातयः पत्तयः । अज्यतिभ्यां पादे चेत्यौणादिक इण् पादस्य पदोऽज्यतिगोपहतेष्विति पदादेशः ।

रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।
न तत्र गतभीः कश्चिद्विपपाट विकासिनि ॥ ५६ ॥
यावन्न सत्कृतैर्भर्त्तुः स्नेहस्यानृण्यमिच्छुभिः ।
अमर्षादितरैस्तावत्तत्यजे युधि जीवितम् ॥ ५७ ॥
अयशोभिदुरा लोके कोपधामरणादृते ।
अयशोभिदुरालोके कोपधा मरणादृते ॥ ५८ ॥

समुद्गयमकम् ।

कोपात् गजा इव प्रतिपक्षं शत्रुं दन्तैर्दशनैर्विषाणैश्च चिच्छिदिरे चिच्छिदुः ॥ ५५ ॥

रण इति । रभसो वेगहर्षयोरिति विश्वः । रभसेन वेगेन निर्भिन्नद्विपाः पाटितगजाः पाटविकानां पाटवयतास् अस्मयो यस्मिन् । पाटवशब्दात्मत्वर्थीयष्ठक्प्रत्ययः । विकासिनि प्रहृष्टे तत्र तस्मिन् रणे गतभीर्निर्भीकः । अत एव कश्चित् कोऽपि न विपपाट न पाटयामास न पलायत । अत्र गतभीकत्वस्य विशेषणगत्या अपलायनहेतुत्वात् काव्यलिङ्गम् । द्विपदलनेऽपि रणे निर्भीक इति विरोधस्य यमकेन संसृज्यते ॥ ५६ ॥

यावदिति । सत्कृतैः स्वस्वामिना पूर्वसम्मानितैः अत एव भर्तुः स्नेहस्य स्वामिप्रेम्णः आनृण्यमनृणत्वमिच्छुभिर्योधैरिति शेषः । युधि जीवितं यावन्न तत्यजे त्यक्तं तावदितरैरसत्कृतैरमर्षादसत्कारक्रोधाज्जीवितं तत्यजे । अथ वास्मान् पश्येति स्वामिनमुपालभ्य स्वयमेव प्राक् प्राणान् प्रजहुरित्यर्थः । सत्कारादिविशेषणोत्थकाव्यलिङ्गं सुगमम् ॥ ५७ ॥

अथैवंविधानां मरणस्यैव कर्त्तव्यतामुपपादयति । अयश इति । अयः शुभावहो विधिरिति अयशोभी भाग्यवान् स चासौ दुरालोकस्तेजस्वित्वाद् दुर्दर्शश्चेति विशेषणसमासः । तस्मिन् अयशोभिदुरालोके कोपधाम कोपाश्रयः कुपित इत्यर्थः अथाप्यकोपे भीरुत्वापातात् ।

स्खलन्ती न क्वचित् तैक्ष्ण्यादभ्यग्रफलशालिनी ।
अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥ ५९ ॥
आपदि व्यापृतनयास्तथा युयुधिरे नृपाः ।
आप दिव्या पृतनया विस्मयञ्जनता यथा ॥ ६० ॥

अत एव रणमादृतः रणार्थीत्यर्थः। कर्त्तरि क्तः। कोपधाम चासौ रणादृतश्च तस्मिन् कोपधामरणादृते लोके एवंविधे वीरलोके। अयशोभिदुरा अस्यनादरनिमित्तापकीर्त्तिनिवर्त्तिका। विदिभिदिच्छिदेः कुरच्। उपधा उपायो मरणादृते प्राणत्यागं विनेत्यर्थः। का न कापीत्यर्थः। अन्यारादितरर्त्ते इति पञ्चमी। अत्रायशोभित्वादीनां लोकविशेषणद्वारा तद्वृत्तिनासुपजीविनामवसरे जीवत्यागहेतुत्वात् काव्यलिङ्गं यमकेन सङ्कीर्य्यते। समुद्गयमकभेदोऽयम्। अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मता इति लक्षणात् ॥ ५८ ॥

स्खलन्तीति। शक्तिः प्रहरणं येषां तैः शाक्तीकैः। शाक्तीकः शक्तिहेतिकः इत्यमरः। शक्तियष्ट्योरीकगिति प्रहरणार्थे ईकक् प्रत्ययः। तैक्ष्ण्यात् नैशित्यात् क्वचिदपि न स्खलन्ती प्रतिहतिं न प्राप्नुवती अभ्यग्रं समग्रं यत् फलं शल्यं तेन शालते। अन्यत्र अभ्यर्णेनासन्नेन फलेन श्रेयसा शालत इति अभ्यग्रफलशालिनी। लोहजा अयोमयी शक्तिरायुधविशेषः अमोचि शत्रुषु मुक्ता। शरीरजा शक्तिः सामर्थ्याख्या तु नामोचि। अतिव्यायामेऽप्यक्षीणशक्तिका एवायुध्यन्तेत्यर्थः। अत्र द्वयोरपि प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ५९ ॥

आपदीति। नृपाः राजानः आपदि व्यसनेऽपि व्यापृतनयाः प्रवृत्तनीतिका एव सन्तः न तु स्वापदृष्टयेति भावः। पृतनया सेनया साधनेन। वाक्यान्तरस्यस्यापि पृतनाशब्दस्यात्रान्वयः चित्रे सोढव्यः। तथा तेन प्रकारेण युयुधिरे सम्प्रजह्रुः। यथा दिव्या जनता अन्तरिक्षवर्त्ति सिद्धविद्याधरसङ्घो विस्मयमाप। अमानुषं युद्धं चक्रुरित्यर्थः। अयञ्च पादाभ्यासयमकभेदः ॥ ६० ॥

खगुणैराफलप्राप्तेराकृष्य गणिका इव।
कार्मुकाणिव नालीकांस्त्रिणताः सहसामुचन्॥ ६१॥
वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः।
वाजिनश्च शरामध्यमविशन् द्रुतवाजिनः॥ ६२॥
पुरस्कृत्य फलम्प्राप्तैः सत्पक्षाश्रयशालिभिः।
कृतपुङ्खतया लेभे लक्षमप्याशु मार्गणैः॥ ६३॥

खगुणैरिति। त्रिषु स्थानेषु मध्येषु नताः त्रिणताः शार्ङ्गिणः। पूर्वपदात्संज्ञायामिति णत्वम्। गणिका वेश्या इव ता अपि त्रिणता· मध्ये भ्रुवोश्च नतत्वात्। नालीकान् इषुविशेषान्। नालीकः शरश· ल्ययोरिति विश्वः। कार्मुकाणिव। खगुणैर्ज्याभिः रूपलावण्यादि· भिश्च। गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती। आफलप्राप्तेराशल्यस्पर्शाद्धनलाभाच्च आकृष्य कर्णान्तिकं नीत्वा वशी- कृत्य च सहसा अमुचन् अत्याक्षुः। मुचेर्लुङि पुषादित्वात् च्लेरङा· देशः। अनेकैवोपमा॥ ६१॥

वाजिन इति। द्रुतं वजन्तीति द्रुतवाजिनः शीघ्रगामिनः। वज गताविति धातोर्णिनिः। वाजिनोऽश्वाः। वाजिनः पक्षवन्तः शराश्च पक्षो वाजस्त्रिषूत्तर इत्यमरः। समारब्धा नवा अपूर्वा आजि· र्युद्धं येन तस्य समारब्धनवाजिनः शत्रुसैन्यस्य मध्यमविशन्। अत्र वाजिनां शराणाञ्च प्रवेशाख्यतुल्ययोगिताभेदो यमकेन संसृज्यते ६२

पुरस्कृत्येति। फलं शल्यं पुरस्कृत्य पुरोधाय। अन्यत्र फलं लाभं पुरस्कृत्य सम्भाव्येत्यर्थः। प्राप्तैरागतैः सत्पक्षाश्रयेण साधुकङ्कादि· पत्रपन्यनेन। अन्यत्र साधुसहायावलम्बनेन शालन्ते इति तथोक्तैः मार्गणैः सायकैरर्थिभिश्च। मार्गणौ सायकार्थिनावित्यमरः। कृत- पुङ्खतया सुबद्धकर्त्तरीकतया। सुखस्य कर्त्तरी पुङ्ख इति कोषः। लक्ष्यं शरव्यम् अन्यत्र लक्षसङ्ख्यमपि धनं लेभे शतादिकं किन्तु वक्तव्यमिति

रक्तस्रुतिच्छलपासूनसमरागामिषु व्यधात् ।
कश्चित् पुरः सपत्नेषु समरागामिषु व्यधात् ॥ ६४ ॥
रयेण रणकाम्यन्तौ दूरादुपगताविभौ ।
गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ ६५ ॥
भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ६६ ॥

द्व्यक्षरः ।

भावः । लक्ष्यं शरव्ये संख्यायामिति विश्वः । अत्राभिधायाः प्रकृतार्थनियन्त्रणादर्थान्तरप्रतीतेर्ध्वनिरेव ॥ ६३ ॥

रक्तेति । कश्चिद्वीरः पुरोऽग्रे समरागामिषु समरमागतेषु सपत्नेषु इषुव्यधात् बाणप्रहारात् । व्यधजपोरनुपसर्गे इत्यप्प्रत्ययः । जपासूनसमरागां रक्तस्रुतिं रक्तस्रावं व्यधात् विहितवान् । दधातेर्लुङि गातिस्थेत्यादिना सिचो लुक् । उपमायमकयोः संसृष्टिः ॥ ६४ ॥

रयेणेति । रणमात्मन इच्छन्तौ रणकाम्यन्तौ । काम्यच्चेति रणशब्दात् काम्यच्प्रत्यये सनाद्यन्तधातुत्वाल्लटि शत्रादेशः । रयेण दूरादुपगतौ । इभावन्तरा इभयोर्मध्ये । अन्तरा अन्तरेण युक्ते इति द्वितीया । गतासुर्मृतो दन्ती दैवान्मध्यवर्त्ती हस्तिकुणप इत्यर्थः । वरण्डकोऽन्तरावेदिरिवाभवत् । वरण्डकोऽन्तरावेदौ सन्दोहमुखरागयोरिति विश्वः । अभ्यासकाले काञ्चन वेदिमन्तर्धाय दन्तिनौ योधयत इति प्रसिद्धम् । उपमा ॥ ६५ ॥

भूरिभिरिति । भूरिभिः भूयोभिः भारिभिः पताकाभिस्तरणादिभारवद्भिः । मत्वर्थीय इनिप्रत्ययः । भियं रातीति भीरैः भयदैः । रा दाने आतोऽनुपसर्गे कः । भूभारैः महाकायत्वाद् भुवो भारायमाणैः । भेर्य्य इव रेभन्ते ध्वनन्तीति भेरीरेभिभिः । रेभृ शब्दे ताच्छील्ये णिनिः । अभ्राभैर्मेघमेचकैरिति चोपमाद्वयम् । अभीरुभिर्निर्भीकैः इभैर्गजैः । इभाः प्रतिगजाः तादृशा इव अभिरेभिरे

निशितासिलतालूनैस्तथा हस्तैर्नं हस्तिनः ।
युध्यमाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥ ६७ ॥
निपीडनादिव मिथोदानतोयमनारतम् ।
वपुषामदयापातादिभानामभितोऽगलत् ॥ ६८ ॥

असंयोगः ।

रथाङ्गयं सर इव प्लावितम्मदवारिभिः ।
गजः पृथुकराकृष्टशतपत्त्रमलोडयत् ॥ ६९ ॥
शरक्षते गजे भृङ्गैः सविषादिविषादिनि ।

अभियुक्ताः । उपमानुप्रासयोः सङ्करः । द्यक्षरानुप्रासः ॥ ६६ ॥

निशितेति । युध्यमानाः सम्प्रहरन्तः हस्ता येषां सन्तीति हस्तिनः । हस्ताज्जाताविती निप्रत्ययः । यथा भग्नैर्दन्तैः विषाणैः विहस्ततां हस्तहीनत्वमितिकर्त्तव्यतामूढत्वञ्चापुः । विहस्तव्याकुलौ समावित्यमरः । तथा निशिताभिरसिलताभिर्लूनैश्छिन्नैर्हस्तैः शुण्डा-दण्डैर्विहस्ततां नापुः हस्तेभ्योऽपि दन्तानां प्रहारसाधनत्वादिति भावः । अत्र हस्तस्याच्छेदे वैहस्त्यं न हस्तच्छेदे इति विरोधः प्रतिपत्तिमूढतया समाहित इति विरोधाभासोऽलङ्कारः ॥ ६७ ॥

निपीडनादिति । इभानां वपुषाम् अदयापातान्निर्दयाभियोगा-द्धेतोः मिथोनिपीडनादिव वस्त्रादिनिपीडनादिवेत्युत्प्रेक्षा । अना-रतमश्रान्तं दानतोयमभितोऽगलत् वस्त्रवत् निर्दयापातेऽपि मदाति-रेक इति गजानामुत्साहातिशयोक्तिः । अत्र संयोगाभावादसंयोगश्च-त्वभेदः । हलोऽनन्तराः संयोगः ॥ ६८ ॥

रथेति । गजो मदवारिणा प्लावितमुचितं रथाङ्गयं सर इव पृथुना करेणाकृष्टानि शतपत्राणि बलितवाहनानि अन्यत्र कमल-यानि च यस्मिन् कर्मणि तत्तथा रथाङ्गमलोडयत् उपाक्षोभयत् । श्लेषविशेषणेयमुपमा ॥ ६९ ॥

शरक्षते इति । गजे शरेण क्षते प्रहृते अत एव विषादिना

रुतव्याजेन रुदितन्तत्रासीदतिसीदति ॥ ७० ॥
अन्तकस्य पृथौ तत्र शयनीय इवाहवे ।
दशनव्यसनादीयुर्मत्कुणत्वम्मतङ्गजाः ॥ ७१ ॥
अ भी क म ति के ने द्धे
भी ता न न्द स्य ना स ने ।
क न त्स का म से ना के
म न्द का स क म स्य ति ॥ ७२ ॥

अर्द्धभ्रमकः ।

विषादवता विषादिना यन्त्रा सह वर्त्तते इति तस्मिन् सविषादि विषादिनि तत्र रणे अतिसीदति अतिसन्ने सति रुते सतीत्यर्थः । सदेर्लटः शत्रादेशः । भङ्गैः कर्तृभिः । न लोकेत्यादिना षष्ठी-प्रतिषेधः । रुतव्याजेन रुतच्छलेन रुदितं रोदनमासीत् । खाश्रय-नाशदुःखाद्रोदनं क्रतमिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात्सापह्नवेति सर्वस्वकारः ॥ ७० ॥

अन्तकस्येति । अन्तकस्य मृत्योः सम्बन्धिनि शेतेऽस्मिन्निति शयनीये तल्प इव स्थित इत्यर्थः । कृत्यल्युटो बहुलमित्यधिकरणेऽनी-यर् । पृथौ विशाले तत्राहवे मतङ्गजाः दन्तव्यसनाद्विषाणभङ्गाद्धेतोः मत्कुणत्वमीयुः मत्कुणा इव दृष्टा इत्यर्थः । सुप्तरक्तपायिनः खट्वा-श्रयाः कीटविशेषा मत्कुणाः । कालेऽप्यजातदन्ते च शय्याजन्तौ च मत्कुणः । तस्मादृश्याददन्तौ तथात्वरूपकम् अन्तकस्य शयनीय इत्युत्-प्रेक्षासामेवमिति सङ्करः ॥ ७१ ॥

अथ युग्मेनाह । अभीकेत्यादि । अभीका निर्भीका मतिर्यस्य तेनाभीकमतिकेन निर्भयचित्तेन । शैषिकः कप्प्रत्ययः । इद्धे दीप्ते । भीतानामानन्दस्य नाशने । नशेरण्यन्ताद् कर्त्तरि ल्युट् । कनन्ती दीप्यमाना सकाशा विजयित्वात्पूर्णकामा सेना यत्र तस्मिन् कनत्स-कामसेनाके । पूर्ववत् कप् । मन्दकासकं मन्दोल्लासकम् । पूर्ववदेव कप् ।

दधतोऽपि रणे भीममभीक्ष्णम्भावमासुरम् ।
हताः परैरभिमुखाः सुरभूयमुपाययुः ॥ ७३ ॥

युग्मम् ।

येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः ।
समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥ ७४ ॥

निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।

अस्यति निराकुर्वाणे रण इत्युत्तरेण सम्बन्धः । अत्र सर्वतोभद्रवत्सर्व-पादभ्रमणाभावात्पदार्द्धानामेव भ्रमणादर्द्धभ्रमकम् । उद्धारस्तु सर्वतोभद्रवत् स्यादेव ॥ ७२ ॥

दधत इति । रणे पूर्वोक्तप्रकारे अभीक्ष्णमत्यन्तं भीमं भयङ्करम् आसुरमसुरसम्बन्धिनं भावं पुरुषकारलक्षणम् । भावो लीलाक्रिया-चेष्टाभूत्यभिप्रायजन्तुषु इति वैजयन्ती । असुरत्वञ्च दधतः दधाना अपि परैः शत्रुभिः अभिमुखा एव स्थिताः हताः वीरा इति शेषः अत एव सुराणां भावं सुरभूयं सुरत्वं देवत्वमुपाययुः । स्वर्गं यान्त्य-पराङ्मुखा इति स्मरणादिति भावः । भुवो भावे इति क्यप् । अत्रा-सुरभावेऽपि सुरभूयमुपाययुरिति विरोधस्य भावशब्दस्यार्थान्तरत्वेन परिहाराद्विरोधाभासः ॥ ७३ ॥

येनाङ्गमिति । रुचा सह वर्त्तते यस्तेन सरुचा तेजस्विना येन वीरेण परतोमरैः शत्रुशस्त्रैः व्रणवत्सव्रणमङ्गमूहे ऊढम् । वहेः कर्मणि लिट् सम्प्रसारणम् । खड्गत्सरौ खड्गमुष्टौ चापे च रतः खड्गत्सरुचापरतः खड्गेषु प्रहारेण युद्धं कुर्वन्नित्यर्थः । त्सरुः खड्-गादिमुष्टौ स्यादित्यमरः । स वीरोऽमरैः समत्वं ययौ पौरुषेणेति भावः । उपमायमकयोः संसृष्टिः ॥ ७४ ॥

निपातितेति । निपातिता वीरशय्याङ्गमिताः सुहृदादयो यत्र तत्तथोक्तम् । अभिमुखबन्धोरपि रणे बध्यत्वादिति भावः । अन्यत्र निपातिताः लक्ष्याभावे मद्धसाम्रताय स्वतन्त्रता स्वतस्वरूपेणोच्चा-

पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ ७५॥
अभभवि सिन्ध्वा सन्ध्याभ्रसदृग्रुधिरतोयया ।
हृते योद्धुजन: पांशौ स दृग्रुधि रतो यया ॥ ७६ ॥
विदलत्पुष्कराकीर्णा: पतच्छङ्कुलाकुला: ।
तरत्पत्ररथा नद्य: प्रासर्पन्नक्तवारिजा: ॥ ७७ ॥
असृग्जनोऽस्त्रच्चतिमानवमज्जवसादनम् ।

रिता: सुहृदादिशब्दा यत्र तदित्यर्थ: । अत एव तत्समराजिरं रणाङ्गणम् । पाणिनिना प्रोक्तं पाणिनीयम् अष्टाध्यायीव्याकरणमिव । तेन प्रोक्तमिति छप्रत्यय: । धीरैर्दृष्टैरेवालोकि दृष्टम् । उभयत्रापि धीरैर्दुरवगाहत्वादिति भाव: । शोभनं हृदयं यस्य स सुहृत् । सुहृद्दुर्हृदौ मित्रामित्रयोरिति हृदयशब्दस्य हृद्भावो निपातित: । स्वमस्यास्तीति स्वामी ईश्वर: । स्वामिन्नैश्वर्ये इति मत्वर्थीयनिपात: । पितुर्भ्राता पितृव्य: स्वात्मातुर्भ्राता तु मातुल इत्यमर: । पितृव्यमातुलमातामहपितामहा इति व्यड्डुलजन्तनिपाता: । बिभर्त्तीति भ्राता । नप्तृनेष्ट्रादिसूत्रादौणादिको निपात: ॥ ७५ ॥

अभावीति । सन्ध्याभ्रसदृक् सन्ध्यामेघसदृशं रुधिरमेव तोयं यस्यास्तया सिन्ध्वा रक्तनद्या अभावि भूतम् । भावे लुङि चिण् । यया सिन्ध्वा दृशो रुणद्धीति दृग्रुधि दृष्टिरोधके । रुधे: क्विप् । पांशौ रजसि हृते सति स जनो वीरलोको योद्धुं रत: उत्सुक: अभूदिति शेष: । उपमायमकयो: संसृष्टि: ॥ ७६ ॥

विदलदिति । विदलद्भिर्विदीर्यमाणै: पुष्करै: करिहस्ताग्रै: अन्यत्र विकसद्भि: पद्मैराकीर्णा: व्याप्ता: । पतद्भि: शङ्कुभि: ललाटास्थिसङ्घै: कम्बुसङ्घैश्चाकुला: । तरन्ति प्लवमानानि पत्राणि वाहनानि रथाश्च अन्यत्र पत्ररथा अण्डजा यासु ता: रक्तवारिजा रुधिरतोयजन्या: अन्यत्र रक्तानि वारिजानि यासु ता: नद्य: प्रासर्पन् प्रावहन् । अत्र नदीनां रक्तनदीनां च श्लेष: ॥ ७७ ॥

रक्षःपिशाचं मुमुदे नवमज्जरसादनम् ॥ ७८ ॥
चित्रञ्चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ।
पयोदजालमिव तद्वीराशंसनमाबभौ ॥ ७९ ॥
बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥ ८० ॥
क्षत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
क्षुसलोकाशुभिस्त्यौर्मुसलोलूखलैरिव ॥ ८१ ॥

अस्त्रेति । अस्त्रवर्तिमान् अस्त्रप्रहारवान् जनो वीरजनोऽसृ- ग्यक्तं जवसादनं जवस्य चेष्टावेगस्य सादनं सादकं यथा स्यात्तथा अव- सत् नवयोर्मज्जरसयोर्मेदोरसयोरदनं भक्षकम् । कर्त्तरि ल्युट् । रक्षांसि च पिशाचाश्च रक्षःपिशाचम् । समाहारे द्वन्द्वैकवद्भावः । मुमुदे जहर्ष । अत्र मोदस्य वमनवाक्यार्थहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं तच्च यमकेन संसृज्यते ॥ ७८ ॥

चित्रमिति । अपेतज्यैरपगतमौर्वीकैः । मौर्वी ज्या शिञ्जिनी गुण इत्यमरः । चापैश्चित्रं विचित्रं स्फुरन्ति रक्तान्येव शतह्रदाः शम्पा यस्मिन् तत् । शम्पा शतह्रदा ह्रादिनीत्यमरः । तत्प्रकृतं वीरः आशस्यते अत्रेति वीराशंसनं भयङ्करा युद्धभूमिः । सा वीरा- शंसनं युद्धभूमिर्यातिभयप्रदेत्यमरः । पयोदजालमिवाबभौ ॥ ७९ ॥

बन्धाविति । इह सैन्ये बन्धौ विपन्ने मृते सति अनेकेन नरेण अनेकैर्नरैरित्यर्थः । जात्यैकवचनम् । तदन्तिके तस्य मृतस्य बन्धोरन्तिके अशोचि किञ्च हता दन्तिनो यत्र तस्मिन् हतदन्तिके सैन्ये घण्टाभिर्न रेणे न दध्वने । रणतेर्भावे लिट् । अत्र हतदन्तिके इति विशेषणगत्या घण्टानामरणनहेतुत्वात्पदार्थहेतुकङ्काव्यलिङ्गं यम- केन संसृज्यते ॥ ८० ॥

क्षत्तैरिति । क्षत्तैः छिन्नैः दन्तिनां दन्तैर्गात्रैश्च कीर्णा मही रणभूमिः क्षुसा पिष्टाः [illegible] यैस्तैः क्षत्योर्मुसलोलू-

युद्धमित्थं विधूतान्यमानवानभियोगतः ।
चैद्यः परान् पराजिग्ये मानवानभियोगतः ॥ ८२ ॥
अथ वक्षोमणिच्छायाच्छुरितपीतवाससा ।
स्फुरदिन्द्रधनुर्भिन्नतडितेव तड़ित्वता ॥ ८३ ॥
नीलेनानालनलिननिलीनोल्ललनालिना ।
ललनाल्लालनेनालं लीलालोलेन लालिना ॥ ८४ ॥

द्यक्षरः ।

खलैः कीर्येव रेजे । अयोऽयं मुसलोऽस्त्री स्यादुलूखलमित्यमरः । अत्र मुसलोलूखलैरिति राजदन्तादिपाठेऽपि सर्वकूलाभ्रेत्यादिसूत्रादेव व्यभिचारज्ञापकात्परनिपातव्यत्ययः ॥ ८१ ॥

युद्धमिति । मानवानभिमानवान् चैद्यो युद्धङ्गतः प्राप्तः सन् इत्थं विधूता अभिभूता अन्ये चैद्यातिरिक्ता मानवा यैस्तान् विधूतान्यमानवान् अभियः निर्भीकान् परानरीन् अभियोगतोऽभियोगादभ्यवरोधात् पराजिग्ये जिगायेत्यर्थः । विपराभ्यां जेरित्यात्मनेपदम् । सन्लिटो-र्जेरिति कुत्वम् ॥ ८२ ॥

अथ भगवदभियोगं पञ्चभिः कुलकेनाह । अथेत्यादि । अथ चैद्यजयानन्तरं वपुषा राजन् परः पुमान् अदृश्यतेति पञ्चमेन सम्बन्धः । तद्वपुस्तावत्त्रिभिर्विशिनष्टि । वक्षोमणेः कौस्तुभस्य छायया छुरितानि व्याप्तानि पीतवासांसि पीताम्बराणि यस्य तेन । अत एव स्फुरता इन्द्रधनुषा भिन्नाः सङ्गतास्तड़ितो यस्य तेन ताड़ित्वता मेघेनेव स्थितेनेत्यर्थः ॥ ८३ ॥

नीलेनेति । पुनः कीदृशेन वपुषा नीलेन श्यामलेन तथानालं नालरहितं यन्नलिनं तत्र निलीना आसन्नाः उल्ललन्तीत्युल्ललनाश्चलाश्चालयो यस्य तेन अनालनलिननिलीनोल्ललनालिना सुखसौरभलोभपरिभ्रमद्भ्रमरेणेत्यर्थः । ललनानां विलासिनीनां स्त्रीणां लालनेन उपलालनेन वशीकरणेनेत्यर्थः । अलमत्यन्तं लीलालोलेन क्रीड़ा-

अपूर्वयेव तत्कालसमागमसकामया ।
दृष्टे न राजन्वपुषा कटाक्षैर्विजयश्रिया ॥ ८५ ॥
विभावी विभवी भाभो विभाभावी विवी विभीः ।
भवाभिभावी भावावो भवाभावी भुवो विभुः ॥ ८६ ॥
द्व्यक्षरः ।
उपैतुकामैस्त्वत्पारं निश्चितैर्योगिभिः परैः ।

लोलुपेन लीलालानेनेति पाठे लीलानां विलासानामालानेनालये-नेत्यर्थः । लालयति भक्तानिति लालिना भक्तानुकम्पिनेत्यर्थः । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ८४ ॥

अपूर्वयेति । किञ्च अपूर्वयैव अपूर्वसमागमयेव तत्कालसमागमे सकामया साभिलाषया विजयश्रिया चैद्यविरक्तयेति भावः । कटाक्षै-रपाङ्गैर्दृष्टेनालोकितेन वपुषा राजन् दीप्यमानः । अत्र प्रस्तुतजय-श्रीविशेषणसाम्यादप्रस्तुतानुरक्तमानिनीप्रतीतेः समासोक्तिः प्रतीय-मानाभेदाध्यवसायादपाङ्गदर्शनोत्प्रेक्षा च ॥ ८५ ॥

विभावीति । विभावोऽस्यास्तीति विभावी प्रभावसम्पन्नः विभ-वोऽस्यास्तीति विभवी ऐश्वर्यवान् भस्याभेवाभा यस्य स भाभो नक्षत्र-वदुज्ज्वल इत्यर्थः । विभां विशिष्टाभां भावयति सम्पादयति विश्वस्येति विभाभावी तस्य भासा सर्वमिदं विभातीति श्रुतेः । भुवो ण्यन्तात् णिनिः । विना पक्षिणा वाति गच्छतीति विवः पक्षिवाहन इत्यर्थः । आतोऽनुपसर्गे कः । विभीर्निर्भीकः । भवं संसारम् अभिभवतीति भवाभिभावी भक्तानां संसारनिवर्त्तक इत्यर्थः । भुवो णिनिः । भावान् जन्तून् अवतीति भावावः विश्वत्राता । भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुष्विति वैजयन्ती । अवतेः कर्मणि अण् । भवाभावोऽस्यास्तीति संसारदुःखैरस्पृष्ट इत्यर्थः । अर्श आदि-त्वादच्प्रत्ययः । भुवो भूमेर्विभुर्भर्त्ता ॥ ८६ ॥

उपैत्विति । एवम्भूतः परः पुमान् परमपुरुषो हरिः । तत्पारं

देहत्यागकृतोद्योगैरदृश्यत परः पुमान् ॥ ८७ ॥

तं श्रिया घनयाऽनस्तरुचा सारतया तया ।
यातया तरसा चारुस्तनयाऽनघया श्रितम् ॥ ८८ ॥

गतप्रत्यागतम् ।

विद्विषोऽद्विषुरुद्वीक्ष्य तथाप्यासन्निरेनसः ।
अरुच्यमपि रोगघ्नन्निसर्गादेव भेषजम् ॥ ८९ ॥

युग्मम् ।

तस्य हरेः पारम् अन्तमुपैतुकामैस्तं जिगीषुभिः । अन्यत्र दिदृक्षुभिरित्यर्थः । तुं काममनसोरपीति मकारलोपः । निश्चितैर्योद्धुं कृतनिश्चयैरित्यर्थः । अन्यत्र निश्चिततत्त्वैः । सकर्मकादप्यविवक्षिते कर्मणि क्तः । यद्वा, पीता गावः विभक्ता भ्रातर इत्यादिवदूहयितव्यं स्फुटीकृतं चैतत् घण्टापथे स वर्षिलिङ्गी विदित इत्यत्र । देहत्यागकृतोद्योगैर्मरणोद्यतैः । अन्यत्र मुमुक्षुभिरित्यर्थः । योगिभिः सन्नाहवद्भिरुपायवद्भिर्वा । अन्यत्र ध्यानवद्भिः । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । परैः शत्रुभिः । अन्यत्र परमयोगिभिः अदृश्यत परेभ्योऽतिष्ठतेत्यर्थः । अन्यत्र साक्षात्कृतः । तमेव विदित्वातिमृत्युमेतीति श्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः अभिधायाः प्रकृतार्थे नियन्त्रणात् ॥ ८७ ॥

युग्ममाह । तमिति । घनया आनन्दसान्द्रया । अनस्तरुचा अक्षीणकान्त्या । सारतया सारत्वेन सर्वोत्कर्षगुणेन यातया व्याप्तया । चारुस्तनया रम्यकुचया । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति विकल्पादनीकारः । अनघया निर्दोषया तया प्रसिद्धया श्रिया रमया तरसा त्वरया श्रितमालिङ्गितं तं हरिमुद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनार्द्धावृत्तेरर्द्धप्रतिलोमयमकम् । एतल्लक्षणन्तु प्रागेवोक्तम् ॥ ८८ ॥

विद्विष इति । तं पूर्वोक्तं हरिम् उद्वीक्ष्य विद्विषः शत्रवः ।

विदितन्दिवि केऽनीके तं यातन्निर्जिताजिनि ।
विगदङ्गवि रोद्धारो योद्धा यो नतिमेति न ॥ ९० ॥

प्रतिलोमेनायमेवार्थः ।

नियुज्यमानेन पुरः कर्मण्यतिगरीयसि ।
आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥ ९१ ॥

अद्विषः द्विषन्ति स्म । लङि द्विषश्चेति विकल्पेन झेर्जुसादेशः । तथापि द्विषन्तोऽपि निरेनसो निष्पापाः आसन् । द्वेषवीक्षणस्याप्येनोनिवर्त्तकत्वं दृष्टान्तेनाह । अरुच्यमिति । रोचत इति रुच्यम् । राजसूयेत्यादिना क्यबन्तो निपातितः । अरुच्यमरोचमानमपि भेषजमौषधम् । भेषजौषधभैषज्यानीत्यमरः । निसर्गात् स्वभावशक्तेरेव रोगं हन्तीति रोगघ्नम् आरोग्यकारि । हरिर्हरति पापानीति वचनादिति भावः । अमनुष्यकर्तृके चेति टप्रत्ययः ॥ ८९ ॥

विदितमिति । किञ्च योद्धा वीरो यो हरिः नतिं परेषां नम्रतां नैति नापैति । नितरां जिता आजयो येन तस्मिन् निर्जिताजिनि अनेकाजिविजयिन्यपि अनीके सैन्ये । वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः । यातं योद्धुमागतम् । दिवि स्वर्गेऽपि विदितं प्रख्यातं निगदं निरामयं तं हरिं गवि भुवि रोद्धारो जेतारः के न केऽपीत्यर्थः । प्रातिलोम्येऽप्येत एव पदार्थवाक्यार्थाः । एतदपि श्लोकप्रतिलोमयमकमेव पदपदार्थादिसंवादस्तु वैचित्रीविशेषः । लक्षणन्तु निष्यन्दित्यत्रैवोक्तमनुसन्धेयम् ॥ ९० ॥

नियुज्यमानेनेति । पुरोऽग्रे अतिगरीयसि कर्मणि रणकर्मणि अन्यत्र दुष्कले कस्मिंश्चित् कृत्यवस्तुनि नियुज्यमानेन व्यापारयिष्यता आज्ञापयिष्यता च भर्त्रा स्वामिना आरोप्यमाणोऽधिक्रियमाणः उरुर्महान् गुणो ज्या यस्मिन् तत् । अन्यत्र वर्ण्यमानसौन्दर्यादिकः । कर्मणे प्रभवतीति कार्मुकं धनुः । कर्मण उकञ् । आनमत् गुणाकर्षणादाकुञ्चितकोटिकमभूत् । अन्यत्र प्रणत इत्यर्थः । अत्र प्रकृतकार्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतेः समासोक्तिः ॥ ९१ ॥

तत्र बाणाः सुपरुषः समधीयन्त चारवः।
त्विषामभूत्सु परुषस्तस्याकृष्टस्य चारवः॥ ९२॥
पश्चात्कृतानामप्यस्य नराणामिव पत्रिणाम्।
यो यो गुणेन संयुक्तः स स कर्णान्तमाययौ॥ ९३॥
प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः।
रोपैरपारैरुपरि पुपूरेऽपि पुरोऽपरैः॥ ९४॥

द्व्यचरः।

दिङ्मुखव्यापिनस्तीक्ष्णान् ह्रादिनो मर्मभेदिनः।

तत्रेति। तत्र कार्मुके शोभनानि पर्वाणि येषां ते सुपरुषः सुपर्वाणः। अत एव चारवोऽतिरम्या बाणाः समधीयन्त निहिताः। व्याकृष्टस्य तस्य कार्मुकस्यारवस्य त्विषां सुष्ठु परुषः सुपरुषोऽतिकर्कशोऽभूत्। यमकविशेषालङ्कारः॥ ९२॥

पश्चादिति। नराणां पुंसामिव पश्चात्कृतानां निषङ्गसङ्गितया पृष्ठस्थापितानामपि अन्यत्रावधीरितानामपि पत्रिणामिषूणां मध्ये इत्यर्थः। यो यः पत्री नरश्च गुणेन ज्यया दाक्षिण्यादिना च संयुक्तः संबद्धः स स पत्री नरश्चास्य हरेः कर्णान्तं कर्णसमीपमाययौ आगतः गुणयोगादाकर्णमाकृष्टः अन्यत्रान्तिकमागत इत्यर्थः। श्लेषसङ्कीर्णोपमा॥ ९३॥

प्राप इति। पुरा पूर्वं रूपी मत्स्यकूर्माद्यनेकरूपवान् अरेपाः निष्पापः परिपूरयति कामैर्भक्तानिति परिपूरी भक्तवरदः। पूरयतेर्णिनिः। परः परमपुरुषो हरिः परैः शत्रुभिः प्रापे प्राप्तः अवरुद्ध इत्यर्थः। अपरैरन्यैः शत्रुभिः कर्तृभिः अपारैरनन्तै रोपैरिषुभिः। पत्री रोप इषुर्द्वयोरित्यमरः। पुरोऽग्रे उपरि च पुपूरे पूरितः। पृणातेः कर्मणि लिट्। द्व्यक्षरानुप्रासोऽलङ्कारः॥ ९४॥

दिगिति। स हरिर्दिङ्मुखव्यापिनो दिगन्तव्यापकान्। अतितीक्ष्णान् निशितान् क्रूरांश्च। ह्रादन्ते इति ह्रादिनः पचनादयतः

चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥ ९५ ॥

शरवर्षी महानादः स्फुरत्कार्मुककेतनः ।
नीलच्छविरसौ रेजे केशवच्छलनीरदः ॥ ९६ ॥

गूढचतुर्थः ।

न केवलञ्जनैस्तस्य लघुसन्धायिनो धनुः ।
मण्डलीकृतमेकान्ताद्बलमैक्षि द्विषामपि ॥ ९७ ॥

लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः ।

सिंहनादवतश्च । मर्मभेदिनो मर्मस्थानविदारकान् सायकानिषून् अहितानरींश्च एकक्षणेनैव चिक्षेप निरास । अत्र सायकानामहितानां च प्रकृतानामेव तुल्यधर्मयोगादौपम्योपगमात्तुल्ययोगिताभेदः ॥ ९५ ॥

शरेति । शरवर्षी बाणवर्षी नीरवर्षी च । शरं नीरे शरो बाण इति विश्वः । महान् नादः सिंहनादो गर्जितं च यस्य स महानादः । स्फुरन्ती कार्मुककेतने धनुर्ध्वजौ यस्य सः । अन्यत्रेन्द्रचापचिह्न इत्यर्थः । नीलच्छविः श्यामकान्तिः । अस्य केशवस्य छलं कपटं यस्य सः नीरदः केशवच्छलनीरदो हरिर्मेघोऽसौ रेजे रणरङ्गात् सर्वोत्कर्षेण दिदीपे इत्यर्थः । अत्र छलशब्देन हरित्वापह्नवेन मेघत्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । त्रिपाद्यन्तर्गतचतुर्थपादाक्षरत्वाद्गूढचतुर्थाख्यश्चित्रविशेषः शब्दालङ्कारश्चेति सङ्करः ॥ ९६ ॥

नेति । लघु शीघ्रं सन्धत्ते यस्तस्य लघुसन्धायिनस्तस्य हरेः धनुरेव केवलम् एकान्तात् मण्डलीकृतं शीघ्राकर्षान्नियमेन वलयीकृतं जनैर्नैक्षि । कर्मणि लुङ् । किन्तु द्विषां बलमपि मण्डलीकृतं त्रासादेकत्र पुञ्जीकृतमैक्षि । अत्र धनुर्बलयोः प्रकृतयोरेव तुल्यधर्मयोगात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९७ ॥

युग्मेनाह । लोकेति । लोकानालोकते इति लोकालोकी त्रैलोक्यदर्शी कलो मधुरभाषी कल्कं पापं ... कलिलो न भवतीति

कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥ ९८ ॥

द्व्यक्षरः।

अलितारासु विव्याध द्विषतः स तनुत्रिणः।
दानेषु स्थूललक्ष्यत्वं नाहि तस्य शरासने ॥ ९९ ॥

युग्मम्।

वररोऽविवरो वैरिविवारी वारिरारवः।
विववार वरो वैरं वीरो रविरिवौर्वरः ॥ १०० ॥

द्व्यक्षरः।

अकल्ककलिलः। कल्कः पापाशये पापे दम्भे इति विश्वः। अलि-कुलालकः अलिकुलनीलमूर्द्धज इत्यर्थः। कालो नीलवर्णः कालात्मको वा नास्ति कला यस्य सोऽकलः निरंश इत्यर्थः अकलिरकलहः स्वय-मकलहशील इत्यर्थः। काले प्रलयकाले कोलकेल्या वराहलीलया किलति क्रीड़ति कोलकेलिकिलः। किलशब्दस्तु खल्वर्थे। विव्याधे-त्युत्तरेण सम्बन्धः। द्व्यक्षरानुप्रासः ॥ ९८ ॥

अलीति। स पूर्वोक्तगुणविशिष्टो हरिः तनुत्राणि एषां सन्तीति तनुत्रिणो वर्मिणः। तनुत्रं वर्म दंशनमित्यमरः। तान् द्विषतः शत्रून् अलितारासु नेत्रकनीनिकासु विव्याध प्रजहार। तथाहि, तस्य हरेः दानेषु वितरणेषु एव स्थूललक्ष्यत्वं विपुलविषयत्वम्। स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे इत्यमरः। शरासने शरक्षेपे तु न किन्तु सूक्ष्मलक्ष्यत्वमेव अतोऽलितारावेधित्वमस्य युक्तमित्यर्थः। अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

वरर इति। वरान् रातीति वररो वरप्रदः। रा दाने आतो-ऽनुपसर्गे कः। अविवरो निर्विवरो नीरन्ध्रः। वैरिणः शत्रून् वि-वारयति वैरिविवारी। वारीणि रातीति वारिरः। पूर्ववत् कः। तस्येवारवो यस्य स वारिरारवः। वरः श्रेष्ठो वीरः शूरः स कृष्णः। उर्वरा सर्वशस्याढ्यभूमौ स्यात् भूमिमात्रके इत्यमरः। तस्यां भवः

मुक्तानेकशरम्प्राणानहरद्भूयसान्द्विषाम् ।
तदीयन्धनुरन्यस्य न हि सेहे सजीवताम् ॥ १०१ ॥
राजराजीरुरोजाजेरजिरेऽजोऽजरोऽरजाः ।
रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः ॥ १०२ ॥

द्व्यक्षरः ।

उद्धतान्द्विषतस्तस्य निघ्नतो द्वितयं ययुः ।
पानार्थे रुधिरन्धातौ रक्षार्थे भुवनं शराः ॥ १०३ ॥

मौर्वैरः पृथ्वीभवः रविरिव वैरं वैरिणां वृन्दं विववार विवारयामास जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥ १०० ॥

मुक्तेति । मुक्तानेकशरं क्षिप्तबहुबाणम् । तस्य हरेरिदं तदीयं धनुः भूयसां द्विषां प्राणानहरत् । तथाहि, अन्यस्य परस्य सजीवतां न सेहे । अथवा अन्यस्य धनुषः सजीवता सज्याकत्वं न सेहे । किंतु जीवति जीवः स्यान्मौर्वी स्त्रीति वैजयन्ती । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १०१ ॥

राजेति । न जायते इत्यजोऽनादिः । अन्येष्वपि दृश्यते इति जनेर्डप्रत्ययः । न जीर्यते इत्यजरः अनन्तः । पचाद्यच् । नास्ति रजो यस्येत्यरजा रजोगुणरहितः । रेजन्तीति रेजाः तेजिष्ठाः । रेजृ दीप्तौ पचाद्यच् । ते च ते अरयश्च तेषां जूरो हिंसनं तेन जातं रेजारिजूरजम् । तदूर्जं बलम् अर्जयतीति रेजारिजूरजोर्जार्जी । अर्जेर्णिनिः । ऋजुरार्जववान् । जर्जरो न भवतीति अजर्जरो दृढः स हरिः आजेरजिरे रणाङ्गणे राजराजीः राजश्रेणीः रुरोज बभञ्ज । रुज भङ्गे लिट् । अत एव रराज दिदीपे । द्व्यक्षरानुप्रासः ॥ १०२ ॥

उद्धतानिति । उद्धतान् दृप्तान् द्विषतः शत्रून् निघ्नतो हिंसतः । जासिनिप्रहणेति सूत्रे निप्रेतिसङ्घातविपर्यस्तव्यस्तग्रहणोपदेशान्निहन्तेः शेषकर्मणि द्वितीयैव । तस्य हरेः शराः । पानार्थे धातौ पा

क्रूरारिकारी कोरेककारकः कारिकाकरः ।
कोरकाकारकरकः करीरः कर्करोऽर्करुक् ॥ १०४ ॥

द्व्यक्षरः ।

विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।
अनेकमरिसङ्घातमकरोद् भूमिवर्द्धनम् ॥ १०५ ॥

याने इति धातौ सति रुधिरं रक्षार्थे धातौ पा रक्षणे इति भुवनं जगच्चेति द्वितयं ययुः रुधिरमपिबत् भुवनमरक्षच्चेति श्लेषार्थः । अत्र पानयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगितालङ्कारः । तत्र पानार्थं इत्यादिवाक्यस्य खलुवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात् सौक्ष्म्यनाम गुणः । अत्र सङ्क्षस्वरूपत्वं शब्दानां सौक्ष्म्यमुच्यत इति लक्षणात् ॥ १०३ ॥

अथ युग्मेनाह । क्रूरेति । क्रूरान् अरीन् किरति विक्षिपति इति क्रूरारिकारी । किरतेर्णिनिप्रत्ययः । कोर्भूमेरेककारकः एककर्त्ता । करोतेर्ण्वुल् । कारिका यातनाः करोति दुष्टानामिति कारिकाकरः । कारिका यातनावृत्त्योरित्यमरः । कृञो हेत्वित्यादिना ताच्छील्ये टच्प्रत्ययः । कारिकाः क्रियाः । धात्वर्थनिर्देशे ण्वुल् । तत्कर इति केचित् । कोरकाकारौ करौ यस्य स कोरकाकारकरकः कमलमुकुलरमणीयपाणिरित्यर्थः । शैषिकः कप्प्रत्ययः । करिणो गजान् ईरयति क्षिपतीति करीरः । कर्मण्यण् । कर्करो दृढकर्कश इत्यर्थः । अर्कस्येव रुक् यस्य सोऽर्करुगित्युपमा । द्व्यक्षरानुप्रासः ॥ १०४ ॥

विधातुमिति । भुवो भूमेर्लघिमानं लघुत्वं भारावतरणं विधातुमवतीर्णोऽपि भुवि जातोऽप्यसौ पूर्वोक्तगुणो भगवान् हरिः अनेकं बहुमरिसङ्घातं भूमिवर्द्धनं भूभारमकरोत् इति विरोधः हतमकरोदित्यविरोधः । अत्र एव विरोधाभासोऽलङ्कारः ॥ १०५ ॥

दारी दरदरिद्रोऽरिदारुदारोऽद्रिदूरदः ।
दूराद्दरौद्रोऽददरद्रोदोरुद्दारुरादरी ॥ १०६ ॥

द्व्यक्षरः ।

एकेषुणा सङ्खतिथान् द्विषो भिन्दन् द्रुमानिव ।
स जन्मान्तररामस्य चक्रे सदृशमात्मनः ॥ १०७ ॥

शूरः शौरिरशिशिशैराशाशैराशु राशिशः ।

दारीति । दारी बहुदारवान् । भूमार्थे मत्वर्थीयः । दरेण भयेन दरिद्रो निर्भीकः । दरोऽस्त्रियां भये श्वभ्र इत्यमरः । उदारो महान् दाता वा । उदारो दातृमहतोरित्यमरः । अद्रिवत् दुःखेन रद्यते दूरदो दुर्भेदोऽद्रिदूरदः । रद विलेखने खल्प्रत्ययः । अरौद्रः साधूनां सौम्यः रोदसीं रुणद्धीति रोदोरुत् विश्वव्यापी । रुधेः क्विप् । ददातीति दारुर्दाता । ददातेरौणादिको रुप्रत्ययः । आदरोऽस्या-स्तीति आदरी सन्मार्गादरवान् स हरिः अरिरेव दारु काष्ठमदिरास दूरादेव अददरत् दारयति स्म । दारयतेर्णौ चङि स्मृदृत्वर-प्रथम्रदस्तृस्पृशामित्यभ्यासस्यात्वम् । अरिदार्विति रूपकमर्थालङ्कारो द्व्यक्षरानुप्रासश्च ॥ १०६ ॥

एकेषुणेति । स हरिरेकेषुणा एकेनैव शरेण सङ्ख्यानां पूरणान् सङ्खतिथान् सङ्ख्यः स्थितानित्यर्थः । बहुपूगगणसङ्घस्य तिथुगिति तिथुगागमादेव ज्ञापकादसङ्ख्यात्वेऽपि सङ्ख्यात् डट्प्रत्ययः । द्विषः शत्रून् द्रुमानिवेत्युपमा । भिन्दन् विदारयन् । जन्मान्तरे रामस्य दाशरथेरात्मनः सदृशं चक्रे । एकशरेणानेकारि द्रुमभेदस्तु जन्मान्तर-भावनया यात इति भावः । बिभेद च पुनस्तालान् स एकेन महेषुणेति रामायणे ॥ १०७ ॥

शूर इति । शृणातीति शरारुः दुष्टघातकः । शरारुर्घातुको हिंस्र इत्यमरः । शृवन्द्योरारुरित्यारुप्रत्ययः । शीशरीरस्येशः शी-शरीरेशः ब[illegible] शूरो वीरः शौरिः कृष्णः अशिशिरैस्तीक्ष्णैः

शराशुः शीघ्रशरीरेभः शशूरेऽरिशिरः शरैः ॥ १०८ ॥

द्वयक्षरः ।

व्यक्तासीदरितारीणां यत्तदीयास्तदा मुहुः ।
मनोहृतोऽपि हृदये लेगुरेषान्न पत्रिणः ॥ १०९ ॥

नामाक्षराणां मलिता मा भूद्भर्तुं रतः स्फुटम् ।
अग्टह्लत पराङ्गानामसूनस्तत्र मार्गणाः ॥ ११० ॥

अतालव्यः ।

आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ।

आशा दिशोऽश्नुवत इत्याशाशैर्दिगन्तव्यापकैः । अश्नोतेः कर्मण्यण् । शरैर्बाणैः अरिशिरः शत्रुशिरांसि । जातावेकवचनम् । राशिशः सङ्घशः आशु शीघ्रं शुश्रूरे जघान । शूर हिंसास्तम्भनयोरिति धातोर्लिट् । द्व्यक्षरानुप्रासः ॥ १०८ ॥

व्यक्तेति । तदा तस्मिन् समये एषाम् अरीणामरिता शत्रुता मुहुर्व्यक्ता आसीत् । यद्यस्मात्तस्य हरेरिमे तदीयाः पत्रिणो बाणाः मनो हरन्ति कायादुद्धरन्ति इति मनो हृतोमारका इत्यर्थः । हरतेः क्विप् । मनोज्ञाः प्रतीयन्ते । अत एव मनोहृतोऽपि हृदये मनसि न लेगुर्न लग्नाः इति विरोधः वक्षो निर्भिद्य निर्जग्मुरित्यर्थः । हृदयं वक्षसि स्वान्ते इति विश्वः । विरोधाभासोऽलङ्कारः ॥ १०९ ॥

नामेति । भर्तुः स्वामिनो नामाक्षराणां फलेषु लिखितानां मलिता मालिन्यं तिरोधानं मा भूदिति बुद्ध्येत्यर्थः । अतः मार्गणाः शरवराः पराङ्गानाम् अरिशरीराणाम् असून् प्राणान् अग्टह्लत । ग्रहेर्लङ् । नाम्न रक्तम् । रक्तानुलेपस्य आशुभावनिमित्तस्य स्वामिनामाक्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यते स्फुटमिति । अत्र तालव्यवर्णाभावादतालव्य इति चित्रभेदः । इचुयशानां तास्विति इवर्णस्यापि तालुत्वेऽपि व्यञ्जनापेक्ष एवायं नियम इति न दोषः ॥ ११० ॥

आच्छिद्येति । आशुगाः बाणाः योधसार्थस्य वीरवर्गस्य प्राण-

ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥ १११ ॥
भीमास्त्राजिनस्तस्य बलस्य ध्वजराजिनः ।
कृतघोराजिनश्चक्रे भुवः सरुधिरा जिनः ॥ ११२ ॥
मांसव्यधोचितमुखैः शून्यतान्दधदक्रियम् ।
शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥ ११३ ॥
दाददो दुद्ददुद्दादी दादादो दूददीददोः ।

सर्वस्वम् आच्छिद्य ऐकागारिकाश्चौराः । चौरैकागारिकस्तेनेत्यमरः । ऐकागारिकः चौर इत्यर्थे निपात्यते इत्येके । इकट्प्रत्यये वृद्धिश्च निपात्यते इत्यपरे । तैस्तुल्यमैकागारिकवत् । तुल्यार्थे वतिः । दूराद्भूमावदर्शनमदृश्यतां जग्मुः ॥ १११ ॥

भीमेति । जिनो हरिः अवतारान्तरनाम्ना व्यपदेशः । भीमा अस्त्राजयो यस्य तस्य भीमास्त्राजिनः । इकोऽचि विभक्ताविति नुमागमः । ध्वजै राजते यत्तस्य ध्वजराजिनः । ताच्छील्ये णिनिः । कृता घोरा आजिर्युद्धं येन तस्य कृतघोराजिनः । पूर्ववन्नुमागमः । तस्य बलस्य सैन्यस्य सम्बन्धिनीर्भुवस्तद्रणभूमीः सरुधिराः चास्रा-श्चक्रे । चतुष्पादयमकम् ॥ ११२ ॥

मांसेति । मांसव्यधो मांसखण्डनम् । व्यधजपोरनुपसर्गे इत्यप्-प्रत्ययः । तत्रोचितानि परिचितानि मुखानि चञ्चवः शल्यानि च येषां तैः शकुन्तिभिः कर्तृभिः शून्यतामचेतनत्वम् अन्यत्र तुच्छत्वममूर्तत्वं वा दधत् अत एव अक्रियमस्पन्दं शत्रुबलं व्यापि व्याप्तम् । आप्नोतेः कर्मणि लुङ् । तस्य हरेरिषुभिः नभो व्यापि । अत्रेषु-पक्षिणां नभोबलयोर्व्याप्तितुल्यधर्मयोगित्वात्तुल्ययोगिताभेदः ॥११३॥

दादद इति । दद्यते इति दादः दानम् । दद दाने इति कर्मणि घञ् । दादं ददातीति दाददो दानप्रदः । आतोऽनुपसर्गे कः । दुद्दुद्दादी दुव उपतापः । टुदुञ् उपतापे क्विप् । तद्दुदम् उपतापं ददति साधूनामिति दुद्दाः खलाः । पूर्ववत् कः । तेषां दुदम् उपतापं

दुद्दादं ददद्दे दुद्दे ददाददददोऽददः॥ ११४॥

एकाक्षरः।

प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः।
प्रावर्त्तयद्वदीरस्रैर्द्विषान्तद्योषिताञ्च सः॥ ११५॥

ददत इति दुद्दुद्दादौ। दद दाने इति धातोर्णिनिः। दादादः। दाः शुद्धिः। दैप् शोधने क्विप्। तां ददत इति दादादः। दद दाने कर्मण्यण्। दूददीददोः। दूः परितापः। दूञ् परितापे क्विप्। तां ददातीति दूदाः दुष्टाः। दीः क्षयः। दीङ् क्षये क्विप्। तां दत्त इति दीदौ नाशदौ। उभयत्रातोऽनुपसर्गे कः। दूदानां दीदौ दुष्टमर्दकौ दोषौ भुजौ यस्य सः दूददीददोः दुष्टभञ्जकभुज इत्यर्थः। ददाददददः। ददन्ते इति ददाः दातारः न ददन्ते इति अददा अदातारः तेषां द्वयानामपि ददो दाता ददाददददः। सर्वत्र दद दाने पचाद्यच्। अदन्तीत्यदा वकासुरपूतनाप्रभृतयः। अदः पचाद्यच्। तान् द्यति खण्डयति इति अददः। दोऽवखण्डने आतोऽनुपसर्गे कः। एवम्भूतो हरिः। दुदं ददातीति दुद्दः दुःखदः तस्मिन् दुद्दे शत्रौ। दुद ददत इति दुद्दादं शस्त्रम्। दद दाने कर्मण्यण्। ददद्दे ददौ प्रयुक्तवानित्यर्थः। दद दाने कर्त्तरि लिट्। एकाक्षरानुप्रासोऽलङ्कारः॥ ११४॥

प्लुतेति। स हरिः प्लुताः उच्छ्रिताः इभकुम्भाः उरसि जाता उरसिजा इव इभकुम्भा इवोरसिजाश्च यैस्तैः। हृदयक्षतिभिर्वक्षःप्रहारैः मनोभङ्गैश्च विषादापादकैः जन्म येषां तैः। हृदयं वक्षसि स्वान्त इति विश्वः। द्विषां तद्योषितां चास्रैः शोणितैरस्रुभिश्च। अस्रमस्रुणि शोणित इति विश्वः। नदीः प्रावर्त्तयत् प्रावाहयत्। अरिवधेन तन्नारीररोदयदित्यर्थः। अत्र द्वयानामप्यस्राणां प्रकृतत्वात्प्रकृतश्लेषः। तैरस्रैर्द्विषां तद्योषितां यथासङ्ख्यसम्बन्धाद्यथासङ्ख्यालङ्कारः। तदुपजीवनेन द्विषान्तद्योषितां चास्रैः शोणितैः श्लेषमूला-

सदामदबलप्रायः समुद्धृतरसो बभौ ।
प्रतीतविक्रमः श्रीमान् हरिर्हरिरिवापरः ॥ ११६ ॥

अर्थत्रयवाची ।

भेदातिशयोक्तिमहिम्ना अस्तरूपतुल्यधर्मयोगित्वात्तुल्ययोगिता चाङ्गाङ्गिभावेनैषां सङ्करः ॥ ११५

सदेति । सदा मदो यस्य स सदामदः नित्यमत्तस्तं बलं बलभद्रं प्रीणातीति सदामदबलप्रायः । परत्वात् कर्मण्यण् प्रत्ययः । समुद्धृता रसा भूर्येन स समुद्धृतरसः प्रतीताः प्रसिद्धाः विक्रमाः पादन्यासा यस्य सः त्रिविक्रम इत्यर्थः । श्रीमान् रमापतिः हरिः कृष्णोऽपरोऽन्यो हरिरिन्द्र इव बभौ सोऽपि सतामामदो दुःखदो यो बलासुरस्तस्य प्रायो नाशस्तं करोतीति सदामदबलप्रायः । तत्करोतीति ण्यन्तात् पचाद्यच् । समुद्धृतरसः अमृतपानेन सम्यगपहृतविषः । शृङ्गारादौ विषे वीर्ये द्रवे रागे गुणे रस इत्यमरः । प्रतीतविक्रमः प्रसिद्धपराक्रमः श्रीमान् स्वाराज्यलक्ष्मीयुक्तः । तथाऽपरोऽन्यो हरिः सूर्य इव बभौ । सोऽपि आमं रोगं द्यति खण्डयतीति आमदः । बलं प्रणातीति बलप्रः । मूलविभुजादित्वात् कः । सतां भक्तानामामदो बलप्रश्च अय उदयो यस्य स सदामदबलप्रायः । स्वोदयेन सतामारोग्यबलकारीत्यर्थः । उद्यन्नद्येत्यादि श्रुतेरिति भावः । समुद्धृतरसः घर्मकालसंशोषितसलिलः । प्रतीतविक्रमः प्रसिद्धखगतिः । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः । तदेवमुपमानयोरुपमेये चार्थत्रयवचनादर्थत्रयवाच्येषु चित्रभेदः । एतावदेव कवेर्विवक्षितमतोऽन्यत् सुवाच्यश्लोपेक्ष्यमेव । अत्रापरो हरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेयं नोपमा । अपरस्येन्द्रस्यार्कस्य वाऽप्रसिद्धेः । प्रसिद्धसादृश्यवर्णनमुपमा । प्रसिद्धताद्रूप्यारोपे रूपकम् । प्रसिद्धताद्रूप्यभावनमुत्प्रेक्षा । अत एव लक्षयन्ति । अप्रकृतगुणक्रियाभिसम्बन्धानादप्रकृतत्वेन प्रकृतसम्भावनमुत्प्रेक्षेति तस्मादपरशब्दे प्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्व-

द्विधा त्रिधा चतुर्द्धा च तमेकमपि शत्रवः।
पश्यन्तः स्पर्द्धया सद्यः स्वयम्पञ्चत्वमाययुः॥ ११७॥

सदैव सम्पन्नवपूरणेषु
स दैवसम्पन्नवपूरणेषु।
महो दधे स्तारि महानितान्तं
महोदधेऽस्तारिमहा नितान्तम्॥ ११८॥

समुद्गः।

प्रतीतिरत्र चैवेति सर्वस्वकारः। तस्मादिवशब्दमात्रयोग एवोपमा। अपरशब्दमात्रप्रयोगेऽतिशयोक्तिः। उभयोः प्रयोगे तूत्प्रेक्षैवेति विवेकः। अत एवानानेकार्थवर्णनव्यसनायिभिरपरशब्दस्यान्यार्थता व्यतिरेकेणार्थान्तरकल्पनापि नालङ्कारिकाणां पन्थाः। श्लेषस्यातोत्प्रेक्षाबीजभूतसाधर्म्य निर्वाहमात्रोपक्षीणतया तदङ्गमिति सङ्कर इत्यलमतिप्रसक्त्या॥ ११६॥

द्विधेति। शत्रवः एकमपि तं हरिं द्विधा द्वित्वेन त्रिधा त्रित्वेन चतुर्द्धा चतुष्टयेन पश्यन्तः मयान्तथा भ्रास्यन्त इत्यर्थः। स्पर्द्धया मत्सरेण सद्यः स्वयं पञ्चत्वं पञ्चधाभावं मरणञ्चाययुः। मत्सरिणस्तदधिकमाचरन्तीति भावः। स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः। अन्तोनाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियामित्यमरः। पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावः पञ्चता। अत्र स्पर्द्धेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगाद्गम्या स्पर्द्धयेवेत्यर्थः॥ ११७॥

सदेति। सदैव सर्वदैव सम्पन्नं सर्वलक्षणसमग्रं वपुर्यस्य स सम्पन्नवपुर्नित्यपरिपूर्णमूर्त्तिः। संहितायां दूलोपे पूर्वस्य दीर्घः अस्तं निरस्तमरीणां महस्तेजो येनासौ अस्तारिमहाः महानधिकः स हरिः दैवसम्पत् भाग्यसम्पत्तिः सैव नवम्पूरणं प्लवसाधनं येषां तेषु दैवसम्पन्नवपूरणेषु दैवसहायेषु महोदधेर्महार्णवस्य इतान्तं प्राप्तपारं समुद्रपारगामि नितान्तं स्तारि विस्तीर्णं महस्तेजो दधे धारयामास।

इष्टङ्कृत्वार्थम्पत्रिणः शार्ङ्गपाणे-
रैत्याधोमुख्यम्माविशन् भूमिमाशु ।
शुद्ध्या युक्तानां वैरिवर्गस्य मध्ये
भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥ ११९ ॥

सत्वम्मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धाघच्चयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।

अर्द्धाभ्यासलक्षणसमुद्गयमकभेदः । अर्द्धाभ्यासः समुद्गः स्यादस्य भेदा-
स्त्रयो मता इत्युक्तं दण्डिना । उपेन्द्रवज्रा वृत्तम् ॥ ११८ ॥

इष्टमिति । शार्ङ्गं पाणौ यस्य शार्ङ्गपाणेः कृष्णस्य । प्रहर-
णार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति पाणेः परनिपातः । पत्रिणो
बाणाः इष्टमर्थं शत्रुवधात्मकं कृत्वा आधोमुख्यम् अधोमुखत्वमेत्य
प्राप्य आशु भूमिमाविशन् शुद्ध्या लोहशुद्ध्या पवित्रतया च युक्तानां
तथापि भर्त्रा स्वामिना वैरिवर्गस्य मध्ये क्षिप्तानां पातितानाम् एत-
देव आधोमुख्येन कर्चिन्निवयनमेवानुरूपमुचितम् । सामान्येन विशे-
षसमर्थनरूपोऽर्थान्तरन्यासः । जागतं वैश्वदेवीवृत्तम् । पञ्चाश्वैश्छिन्ना
वैश्वदेवी ममौ याविति लक्षणात् ॥ ११९ ॥

सत्वमिति । भव्यः कल्याणमूर्त्तिः लब्धोऽघच्चयः शुद्धिश्च येन स
लब्धाघच्चयशुद्धिः श्रीवत्सस्य लाञ्छनविशेषस्य भूमिर्वक्षः सा उद्धु-
रतरा उन्नततरा यस्य स उद्धुरतरश्रीवत्सभूमिः काममपास्तभीः
निर्भीकः परे शत्रवस्त एव मृगास्तेषां व्याधः मृगयुरित्यश्लिष्टरूपकम् ।
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि चेत्यमरः । उदयो नित्याभ्युद-
यवान् । नित्ययोगे मत्वर्थीयः । स हरिः पुरः पूर्वम् आजिरभसात्
रणरागात् मानविशिष्टमहङ्कारोद्धुरं सत्वं बलम् आलम्ब्यास्थाय मुदा
उत्साहेन हरेः सिंहस्य नादं कृत्वा सिंहनादं कृत्वेत्यर्थः समकालमेक-
कालम् । अत्यन्तसंयोगे द्वितीया । एक ओघो येषां तैः एकौघैः एक-
प्रहारैरोपैरिषुभिरभाकार्यं तदा तस्मिन् काले आततरे आच्छाद-

मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-
रेकौघैः समकालमभ्रमुदयी रोपैस्तदातस्तरे ॥ १२० ॥

चक्रबन्धः ।

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
एकोनविंशतितमः सर्गः ॥ १९ ॥

---

यमास । कृच्छ्रगतामिति गुणः । चक्रबन्धाख्यश्चित्रविशेषोऽलङ्कारः पूर्वोक्तरूपकेण संसृज्यते । चक्रबन्धोद्धारस्तु । दशखण्डलरेखात्मके नवमखण्डलान्तरालवति चक्रे नाभिस्थानेन सहैकोनत्रिंशत्कोष्ठं प्रत्येकं छत्रगतं पङ्क्तित्रयं समरेखया लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वप्रक्रमेण चाद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयतृतीययोर्द्वितीयतृतीयौ लिखित्वा नेमिस्थाने वाह्यवलये साक्षरकोष्ठषट्केन सहाष्टादशकोष्ठवति तृतीयपादान्तकोष्ठवर्त्ति वर्णमारभ्य प्रादक्षिण्येन चतुर्थपादं लिखित्वा तत्रैव समापयेत् । तत्र तत्राद्यन्तवर्णैः सह चतुर्थपादोद्धारः तत्र नाभिस्थाने चाद्यपादत्रयदशमाक्षरसंवादः । तृतीयान्तकोष्ठे चतुर्थाद्यन्तवर्णयोः संवादः तृतीयवलये माघकाव्यमिदम् । षष्ठे शिशुपालवध इति कविकाव्यनामोद्धारः ॥ शार्दूलविक्रीडितं वृत्तम् ॥ १२० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये एकोनविंश-
तितमः सर्गः ॥ १९ ॥

---

# विंशः सर्गः ।



मुखमुल्लसितत्रिरेखमुच्चै-
र्भिदुरभ्रूयुगभीषणं दधानः ।
समिताविति विक्रमानमृष्यन्
गतभीराह्वत चेदिराट् मुरारिम् ॥ १ ॥
भ्रितचक्रनिपातसम्प्रतीच्छं
वहतः स्कन्धगतञ्च तस्य मृत्युम् ।

अथ हरिशिशुपालयोर्युद्धं वर्णयितुमुपोद्घातं करोति । मुख-मिति । दूतीयं समितावाजौ । समित्याजिसमिद्युध इत्यमरः । विक्रमान् मुरारेः पराक्रमान् अमृष्यन् असहमानः अत एव तिस्रो-रेखास्त्रिरेखाः । दिक्संख्ये संज्ञायामिति समासः । ता उल्लसिताः क्रोधादुद्भूता यस्मिन् तदुल्लसितत्रिरेखम् । क्वचित्त्रिलोकामित्यपि पाठः । तथा भिदुरेण ग्रन्थिलेन भ्रूयुगेन भीषणं भयङ्करम् उच्चैरुन्नतं मुखं दधानः चेदिषु राजते चेदिराट् । सत्सूद्विषेत्यादिना क्विप् । यद्वा । चेदीनां राट् चेदिराट् । अन्येभ्योऽपि दृश्यते इति क्विप् । राजा राट् पार्थिवः क्ष्माभृदित्यमरः । गतभीः निर्भीकः सन् मुरारिं हरिम् आह्वत । अयमहं त्वां सासभ्युपैमि इति स्पर्द्धया आत्मसंघर्षकारया-मासेत्यर्थः । विनाशकाले विपरीतबुद्धेर्दुर्वारत्वादिति भावः । स्पर्द्धा-यामाङ् इति ह्वयतेर्लुङि तङ् आत्मनेपदेष्वन्यतरस्यामिति च्लेरङा-देशः । अत्रामर्षस्य विशेषणगत्या आह्वानहेतुत्वात् काव्यलिङ्गम् । सर्गेऽस्मिन्नौपच्छन्दसिकं वृत्तम् । वैतालीये गुर्वाधिक्यात् । तदुक्तं वैता-लीये द्विः स्वरा अयुक्पादे युग्मस्वरोऽन्ते ग औपच्छन्दसिक-मिति ॥ १ ॥

अभिशौरि रथोऽथ नोदिताश्वः
प्रययौ सारथिरूपया नियत्या ॥ २ ॥
अभिचैद्यमगाद्रथोऽपि शौरे-
रवनिष्ठ्यागुडकुङ्कुमाभिताम्रैः।
गुरुनेमिनिपीडनावदीर्ण-
व्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥
स निरायतकेतनांशुकान्तः
कलनिक्काणकरालकिङ्किणीकः।
विरराज रिपुक्षयप्रतिज्ञा-
मुखरो मुक्तशिखः स्वयन्नु मृत्युः ॥ ४ ॥

शितेति। अथ चाह्वानानन्तरं शितचक्रनिपातं शितसुदर्शनप्रहारं सम्प्रतीच्छत इति शितचक्रनिपातसम्प्रतीच्छम्। ईच्छतेः कर्मण्यण्। स्कन्धगतं मृत्युं वहतः तस्य चैद्यस्य रथः सारथिरूपया नियत्या विधिनेति रूपकम्। भाग्यं स्त्री नियतिर्विधिरित्यमरः। नोदिताश्वः प्रेरिताश्वः सन् अभिशौरि शौरिमभि। अभिमुख्येऽव्ययीभावः। अव्ययादाप्सुप इति सुपो लुक्। प्रययौ प्रतस्थे ॥ २ ॥

अभीति। अथ शौरेः कृष्णस्य रथोऽपि जागुडो देशविशेषः तत्र यत् कुङ्कुमं तद्वदभिताम्रैररुणैरित्युपमा। यावकेति पाठे यावकस्य कुङ्कुमस्य ताभ्यामभिताम्रैरित्यर्थः। गुरूणां नेमीनां चक्रधाराणां निपीडनेन नोदनेनावदीर्णेभ्यो व्यसूनां विगतप्राणानां देहेभ्यः स्रुतैः शोणितैरसृग्भिरवनिं विलिम्पन् उपदिहानः सन्। अभिचैद्यं चैद्यमभि। समासो व्यासो वा विकल्पात्। अगात्। इणो गा लुङीति गादेशः ॥ ३ ॥

स इति। निरायतोऽतिदीर्घः केतनांशुकान्तः ध्वजपटाञ्चलो यस्य सः कलनिक्काणैः मधुरस्वरैः करालाः कुशलाः प्रगल्भाः

सजलाम्बुधरारवानुकारी
ध्वनिरापूरितदिङ्मुखो रथस्य ।
प्रगुणीकृतकेकमूर्ध्वकण्ठैः
शितिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥

अभिवीक्ष्य विदर्भराजपुत्री-
कुचकाश्मीरजचिह्नमच्युतोरः ।
चिरसेवितयापि चेदिराजः
सहसावाप रुषा तदैव योगम् ॥ ६ ॥

किङ्किण्यः क्षुद्रघण्टिका यस्य सः तथोक्तः । नद्यृतश्चेति कप् । किङ्किणी क्षुद्रघण्टिकेत्यमरः । स कृष्णस्य रथः रिपुजयस्य शिशुपालवधस्य प्रतिज्ञया मुखरो वाचालः अत एव मुक्तशिखो मुक्तकेशः विरराज । नाहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थः स्वयं साक्षान्मृत्युरन्तकः किमित्युत्प्रेक्षा ॥ ४ ॥

सजलेति । सजलो योऽम्बुधरः तस्यारवं गर्जितमनुकरोतीति तथोक्तः तद्गम्भीर इत्यर्थः । उपमालङ्कारः । आपूरितदिङ्मुखो व्याप्तदिगन्तो रथस्य कृष्णरथस्य ध्वनिः ऊर्ध्वाः कण्ठाः येषां तैरूर्ध्वकण्ठैः आकस्मिकघनरवलोभाद्विस्मयहर्षोन्नमितकन्धरैरित्यर्थः । शितिकण्ठैर्नीलकण्ठैः प्रगुणीकृताः आततारीकृताः केका यस्मिन् कर्मणि तद्यथा तथा । केका वाणी मयूरस्येत्यमरः । उपकर्णयाम्बभूवे मेघारवभ्रान्त्या दत्तकर्णैरित्यर्थः । एतेन भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः ॥ ५ ॥

अभीति । चेदिराजः शिशुपालः । राजाहःसखिभ्यष्टच् । विदर्भराजपुत्र्या रुक्मिण्याः कुचयोर्यत् काश्मीरजं कुङ्कुमं तच्चिह्नं यस्य तदच्युतोरः कृष्णवक्षः अभिवीक्ष्य चिरसेवितया चिरोपयुजापि रुक्मिणीहरणात् प्रभृति संभृतयापीत्यर्थः । रुषा रोषेण तदैव तदानीमिवेत्युत्प्रेक्षा । सहसा योगं समाधिमवाप । यथा कामी

जनिताशनिशब्दशङ्कमुच्चै-
र्धनुरास्फालितमध्वनन्नृपेण।
चपलानिलचोद्यमानकल्प-
क्षयकालाग्निशिखानिभस्फुरज्ज्यम्॥ ७॥
समकालमिवाभिलक्षणीय-
ग्रहसन्धानविकर्षणापवर्गैः।
अथ साभिसरं शरैस्तरस्वी
स तिरस्कर्त्तुमुपेन्द्रमभ्यवर्षत्॥ ८॥

कास्यन्तरभोगचिह्नदर्शनोद्दीप्तः कान्तया संयुज्यते तद्वदित्यर्थः परमार्थ-स्वरूप एव कोपो वैदर्भीकुचकुङ्कुमदर्शनादुद्दीपित इत्यर्थः। अत्र प्रकृतरुद्विशेषणसाम्यादप्रकृतकान्ताप्रतीतेः समासोक्तिः उक्तोत्प्रेक्षा त्वङ्गमस्याः॥ ६॥

जनितेति। नृपेण चैद्येन आस्फालितं संघटितम् अत एव चपलानिलेन तीव्रानिलेन चोद्यमानस्य संवर्ध्यमानस्य कल्पक्षयकाला-ग्नेर्या शिखा ज्वाला तया समाना तन्निभा। इति नित्यसमासः। सा स्फुरन्ती दोधूयमाना ज्या मौर्वी यस्य तत्तथोक्तं धनुः जनिता उत्पादिता अशनिशब्दशङ्का यस्मिन् कर्मणि तत्तथोक्तम्। उच्चैस्तरा-मध्वनत्। अत्राग्निशिखानिभेत्युपमाया अशनिशब्दशङ्केति भ्रान्ति-मतः आस्फालितमध्वनदिति पदार्थहेतुककाव्यलिङ्गस्य च सापेक्षत्वात् सङ्करः॥ ७॥

समेति। अथ धनुरास्फालनानन्तरं तरस्वी बलवान् स चैद्यः समकालमिवेत्युत्प्रेक्षा। अत्यन्तसंयोगे द्वितीया। अभिलक्षणीया दृश्या ग्रहो ग्रहणं सन्धानं मौर्व्यां योजनं विकर्षणमाकर्षणमपवर्गो मोक्षश्च येषां तैः शरैः साभिसरं सानुचरम् उपेन्द्रं हरिं तिरस्कर्त्तु-माच्छादयितुमभ्यवर्षत्॥ ८॥

ऋजुताफलशुद्धियोगभाजा-
ङ्गुरुपक्षाश्रयिणां शिलीमुखानाम् ।
गुणिना नतिमागतेन सन्धिः
सह चापेन समञ्जसीबभूव ॥ ९ ॥

अविषह्यतमे कृताधिकारं
वशिना कर्मणि चेदिपार्थिवेन ।
असरद्धनुरुच्चकोटिढ़ार्ति-
प्रसभाकर्षणवेपमानजीवम् ॥ १० ॥

ऋजुतेति । ऋजुता अवक्रत्वम् अकुटिलबुद्धित्वञ्च फलं शल्यं श्रेयश्च तेन योगः शुद्धिर्लौहशुद्धिर्निर्विषयत्वञ्च अन्यत्र बाह्यान्तरशुद्धि-स्तां भजन्तीति तद्भाजां गुरोर्महतः पक्षस्य कङ्कादिपत्रस्य सहायस्य चाश्रयः आश्रयणमेषामस्तीति गुरुपक्षाश्रयिणां शिलीमुखानां शरा-णाम् । गुणिना ज्यावता नतिमागतेन आकर्षणाकुञ्चितकोटित्वं विधे-यत्वञ्च प्राप्तेन चापेन सह सन्धिः सम्बन्धः समञ्जसः साधीयान् बभूव अबलवतां बलिना नम्रेण सन्धिरेवोचितेति भावः । अत्र प्रस्तुत-चापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुतारिविजिगीषुवस्तुप्रतीतेः समा-सोक्तिः । तच्च साम्यं वाच्यप्रतीयमानयोरभेदाध्यवसायात्सिद्धम् । न चात्र समानालङ्कारशङ्का कार्य्या समानालङ्कृतिर्योगे वस्तुनोरनुरूपयो-रित्यनुरूपयोरेव वस्तुनोर्योगेन तस्योपस्थापनादित्यनुसन्धेयं जिगीषु-गुणयोगिनोरिह भेदात् ॥ ९ ॥

अविषह्येति । वशिना स्वतन्त्रेण चेदिपार्थिवेन अविषह्यतमे दुष्करे कर्मण्यरिजयव्यापारे कृताधिकारं कृतनियोगं नियुज्यमानमित्यर्थः अत एव दृढयोरुच्चयोः कोट्योः प्रसभाकर्षणेन वेपमाना दोधूयमाना जीवा ज्या यस्य तत् । अन्यत्र दृढयोरार्त्या ताड़नेन प्रसभाकर्षणेन च वेपमानः कम्पमानो जीवः प्राणो यस्येत्यर्थः । अर्त्तिः पीड़ाधनुष्कोट्यो-रित्यमरः । जीवः प्राणेऽस्त्रियां ना तु जन्तावात्मनि गीष्पतौ । त्रिषु

अनुसन्ततिपातिनः पटुत्व-
न्दधतः शुद्धिभृतो गृहीतपक्षाः ।
वदनादिव वादिनोऽथ शब्दाः
क्षितिभर्त्तुर्धनुषः शराः प्रसस्रुः ॥ ११ ॥
शबलासितकान्ति तस्य मध्य-
स्थितघोरायतबाहुदण्डनासम् ।
ददृशे कुपितान्तकोन्नमद्भ्रू-
युगभीमाकृति कार्मुकञ्जनेन ॥ १२ ॥

जीवेति मौर्व्यां स्त्रीति वैजयन्ती । धनुरुच्चैरसरत् अच्छनदा-क्रन्दत् । यथा राज्ञा नियुक्तः पराधीनः बलादाकृष्यमाणः क्रोशति तद्वदित्यर्थः । अत्रापि प्रकृतविशेषणसाम्यादप्रकृतापराध्यधिकृतपुरुषप्रतीतेः समासोक्तिः ॥ १० ॥

अन्विति । अथाकर्षणानन्तरं क्षितिभर्तुश्चैद्यस्य धनुषः सकाशात् अनुसन्तत्या पतन्तीति अनुसन्ततिपातिनोऽविच्छेदवर्त्तिनः पटुत्वं लक्ष्यभेदपाटवं वाचकत्वशक्तिञ्च दधतः शुद्धिभृतः लोहशुद्धिभृतः निर्विषा वा अन्यत्र साधव इत्यर्थः गृहीतपक्षाः स्वीकृतकङ्कादिपत्राः । अन्यत्र गृहीतनित्यत्वादिसाध्यार्थाः । पक्षःपार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती । शराः वादिनः कथकस्य वदनाच्छब्दाः प्रतिज्ञाहेत्वादय इव प्रसस्रुर्निर्जग्मुः । श्लिष्टविशेषणेयमुपमेति केचित् । श्लेष एव प्रकृताप्रकृतविषय इत्यन्ये ॥ ११ ॥

शबलेति । शबलं सारितं स्मृतमित्यमरः । तद्वदसितकान्ति कृष्णवर्णं मध्ये स्थिता घोरा भीना आयता च बाहुदण्डो नासा नासिकेव यस्मिन् तत्तथोक्तम् । कुपितस्यान्तकस्य यमस्योन्नतं यद्भ्रूयुगं तद्वद्भीमा आकृतिर्यस्य तत्तस्य चैद्यस्य कार्मुकं जनेन ददृशे दृष्टं सभयविस्मयमिति भावः । उपमालङ्कारः ॥ १२ ॥

तडिदुज्ज्वलजातरूपपुङ्खैः
खमयःश्याममुखैरभिध्वनद्भिः-
जलदैरिव रंहसा पतद्भिः
पिदधे संहतिशालिभिः शरौघैः ॥ १३ ॥
शितशल्यमुखावदीर्णमेघ-
क्षरदम्भःस्फुटतीव्रवेदनानाम् ।
स्रवदस्रुतनीव चक्रवालं
ककुभामीर्णविषुः सुवर्णपुङ्खाः ॥ १४ ॥
अमनोरमतां यतो जनस्य
क्षणमालोकपथान्नभः सदा वा ।

तडिदिति । तडिद्वदुज्ज्वला दीप्ता जातरूपस्य हेम्नः पुङ्खाः कर्त्तर्यो येषां तैः । अयोवत् श्याममुखैः श्यामाग्रैरभिध्वनद्भिर्ध्वनिभिः खमन्यवैर्गर्जद्भिश्च रंहसा वेगेन पतद्भिर्धावद्भिः संहतिशालिभिः सङ्घवाहिभिः शरौघैर्जलदैरिव खमाकाशं पिदधे पिहितम् । कर्मणि लिट् । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरकारलोपः । उपमालङ्कारः ॥ १३ ॥

शितेति । सुवर्णपुङ्खाः सुवर्णकर्त्तरिकाः शराः शितैर्निशितैः शल्यमुखैः फलाग्रैः अवदीर्णा अवभिन्ना ये मेघास्तेभ्यः क्षरता स्रवता अम्भसा स्फुटा व्यक्ता तीव्रा वेदना यासां तासां ककुभां सम्बन्धि स्रवन्ती अस्रुततिरस्रुसन्ततिर्यस्य तदिव शरप्रहारवेदनया रुददिव स्थितमित्युत्प्रेक्षा । चक्रवालं मण्डलमीर्णविषुः आच्छादयामासुः । ऊर्णोतेर्लुङ्गीडागमे तस्य विभाषोर्णोरिति ङित्त्वाभावपक्षे ऊर्णोतेर्विभाषेति वृद्धिविकल्पात्पक्षे गुणः अजादित्वादाटश्चेति वृद्धिः ॥ १४ ॥

अमन इति । विविधैश्चैद्यबाणैः कर्त्तृभिः पिहिता हिमद्युतिस्तरोहिताकौ । अत एवामनोरमतां यतो प्राप्नुवती । इयः

रुरुधे पिहिताहिमद्युतिर्द्यौ-
र्विशिखैरन्तरिता च्युता धरित्री ॥ १५ ॥

विनिवारितभानुतापमेकं
सकलस्यापि मुरद्विषो बलस्य।
शरजालमयं समं समन्ता-
दुरु सद्मेव नराधिपेन तेने ॥ १६ ॥

इति चैद्यमहीभृता तदानी-
न्तदनीकं दनुसूनुसूदनस्य।
वयसामिव चक्रमक्रियाक-
म्परितोऽरोधि विपाटपञ्जरेण ॥ १७ ॥

धरति वर्गितश्चेति ङीप् द्यौराकाशं जनस्य भौमलोकस्य आलोकपथात् दृष्टिमार्गात् क्षणं रुरुधे रुद्धा। रुधः कर्मणि लिट्। अत्र पथोरोधापायत्वात् ध्रुवमपाये इति पञ्चमी। तथान्तरिता च्युता तिरोहिता नष्टा अत एवामनोरमतां यतो धरित्री नभःसदां वा आलोकपथात् रुरुधे वाकारो जनसमुच्चयार्थः। अत्र द्युधरित्रोः प्रकृतयोरेव रोधाख्यतुल्यधर्मयोगात्तुल्ययोगिताभेदौ ताभ्यामेव जनस्य नभसदां यथासङ्ख्यान्वयाद्यथासङ्ख्यालङ्कारः सापेक्षतया सङ्कीर्यते ॥ १५ ॥

विनिवारितेति। नराधिपेन सकलस्यापि मुरद्विषो हरेर्बलस्य सैन्यस्य विनिवारितो भानुतापो येन तदेकमद्वितीयं शरजालमयं बाणच्छन्दात्मकम् उरु महत्सद्मेव सदनमिवेत्युत्प्रेक्षा। समं युगपत्समन्तात्तेने कृतमित्यर्थः। तनोतेः कर्मणि लिट् ॥ १६ ॥

इतीति। इतीत्थं चैद्यमहीभृता चैद्येन तदानीं तत्काले दनुसूदनस्य दानवान्तकस्य हरेस्तदनीकं बलम्। वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः। वयसां चक्रं पक्षिसङ्घ इव आक्रि-

इषुवर्षमनेकमेकवीर-
स्तदरिप्रच्युतमच्युतः पृषत्कैः ।
अथ वादिकृतप्रमाणमन्यैः
प्रतिवादीव निराकरोत्प्रमाणैः ॥ १८ ॥

प्रतिकुञ्चितकूर्परेण तेन
श्रवणोपान्तिकनीयमानगव्यम् ।
ध्वनति स्म धनुर्घनान्तमत्त-
प्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ १९ ॥

उरसा विततेन पातितांसः
स मयूराञ्चितमस्तकस्तदानीम् ।

याकं निश्लेषं यथा तथा विपाटयन्तीति विपाटाः शराः । पचाद्यच् । तैरेव पञ्जरेण परितः सर्वतः व्यरोधि रुद्धम् । रुधेः कर्मणि लुङ् । उपमा ॥ १७ ॥

इषुविति । अथानीकरोधनानन्तरम् एकवीरो महाशूरोऽच्युतो हरिररिप्रच्युतं यत् गलितं तदनेकमपरिमितमिषुवर्षं पृषत्कैर्बाणैः वादिकृतं वादिना प्रयुक्तं प्रमाणमनुमानम् अन्यैः प्रमाणैः प्रत्यनुमानैः प्रतिवादीव निराकरोत् । इवेनसमासो विभक्त्यलोपश्चेति समासात् समासगता श्रौती पूर्णोपमा ॥ १८ ॥

प्रतीति । प्रतिकुञ्चितकूर्परेण कुञ्चितकफोणिना । स्यात् कफोणिस्तु कूर्पर इत्यमरः । तेन हरिणा श्रवणोपान्तिकं नीयमाना आकृष्यमाणा गव्या ज्या यस्य तत् । गव्यं गवां हिते गव्या ज्यायां क्षीरादिके त्रिष्विति विश्वः । धनुः शार्ङ्गं घनान्ते शरदि ये मत्ताः प्रचुरा भूरयः क्रौञ्चास्तेषां रवमनुकरोतीति तदनुकारं क्रौञ्चकूजितसदृशं यथा तथेत्यर्थः । कर्मण्यण् । उच्चैस्तारं ध्वनति स्म दध्वान । लट् स्मे इति भूते लट् । स्वभावोक्त्युपमयोः सङ्करः ॥ १९ ॥

चणमालिखितो नु सौष्ठवेन
स्थिरपूर्वापरमुष्टिराबभौ वा ॥ २० ॥
ध्वनतो नितरां रयेण गुर्व्यः
स्तडिदाकारचलद्गुणादसङ्ख्याः।
इषवो धनुषः सशब्दमाशु
न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २१ ॥
शिखरोन्नतनिष्ठुरांसपीठः
स्थगयन्नेकदिगन्तमायतान्तः।

उदस्तेति। तदानीं धनुष्कर्षणसमये धिततेन विस्तारितेनो रसा उपलक्षितः पातितांसो नमितस्कन्धः मयूरवदञ्चितं मनोहरं मस्तकं यस्य सः उन्नमितनूर्ध्वेत्यर्थः। स्थिरौ दृढौ पूर्वापरौ अग्रिमचरमौ मुष्टी गृहीतमस्तकमौर्वीकौ पाणी यस्य स हरिः। सुष्ठु भावः सौष्ठवं तेन सौष्ठवेन स्थानकपाटवेन हेतुना क्षणमालिखितो नु लिखित इव आबभौ वाबभासे किम्। नुशब्दो वितर्कार्थे। नु पृच्छायां वितर्के चेत्यमरः। वाशब्दोऽपि तादृश इत्युत्प्रेक्षालङ्कारोऽयम् ॥ २० ॥

ध्वनत इति। ध्वनतो गर्जतः तडित इवाकारो यस्य स तडिदाकारः चलनात्तेजोमयत्वाच्चाचिरप्रभाकारश्चलन् गुणो मौर्वी यस्य तस्मात्। मौर्वी ज्या शिञ्जिनी गुणः इत्यमरः। धनुषः शार्ङ्गात् गुर्व्यो महत्यः असङ्ख्या अपरिमिता इषवोऽम्बुधरान्मेघात् अम्बुधारा इवाशु सशब्दं न्यपतन्। अत्रोपमानोपमेययोरेकलिङ्गतान्वयादिषुशब्दो द्विलिङ्गोऽपि स्त्रीलिङ्ग एव प्रयुक्त इति ज्ञापनाय गुर्व्य इति विशेषणम् ॥ २१ ॥

शिखरेति। शिखरं शृङ्गमिवोन्नतं निष्ठुरं चांसपीठं यस्य सः एकदिगन्तम् एकदिग्भागं स्थगयन् आयतान्तो द्राघिष्ठस्वरूपः। अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिक इति वैजयन्ती। सकलप्रसारित

निरवर्णि सकृत्प्रसारितोऽस्य
क्षितिभृत्तेव चमूभिरेकबाहुः ॥ २२ ॥

तमकुण्ठमुखाः सुपर्णकेतो-
रिषवः क्षिप्तमिषुव्रजम्परेण ।
विभिदामनयन्त कृत्यपक्ष-
न्नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥

दयितैरिव खण्डिता मुरारे-
र्विशिखैः सम्मुखमुज्ज्वलाङ्गलेखैः ।
लघिमानमुपेयुषी पृथिव्यां
विफला शत्रुशरावलिः पपात ॥ २४ ॥

न तु पुनः पुनरिति स्थैर्योक्तिः । अस्य हरेरेकबाहुस्त्वापरोपितो वामबाहुरित्यर्थः चमूभिः । क्षितिभृत्तेव भूधर इव निरवर्णि साधु निरीक्षित इत्यर्थः । निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः ॥ २२ ॥

तमिति । अकुण्ठमुखाः निशिताग्राः प्रगल्भगिरश्च सुपर्णकेतोर्गरुड़ध्वजस्य हरेरिषवः परेणारिणा क्षिप्तं मुक्तम् इषुव्रजम् अयथार्थवर्णाः असत्याक्षराः कपटवचनाः उभयवेत्तार इत्यर्थः । कृत्यश्च यो यथावर्णस्तारः प्रणधिरेव चेत्युत्पलमाला । नेतुर्नायकस्य जिगीषोः नृपतेः । कृत्यपक्षम् अमात्यादिभेद्यवर्गमिव । कृत्या क्रिया देवतयोस्त्रिषु भेद्ये धनादिभिरित्यमरः । विभिदां भेदम् । षिद्भिदादिभ्योऽङ् । अनयन्त । स्वरित इत्यात्मनेपदम् ॥ २३ ॥

दयितैरिति । उज्ज्वलाः स्फुटाः अङ्गेषु लेखाश्चित्रलेखा नखरेखाश्च येषां तैः मुरारेर्विशिखैर्दयितैः प्रियैरिव सम्मुखं समक्षमेव खण्डिता छिन्ना अन्यत्राबमानिता अत एव विफला निशल्या अलब्धकामा च । अत एव लघिमानमुपगतम् अल्पताञ्चोपेयुषी शरावलिः

प्रमुखेऽभिहताश्च पत्रवाहाः
प्रसभम्माधवमुक्तवत्सदन्तैः।
परिपूर्णतरम्भुवो गतायाः
परितः कातरवत्प्रतीपमीयुः॥ २५॥

इतरेतरसन्निकर्षजन्मा
फलसंघट्टविकीर्णविस्फुलिङ्गः।
पटलानि लिहन् बलाहकाना-
मपरेषु चणमज्वलत् कृशानुः॥ २६॥

पृथिव्यां पपात। अत्र प्रकृतशरावलिविशेषणसाम्यादप्रकृतखण्डिता-नायिकाप्रतीतेः समासोक्तिः। दयितैरिवेत्युपमा खण्डिताविशेषणा-न्तःपातित्वादङ्गमेव। अत एव तच्च विशेषणसाम्यं श्लिष्टतया साधा-रण्येनौपम्यगर्भत्वेन च भवतीत्युक्तं सर्वस्वकारैः। ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति साम्येवं पृथिव्यां पततीति भावः॥ २४॥

प्रमुख इति। पत्राणि वहन्तीति पत्रवाहाः पत्रिणश्चैद्यशराः। कर्मण्यण्। माधवमुक्तवत्सदन्तैः शौरिचिप्तशरैः प्रसभं बलात् प्रमुखे शल्याग्रे वदने चाभिहताः खण्डिताः सन्तः अत एव कातरैः त्रस्तै-स्तुल्यं कातरवत्। तुल्यार्थे वतिप्रत्ययः। परिपूर्णतरं गतायाः गन्तव्यं गतायाः इत्यर्थः। भुवोऽन्तरालभूमेः परितः प्रतीपं प्रतिकूल-मीयुः प्रापुः प्रत्यागताश्च। माधवान्तिकात्प्राप्तव्य जग्मुरित्यर्थः। चकारः पूर्वश्लोकोक्तपतनसमुच्चयार्थः। केचित् खण्डितास्तत्रैव पेतुः केचिन्मुखेषु प्रतिहताः प्रतिनिवृत्ता इत्यर्थः। कातरवदिति तद्धित-गता श्रौती पूर्णोपमा॥ २५॥

इतरेतरेति। इतरेतरसन्निकर्षजन्मा शराणां मिथःसंश्लेषोत्थः। जन्मोत्तरपदत्वाद् व्यधिकरणोऽपि बहुव्रीहिरिष्यते। फलसङ्घट्टेन शल्यसङ्घट्टनेन विकीर्णा विस्फुलिङ्गा यस्य सः कृशानुरग्निर्बलाहकानां वारि वहन्तीति बलाहकाः। पृषोदरादित्वात्साधुः। पटलानि

शरदीव शरश्रिया विभिन्ने
विभुना शत्रुशिलीमुखाभ्रजाले ।
विकसन्मुखवारिजाः प्रकाम-
मभुराशा इव यादवध्वजिन्यः ॥ २७ ॥
स दिवं समचिच्छदच्छरौघैः
क्षततिग्मद्युतिमण्डलातपत्रैः ।
ददृशेऽथ च तस्य चापयष्ट्या
इषुरेकैव जनैः सकृद्विसृष्टा ॥ २८ ॥
भवति स्फुटमागतो विपक्षा-
न्न सपक्षोऽपि हि निर्वृतेर्विधाता ।

छिन्दन् आस्वादयन् अपरेषु शत्रुषु । समरेष्विति पाठे समरेषु युद्धेषु चणमज्वलत् अदीप्यत । अत्र बलाहकानाम् अग्निदाहास्वादासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

शरदीवेति । विभुना देवेन कर्त्रा शरश्रिया शरसम्पदा करणेन शरदीव शत्रुशिलीमुखा अभ्राणीव तेषां जाले विभिन्ने सति विकसन्ति मुखानि वारिजानि इव यासां ताः यादवध्वजिन्यः यदुसेना आशा दिश इव प्रकामं बभुः । अनेकैवेयमुपमा ॥ २७ ॥

स इति । क्षतस्तिग्मद्युतिमण्डलस्यातपत्रो यैस्तैराच्छादितार्कमण्डलैरित्यर्थः । शरौघैर्दिवमाकाशं स हरिः समचिच्छदत् छादयति स्म । छादेर्णौ चङ्युपधाया ह्रस्वः सन्वत इत्यभ्यासस्येत्वम् । युक्तश्चैतत् । लघुहस्तत्वादस्येत्याशयेनोत्प्रेक्ष्यते । अथास्मिन्नवसरे तस्य हरेश्चापयष्ट्या इषुः सकृदेकदा विसृष्टा मुक्ता एकैव जनैर्दृशे दृष्टा च । इषूणां पुङ्खानुपुङ्खगमनादृद्राघीयानेक एवेषुरेकदैव गच्छतीत्युत्प्रेक्षा । दृष्टश्लघुहस्तस्याकाशसञ्छादनं युक्तमिति भावः ॥ २८ ॥

भवतीति । विपक्षाच्छत्रुकुलादागतः सपक्षः कङ्कादिपत्रवानु

शिशुपालबलानि कृष्णमुक्तः
सुतरान्तेन ततापः तोमरौघः ॥ २९ ॥

गुरुवेगविराविभिः पतत्रै-
रिषवः काञ्चनपिङ्गलाङ्गभासः।
विनतासुतवत्तलम्भुवः स्म
व्यथितभ्रान्तभुजङ्गमं विशन्ति ॥ ३० ॥

शतशः परुषाः पुरोविशङ्कं
शिशुपालेन शिलीमुखाः प्रयुक्ताः।
परमर्मभिदोऽपि दानवारे-
रपराधा इव न व्यथां वितेनुः ॥ ३१ ॥

सुहृच्च निर्वृतेर्विधाता सुखकरो न भवति हि यतः स्फुटम्। तेन कारणेन कृष्णमुक्तस्तोमरौघः शिशुपालबलानि सुतरां ततापः ददाह। अतः शत्रुकुलादागतः स्वजनोऽपि न विश्वसनीय इत्यर्थः। सपक्षोऽप्यनिर्वर्त्तक इति विरोधेऽपिशब्दः। विपक्षादागत इत्यविरोधाद्विरोधाभासः ॥ २९ ॥

गुर्विति। गुरुवेगविराविभिः गुरुणा वेगेन विरुवन्ति ध्वनन्तीति तथोक्तैः। रौतेर्णिनिः। शीघ्रवेगविरावयद्भिः पतत्रैः पक्षैरुपलक्षिताः काञ्चनेन पुङ्खलिप्तेन पिङ्गलाङ्गभासः। अन्यत्र काञ्चनवदिति विग्रहः। इषवः शौरिशराः विनतासुतवद्वैनतेयैस्तुल्यं व्यथिता भीषिताः अत एव भ्रान्ता मूढा भुजङ्गमा यस्मिन् तत्तथा भुवस्तलं पातालं विशन्ति स्म। तद्धितगता श्रौती पूर्णोपमा पातालप्रवेशासम्बन्धातिशयोक्त्या सङ्कीर्य्यते ॥ ३० ॥

शतश इति। शिशुपालेन पुरोऽग्रे विशङ्कं निःशङ्कं शतशः प्रयुक्ताः क्षिप्ता उच्चारितास्च परुषाः निष्ठुराः परमर्मभिदोऽपि शिलीमुखाः शराः। शतशः अपराधाः पञ्चदशसर्गोक्ताः अभिशापा इव

विहिताद्भुतलोकसृष्टिमाये
जयमिच्छन् किल मायया मुरारौ ।
भुवनत्रयकाल्पयोगनिद्रे
नृपतिः स्वापनमस्त्रमाजहार ॥ २२ ॥

सलिलार्द्रवराहदेहनीलौ
विदधद्भास्करमर्थशून्यसंज्ञम् ।
प्रचलायतलोचनारविन्दं
विदधे तद्बलमन्धमन्धकारः ॥ २३ ॥

दानवारेर्हरेर्व्यथां दुःखं न वितेनुः खलापकारा महतामकिञ्चित्करा इति भावः । समासगतोपमा ॥ २१ ॥

विहितेति । नृपतिश्चैद्यो विहिता अद्भुता लोकसृष्टिरेव माया यस्मिन् तस्मिन् भुवनत्रयकाले प्रलयकाले न त्विदानीमिति भावः उचिता योगनिद्रा यस्य तस्मिन् मुरारौ मायया जयमिच्छन् किल न तु जेष्यतीति भावः । स्वापयतीति स्वापनम् अस्त्रम् आजहार प्रयुक्तवानित्यर्थः । अनादिमायाधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्वाद्भुतनिधाने सकलकलुषकर्षणपटुतराभिधाने पुराणेन्द्रजालिके भगवति हरावपि मायया जिगीषत्यहो महानस्य व्यामोह इति भावः । अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेः काव्यलिङ्गम् ॥ २२ ॥

सलिलेति । सलिलेनार्द्रो यो वराहदेहस्तद्वन्नीलः भासं प्रकाशं करोतीति भास्करः । दिवाविभेत्यादिना टप्रत्ययः । तमर्थशून्या भास्करत्वरूपप्रवृत्तिनिमित्तशून्या संज्ञा भास्कराख्या यस्य तं विदधत् सौरलोकमभिभवन्नित्यर्थः । अन्धङ्करोतीति अन्धकारः स्वापनास्त्रप्रभवतमः । कर्मण्यण् । प्रचलानि निद्राघूर्णितानि आयतलोचनान्येवारविन्दानि यस्मिन् कर्मणि तत्तथा सूर्यतिरोधानेऽरविन्दमुकुलीभावस्याध्यक्षावादिति भावः । तद्बलं हरिसैन्यम् अन्धमपश्यं विदधे

गुरवोऽपि निषद्य यन्निदद्रु-
र्धनुषि क्ष्मापतयो न वाच्यमेतत्।
च्यवितापदि जाग्रतोऽपि नित्य-
मनु तत्रैव हि तेऽभवन्निषण्णाः ॥ २४ ॥

श्लथतां व्रजतस्तथा परेषा-
मगलद्धारणशक्तिमुज्झतः स्वाम्।
सुगृहीतमपि प्रमादभाजा-
मनसः शास्त्रमिवास्त्रमग्रपाणेः ॥ २५ ॥

निद्रां प्राविशदित्यर्थः। व्यलाम्बमम्बेति संयुक्तव्यञ्जनयुग्मपौनरुक्त्यात् छेकानुप्रासभेदः। तस्य वराङ्गदेहनीललोचनारविन्देत्युपमारूपकयोः संसृष्टिः ॥ २३ ॥

गुरव इति। गुरवो धीराः क्ष्मापतयोऽपि धनुषि निषद्य शयिता निदद्रुः सुषुपुरिति यत् एतद् धनुषि निद्राणं वाच्यं निन्द्यं न भवति। कुतः हि यस्मात्ते क्ष्मापतयो जाग्रतोऽपि प्रबुद्धा अपि। जागर्तेः शतरि अस्य जक्षित्यादयः षड्त्यभ्यस्तसंज्ञा नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। च्यवितापदि सर्वापन्निवारके इत्यर्थः। धनुषि नित्यं निषण्णाः संश्रिता अभवन् ननु। अत्र सदाधनुराश्रयवाक्यार्थस्यावाच्यताहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २४ ॥

श्लथतामिति। तथेति पूर्वोक्तधनुराश्रयणसमुच्चये तथा तेषां धनुराश्रयणं तथान्येषां धनुर्गलनञ्चाभूदित्यर्थः। श्लथतां प्रयत्नशैथिल्यं व्रजतः भजतः स्वां निजां धारणशक्तिं वाहनसामर्थ्यम् उज्झतः त्यजतः परेषां राज्ञाम्। अग्रपाणेरिति समानाधिकरणसमासः हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदादिति वामनवचनात्। तस्मादग्रपाणेः सुगृहीतं सुष्ठु धृतमपि अन्यत्र स्वभ्यस्तमपि प्रमादभाजां [illegible] अनवस्थितत्वात् शास्त्रं

उचितस्वपनोऽपि नीरराशौ
स्वबलाम्भोनिधिमध्यगस्तदानीम्।
भुवनत्रयकार्यजागरूकः
स परन्तप परः पुमानजागः॥ २६॥

अथ सूर्यरुचीव तस्य दृष्टा-
वुदभूत्कौस्तुभदर्पणङ्गतायाम्।
पटु धाम ततो न चाङ्गुतन्त-
द्विभूरिन्द्वार्कविलोचनः किलासौ॥ २७॥

विद्येव अस्खलगलदम्भस्यत् निद्रापारवश्यादित्यर्थः। इवेन सह नित्य-समासात्समासगता श्रौती पूर्णोपमा॥ २५॥

उचितेति। नीरराशौ समुद्रे उचितस्वपनोऽपि परिचितनिद्रोऽपि तदानीं सर्वनिद्रावसरे स्वबलाम्भोनिधिमध्यगः स्वसेनासागरमध्यगतः। बलपाथोनिधीत्यपि पाठः। भुवनत्रयकार्ये त्रैलोक्यरक्षाविधौ जागरूकः प्रबुद्धः। जागर्त्तेरूकजित्यूकञ्प्रत्ययः। परः पुमान् परमपुरुषः परं केवलं हरिरेवेत्यर्थः। परमव्ययमिच्छन्ति केवल इति विश्वः। तत्र निद्राणलोके अजागः जागर्त्ति स्म। सर्वाश्चकारहारिणो नित्यप्रकाशचिदात्मनः तत्रापि कार्यग्रस्तस्य कुतो निद्रेति भावः। जागर्त्तेर्लुङि तिप्, अदादित्वाच्छपो लुकि सार्वधातुकगुणे रपरे हल्ङ्याब्भ्य इति तिलोपे च रेफस्य विसर्जनीयः। अत्र समुद्रनिद्रालोस्तत्रैव जागरे विरोधपरिहारमुखेन कार्यजागरूकत्वपरमपुरुषत्वयोर्विशेषणगत्या तात्त्विकजागरणहेतुकत्वाद्विरोधाभाससङ्कीर्णं काव्यलिङ्गम्॥ २६॥

अथेति। अथास्यकारव्याप्त्यनन्तरं तस्य हरेर्दृष्टौ चक्षुषि तेजसीत्यर्थः। सूर्यरुचीव सूर्यतेजसीव। कौस्तुभो दर्पण इवेत्युपमितसमासः सूर्यरुचीवेतिलिङ्गात्। तं कौस्तुभदर्पणं गतायां प्रविष्टायां सत्यां ततः कौस्तुभात् पटु सर्वान्धकारद्रावणे समर्थं धाम तेज

महत: प्रणतेष्विव प्रसाद:
स मणेरंशुचय: ककुम्मुखेषु ।
व्यकसद्विकसद्विलोचनेभ्यो
ददृशालोकमनाविलम्बलेभ्य: ॥ ३८ ॥

प्रकृतिप्रतिपादकैश्च पादै-
श्चक्लृपे भानुमत: पुन: प्रसत्तम् ।
तमसोऽभिभवादपास्य मूर्च्छा-
मुदजीवत् सहसैव जीवलोक: ॥ ३९ ॥

उदभूत् उदगात् तद्धामोद्भवनं न चाद्भुतं कुत: असौ विभुर्भगवान् अर्केन्दू विलोचने यस्य स किल खलु अतस्तच्चक्षुषो: सूर्यात्मकत्वात्तदभिहतात् कौस्तुभादर्पणादेरिव धाम प्रादुर्भावो व्यज्यते इत्यर्थ: । अतो वाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ ३७ ॥

महत इति । स पूर्वोक्तमणे: कौस्तुभस्यांशुचय: विकसन्ति उन्मीलन्ति विलोचनानि येषां तेभ्यो बलेभ्योऽनाविलं प्रसन्नमालोकं दर्शनं तत्त्वज्ञानञ्च ददृशतियच्छन् । महतो महात्मन: प्रसादोऽनुग्रह: प्रणतेषु भक्तेषु इव ककुम्मुखेषु ककुभामग्रेषु व्यकसदमूर्च्छत् । पूर्णोपमा ॥ ३८ ॥

प्रकृतिमिति । प्रकृतिं स्वभावं प्रतिपादकै: प्रतिपद्यमानै: । लक्षणहेत्वादिना उक्तप्रत्यय:, न लोकेत्यादिना षष्ठीप्रतिषेध: । भानुमतोऽंशुमत: पादैरंशुभिश्च पुनर्भूय: प्रसत्तुं चक्लृपे शेके । क्लृपू सामर्थ्ये भावे लिट् कृपोरोल इति ऋकारस्यापि रेफस्य लकार: । जीवलोक: प्राणिवर्गश्च तमसोऽन्धकारस्याभिभवादभिभूतत्वादित्यर्थ: । कर्तृकर्मणो: कृतीति कर्मणि षष्ठी । सहसैव मूर्च्छामपास्य उदजीवत् उदश्वसीत् । अत्रोज्जीवनस्यार्ककरप्रसारहेतुकत्वात् वाक्यार्थहेतुकङ्काव्यलिङ्गम् ॥ ३९ ॥

घनसन्तमसैर्जवेन भूयो
यदुयोधैर्युधि रेधिरे द्विषन्तः ।
ननु वारिधरोपरोधमुक्तः
सुतरामुत्तपते पतिः प्रभाणाम् ॥ ४० ॥

व्यवहार इवानृताभियोग-
स्तिमिरं निर्जितवत्यथ प्रकाशे ।
रिपुरुल्बणभीमभोगभाजा-
म्भुजगानां जननीं जजाप विद्याम् ॥ ४१ ॥

घनेति । घनं सान्द्रं सन्तमसमन्धकारो येषु । अवसमन्धेभ्यस्तमस इति समासान्तोऽच्प्रत्ययः । गतेति पाठे गतं सन्तमसं येषान्तैः यदुयोधैर्यादवभटैर्भूयः पुनरपि जवेन युधि द्विषन्तो रेधिरे जिहिंसिरे हता इत्यर्थः । राध्यतेः कर्मणि लिट् । राधो हिंसायामित्येत्त्वाभ्यास लोपौ । तथाहि, वारिधरोपरोधात् मेघावरणात् मुक्तः प्रभाणां द्युतीनां पतिरर्कः सुतरामुत्तपत एव ननु प्रकाशत एव खलु । उद्वि-भ्यान्तप इत्यात्मनेपदम् । अत्र यदुयोधानां द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः । न चोपमानोपमेययोर्भिन्नवचनत्व-दोषः लोके चन्द्रार्कादीनामुपमानानामबहुत्वेऽपि चन्द्रानना इतिवत् प्रत्येकमौपम्यात् ॥ ४० ॥

व्यवहार इति । व्यवहारे न्यायवादे अनृताभियोगं मिथ्याभि-शंसनमिव प्रकाशे कौस्तुभतेजसि तिमिरं प्रस्वापनान्धकारं निर्जितवति निरस्तवति सति अथैतन्निरसनानन्तरं रिपुश्चैद्य उल्बणान् महतो भीमांश्च भोगान् फणान् कायांश्च भजन्तीति तद्भाजः । भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । भुजगानां जननीमुत्पा-दिकां विद्यां मन्त्रं जजाप जपति स्म भुजगास्त्रमाजहारेत्यर्थः । उल्बणेत्यत्र क्वचिदुत्कटफणेति पाठः । उपमालङ्कारः ॥ ४१ ॥

पृथुदर्विभृतस्ततः फणीन्द्रा
विषमाशीभिरनारतं वमन्तः ।
अभवन् युगपद्विलोलजिह्वा-
युगलीढोभयसृक्कभागमाविः ॥ ४२ ॥

कृतकेशविडम्बनैर्विहायो
विजयन्तत्क्षणमिच्छुभिश्छलेन ।
असृताग्रभुवः पुरेव पुच्छं
वड़वाभर्त्तुरवारि काद्रवेयैः ॥ ४३ ॥

पृथ्विति । ततो भुजगास्त्रप्रयोगानन्तरं पृथुदर्विभृतः महाफणा-धारिण इत्यर्थः । अत एव दर्वीकरो दीर्घपृष्ठ इत्यत्र दर्वीरूपः फण एव करो हस्तो यस्येति प्रकाशादौ व्याख्यातम् । आशीभिर्दंष्ट्राभिः । आशी उरगदंष्ट्रायामिति वैजयन्ती । अनारतमश्रान्तं विषं वमन्तः उद्गिरन्तः फणीन्द्राः महासर्पाः विलोलैश्चञ्चलैर्जिह्वायुगैर्लीढावास्वादितावुभौ सृक्कभागावोष्ठप्रान्तदेशौ यस्मिन् कर्मणि तत्तथा । प्रान्तावोष्ठस्य सृक्वणी इत्यमरः । आविरभवन् । अतोभादुदात्तो नित्यमिति नित्यग्रहणसामर्थ्यात् वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगः । उभयपुत्र इत्यादिप्रयोगसिद्धेरिति कव्युक्तमस्माभिः प्रकटितं बहुधा सञ्जीविन्यां घण्टापथे सर्वङ्कषायाञ्च तत्र तत्र । स्वभावोक्तिरलङ्कारः ॥ ४२ ॥

कृतेति । कृतकेशविडम्बनैः काष्णर्यादिविहितकेशानुकारैः छलेन कपटेन विजयमिच्छुभिरभिलाषुकैः । विन्दुरिच्छुरिति उप्रत्ययान्तो निपातितः, न लोकेत्यादिना षष्ठीप्रतिषेधः । विहाय आकाशन्तत्क्षणं काद्रवेयैः कद्रुपुत्रैः फणीन्द्रैः । स्त्रीभ्यो ढगिति ढक् । पुरा पूर्वमिव अमृताग्रभुवोऽमृताग्रजस्य वड़वाभर्त्तुः उच्चैःश्रवसः पुच्छम् अवारि आवृतम् । वृतेः कर्मणि लुङ् । पुरा किल कद्रुविनतयोः कश्यपभार्य्ययोरुच्चैःश्रवसः पुच्छस्य कार्ष्ण्यश्वैत्यविवादे दास्यपणे काद्रवेयैः स्वमातु-

दधतस्तनिमानमानुपूर्व्या
बभुरक्षिश्रवसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्य-
ग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ ४४ ॥

सविषश्वसनोद्धतोरुधूम-
व्यवधिम्लानमरीचि पन्नगानाम् ।
उपरागवतेव तिग्मभासा
वपुरौदुम्बरमण्डलाभमूहे ॥ ४५ ॥

विजयाय गृहीतबालाकारैरुच्चैःश्रवसः पुच्छाच्छादनं चक्रे इति कथा पुराणादनुसन्धेया । उपमा ॥ ४३ ॥

दधत इति । मुखे मुखभागे मुखसन्धौ च विशालाः विस्तृता आनुपूर्व्या अनुक्रमेण तनिमानम् अनुत्वं मुखादन्यत्र शरीरे उत्तरोत्तरं तनुत्वं दधतः अन्यत्र प्रतिमुखादिसन्धिषु गोपुच्छवत् सङ्क्षिप्तत्वं दधानाः अक्षिश्रवसः सर्पाः भरतज्ञो नाट्यशास्त्रज्ञः । भरतो नाट्यशास्त्रेऽपीति विश्वः । तेन कविना प्रणीतं प्रकल्पितं यत् काव्यं कविकर्म लक्षणया काव्यार्थः तया वास्तु । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । तेन ग्रथिता गुम्फिताः अङ्काः परिच्छेदरूपाः अवान्तरसन्दर्भविशेषा येषु ते तथोक्ता नाटकप्रपञ्चा नाटकविस्तारा इव बभुरित्युपमा । प्रबन्धा इति क्वचित्पाठः । प्रत्यक्षनेतृचरितो विन्दुवीजपुरस्कृतः । अङ्को नानाप्रकारार्थं संविदन्तरमाश्रय इति अङ्कलक्षणम् । मुखं प्रतिमुखं गर्भोऽवमर्श उपसंहृतिरिति सन्धयः ॥ ४४ ॥

स इति । तिग्मभासा सूर्येण उपरागवता राहुग्रासवतेव राहुग्रस्तेनेवेत्यर्थः । उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि चेत्यमरवचनं ग्रासस्याप्युपलक्षणम् । पन्नगानां सविषैः श्वसनैः फूत्कारैः उद्धतेनोरुधूमेन यो व्यवधिस्तिरोधानं तेन म्लाना निष्प्रभा मरीचयो यस्य तत् । अत औदुम्बरमण्डलाभं ताम्रपिण्डसच्छायम् । अथ

शिखिपिच्छकृतध्वजावचूल-
चणसाशङ्कविवर्त्तमानभोगाः ।
यमपाशवदाशु बन्धनाय
न्यपतन् वृष्णिगणेषु लेलिहानाः ॥ ४६ ॥

पृथुवारिधिवीचिमण्डलान्त-
र्विलसत्फेनवितानपाण्डुराणि ।
दधति स्म भुजङ्गमाङ्गमध्ये
नवनिर्मोकरुचिं ध्वजांशुकानि ॥ ४७ ॥

कृतमण्डलबन्धमुल्लसद्भिः

नाल्पकं शुल्व स्त्वक्तुष ह्यष्ट वरिष्ठोदुम्बराणि चेत्यमरः । वपुरुहे जठ्रम् । वहेः कर्मणि लिट् । यजादित्वात्सम्प्रसारणम् ॥ ४५ ॥

शिखीति । पुनः पुनर्लेहनशीलाः लेलिहानाः सर्पाः । लिहेर्यङ्-लुगन्तात्ताच्छील्ये शानच्प्रत्यये गुणो यङ्लुकोरित्यभ्यासस्य गुणः । लिहेर्लिटः कानजिति वल्लभः । तदानीमभ्यासगुणानुपपत्तिः भूतार्थासङ्गतिश्च । शिखिपिच्छैर्मयूरबर्हैः कृतेभ्यो ध्वजानामवचूलेभ्यः प्रकीर्णेभ्यः चणं साशङ्काः जीवन्मयूरभ्रान्त्या सभयाः अत एव विवर्त्तमानकायाः व्यावृत्तदेहाः सन्तः आशु वृष्णिगणेषु यादवसैन्येषु बन्धनाय यमपाशैस्तुल्यं यमपाशवत् कालपाशवदित्युपमा । न्यपतन् निपत्य बबन्धुरित्यर्थः ॥ ४६ ॥

पृथ्वि‍ति । भुजङ्गमाङ्गमध्ये पृथोर्वारिधिवीचिमण्डलस्यान्तर्मध्ये विलसन्तः फेना इव वितानपाण्डुरद्युतीनि शुभ्रवर्णानीत्युपमा । ध्वजांशुकानि नवनिर्मोकरुचिं नवकञ्चुकशोभां दधति स्म । समौ कञ्चुकनिर्मोकावित्यमरः । निर्मोकरुचिमित्यत्रान्यधर्मस्यान्यत्रासम्बन्धेन निर्मोकस्येवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धनिदर्शना फेनपाण्डुरोपमयाङ्गेन सङ्कीर्यते ॥ ४७ ॥

शिरसि प्रत्युरसं विलम्बमानैः ।
व्यरुचज्जनता भुजङ्गभोगै-
र्दलितेन्दीवरमालधारिणीव ॥ ४८ ॥

परिवेष्टितमूर्त्तयश्च मूला-
दुरगैराशिरसः सरत्नपुष्पैः ।
दधुरायतवल्लिवेष्टितानां
मुपमानस्मनुजा महीरुहाणाम् ॥ ४९ ॥

बहुलाञ्जनपङ्कपट्टनील-
द्युतयो देहमितस्ततः श्रयन्तः ।

क्वतेति । जनता जनसमूहः । ग्रामजनेत्यादिना सामूहिकस्तल्प्रत्ययः । शिरसि क्वतो मण्डलबन्धो वलयीभावो यस्मिन् कर्मणि तत्तथा उत्क्षसङ्गिः प्रत्युरसं उरसि उरसि । प्रतेरुरसः सप्तमीस्थादिति समासान्तोऽच्प्रत्ययः । विलम्बमानैर्विशेषेण लम्बमानैः भुजङ्गभोगैरहिकायैः दलितेन्दीवरमालधारिणी विकसितनीलोत्पलमालधारिणीत्युत्प्रेक्षा । व्यरुचत् व्यरोचिष्ट । द्युद्भ्यो लुङीति विकल्पात्परस्मैपदम् ॥ ४८ ॥

परिवेष्टितेति । किञ्चेति चार्थः । मूलात्पादमारभ्येत्यर्थः । ल्यब्लोपे पञ्चमी । आशिरसः शिरोऽन्तम् । अभिविधावाङिति विकल्पादसमासः । रत्नैरेव पुष्पैः सह वर्त्तन्ते इति सरत्नपुष्पैः । तेन सहेति तुल्ययोगे इति बहुव्रीहिः । उरगैः परिवेष्टितमूर्त्तयो वेष्टिताङ्गाः मनुजा आयताभिर्वल्लीभिर्लताभिर्वेष्टितानां महीरुहाणाम् उपमानं सादृश्यं दधुरित्युपमा ॥ ४९ ॥

बहुलेति । बहुलाञ्जनस्य सान्द्रकज्जलस्य पङ्कपट्टः पङ्कघनस्तद्वन्नीलद्युतयः श्यामभासः । देहं शरीरमितस्ततः पुच्छपार्श्वादिस्थानेषु श्रयन्तो भजन्तः फणिनस्तुरङ्गमेषु स्फुटानि उज्ज्वलानि याबि

दधिरे फणिनस्तुरङ्गमेषु
स्फुटपल्ययननिबद्धवध्रलीलाम् ॥ ५० ॥

प्रसृतं रभसादथोऽभिनीला
प्रतिपादम्परितोऽभिवेष्टयन्ती ।
तनुरायतिशालिनी महाहे-
र्गजमन्दूरिव निश्चलञ्चकार ॥ ५१ ॥

अथ सस्मितवीक्षिताऽवहेला-
चलितैकोन्नमितभ्रु माधवेन ।
निजकेतुशिरःश्रितः सुपर्णा-
दुदपप्तन्नयुतानि पक्षिराजाम् ॥ ५२ ॥

पल्ययनेषु पल्ययनेषु निबद्धानि वध्राणि वरत्राः। वध्रं त्रपुवरत्र-योरिति विश्वः। तेषां लीलां शोभां दधिरे दधुः। वध्रलीलामित्य-त्रासम्भवद्वस्तुसम्बन्धा निदर्शनोक्तालक्षणा ॥ ५० ॥

प्रसृतमिति। अथतो अयोवत् अभिनीला पादेषु प्रतिपादम्। विभक्त्यर्थेऽव्ययीभावः। अभिवेष्टयन्ती आयतेन आयत्या दैर्घ्येण शालते या सा आयतिशालिनी महाहेर्महोरगस्य तनुःपुरन्दूः शृङ्ख-लेव। अन्दूस्तु शृङ्खलायां स्त्रीति वैजयन्ती। रभसात्प्रसृतं प्रचरन्तं गजं निश्चलं चकार। उपमा ॥ ५१ ॥

अथेति। अथ नागपाशबन्धनानन्तरं माधवेन कृष्णेन अवज्ञया अकिञ्चित्करत्वादनादरेण चलिता प्रेरिता एका उन्नमिता उत्क्षिप्ता च भ्रूर्यस्मिन् कर्मणि तत्तथा। गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम्। सस्मितं चैद्यचापल्यदर्शनात्समन्दहासं वीक्षितात् निजकेतुशिरःश्रितः निजध्वजाग्रस्थितात्। श्रयतेः क्विप्। सुपर्णात् पक्षिणां राजः राजानः तेषां पक्षिराजां पक्षिराजानां गरुत्मताम्। राजा राट् पार्थिव इत्यमरः। अन्येभ्योऽपि दृश्यते इति क्विप्। अयुतानि

द्रुतहेमरुचः खगाः खगेन्द्रा-
दलघूदीरितनादमुत्पतन्तः ।
क्षणमैक्ष्यषतोच्चकैस्तमूभि-
र्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः ॥ ५३ ॥

उपमानमलाभि लोलपक्ष-
क्षणविक्षिप्तमहाम्बुवाहमत्स्यैः ।
गगनार्णवमन्तरा सुमेरोः
कुलजानाङ्गरुडैरिलाधराणाम् ॥ ५४ ॥

अयुतसङ्ख्या उदपप्तन्नुत्पेतुः । पुषादित्वाल्लुङि च्लेरङादेशः । पतः पुमिति पुमागमः । उदभूवन्निति पाठे भुवो वुगिति वुगागमः । माधवस्य सुपर्णवीक्षणावस्थोचितभ्रूविक्षेपादिचेष्टाविवरणात् स्वभावोक्तिः । तदुक्तं दण्डिना । नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्चेति । जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशमिति च ॥ ५२ ॥

द्रुतेति । द्रुतहेमरुचः प्रतप्तकाञ्चनभास इत्युपमा । अलघूच्चैरुदीरितनादम् उच्चारितघोषं यथा तथा खगेन्द्रात् गरुत्मतः उत्पतन्तः उद्गच्छन्तः खगाः सुपर्णाः ज्वलतः प्रज्वलतः सप्तरुचेः सप्तार्चिषोऽग्नेरुच्चैरूर्ध्वं प्रसृताः स्फुलिङ्गा इव चर्मभिः क्षणमैक्ष्यषत ईक्षिताः । ईक्षतेः कर्मणि लुङ् । अत्रोपमयोः सङ्करः ॥ ५३ ॥

उपमानमिति । गगनमर्णव इव गगनार्णवस्तमन्तरा तस्य मध्ये इत्यर्थः । अन्तरान्तरेण युक्ते इति द्वितीया । अत्रार्णवस्यैकत्वेऽपि तदेकदेशापेक्षया भेदवत्त्वेन मध्यप्रतियोगित्वसम्भवाच्च द्वितीयानुपपत्तिः । लोलैः पक्षैः क्षणाद्विक्षिप्ता महाम्बुवाहा मत्स्या इव यैस्तैर्गरुडैर्गरुत्मभिः सुमेरोः कुलजानां हेमाद्रिवंश्यानाम् अन्येषामहिरण्मयतया गरुडसाम्यासम्भवादित्यर्थः इलाधराणां भूधराणाम् अर्णवान्तश्चराणामित्यर्थः । गौरिला कुम्भिनी क्षमेति कोषः । उपमानं

पततामपरितः परिस्फुरद्भिः
परिपिङ्गीकृतदिङ्मुखैर्मयूखैः ।
सुतरामभवद्दुरीक्ष्यबिम्ब-
स्तपनस्तत्किरणैरिवात्मदर्शः ॥ ५५ ॥

दधुरम्बुधिमन्थनाद्रिमन्थ-
भ्रमणायस्तफणीन्द्रपित्तजानाम् ।
रुचमुल्लसमानवैनतेय-
द्युतिभिन्नाः फणभारिणो मणीनाम् ॥ ५६ ॥

सादृश्यमलाभि अलम्भि । लभेः कर्मणि लुङि विभाषा चिण्णमुलोरिति विकल्पान्नुमभावः । अत्रेलाधराणामुपमानमिति व्यस्तोपमाया अन्याभ्यां समासगताभ्यामङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

पततामिति । परिस्फुरद्भिः स्वविषयसंक्रमात्समन्तादुल्लसद्भिः अत एव परिपिङ्गीकृतानि सौवर्णत्वात्पिशङ्गीकृतानि दिङ्मुखानि यैस्तैः पततां पक्षिणां मयूखैः तपनः सूर्यस्तत्किरणैस्तपनकिरणैः संक्रान्तैरिति भावः । आत्मा स्वरूपं दृश्यतेऽत्र इत्यात्मदर्शो दर्पण इव सुतरां दुरीक्ष्यबिम्बः अभवत् । स्वत एव दुर्दर्श इदानीमतिदुर्दर्शोऽभूदित्यर्थः । अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५५ ॥

दधुरिति । उल्लसमानाभिर्दीप्यमानाभिर्वैनतेयानां द्युतिभिर्भिन्नाः संवलिताः फणभारिणः फणाभृतः अम्बुधिमन्थने समुद्रमन्थने अद्रेर्मन्दराद्रेरेव मन्थस्य मन्थनदण्डस्य भ्रमणेनायस्तस्य निष्पीडितस्य फणीन्द्रस्य वासुकेः पित्तात् पित्तधातोर्जातास्तज्जास्तेषाम् । वैशाखमन्थमन्थानमन्थानो मन्थदण्डके इत्यमरः । मयूरव्यंसकादित्वात्समासः । तेषां मणीनां मरकतानां रुचं दधुः वैनतेयपीतिमसम्भेदात् कृष्णोरगामरकतच्छायामाच्छेरित्यर्थः । अत्रान्यस्यान्यधर्मायोगेन रुचमिवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शनालङ्कारः ॥ ५६ ॥

अभितः क्षुभिताम्बुराशिधीर-
ध्वनिराकृष्टसमूलपादपौघः ।
जनयन्नभवद् युगान्तशङ्का-
मनिलो नागविपक्षपक्षजन्मा ॥ ५७ ॥

प्रचलत्पतगेन्द्रपत्त्रवात-
प्रसभोन्मूलितशैलदत्तमार्गैः ।
भयविह्वलमाशु दन्दशूकै-
र्विविशेऽविविशे स्वमेव धाम ॥ ५८ ॥

खचरैः क्षयमक्षयेऽहिसैन्ये
मुकुतैर्दुष्कृतवत्तदोपनीते ।

अभीति । अभितः उभयतः क्षुभितो योऽम्बुराशिः उद्वेलाम्बुराशिस्तद्वद्धीरध्वनिर्गम्भीरध्वनिरित्युपमा । आकृष्टाः पातिताः समूलाः पादपौघास्तरुसमूहा येन सः । अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । युगान्तशङ्कां जनयन् कल्पक्षयोत्प्रेक्षां जनयन्नित्यपि सैवातिशयोक्तिः । नागविपक्षपक्षजन्मा गरुडपक्षोद्भवोऽनिलोऽभवदुदभवदित्यर्थः ॥ ५७ ॥

प्रचलदिति । प्रचलतां पतगेन्द्राणां ये पत्त्रवातास्तैः प्रसभमुन्मूलितैराकृष्टैरुत्पाटितैः शैलैर्दत्तो मार्गो रन्ध्रं येभ्यस्तैः विवशैः परवशैर्निश्चेष्टैरित्यर्थः । गर्हितं दशन्ति भृशमिति दन्दशूकैः सर्पैः । दन्दशूको बिलेशय इत्यमरः । लुपसदचरेत्यादिना दंशेर्भावगर्हायां यङ् । जपजभदहदंशभञ्जपशाञ्चेति अभ्यासस्य नुमागमः यजजपदंशवदां इति दंशेर्यङन्तादूकञ्प्रत्ययः । भयेन विह्वलं विक्षिप्तं विचित्रं यथा तथा आशु स्वमेव धाम पातालमेव विविशे । तार्क्ष्यपत्त्रपवनोन्मूलितशैलरन्ध्रवर्त्मनि पातालं प्रविष्टमित्यर्थः । विशेः कर्मणि लिट् । दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

अयुगार्चिरिव ज्वलन् रुषाथो
रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ ५९ ॥

सहसा दधदुद्धताट्टहास-
श्रियमुत्त्रासितजन्तुना स्वनेन ।
विततायतहेतिबाहुरुच्चै-
रथ वेताल इवोत्पपात वह्निः ॥ ६० ॥

चलितोद्धतधूमकेतनोऽसौ
रभसादम्बररोहिरोहिताश्वः ।
द्रुतमारुतसारथिः शिखावान्
कनकस्यन्दनसुन्दरश्चचाल ॥ ६१ ॥

खचरैरिति । खे चरन्तीति खचरैर्वैनतेयैः । चरेष्टः, तत्पुरुषे कृति बहुलमिति लुग्विकल्पः । अनये अनल्पे अहिसैन्ये सर्पसङ्घे सुकृतैः हरिस्मरणादिपुण्यैर्दुष्कृतवद्ब्रह्महत्याद्येनोवत् । तत्र तस्येवेति तत्रार्थे वतिप्रत्ययः । क्षयमुपनीते नाशङ्गमिते सति तदा तत्काले रुषा पौरुषवैफल्यरोषेण अयुगार्चिः सप्तार्चिरिव ज्वलन् दीप्यमानः असौ रिपुश्चैद्यः । उदर्चिष इदमौदर्चिषमाग्नेयं मन्त्रम् आजुहाव आहूतवान् जजापेत्यर्थः । ह्वयतेर्लिट् अभ्यस्तस्य चेति द्विर्वचनात्प्रागेव सम्प्रसारणम् । दुष्कृतवदिति तद्धितगता श्रौती पूर्णोपमा ॥५९॥

सहसेति । अथाग्नेयास्त्राह्वानानन्तरम् उत्त्रासितजन्तुना भीषितप्राणिकेन स्वनेन ध्वनिना उद्धताट्टहासश्रियं महाट्टहाससम्पदं दधत् तेनैवाट्टहासवान् तत्तुल्यनादवानित्यर्थः । वितताः प्रसारिताः आयता दीर्घाः हेतयो ज्वाला बाहव इव हेतिबाहवो यस्य स वह्निर्वेतालो भूतविशेषः स इव सहसा झटिति उच्चैरूर्ध्वमुत्पपात उत्तस्थौ । उपमा ॥ ६० ॥

चलितेति । चलितश्चलंश्च उद्धत उन्नतश्च धूम एव केतनं केतुर्यस्य सः रभसाद् वेगादम्बररोहिणो रोहिता वाहनमृगा अश्वा इव

ज्वलदम्बरकोटरान्तरालं
बहुलार्द्राम्बुदपत्रबद्धधूमम् ।
परिदीपितदीर्घकाष्ठमुच्चै-
स्तरुवद्विश्वमुवोष जातवेदाः ॥ ६२ ॥

गुरुतापविशुष्यदम्बुशुभ्राः
क्षणमालग्नकृशानुताम्रभासः ।
स्वमसारतया मसीभवन्तः
पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥

ज्वलितानललोलपल्लवान्ताः

यस्य सः द्रुतमारुतः शीघ्रवातः एव सारथिर्यस्य सः कनकस्यन्दन-सुन्दरः कनकद्रववद्रूस्य इत्युपमा । असौ शिखा ज्वाला अस्य सन्तीति शिखावान् आशुशुक्षणिरिवाभ्न ॥ ६१ ॥

ज्वलदिति । जातं वेदो धनं यस्माज्जातवेदास्तनूनपात् । अम्बरं कोटरमिव तस्यान्तरालमभ्यन्तरं ज्वलद्यस्य तत् । बहुलाः सान्द्राः आर्द्राम्बुदाः पत्राणीव तेषु बद्धधूमम् । परिदीपिताः प्रज्वलिताः काष्ठा दिशः काष्ठानीव यस्य । तदुच्चैरुन्नतं विश्वं जगत् । तरुणा तुल्यं तरुवत् तरुमिवेत्यर्थः । तुल्यार्थे वतिप्रत्ययः । उषोष ददाह । उष दाहे लिट् लघूपधगुणे पश्चात् द्विर्भावः अभ्यासस्यासवर्णे इत्युव-ङादेशः अनादिष्टादच इति गुणस्य स्थानिवत्त्वाभावात् । स्पष्टोपमा-लिङ्गात् सर्वत्रोपमितसमासः ॥ ६२ ॥

गुर्विति । गुरुतापेनातिदाहेन विशुष्यदम्बवः क्षीयमाणोदकाः अत एव शुभ्राश्चेति विशेषणसमासः । ततः क्षणमालग्नेन कृशानुना ताम्रभासो रोहितवर्णाः स्वयासारतया जलशोषाभिःसारतया मसीभवन्तः अम्बुवाहाः पुनः स्वमाकारन्नीलरूपमवापुः । अत्र मेघानां मसीभावासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

स्फुरदष्टापदपत्रपीतभासः।
क्षणमात्रभवामभावकाले
सुतरामापुरिवायतिम्पताकाः॥ ६४॥
निखिलामिति कुर्वतश्चिराय
द्रुतचामीकरचारुतामिव द्याम्।
प्रतिघातसमर्थमस्त्रमग्ने-
रथ मेघङ्करमस्मरन्मुरारिः॥ ६५॥
चतुरम्बुधिगर्भधीरकुक्षे-
र्वपुषः सन्धिषु लीनसर्वसिन्धोः।

ज्वलितेति। ज्वलितेन प्रज्वलता अनलेन अनलपातेन लोलाः पल्लवान्ताः अञ्चलाग्राणि यासां ताः स्फुरद्भिर्दीप्यमानैरष्टापदपत्रैः कनकरचनाभिः पीतभासः पिङ्गलवर्णाः पताका वैजयन्त्यः अभावकाले विनाशकाले क्षणमात्रभवां क्षणमात्रभाविनीं क्षणमात्रस्थायिनीमित्यर्थः आयतिं दैर्घ्यं सुतरामापुरित्यर्थः प्रदीपवदिति भावः अष्टसु लोहेषु पदम् अस्येत्यष्टापदम्। अष्टनः संज्ञायामिति दीर्घः। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामित्यमरः॥ ६४॥

निखिलामिति। अथानन्तरं मुरारिः इतीत्थं निखिलां द्यामाकाशं द्रुतचामीकरचारुतां प्रतप्तहेमकर्बुरामिवेत्युत्प्रेक्षा। चारुतामत्यत्र। चिराय कुर्वतोऽग्नेः प्रतिघातसमर्थं प्रशमनक्षमं मेघान् करोतीति मेघङ्करं मेघजननम्। मेघर्त्तिभयेषु कृञः खच्प्रत्ययः, अरुर्द्विषदजन्तस्य मुमिति मुमागमः। अस्त्रं वारुणास्त्रम् अस्मरत् अध्यागरत्॥ ६५॥

चतुरिति। चत्वारोऽम्बुधय एव गर्भास्तेन धीरो गम्भीरः कुक्षिर्यस्य तस्य वपुषः सन्धिषु लीनाः सर्वाः सिन्धवो नद्यो यस्य तस्य सलिलात्मनस्तोयात्मकस्य। त्रीणि धामानि स्थानानि भूरादीनि सत्वा-

उदगुः सलिलात्मनस्त्रिधाम्नो
जलवाहावलयः शिरोरुहेभ्यः ॥ ६६ ॥

ककुभः कृतनादमास्तृणन्त-
स्तिरयन्तः पटलानि भानुभासाम् ।
उदनंसिषुरभ्रसम्भसङ्घाः
सपदि श्यामलिमानमानयन्तः ॥ ६७ ॥

तपनीयनिकषराजिगौर-
स्फुरदुत्तालतडिच्छटाट्टहासम्
अनुबद्धसमुद्धताम्बुवाह-
ध्वनिताडम्बरमम्बरम्बभूव ॥ ६८ ॥

टौनि वा यस्य तस्य त्रिधाम्नो हरेः शिरोरुहेभ्यो जलवाहावलयः मेघपरम्परा उदगुः उद्बभूवुः । इणो गा लुङीति गादेशे गातिस्थेत्यादिना सिचो लुक् । यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नम इत्यागमोक्तं प्रमाणमिति भावः ॥ ६६ ॥

ककुभ इति । कृतनादं कृतगर्जारावं यथा तथा ककुभः आस्तृणन्तः आच्छादयन्तः । स्तृणातेर्लटः शत्रादेशः श्नाभ्यस्तयोरित्याकारलोपः । भानुभासामर्कांशूनां पटलानि तिरयन्तस्तिरस्कुर्वन्तः । तिरःशब्दात्तत् करोतीति ण्यन्ताल्लटः शत्रादेशः णाविष्टवद्भावाट्टिलोपः । अभ्रमाकाशं श्यामलिमानमानयन्तः श्यामलत्वं प्रापयन्तः । अम्भसङ्घाः मेघौघाः सपदि सद्य उदनंसिषुरुत्पेतुः । उत्पूर्वान्नमतेर्लुङि यमरमनमातां सक् चेति सगिडागमौ नेटीति वृद्धिप्रतिषेधः । स्वभावोक्तिः ॥ ६७ ॥

तपनीयेति । तपनीयस्य हेम्नो निकषराजयः कषणलेखा इव गौर्यः पीताः । गौरोऽरुणे सिते पीते इत्यमरः । स्फुरन्त्य उत्ताला

सवितुः परिभावुकैर्मरीची-
नचिराभ्यक्तमतङ्गजाङ्गभाभिः।
जलदैरभितः स्फुरद्भिरुच्चै-
र्विदधे केतनतेव धूमकेतोः॥ ६९॥

ज्वलतः शमनाय चित्रभानोः
प्रलयाप्लावमिवाभिदर्शयन्तः।
ववृषुर्वृषनादिनो नदीना-
मतटारोपितवारि वारिवाहाः॥ ७०॥

उद्धतास्तडिच्छटा विद्युल्लता एवाट्टहासा यस्य तत्तथोक्तम् अनुबद्धोऽनुस्यूतः समुद्धतस्तारोऽम्बुवाहानां ध्वनिताडम्बरो गर्जिताडम्बरो यस्य तदम्बरं बभूव तदाम्बुवाहैर्विद्युत्प्रभाभिर्गर्जिताडम्बरैश्चाट्टहासं कुर्वद्भिरिवाम्बरस्वभावित्यर्थः। व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा॥ ६८॥

सवितुरिति। सवितुर्मरीचीन् मयूखान् परिभावुकैस्तिरस्कुर्वद्भिः। लषपतेत्यादिना उकञ्प्रत्यये न लोकेत्यादिना षष्ठीप्रतिषेधः। अचिराभ्यक्तस्य सद्यःकृताभ्यङ्गस्य मतङ्गजाङ्गस्य नागदेहस्येव भासो येषां तैस्तथोक्तैः। भोभगो इत्यादिना रोर्यकारस्य हलि सर्वेषामिति लोपः। अभितः स्फुरद्भिर्जृम्भमाणैरुच्चैरुन्नतैर्जलदैर्धूमकेतोरग्नेः केतनता केतुत्वं विदधे इव विहितेव धूमकेतोः केतुत्वं प्राप्तमित्यर्थः। उत्प्रेक्षालङ्कारः॥ ६९॥

ज्वलत इति। ज्वलतश्चित्रभानोरग्नेः प्रशमनाय प्रलये कल्पान्ते य आप्लावो महापूरः तमभिदर्शयन्त इवेत्युत्प्रेक्षा। वृषवद्वृषभवत् नदन्ति गर्जन्तीति वृषनादिनः। कर्त्तर्युपमाने इति णिनिः। अत एवोपमा। वारि वहन्तीति वारिवाहा मेघाः। कर्मण्यण्। नदीनां अतटेषु अतीरेषु आरोपितानि भावितानि वारीणि यस्मिन् कर्मणि तद्यथा तथा ववृषुः प्रलयकालमेघवद्वर्षन्नित्यर्थः॥ ७०॥

मधुरैरपि भूयसा स मेध्यैः
प्रथमम्प्रत्युत वारिभिर्दिदीपे।
पवमानसखस्ततः क्रमेण
प्रणयक्रोध इवाशमद्विवादैः॥ ७१॥
परितः प्रसभेन नीयमानः
शरवर्षैरवसायमाश्रयाशः।
प्रबलेषु कृती चकार विद्यु-
द्व्यपदेशेन घनेष्वनुप्रवेशम्॥ ७२॥

मधुरैरिति। इतीत्यं पवत इति पवमानो वायुः। पूङ्यजोः शानच्। तस्य सखा पवमानसखः अग्निः। राजाहस्सखिभ्यष्टच्। मैत्रीमात्रविवक्षायामयन्निर्देशः सहकारिणी मैत्रीति नियमात् सहकारित्वाविवक्षायां वैपरीत्यात् बहुव्रीहौ तु न समासान्तः। स्वामी तु रोहिताश्वो वायुसखेति असमासान्तपाठेन बहुव्रीहिमाह। अत्रापि तथा पाठे न कश्चिदुपद्रवः। सोऽग्निः मधुरैः प्रियैरपि विवादैर्विविधवाक्यैः प्रणयक्रोधः प्रणयप्रयुक्तकोप इव मधुरैः स्वादुभिः अनुद्दीपकैरित्यर्थः मेध्यैर्मेधभवैः। दिगादिभ्यो यत्। वारिभिः प्रथमं प्रत्युत वैपरीत्येनापि। प्रत्युतेति वैपरीत्य इति गणव्याख्याने। भूयसात्यन्तं भृशमित्यर्थः दिदीपे प्रजज्वाल ततः क्रमेणाशमत् शान्तोऽभूत्। शाम्यतेर्लुङि पुषादित्वात् च्लेरङादेशः। जलाहतोऽग्निर्ज्वलितो नश्यति प्रणयकोपोऽपि प्रियैः भृशायितो शाम्यतीति प्रसिद्धम्। उपमा॥ ७१॥

परित इति। परितः प्रसभेन बलात्कारेण शरवर्षैर्नीरसेकैः। शरं नीरे शरो बाण इति विश्वः। अवसायमवसादं नीयमानः। कृती कुशलः आश्रयमश्नातीति आश्रयाशोऽग्निः। कर्मण्यण्। प्रबलेषु घनेषु मेघेषु विद्युद्व्यपदेशेन तड़िच्छलेन अनुप्रवेशं चकार। अस्ताग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः। बलवत्ताभिभूतस्य विदेशगमनं

प्रयत: प्रशमं हुताशनस्य
क्वचिदालक्ष्यत मुक्तमूलमर्चि: ।
बलभित्प्रहितायुधाभिघातात्
त्रुटितम्पत्रिपतेरिवैकपत्रम् ॥ ७३ ॥
व्यगमन् सहसा दिशाम्मुखेभ्य:
शमयित्वा शिखिनङ्घना घनौघा: ।
उपकृत्य निसर्गत: परेषा-
मुपरोधन्न हि कुर्वते महान्त: ॥ ७४ ॥
क्षतदाहमुदर्चिष: शिखाभि:

तदनुप्रवेशो वेति नीतेरिति भाव: । अत्र विशेषणसास्याद्ग्नावप्रकृत-दुर्बलत्वप्रतीते: समासोक्ति: ॥ ७२ ॥

प्रयत इति । प्रशमं नाशं प्रयत: गच्छत: । प्रैतीति प्रयन् यस्य प्रयत: । इण: शतरि यणादेश: । हुताशनस्याग्ने: सम्बन्धि मुक्त-मूलं त्यक्तमूलं त्यक्ताश्रयमर्चिर्ज्वाला । ज्वालाभासोर्नपुंस्यर्चिरित्य-मर: । बलभिदा शक्रेण प्रहितस्य प्रयुक्तस्यायुधस्य वज्रस्याभिघातात् प्रहारात् त्रुटितं छिन्नं पत्रिपते: पक्षिराजस्य गरुत्मत एकं पत्रं पक्षमिव क्वचिदालक्ष्यत अदृश्यत इत्युपमा । पुरा मातृदास्यविमो-कायामृतमाहरता गरुडेनेन्द्रप्रयुक्तवज्रगौरवादेकं पत्रं त्यक्तमित्या-गम: ॥ ७३ ॥

व्यगमन्निति । घना घनौघा: वर्षुकाब्दसमूहा: । शक्रघातुकमत्त-भवर्षुकाब्दा घना घना इत्यमर: । शिखिनमग्निं शमयित्वा सहसा दिशां मुखेभ्यो व्यगमन्नपसस्रु: । गमेर्लुङि पुषादित्वात् च्लेरङादेश: । तथा-हि महान्तो निसर्गत: स्वभावादेव परेषाम् उपकृत्य उपकारं कृत्वा उपरोधं न हि कुर्वते । महतां निष्फलावस्थानं परोपरोधायेति भाव: । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास: ॥ ७४ ॥

परिषिक्तम्मुहुरम्भसा नवेन ।
विगताम्बुधरव्रणम्प्रपेदे
गगनन्तापितपायितासिलक्ष्मीम् ॥ ७५ ॥

इति नरपतिरस्त्रं यद्यदाविश्चकार
प्रकुपित इव रोगः क्षिप्रकारी विकारम् ।
भिषगिव गुरुदोषच्छेदिनोपक्रमेण
क्रमविदथ मुरारिः प्रत्यहंस्तत्तदाशु ॥ ७६ ॥

शुद्धिङ्गतैरपि परासुकृदृजुभिर्विदित्वा
बाणैरजय्यमविघट्टितमर्मभिस्तम् ।

क्षतेति । उदर्चिषोऽग्नेः शिखाभिः ज्वालाभिः कृतदाहं विहित-तपनं ततो नवेनाम्भसा मुहुः परिषिक्तं विगता अम्बुधरा एव व्रणा दोषा यस्य तद्गगनं सन्तापितस्तापं प्रापितः स चासौ पायितः पानं कारितः । पिबतेर्ण्यन्तात् कर्मणि क्तः । शाच्छासाह्वाव्यावेपां युगिति युगागमः । तस्य तापितपायितस्य तप्तसिक्तस्यासेः खड्गस्य लक्ष्मीं प्रपेदे प्राप । इति निदर्शनालङ्कारः अम्बुधरव्रणेति रूपकसङ्कीर्णः ७५

इतीति । इतीत्थं क्षिप्रं करोतीति क्षिप्रकारी शीघ्रप्रयोक्ता अन्यत्र विकारकारी नरपतिश्चैद्यः प्रकुपितः प्रक्षुभितः सन् यद्वद् यदस्त्रम् आविश्चकार रोगो विकारमिव अथ क्रमवित्परिपाटीवेदी मुरारिर्भिषग्वैद्य इव गुरुदोषच्छेदिना गुरुदोषप्रतिघातकेन दोषनिवर्तकेन चोपक्रमेणोपायेन प्रत्यस्त्रप्रयोगेणेत्यर्थः अन्यत्र सदौषधप्रयोगेण तत्तदस्त्रम् आशु शीघ्रं तद्विकारमिवेति भावः प्रत्यहन् प्रतिजघान । हन्तेर्लङ् अदादित्वाच्छपो लुक् हल्ङ्याविति तिलोपे । उपमा ॥७६॥

शुद्धिमिति । तदा तस्मिन् समये विपक्षोऽरिश्चैद्यः परासुकृत्कृष्टां शुद्धिं लोहशुद्धिं गतैरृजुभिरप्यविघट्टितमर्मभिरस्पृष्टमर्मस्थानैः तं हरिमजय्यं जेतुमशक्यम् । क्षय्यजय्यौ शक्यार्थे निपातः । विदित्वा-

मर्मातिगैरनृजुभिर्भितरामशुद्धै-
र्वाक्सायकैरथ तुतोद तदा विपक्षः ॥ ७७ ॥

राहुस्त्रीस्तनयोरकारि सहसा येनाश्रयालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्षोभ्यत एव तस्य सुरजित्तत्कालकीलानल-
ज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥

श्रिया जुष्टैर्दिव्यैः सपटहरवैरन्वितमथ प्रवर्षै-
र्वपुष्टस्यैव्यस्य चणमृषिगणैस्तूयमानान्निरीय ।
प्रकाशेनाकाशे दिनकरकरान्निक्षिपद्दिस्मिताक्षै-
र्नरेन्द्रैरीपेन्द्रं वपुरथ विशद्धास वीक्षाम्बभूवे ॥ ७९ ॥

अथ कविवंशवर्णनम् ।

सर्वाधिकारी सुकृताधिकारः
श्रीधर्मनाभस्य बभूव राज्ञः ।
आसक्तदृष्टिर्विरजाः सदैव
देवोऽपरः सुप्रभदेवनामा ॥ ८० ॥

काले मितं वाक्यमुदर्कपथ्य-
न्तथागतस्येव जनः सुचेताः ।
विनानुरोधात् स्वहितेच्छयैव
महीपतिर्यस्य वचश्चकार ॥ ८१ ॥

यास्मिन्नवसरे मर्माणि अतिगच्छन्तीति मर्मातिगैर्मर्मभेदिभिरनृ-जुभिर्वक्रैः नितरामशुद्धैरपवित्रैः वाच एव सायकास्तैः वाक्सायकै-रिति रूपकं तुतोद व्यथयामास । चक्रप्रयोगस्यायमुपोद्घात इति भावः । अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूप-कयोः सङ्करः । वसन्ततिलका वृत्तम् ॥ ७७ ॥

तस्याभवद्दत्तक इत्युदात्तः
क्षमी मृदुर्धर्मपरस्तनूजः ।
यं वीक्ष्य वैयासमजातशत्रो-
र्वचोगुणग्राहि जनैः प्रतीये ॥ ८२ ॥

सर्वेण सर्वाश्रय इत्यनन्द-
मानन्दभाजा जनितञ्जनेन ।
यश्च द्वितीयं स्वयमद्वितीयो
मुख्यः सताङ्गौणमवाप नाम ॥ ८३ ॥

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्त्तनचारु माघः ।
तस्यात्मजः सुकविकीर्त्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥

इति श्रीशिशुपालवधे महाकाव्ये श्रीदत्तकसूनुकवि-
श्रीमाघविरचिते शिशुपालवधो नाम
विंशः सर्गः समाप्तः ॥ २० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते
माघकाव्यव्याख्याने सर्वङ्कषाख्ये विंशः सर्गः
समाप्तः ॥ २० ॥

———

## अथ टीकायां पाणिनिव्याकरणानुयायिन्यां प्रमापकाः ।

| | | |
|---|---|---|
| श्रुतिः | सज्जनः | मार्त्तण्डकोषः |
| स्मृतिः | भट्टोत्पलः | मेदिनीकोषः |
| पुराणम् | वल्लभः | त्रिकाण्डशेषकोषः |
| वाल्मीकिः | जैमिनिः | रत्नावलीकोषः |
| महाभारतम् | हरिकारिका | अभिधानचिन्तामणिः |
| पाणिनिः | वाग्भः | काव्यप्रकाशः |
| वार्त्तिकम् | अमरकोषः | अलङ्कारसर्वस्वम् |
| भाष्यकारः | हेमचन्द्रकोषः | दण्डी |
| कैयटः | विश्वप्रकाशकोषः | वृत्तरत्नाकरः |
| माधवः | हलायुधकोषः | वृत्तरत्नाकरटीका |
| शाकटायनः | शाश्वतकोषः | नीतिवाक्यामृतम् |
| न्यासोद्योतः | वैजयन्तीकोषः | कामन्दकः |
| काशिका | शब्दार्णवकोषः | वसन्तराजीयम् |
| वामनः | यादवकोषः | हयलीलावती |
| क्षीरस्वामी | केशवकोषः | दशरूपकम् |

इति टीकाप्रमापकाः ।

---

